श्रोण, स्वागतम् । मा तृषितोऽसि मा बुभुक्षितोऽसि वा? स संलक्षयति—नूनं देवीयं वा नागी वा यक्षी वा भविष्यति । स कथयति—आर्ये, तृषितोऽस्मि बुभुक्षितोऽस्मि । तयासावुद्वर्तितः स्नापित आहारो दत्तः । उक्तं च—श्रोण, यदि एते किंचिन्मृगयन्ति, मा दास्यसीति उक्त्वा तेषां सत्त्वानां कर्मस्वकतां प्रत्यक्षीकर्तुकामा विमानं प्रविश्यावस्थिता । ते 5 मृगयितुमारब्धाः—श्रोण कारुणिकस्त्वम् । बुभुक्षिता वयम् । अस्माकमनुप्रयच्छ । तेनैकस्य क्षिप्तम्—बुसप्लावी प्रादुर्भूता । अपरस्य क्षिप्तम्—अयोगुडं भक्षयितुमारब्धः । अपरस्य क्षिप्तम्—स्वमांसं भक्षयितुमारब्धः—अपरस्य क्षिप्तम्—पूयशोणितं प्रादुर्भूतम् । सा विस्रगन्धेन निर्गता । श्रोण निवारितस्त्वं मया । कस्मात् त्वयैषां दत्तम्? किं मम कारुणिकया? त्वमेव कारुणिकतरः । स कथयति—भगिनि, तवैते के भवन्ति? सा कथयति—अयं मे स्वामी, अयं 10 मे पुत्रः, इयं मे स्नुषा, इयं मे दासी । स आह—के यूयम्, केन वा कर्मणा इहोपपन्नाः? तयोक्तम्—श्रोण, दुष्कुहका जाम्बुद्वीपका मनुष्या इति नाभिश्रद्दधास्यसि । अहं प्रत्यक्षदर्शी कस्मान्नाभिश्रद्दधास्ये? सा कथयति—अहं वासवग्रामके ब्राह्मणी आसीत् । मया नक्षत्ररात्र्यां प्रत्युपस्थितायां प्रणीतमाहारं सज्जीकृतम् । आर्यमहाकात्यायनो ममानुकम्पया वासवग्रामके पिण्डाय प्राविक्षत् । स मया दृष्टः कायप्रासादिकश्चित्तप्रासादिकः । चित्तमभिप्रसन्नं दृष्ट्वा स 15 मया प्रसादजातया पिण्डकेन प्रतिपादितः । तस्या मम बुद्धिरुत्पन्ना—स्वामिनमनुमोदयामि, प्रामोद्यमुत्पादयिष्यतीति । स स्नात्वा आगतः । मयोक्तम्—आर्यपुत्र, अनुमोदस्व, मयार्यो महाकात्यायनः पिण्डकेन प्रतिपादितः । स रुषितो यावद् ब्राह्मणानां न दीयते, ज्ञातीनां वा ज्ञातिपूजा न क्रियते, तावत्त्वया तस्मै मुण्डकाय श्रमणकायाग्रपिण्डकं दत्तम्? सोऽमर्षजातः कथयति—कस्मात् स मुण्डकः श्रमणको बुसप्लावीं न भक्षयतीति? तस्य कर्मणो विपाकेनायं 20 बुसप्लावीं भक्षयति । मम बुद्धिरुत्पन्ना—पुत्रमपि अनुमोदयामि, प्रामोद्यमुत्पादयिष्यतीति । सोऽपि मयोक्तः—पुत्र, अनुमोदस्व, मयार्यो महाकात्यायनः पिण्डकेन प्रतिपादितः । सोऽपि रुषितो यावद् ब्राह्मणानां न दीयते, ज्ञातीनां वा ज्ञातिपूजा न क्रियते, तावत्त्वया तस्मै मुण्डकाय श्रमणकायाग्रपिण्डं दत्तम्? सोऽपि अमर्षजातः कथयति—कस्मात् स मुण्डकः श्रमणकोऽयोगुडं न भक्षयतीति? तस्य कर्मणो विपाकेनायमयोगुडं भक्षयति । नक्षत्ररात्र्यां 25 प्रत्युपस्थितायां मम ज्ञातयः प्रहेणकानि प्रेषयन्ति । तानि अहं स्नुषायाः समर्पयामि । सा प्रणीतानि प्रहेणकानि भक्षयित्वा मम लूहानि उपनामयति । अहं तेषां ज्ञातीनां संदिशामि—किं नु यूयं दुर्भिक्षे यथा लूहानि प्रहेणकानि प्रेषयत? ते मम संदिशन्ति—न वयं लूहानि प्रेषयामः, अपि तु प्रणीतान्येव प्रहेणकानि प्रेषयामः । मया स्नुषाभिहिता—वधूके, मा 30 त्वं प्रणीतानि प्रहेणकानि भक्षयित्वास्माकं लूहानि उपनामयसि? सा कथयति—किं स्वमांसं न भक्षयति या त्वदीयानि प्रहेणकानि भक्षयतीति? इयं तस्य कर्मणो विपाकेन स्वमांसानि भक्षयति । नक्षत्ररात्र्यां प्रत्युपस्थितायां प्रणीतानि प्रहेणकानि दत्त्वा ज्ञातीनां प्रेषयामि । सा दारिका तानि प्रणीतानि प्रहेणकानि मार्गेऽन्तर्भक्षयित्वा तेषां लूहानि उपनामयति ।

C 13

C 14

ते मम संदिशन्ति—किं नु त्वं दुर्भिक्षे यथा लूहानि अस्माकं प्रहेणकानि प्रेषयसि? अहं तेषां संदिशामि—नाहं लूहानि प्रेषयामि, अपि तु प्रणीतान्येवाहं प्रेषयामीति। मया दारिकाभिहिता—दारिके, मा त्वं प्रणीतानि प्रहेणकानि भक्षयित्वा तेषां लूहानि उपनामयसि। सा कथयति—किं नु पूयशोणितं न भक्षयति, या त्वदीयानि प्रहेणकानि भक्षयतीति? तस्य कर्मणो विपाकेनेयं पूयशोणितं भक्षयति। मम बुद्धिरुत्पन्ना—तत्र प्रतिसंधिं 5 गृह्णीयां यत्रैतान् सर्वान् स्वकं स्वकं कर्मफलं परिभुञ्जानान् पश्येयमिति। यया मयार्यमहाकात्यायनं पिण्डकेन प्रतिपाद्य प्रणीते त्रायस्त्रिंशे देवनिकाये उपपत्तव्यम्, साहं मिथ्याप्रणिधानवशात् प्रेतमहर्द्धिका संवृत्ता। श्रोण, गमिष्यसि त्वं वासवग्रामकम्? तत्र मम दुहिता वेश्यं वाहयति। सा त्वया वक्तव्या—दृष्टास्ते मया पिता माता भ्राता भ्रातुर्जाया दासी। ते कथयन्ति—अनिष्टोऽस्य कर्मणः फलविपाकः। विरमास्मादसद्धर्मात्। भगिनि, 10 त्वमेव कथयसि—दुष्कुहका जाम्बुद्वीपका मनुष्याः, नाभिश्रद्दधास्यन्ति। श्रोण, यदि न श्रद्दधास्यति, वक्तव्या—तव पौराणे पैतृके वासगृहे चत्वारो लोहसंघाटाः सुवर्णस्य पूर्णास्तिष्ठन्ति, मध्ये च सौवर्णदण्डकमण्डलुः। ते कथयन्ति—तमुद्धृत्यात्मानं सम्यक्सुखेन प्रीणय, आर्यं च महाकात्यायनं कालेन कालं पिण्डकेन प्रतिपादय, अस्माकं च नाम्ना दक्षिणामादेशय। अप्येवैतत् कर्म तनुत्वं परिक्षयं पर्यादानं गच्छेत्। तेन तस्याः प्रतिज्ञातम्। 15 एवं तस्य परिभ्रमतो द्वादश वर्षा अतिक्रान्ताः॥ C 15

तयोक्तः—श्रोण, गमिष्यसि त्वं वासवग्रामकम्? भगिनि, गमिष्यामि। स तस्मिन्नेव विमाने उषितः। तया तेषामेव प्रेतानामाज्ञा दत्ता—भवन्तो गच्छत, श्रोणं कोटिकर्णं सुप्तमेव वासवग्रामके पैतृके उद्याने स्थापयित्वा आगच्छत। स तैर्वासवग्रामके पैतृके उद्याने स्थापितः। स प्रतिविबुद्धो यावत् पश्यति घण्टाछत्राणि व्यजनानि, अक्षराणि 20 लिखितानि—यदि तावच्छ्रोणः कोटिकर्णो जीवति, लघ्वागमनाय, क्षिप्रमागमनाय, च्युतः कालगतो गत्युपपत्तिस्थानात् स्थानान्तरविशेषतायै। स संलक्षयति—यदि अहं मातापितृभ्यां मृत एव गृहीतः, कस्माद्भूयोऽहं गृहं प्रविशामि? गच्छामि, आर्य महाकात्यायनस्यान्तिकात् प्रव्रजामीति। अथ श्रोणः कोटिकर्णो येनायुष्मान् महाकात्यायनस्तेनोपसंक्रान्तः। अद्राक्षीदायुष्मान् महाकात्यायनः श्रोणं कोटिकर्णं दूरादेव। दृष्ट्वा च पुनः 25 श्रोणं कोटिकर्णमिदमवोचत्—एहि श्रोण, स्वागतं ते। दृष्टस्ते श्रोण अयं लोकः परश्च लोकः? स कथयति—दृष्टो भदन्त महाकात्यायन। लभेयाहं भदन्त महाकात्यायन स्वाख्याते धर्मविनये प्रव्रज्यामुपसंपदं भिक्षुभावम्। चरेयमहं भवतोऽन्तिके ब्रह्मचर्यम्। स आर्येणोक्तः—श्रोण, तां तावत् पूर्विकां प्रतिज्ञां परिपूरय। यथागृहीतान् संदेशान् समर्पयेति। स तस्यौरभ्रिकस्य सकाशमुपसंक्रान्तः। भद्रमुख, दृष्टस्ते पिता मया। स कथयति—अनिष्टोऽस्य कर्मणः 30 फलविपाकः। विरमास्मादसद्धर्मात्। भोः पुरुष, अद्य मम पितुर्द्वादशवर्षाणि कालगतस्य। अस्ति कश्चिद् दृष्टः परलोकात् पुनरागच्छन्? भद्रमुख, एषोऽहमागतः। नासौ श्रद्दधाति। भद्रमुख, यदि न श्रद्दधासि, स तव पिता कथयति—अस्ति सूनाधस्तात् सुवर्णस्य कलशः।

पूर्णस्तिष्ठति। तमुद्धृत्यात्मानं सम्यक्सुखेन प्रीणय। आर्यं च महाकात्यायनं कालेन कालं
C 16 पिण्डकेन प्रतिपादय, अस्माकं च नाम्ना दक्षिणामादेशय। अप्येवैतत् कर्म तनुत्वं परिक्षयं
पर्यादानं गच्छेत्। स संलक्षयति—न कदाचिदेवं मया श्रुतपूर्वम्। पश्यामि, सचेद् भूतं
भविष्यति, सर्वमेतत् सत्यम्। तेन गत्वा खनितम्। यावत् तत् सर्वं तत् तथैव। तेनाभि-
5 श्रद्दधातम्। ततः पश्चात् स पारदारिकस्य सकाशमुपसंक्रान्तः। उपसंक्रम्य कथयति—भद्रमुख,
दृष्टस्ते मया पिता। स कथयति—अनिष्टोऽस्य कर्मणः फलविपाकः। विरमास्मात् पापका-
दसद्धर्मात्। स कथयति—भोः पुरुष, अद्य मम पितुर्द्वादश वर्षाणि कालं गतस्य। अस्ति
कश्चित् त्वया दृष्टः परलोकं गत्वा पुनरागच्छन्? भद्रमुख, एषोऽहमागतः। नासौ श्रद्दधाति।
स चाह—भद्रमुख, सचेन्नाभिश्रद्दधासि, तव पित्रा अग्निष्टोमस्याधस्तात् सुवर्णस्य कलशः
10 पूरयित्वा स्थापितः। स कथयति—तमुद्धृत्यात्मानं सम्यक्सुखेन प्रीणय, आर्यं च महाकात्या-
यनं कालेन कालं पिण्डकेन प्रतिपादय, अस्माकं च नाम्ना दक्षिणामादेशय। अप्येवैतत्
कर्म तनुत्वं परिक्षयं पर्यादानं गच्छेत्। स संलक्षयति—न कदाचिदेतन्मया श्रुतपूर्वम्।
पश्यामि, सचेद् भूतं भविष्यति, सर्वमेतत् सत्यम्। तेन गत्वा खनितम्। यावत् तत्सर्वं
तत्तथैव। तेनाभिश्रद्दधातम्। स तस्या वेश्यायाः सकाशमुपसंक्रान्तः। उपसंक्रम्य कथयति—
15 भगिनि, दृष्टास्ते मया माता पिता भ्राता भ्रातुर्जाया दासी। ते कथयन्ति—अनिष्टोऽस्य
कर्मणः फलविपाकः। विरमास्मात् पापकादसद्धर्मात्। सा कथयति—भोः पुरुष, मम
मातापित्रोर्द्वादश वर्षाणि कालगतयोः। अस्ति कश्चित् त्वया दृष्टः परलोकं गत्वा पुनरा-
गच्छन्? स कथयति—एषोऽहमागतः। सा न श्रद्दधाति। स कथयति—भगिनि, सचेन्नाभि-
श्रद्दधासि, तव पौराणे पैतृके वासगृहे चतस्रः लोहसंघाटाः सुवर्णपूर्णास्तिष्ठन्ति, मध्ये च
20 सौवर्णदण्डकमण्डलुः। ते कथयन्ति—तमुद्धृत्यात्मानं सम्यक्सुखेन प्रीणय, आर्यं च महा-
कात्यायनं कालेन कालं पिण्डकेन प्रतिपादय, अस्माकं च नाम्ना दक्षिणामादेशय।
C 17 अप्येवैतत् कर्म तनुत्वं परिक्षयं पर्यादानं गच्छेत्। सा संलक्षयति—न कदाचिन्मया श्रुत-
पूर्वम्। पश्यामि, सचेद् भूतं भविष्यति, सर्वमेतत् सत्यम्। तया गत्वा खनितम्। यावत्
तत् सर्वं तत्तथैव। तयाभिश्रद्दधातम्। श्रोणः कोटिकर्णः संलक्षयति—सर्वोऽयं लोकः
25 सुवर्णस्य श्रद्दधाति, न तु कश्चिन्मम श्रद्धया गच्छतीति। तेन वैपुष्पितम्। शिशुत्वे सुव-
र्णेन दशना बद्धाः। तयासौ प्रत्यभिज्ञातः। स्यादार्यः श्रोणः कोटिकर्ण एव ते भगिनी-
जनः संजानते(?)। तया गत्वा तस्य मातापितृभ्यामारोचितम्। अम्ब तात कोटिकर्णोऽभ्या-
गत इति। अनेकैस्तेषामारोचितम्। ते न कस्यचित् श्रद्धया गच्छन्ति। ते कथयन्ति—
पुत्रि त्वमप्यस्माकमुत्प्रासयसि। यावदसौ स्वयमेव गतः। तेन द्वारकोष्ठके स्थित्वो-
30 त्काशनशब्दः कृतः। हिरण्यस्वरोऽसौ महात्मा। तस्य शब्देन सर्वं गृहमापूरितम्। स तैः
स्वरेण प्रत्यभिज्ञातः। ते कण्ठे परिष्वज्य रुदितुमारब्धौ। तेषां बाष्पेण पटलानि स्फुटि-
तानि। द्रष्टुमारब्धौ। स कथयति—अम्ब तात अनुजानीध्वम्। प्रव्रजिष्यामि सम्यगेव श्रद्धया

अगारादनगारिकाम्। तौ कथयतः—पुत्र आवां त्वदीयेन शोकेन रुदन्तावन्धीभूतौ। इदानीं त्वामेवागम्य चक्षुः प्रतिलब्धम्। यावदावां जीवामः, तावन्न प्रव्रजितव्यम्। यदा कालं करिष्यामः, तदा प्रव्रजिष्यसि। तेनायुष्मतो महाकात्यायनस्यान्तिकाद्धर्मं श्रुत्वा स्रोतापत्तिफलं साक्षात्कृतम्, मातापितरौ च शरणगमनशिक्षापदेषु प्रतिष्ठापितौ। आगमचतुष्टयमधीतम्, सकृदागामिफलं साक्षात्कृतम्। मातापितरौ सत्येषु प्रतिष्ठापितौ ॥ 5

अपरेण समयेन तस्य मातापितरौ कालगतौ। स तं धनजातं दीनानाथकृपणेभ्यो दत्त्वा दरिद्रानदरिद्रान् कृत्वा येनायुष्मान् महाकात्यायनस्तेनोपसंक्रान्तः। उपसंक्रम्यायुष्मतो महाकात्यायनस्य पादौ शिरसा वन्दित्वा एकान्तेऽस्थात्। एकान्ते स्थितः श्रोणः कोटिकर्ण आयुष्मन्तं महाकात्यायनमिदमवोचत्—लभेयाहमार्यमहाकात्यायन स्वाख्याते धर्मविनये प्रव्रज्याम्, यावच्चरेयाहं भगवतोऽन्तिके ब्रह्मचर्यम्। स आयुष्मता महाकात्यायनेन प्रव्रजितः। 10 तेन प्रव्रज्य मातृकाधीता, अनागामिफलं साक्षात्कृतम्। अस्मात् परान्तकेषु जनपदेष्वल्पभिक्षुकम्। कृच्छ्रेण देशवर्गो गणः परिपूर्यते। स त्रैमासीं श्रामणेरो धारितः। धर्मता खलु यथा बुद्धानां भगवतां श्रावकाणां द्वौ संनिपातौ भवतः। यच्चाषाढ्यां वर्षोपनायिकायां यच्च कार्तिक्यां पूर्णमास्याम्। तत्र ये आषाढ्यां वर्षोपनायिकायां संनिपतन्ति, ते तांस्तानुद्देशयोगमनसिकारानुद्गृह्य पर्यवाप्य तासु तासु ग्रामनगरनिगमराष्ट्रराजधानीषु वर्षामुपगच्छन्ति। ये कार्तिक्यां 15 पौर्णमास्यां संनिपतन्ति, ते यथाधिगतमारोचयन्ति, उत्तरे च परिपृच्छन्ति सूत्रस्य विनयस्य मातृकायाः। एवमेव महाश्रावकाणामपि। अथ ये आयुष्मतो महाकात्यायनस्य सार्धंविहार्यन्तेवासिका भिक्षवः तांस्तानुद्देशयोगमनसिकारविशेषान् गृह्य पर्यवाप्य तासु तासु ग्रामनगरनिगमराष्ट्रराजधानीषु वर्षामुपगताः, ते त्रयाणां वार्षिकाणां मासानामत्ययात् कृतचीवरा निष्ठितचीवराः समादाय पात्रचीवरं येनायुष्मान् महाकात्यायनस्तेनोपसंक्रान्ताः। 20 उपसंक्रम्यायुष्मतो महाकात्यायनस्य पादौ शिरसा वन्दित्वैकान्ते निषण्णाः। एकान्ते निषद्य यथाधिगतमारोचयन्ति, उत्तरे च परिपृच्छन्ति। देशवर्गो गणः परिपूर्णः। स तेनोपसंपादितः। तेन तृतीयपिटकमधीतम्। सर्वक्लेशप्रहाणादर्हत्त्वं साक्षात्कृतम्। अर्हन् संवृत्तः त्रैधातुकवीतरागो यावद् अभिवाद्यश्च संवृत्तः ॥

अथायुष्मतो महाकात्यायनस्य सार्धंविहार्यन्तेवासिका आयुष्मन्तं महाकात्यायनं 25 यावत्तावत् पर्युपास्यायुष्मन्तं महाकात्यायनमिदवमोचन्—दृष्टोऽस्माभिरुपाध्यायः पर्युपासितश्च। गच्छामो वयम्, भगवन्तं पर्युपासिष्यामहे। स चाह—वत्सा एवं कुरुध्वम्। द्रष्टव्या एव पर्युपासितव्या एव हि तथागता अर्हन्तः सम्यक्संबुद्धाः। तेन खलु पुनः समयेन श्रोणः कोटिकर्णस्तस्यामेव पर्षदि संनिषण्णोऽभूत् संनिपतितः। अथायुष्मान् श्रोणः कोटिकर्ण उत्थायासनाद् एकांसमुत्तरासङ्गं कृत्वा दक्षिणं जानुमण्डलं पृथिव्यां प्रतिष्ठाप्य येनायुष्मान् महाकात्यायनस्तेना- 30 ञ्जलिं कृत्वा प्रणम्यायुष्मन्तं महाकात्यायनमिदमवोचत्—दृष्टो मयोपाध्यायानुभावेन स भगवान् धर्मकायेन, नो तु रूपकायेन। गच्छामि उपाध्याय, रूपकायेनापि तं भगवन्तं द्रक्ष्यामि। स

C 18

C 19

आह—एवं वत्स कुरुष्व। दुर्लभदर्शना हि वत्स तथागता अर्हन्तः सम्यक्संबुद्धाः तद्यथा औदुम्बरपुष्पम्। अस्माकं च वचनेन भगवतः पादौ शिरसा वन्दस्व, अल्पाबाधतां च यावत् सुखस्पर्शविहारतां च। पञ्च प्रश्नांश्च पृच्छ—अस्मात् परान्तकेषु भदन्त जनपदेषु अल्पभिक्षुकम्। कृच्छ्रेण दशवर्गगणः परिपूर्यते। तत्रास्माभिः कथं प्रतिपत्तव्यम्? खरा भूमी 5 गोकण्टका धानाः। अस्माकमपरान्तकेषु जनपदेषु इदमेवंरूपमास्तरणं प्रत्यास्तरणं तद्यथा अविचर्म गोचर्म च्छागचर्म। तदन्येषु जनपदेषु इदमेवंरूपमास्तरणं प्रत्यास्तरणं तद्यथा एरको मेरको जन्दुरको मन्दुरकः। एवमेवास्मात् परान्तकेषु जनपदेष्विदमेवंरूपमास्तरणं प्रत्यास्तरणं तद्यथा अविचर्म पूर्ववत्। उदकस्तब्धिका मनुष्याः स्नातोपविचाराः। भिक्षुर्भिक्षोश्चीवरकानि प्रेषयति इतश्च्युतानि तत्रासंप्राप्तानि कस्यैतानि नैःसर्गिकानि। अधि-

C 20 10 वासयति आयुष्माञ्छ्रोणः कोटिकर्ण आयुष्मतो महाकात्यायनस्य तूष्णीभावेन। अथायुष्माञ्छ्रोणः कोटिकर्णः तस्या एव रात्रेरत्ययात् पूर्वाह्णे निवास्य पात्रचीवरमादाय वासवग्रामकं पिण्डाय प्राविक्षत्। यावदनुपूर्वेण श्रावस्तीमनुप्राप्तः। अथायुष्माञ्छ्रोणः कोटिकर्णः पात्रचीवरं प्रतिसामय्य पादौ प्रक्षाल्य येन भगवांस्तेनोपसंक्रान्तः। उपसंक्रम्यैकान्ते निषण्णः। तत्र भगवानायुष्मन्तमानन्दमामन्त्रयते स्म—गच्छ आनन्द तथागतस्य श्रोणस्य च 15 कोटिकर्णस्यैकविहारे मञ्चं प्रज्ञापय। एवं भदन्तेति आयुष्मानानन्दस्तथागतस्य श्रोणस्य च कोटिकर्णस्य यावत् प्रज्ञाप्य येन भगवांस्तेनोपसंक्रान्तः। उपसंक्रम्य भगवन्तमिदमवोचत्—प्रज्ञप्तो भदन्त तथागतस्य श्रोणस्य च कोटिकर्णस्यैकविहारे मञ्चो यस्येदानीं भगवान् कालं मन्यते। अथ भगवान् येन श्रोणस्य कोटिकर्णस्य विहारस्तेनोपसंक्रान्तः, यावद्विहारं प्रविश्य निषण्णः। यावत् पश्यति स्मृतिं प्रतिमुखमुपस्थाप्य। अथायुष्मानपि श्रोणः कोटिकर्णो 20 बहिर्विहारस्य पादौ प्रक्षाल्य विहारं प्रविश्य निषण्णः पर्यङ्कमाभुज्य यावत् प्रतिमुखं स्मृतिमुपस्थाप्य। तां खलु रात्रिं भगवान् आयुष्मांश्च श्रोणः कोटिकर्ण आर्येण तूष्णीभावेनाधिवासितवान्। अथ भगवान् रात्र्याः प्रत्यूषसमये आयुष्मन्तं श्रोणं कोटिकर्णमामन्त्रयते स्म—प्रतिभातु ते श्रोण धर्मो यो मया स्वयमभिज्ञायाभिसंबुध्याख्यातः। अथायुष्मान् श्रोणो भगवता कृतावकाशः अस्मात् परान्तिकया गुप्तिकया उदानात् पारायणात् सत्यदृष्टः 25 शैलगाथा मुनिगाथा अर्थवर्गीयाणि च सूत्राणि विस्तरेण स्वरेण स्वाध्यायं करोति। अथ भगवाञ्छ्रोणस्य कोटिकर्णस्य कथापर्यवसानं विदित्वा आयुष्मन्तं श्रोणं कोटिकर्णमिदमवोचत्—साधु साधु श्रोण, मधुरस्ते धर्मो भाषितः प्रणीतश्च, यो मया स्वयमभिज्ञायाभि-

C 21 संबुध्याख्यातः। अथायुष्मतः श्रोणस्य कोटिकर्णस्यैतदभवत्—अयं मे कालो भगवत उपाध्यायस्य वचसारोचयितुमिति विदित्वोत्थायासनाद् यावद् भगवन्तं प्रणम्येदमवोचत्—30 अस्मात् परान्तकेषु जनपदेषु वासवग्रामके भदन्तमहाकात्यायनः प्रतिवसति, यो मे उपाध्यायः। स भगवतः पादौ शिरसा वन्दते अल्पाबाधतां च पृच्छति यावत् स्पर्शविहारतां च। पञ्च च प्रश्नान् पृच्छति विस्तरेणोच्चारयितव्यानि। अथ भगवाञ्छ्रोणं कोटिकर्ण-

मिदमवोचत्—अकालं ते श्रोण प्रश्नव्याकरणाय। संघमेलकः तत्र कालो भविष्यति प्रश्नस्य व्याकरणाय। अथ भगवान् काल्यमेवोत्थाय पुरस्ताद्भिक्षुसंघस्य प्रज्ञप्त एवासने निषण्णः। अथायुष्माञ्छ्रोणः कोटिकर्णो येन भगवांस्तेनोपसंक्रम्य भगवतः पादौ शिरसा वन्दित्वैकान्तेऽस्थात्। एकान्तस्थितो भगवन्तमिदमवोचत्—अस्मात् परान्तकेषु जनपदेषु वासवग्रामके भदन्तमहाकात्यायनः प्रतिवसति, यो मे उपाध्यायः। स भगवतः पादौ शिरसा 5 वन्दते अल्पाबाधतां च पृच्छति यावत् स्पर्शविहारतां च। पञ्च च प्रश्नानि विस्तरेणोच्चारयितव्यानि यथापूर्वमुक्तानि यावत् कस्य नैःसर्गिकानि। भगवानाह—तस्मादनुजानामि। प्रत्यन्तिमेषु जनपदेषु विनयधरपञ्चमेनोपसंपदा, सदा स्नातः, एकपलाशिके उपानहे धारयितव्ये न द्विपुटां न त्रिपुटाम्। सा चेत् क्षयधर्मिणी भवति, तां त्यक्त्वा पुनर्नवा ग्रहीतव्या। भिक्षुर्भिक्षोश्चीवरकानि प्रेषयति इतश्च्युतानि तत्रासंप्राप्तानि न कस्यचिन्नैःसर्गि- 10 काणि। आयुष्मान् उपाली बुद्धं भगवन्तं पृच्छति—यदुक्तं भदन्त भगवता प्रत्यन्तिमेषु जनपदेषु विनयधरपञ्चमेनोपसंपदम्, तत्र कतमोऽन्तः कतमः प्रत्यन्तः? पूर्वेणोपालि पुण्डवर्धनं नाम नगरम्, तस्य पूर्वेण पुण्डकक्षो नाम पर्वतः, ततः परेण प्रत्यन्तः। दक्षिणेन शरावती नाम नगरी, तस्याः परेण सरावती नाम नदी, सोऽन्तः, ततः परेण प्रत्यन्तः। पश्चिमेन स्थूणोपस्थूणकौ ब्राह्मणग्रामकौ, सोऽन्तः, ततः परेण प्रत्यन्तः। उत्तरेण उशीर- 15 C 22 गिरिः सोऽन्तः, ततः परेण प्रत्यन्तः॥

किं भदन्त आयुष्मता श्रोणेन कोटिकर्णेन कर्म कृतमिति विस्तरः। भगवानाह—भूतपूर्वं यावत् काश्यपो नाम तथागतोऽर्हन् सम्यक्संबुद्धो भगवान् शास्ता लोक उत्पन्नः। तेन खलु समयेन वाराणस्यां द्वौ जायापतिकौ। ताभ्यां काश्यपस्य सम्यक्संबुद्धस्यान्तिके शरणगमनशिक्षापदानि उद्गृहीतानि। यदा काश्यपः सम्यक्संबुद्धः सकलं बुद्धकार्यं कृत्वा 20 निरुपधिशेषे निर्वाणधातौ परिनिर्वृतः, तस्य राज्ञा कृकिना चतूरत्नमयं चैत्यं कारितं समन्ताद्योजनमुच्चत्वेन। तेन तत्र खण्डस्फुटप्रतिसंस्करणाय ये पूर्वनगरद्वारे करप्रत्याया उत्तिष्ठन्ते, ते तस्मिन् स्तूपेऽनुप्रदत्ताः। यदा कृकी राजा कालगतः, तस्य पुत्रः सुजातो नाम्ना स राज्ये प्रतिष्ठापितः। तस्यामात्यैः स्तोकाः करप्रत्याया उपनामिताः। सोऽमात्यानामन्त्रयते—किंकारणमस्माकं भवद्भिः स्तोककरप्रत्याया उपनामिताः? कि- 25 मस्माकं विजिते करप्रत्याया नोत्तिष्ठन्ते? ते कथयन्ति—देव, कुतः करप्रत्याया उत्तिष्ठन्ते? ये देव पूर्वद्वारे करप्रत्यायास्ते वृद्धराज्ञा स्तूपे खण्डस्फुटप्रतिसंस्कारकरणाय प्रज्ञापिताः। यदि देवोऽनुजानीयात्, ते वयं तान् करप्रत्यायान् समुच्छिन्दामः। स कथयति—भवन्तः, यन्मम पित्रा कृतम्, देवकृतं न तु ब्रह्मकृतं तत्। ते संलक्षयन्ति—यदि देवोऽनुजानीते, वयं तथा करिष्यामो यथा स्वयमेव ते करप्रत्याया नोत्थास्यन्तिं। तैः स द्वारे बद्ध्वा 30 स्थापितः। न भूयः करप्रत्याया उत्तिष्ठन्ते। तस्मिन् स्तूपे चटितकानि प्रादुर्भूतानि। तौ जायापती वृद्धीभूतौ तत्रैव स्तूपे परिकर्म कुर्वाणौ तिष्ठतः। उत्तरापथात् सार्थवाहः

पण्यमादाय वाराणसीमनुप्राप्तः। तेनासौ दृष्टः स्तूपः। चटितस्फुटितकः प्रादुर्भूतः। स दृष्ट्वा पृच्छति—अम्ब तात कस्यैष स्तूप इति। तौ कथयतः—काश्यपस्य सम्यक्संबुद्धस्य। C 23 केन कारितः? कृकिना राज्ञा। न तेन राज्ञास्मिन् स्तूपे खण्डस्फुटप्रतिसंस्कारकरणाय किंचित् प्रज्ञप्तम्? तौ कथयतः—प्रज्ञप्तम्। ये पूर्वनगरद्वारे करप्रत्यायास्तेऽस्मिन् स्तूपे 5 खण्डस्फुटप्रतिसंस्करणाय निर्यातिताः। कृकी राजा कालगतः। तस्य पुत्रः सुजातो नाम, स राज्ये प्रतिष्ठितः। तेन ते करप्रत्यायाः समुच्छिन्नाः। तेनास्मिन् स्तूपे चटितस्फुटितकानि प्रादुर्भूतानि। तस्य रत्नकर्णिका कर्णे आमुक्तिका। तेन सा रत्नकर्णिकावतार्य तयोर्दत्ता। अम्ब तात अनया कर्णिकयास्मिन् स्तूपे खण्डस्फुटप्रतिसंस्कारं कुरुतमिति। यावदहं पण्यं विसर्जयित्वा आगच्छामि। ततः पश्चाद् भूयोऽपि दास्यामि। तैस्तां विक्रीय 10 तस्मिन् स्तूपे खण्डस्फुटितप्रतिसंस्कारः कृतः। अपरमुत्सर्पितम्। अथापरेण समयेन सार्थवाहः पण्यं विसर्जयित्वा आगतः। तेन स दृष्टः स्तूपोऽसेचनकदर्शनः। दृष्ट्वा च भूयस्या मात्रयाभिप्रसन्नः। स प्रसादजातः पृच्छति—अम्ब तात युष्माभिः किंचिदुद्धारिकृतम्। तौ कथयतः—पुत्र नास्माभिः किंचिदुद्धारिकृतम्। किं त्वपरमुत्सर्पितं तिष्ठति। तेन प्रसादजातेन यत्तत्रावशिष्टम् अपरं च दत्त्वा महतीं पूजां कृत्वा प्रणिधानं च कृतम्— 15 अनेनाहं कुशलमूलेनाढ्ये महाधने महाभोगे कुले जायेयम्। एवंविधानां च धर्माणां लाभी स्याम्। एवंविधमेव शास्तारमारागयेयं मा विरागयेयमिति। किं मन्यध्वे भिक्षवः योऽसौ सार्थवाहः, एष एवासौ श्रोणः कोटिकर्णः। यदनेन काश्यपस्य सम्यक्संबुद्धस्य स्तूपे कारां कृत्वा प्रणिधानं कृतम्, तस्य कर्मणो विपाकेनाढ्ये महाधने महाभोगे कुले जातः। मम शासने प्रव्रज्य सर्वक्लेशप्रहाणादर्हत्त्वं साक्षात्कृतम्। अहमनेन काश्यपेन सम्यक्संबुद्धेन 20 सार्धं समजवः समबलः समधुरः समसामान्यप्राप्तः शास्ता आरागितो न विरागितः। इति भिक्षव एकान्तकृष्णानामेकान्तकृष्णो विपाकः, एकान्तशुक्लानां धर्माणामेकान्तशुक्लो विपाकः, C 24 व्यतिमिश्राणां व्यतिमिश्रः। तस्मात्तर्हि भिक्षव एकान्तकृष्णानि कर्माण्यपास्य व्यतिमिश्राणि च, एकान्तशुक्लेष्वेव कर्मस्वाभोगः करणीयः। इत्येवं वो भिक्षवः शिक्षितव्यम्॥

भिक्षव ऊचुः—किं भदन्त आयुष्मता श्रोणेन कोटिकर्णेन कर्म कृतं यस्य कर्मणो 25 विपाकेन दृष्ट एव धर्मे अपाया दृष्टाः? भगवानाह—यदनेन मातुरन्तिके खरवाक्कर्म निश्चारितम्, तस्य कर्मणो विपाकेन दृष्ट एव धर्मे अपाया दृष्टा इति॥

इदमवोचद्भगवान्। आत्तमनसस्ते भिक्षवो भगवतो भाषितमभ्यनन्दन्॥

इति श्रीदिव्यावदाने कोटिकर्णावदानं प्रथमम्॥



## २ पूर्णावदानम् ।

भगवान् श्रावस्त्यां विहरति स्म जेतवनेऽनाथपिण्डदस्यारामे । तेन खलु समयेन सूर्पारके नगरे भवो नाम गृहपतिः प्रतिवसति आढ्यो महाधनो महाभोगो विस्तीर्णविशालपरिग्रहो वैश्रवणधनसमुदितो वैश्रवणधनप्रतिस्पर्धी । तेन सदृशात् कुलात् कुलत्रमानीतम् । स तया सार्धं क्रीडति रमते परिचारयति । तस्य क्रीडतो रममाणस्य परिचारयतः कालान्तरेण पत्नी आपन्नसत्त्वा संवृत्ता । सा अष्टानां नवानां वा मासानामत्ययात् प्रसूता । दारको 5 जातः । तस्य त्रीणि सप्तकानि एकविंशतिदिवसानि विस्तरेण जातस्य जातमहं कृत्वा नामधेयं व्यवस्थाप्यते—किं भवतु दारकस्य नामेति । ज्ञातय ऊचुः—अयं दारको भवस्य गृहपतेः पुत्रः, तस्माद्भवतु भविलेति नामधेयं व्यवस्थापितम् । भूयोऽप्यस्य क्रीडतो रममाणस्य परिचारयतः पुत्रो जातः । तस्य भवत्रातेति नामधेयं व्यवस्थापितम् । पुनरप्यस्य पुत्रो जातः । तस्य भवनन्दीति नामधेयं व्यवस्थापितम् । यावदपरेण समयेन भवो गृहपतिः 10 C 25 ग्लानः संवृत्तः । सोऽत्यर्थं परुषवचनसमुदाचारी यतः, पत्न्या पुत्रैश्चाप्युपेक्षितः । तस्य प्रेष्यदारिका । सा संलक्षयति—मम स्वामिना अनेकैरुपायशतैर्भोगाः समुदानीताः । सेदानीं ग्लानः संवृत्तः । सैष पत्न्या पुत्रैश्चाप्युपेक्षितः । न मम प्रतिरूपं स्याद् यदहं स्वामिनमध्युपेक्षेयमिति । सा वैद्यसकाशं गत्वा कथयति—आर्य जानीषे त्वं भवं गृहपतिम् ? जाने, किं तस्य ? तस्यैवंविधं ग्लान्यं समुपजातम् । स पत्न्या पुत्रैश्चाप्युपेक्षितः । तस्य 15 भविषज्यं ( भैषज्यं ) व्यपदिशेति । स कथयति—दारिके त्वमेव कथयसि—स पत्न्या पुत्रैश्चाप्युपेक्षित इति । अथ कस्तस्योपस्थानं करोति ? सा कथयति—अहमस्योपस्थानं करोमि । किं त्वल्पमूल्यानि भैषज्यानि व्यपदिशेति । तेन व्यपदिष्टम्—इदं तस्य भैषज्यमिति । ततस्तया किंचित् स्वभक्तात्तस्मादेव गृहादपहृत्योपस्थानं कृतम् । स स्वस्थीभूतः संलक्षयति—अहं पत्न्या पुत्रैश्चाध्युपेक्षितः । यदहं जीवितः, तदस्या दारिकायाः प्रभावात् । तदस्याः प्रत्युप- 20 पकारः कर्तव्य इति । सा तेनोक्ता—दारिके, अहं पत्न्या पुत्रैश्चाप्युपेक्षितः । यत् किंचिदहं जीवितः, सर्वं तव प्रभावात् । अहं ते वरमनुप्रयच्छामीति । सा कथयति—स्वामिन्, यदि मे परितुष्टोऽसि, भवतु मे त्वया सार्धं समागम इति । स कथयति—किं ते मया सार्धं समागमेन ? पञ्च कार्षापणशतान्यनुप्रयच्छामि, अदासीं चोत्सृजामीति । सा कथयति—आर्यपुत्र, दूरमपि परमपि गत्वा दास्येवाहम्, यदि तु आर्यपुत्रेण सार्धं समागमो भवति, एवमदासी भवामीति । 25 तेनावश्यं निर्बन्धं ज्ञात्वा अभिहिता—यदा संवृत्ता ऋतुमती तदा ममारोचयिष्यसीति । सा अपरेण समयेन कल्या संवृत्ता ऋतुमती । तया तस्यारोचितम् । ततो भवेन गृहपतिना तया सार्धं परिचारितम् । सा आपन्नसत्त्वा संवृत्ता । यमेव दिवसमापन्नसत्त्वा संवृत्ता तमेव दिवससुपादाय भवस्य गृहपतेः सर्वार्थाः सर्वकर्मान्ताश्च परिपूर्णाः । सा त्वष्टानां वा C 26 नवानां मासानामत्ययात् प्रसूता । दारको जातोऽभिरूपो दर्शनीयः प्रासादिको गौरः 30 कनकवर्णश्छत्राकारशीर्षः प्रलम्बबाहुर्विस्तीर्णललाटः संगतभ्रूस्तुङ्गनासः । यस्मिन्नेव दिवसे

दारको जातः, तस्मिन्नेव दिवसे भवस्य गृहपतेर्भूयस्या मात्रया सर्वार्थाः सर्वकर्मान्ताः परिपूर्णाः । तस्य ज्ञातयः संगम्य समागम्य त्रीणि सप्तकान्येकविंशतिदिवसानि विस्तरेण जातस्य जातमहं कृत्वा पूर्ववत् यावत्पूर्णेति नामधेयं व्यवस्थापितम् । पूर्णो दारकोऽष्टाभ्यो धात्रीभ्यो द्वाभ्यामंसधात्रीभ्यां दत्तो विस्तरेण यावदाशु वर्धते ह्रदस्थमिव पङ्कजम् । यदा महान्
5 संवृत्तः, तदा लिप्यामुपन्यस्तः संख्यायां गणनायां मुद्रायामुद्धारे न्यासे निक्षेपे वस्तुपरीक्षायां रत्नपरीक्षायां हस्तिपरीक्षायामश्वपरीक्षायां कुमारपरीक्षायां कुमारिकापरीक्षायाम् । अष्टासु परीक्षासूद्घटको वाचकः पण्डितः पटुप्रचारः संवृत्तः । ततो भवेन गृहपतिना भविलादीनां पुत्राणां यथानुपूर्व्या निवेशाः कृताः । ते पत्नीभिः सार्धमतीव संरक्ता निवृत्ता मण्डनपरमा व्यवस्थिताः । ततो भवो गृहपतिः करे कपोलं दत्त्वा चिन्तापरो व्यवस्थितः । स पुत्रैर्दृष्टः
10 पृष्टश्च—तात, कस्मात्त्वं करे कपोलं दत्त्वा चिन्तापरो व्यवस्थित इति । स कथयति—पुत्रकाः, न तावन्मया निवेशः कृतो यावत्सुवर्णलक्षः समुदानीत इति । ते यूयं निरस्तव्यापाराः पत्नीष्वत्यर्थं संरक्ता मण्डनपरमा व्यवस्थिताः । ममात्ययात् गृहं शोचनीयं भविष्यति । कथं न चिन्तापरो भविष्यामीति ? भविलेन रत्नकर्णिका पिनद्धा । स तामवतार्य दारुकर्णिकां पिनह्य प्रतिज्ञामारूढः— न तावत् रत्नकर्णिकां पिनह्यामि यावत् सुवर्णलक्षः समुपार्जित इति । अपरेण स्तवकर्णिका ।
15 अपरेण त्रपुकर्णिका । तेषां यास्ताः संज्ञा भविलो भवत्रातो भवनन्दीति ता अन्तर्हिताः ।
C 27 दारुकर्णी स्तवकर्णी त्रपुकर्णीति प्रादुर्भूताः । ते पण्यमादाय महासमुद्रं संप्रस्थिताः । पूर्णः कथयति—तात, अहमपि महासमुद्रं गच्छामीति । स कथयति—पुत्र बालस्त्वम् । अत्रैव तिष्ठ, आवार्यां व्यापारं कुरु । स तत्रैवावस्थितः । तेऽपि संसिद्धयानपात्रा आगताः । मार्गश्रमं प्रतिविनोद्य कथयन्ति—तात कल्यतामस्मदीयं पण्यमिति । तेन कलितम्—एकैकस्य सुवर्णलक्षाः संवृत्ताः ।
20 पूर्णेनापि तत्रैव धर्मेण न्यायेन व्यवहारिताः सातिरेकाः सुवर्णलक्षाः समुदानीताः । पूर्णोऽपि पितुः पादयोर्निपत्य कथयति—तात, ममापि कल्यतामावारीसमुत्थितं द्रव्यमिति । स कथयति—पुत्र त्वमत्रैवावस्थितः । किं तव कल्यते ? स कथयति—तात कल्यताम् । तथापि ज्ञातं भविष्यतीति । कलितं यावन्न्यायोपार्जितस्य सुवर्णस्य मूल्यं वर्जयित्वा सातिरिक्ता लक्षाः संवृत्ताः । भवो गृहपतिः प्रीतिसौमनस्यजातः संलक्षयति—पुण्यमहेशाख्योऽयं सत्त्वो येनेहैव
25 स्थितेनेयत्सुवर्णं समुपार्जितमिति । यावदपरेण समयेन भवो गृहपतिर्ग्लानः संवृत्तः । स संलक्षयति—ममात्ययादेते भेदं गमिष्यन्ति । उपायसंविधानं कर्तव्यमिति । तेन तेऽभिहिताः— पुत्रकाः, काष्ठानि समुदानयतेति । तैः काष्ठानि समुदानीतानि । स कथयति—अग्निं प्रज्वालयतेति । तैरग्निः प्रज्वालितः । भवो गृहपतिः कथयति—एकैकमलातमपनयतेति । तैरपनीतम् । सोऽग्निर्निर्वाणः । स कथयति—पुत्रकाः, दृष्टो वः ? तात दृष्टः । स गाथां भाषते—

30 ज्वलन्ति सहिताङ्गारा भ्रातरः सहितास्तथा ।
प्रविभक्ता निशाम्यन्ति यथाङ्गारास्तथा नराः ॥ १ ॥

पुत्रकाः, न युष्माभिर्ममात्ययात् स्त्रीणां श्रोतव्यम्।

कुटुम्बं भिद्यते स्त्रीभिर्वाग्भिर्भिद्यन्ति कातराः।
दुर्न्यस्तो भिद्यते मन्त्रः प्रीतिर्भिद्यति लोभतः॥ २॥ इति॥

ते निष्क्रान्ताः। भविलस्तत्रैवावस्थितः। स तेनोक्तः—पुत्र, न कदाचित् त्वया पूर्णो मोक्तव्यः। पुण्यमहेशाख्योऽयं सत्त्वः। इत्युक्त्वा— 5

सर्वे क्षयान्ता निचयाः पतनान्ताः समुच्छ्रयाः।
संयोगा विप्रयोगान्ता मरणान्तं च जीवितम्॥ ३॥

इति कालधर्मेण संयुक्तः। तैर्नीलपीतलोहितावदातैर्वस्त्रैः शिबिकामलंकृत्य महता संस्कारेण श्मशानं नीत्वा ध्मापितः। ततस्ते शोकविनोदनं कृत्वा कथयन्ति—यदा अस्माकं पिता जीवति, तदा तदधीनाः प्राणाः। यदिदानीं निरस्तव्यापारास्तिष्ठामः, गृहमवसादं गमिष्यति। न शोभनं भविष्यति। यन्नु वयं पण्यमादाय देशान्तरं गच्छाम इति। पूर्णः कथयति—यद्येवमहमपि गच्छामीति। ते कथयन्ति—त्वमत्रैवावार्यां व्यापारं कुरु, वयमेव गच्छाम इति। ते पण्यमादाय देशान्तरं गताः। पूर्णो न्यस्तसर्वकार्यस्तत्रैवावस्थितः॥ C 28 10

धर्मता खलु ईश्वरगृहेषु दिवसपरिव्ययो दीयते। तास्तेषां पत्न्यो दारिकाः परिव्ययनिमित्तं प्रेषयन्ति। पूर्णोऽपि धनिभिः श्रेष्ठिभिः सार्थवाहैरन्यैश्चाजीविभिः परिवृतोऽवतिष्ठते। तास्त्ववकाशं न लभन्ते। यदा ते उपस्थाय प्रक्रान्ता भवन्ति, तदा तासां दिवसपरिव्ययं ददाति। ता दारिकाश्चिरचिरादागच्छन्तीत्युपालभ्यन्ते। ता एवमर्थं विस्तरेणारोचयन्ति। ताः कथयन्ति—एवं हि तेषां भवति, येषां दासीपुत्राः कुलेष्वैश्वर्यं वशे वर्तयन्तीति। भविलपत्न्या दारिका अभिहिता—त्वया कालं ज्ञात्वा गन्तव्यमिति। सा कालं ज्ञात्वा गच्छति, शीघ्रं लभते। अन्याश्चिरयन्ति। ताभिः सा पृष्टा—तया समाख्यातम्। ता अपि तया सार्धं गन्तुमारब्धाः। ता अपि शीघ्रं प्रतिलभन्ते। ताः स्वामिनीभिरुक्ताः—किमत्र कारणमिदानीं शीघ्रमागच्छथेति। ताः कथयन्ति—आरोग्यं ज्येष्ठभविकाया भवतु। यदा तस्या दारिका गता भवति, तदा लभ्यते। वयं तया सार्धं गच्छाम इति। ताः संजातामर्षाः कथयन्ति—एवं हि तेषां भवति येषां दासीपुत्राः कुलेष्वैश्वर्यं वशे वर्तयन्तीति। यावदपरेण समयेन भविलो भवत्रातो भवनन्दी च सहिताः समग्राः संमोदमाना महासमुद्रात् संसिद्धयानपात्रा आगताः। भविलेन पत्नी पृष्टा—भद्रे, शोभनं पूर्णेन प्रतिपालिता त्वमिति? सा कथयति—यथा भ्रात्रा पुत्रेण वेति। ते अन्येऽपि स्वामिभ्यां पृष्टे कथयतः—एवं हि तेषां भवति, येषां दासीपुत्राः कुलेष्वैश्वर्यं वशे वर्तयन्तीति। तौ संलक्षयतः—सुहृद्भेदकाः स्त्रियो भवन्तीति। यावदपरेण समयेन काशिकवस्त्रावारी उद्घाटिता। तत्समनन्तरं भविलस्य पुत्रो गतः। स पूर्णेन काशिकवस्त्रयुगेनाच्छादितः। अन्याभ्यां दृष्ट्वा स्वपुत्राः प्रेषिता यावत् काशिकवस्त्रावारी घट्टिता, फुट्टकवस्त्रावारी उद्घाटिता। ते च दैवयोगात् संप्राप्ताः। ते पूर्णेन फुट्टकैर्वस्त्रैराच्छादिताः। ते दृष्ट्वा स्वामिनोः कथयतः—दृष्टं युवाभ्यामपरेषां काशिक- 15 20 25 C 29 30

वस्त्राणि दीयन्ते, परेषां फुट्टकानीति। ताभ्यामनुसंज्ञप्तिर्दत्ता। किमेतदेव भविष्यति? नूनं काशिकवस्त्रावारी घट्टिता, फुट्टकवस्त्रावारी उद्घाटितेति। यावदपरेण समयेन शर्करावारी उद्घटिता। भविलस्य च पुत्रो गतः। तेन शर्कराखो[मो]दको लब्धः। तं दृष्ट्वा अन्याभ्यां स्वपुत्राः प्रेषिताः। ते दैवयोगाद् गुडावार्यामुद्घाटितायां गताः। तैर्गुडो लब्धः। ताभिस्तं 5 दृष्ट्वा स्वामिनौ तथा तथा भग्नौ यथा गृहविभागं कर्तुमारब्धौ। तौ परस्परं संजल्पं कुरुतः—सर्वथा विनष्टा वयम्, गृहं भाजयामेति। एकः कथयति—ज्येष्ठतरं शब्दयामः। एकः कथयति—विचारयामस्तावत् कथं भाजयामेति। तौ स्वबुद्ध्या विचारयतः। एकस्य गृहगतं क्षेत्रगतं च, एकस्यावारीगतं देशान्तरगतं च, एकस्य पूर्णकः। यदि ज्येष्ठतरो गृहगतं क्षेत्रगतं च ग्रहीष्यति, शक्नुमो वयमावारीगतेन देशान्तरगतेन चात्मानं 10 संधारयितुम्। अथावारीगतं देशान्तरगतं च ग्रहीष्यति, तथापि वयं शक्नुमो गृहगतेन क्षेत्रगतेन चात्मानं संधारयितुम्, पूर्णकस्य च मर्यादाबन्धं कर्तुमिति। तावेवं संजल्पं कृत्वा भविलस्य सकाशं गतौ। भ्रातः, विनष्टा वयं भाजयामो गृहमिति। स कथयति—

C 30 सुपरीक्षितं कर्तव्यम्, गृहभेदिकाः स्त्रियो भवन्तीति। तौ कथयतः—प्रत्यक्षीकृतमस्माभिः, भाजयामेति। स कथयति—यद्येवम्, आहूयन्तां कुलानीति। तौ कथयतः—पूर्वमेवास्माभि-15 र्भाजितम्। एकस्य गृहगतं क्षेत्रगतं च, एकस्यावारीगतं देशान्तरगतं च, एकस्य पूर्णकः। स कथयति—पूर्णस्य प्रत्यंशं नानुप्रयच्छथ? तौ कथयतः—दासीपुत्रः सः। कस्तस्य प्रत्यंशं दद्यात्? अपि तु स एवास्माभिर्भाजितः। यदि तवाभिप्रेतं तमेव गृहाणेति। स संलक्षयति—अहं पित्रा अभिहितः—सर्वस्वमपि ते परित्यज्य पूर्णो ग्रहीतव्य इति। गृह्णामि पूर्णमिति विदित्वा कथयति—एवं भवतु मम पूर्णकेति। यस्य गृहगतं क्षेत्रगतं च, स त्वरमाणो 20 गृहं गत्वा कथयति—ज्येष्ठभविके निर्गच्छ। सा निर्गता। मा भूयः प्रवेक्ष्यसि। कस्यार्थाय? अस्माभिर्भाजितं गृहम्। यस्यावारीगतं देशान्तरगतं च, सोऽपि त्वरमाण आवारीं गत्वा कथयति—पूर्णक अवतरेति। सोऽवतीर्णः। मा भूयोऽभिरोक्ष्यसि। किं कारणम्? अस्माभिर्भाजितम्। यावत् भविलपत्नी पूर्णकेन सार्धं ज्ञातिगृहं संप्रस्थिता। दारका बुभुक्षिता रोदितुमारब्धाः। सा कथयति—पूर्ण, दारकाणां पूर्वभक्षिकामनुप्रयच्छेति। 25 स कथयति—कार्षापणं प्रयच्छ। सा कथयति—त्वया इयतीभिः सुवर्णलक्षाभिर्व्यवहृतम्, दारकाणां पूर्वभक्षिकापि नास्ति? पूर्णः कथयति—किमहं जाने युष्माकं गृहे ईदृशीयमवस्था भविष्यतीति। यदि मया ज्ञातमभविष्यत्, मया अनेकाः सुवर्णलक्षाः संहारिता अभविष्यन्। धर्मतैषा स्त्रिय आरकूटाकार्षापणान् वस्त्रान्ते बध्नन्ति। तयारकूटमाषको दत्तः—पूर्वभक्षिकामानयेति। स तमादाय वीथीं संप्रस्थितः। अन्यतमश्च पुरुषः समुद्रवेलाप्रेरितानां काष्ठानां 30 भारमादाय शीतेनाभिद्रुतो वेपमान आगच्छति। स तेन दृष्टः पृष्टश्च—भोः पुरुष, कस्मादेवं

C 31 वेपसे? स कथयति—अहमपि न जाने। मया चायं भारक उत्क्षिप्तो भवति, मम चेदृशी समवस्था। स दारुपरीक्षायां कृतावी। स तत् काष्ठं निरीक्षितुमारब्धः। पश्यति तत्र

गोशीर्षचन्दनम् । स तेनाभिहितः—भो पुरुष, कियता मूल्येन दीयते ? पञ्चभिः कार्षापणशतैः । तेन तं काष्ठभारं गृहीत्वा तद्गोशीर्षचन्दनमपनीय वीथ्यां गत्वा करपत्रिकया चतस्रः खण्डिकाः कृताः । तच्चूर्णकस्यार्थं कार्षापणसहस्रेण विक्रीतं वर्तते । ततस्तस्य पुरुषस्य पञ्चकार्षापणशतानि दत्तानि । उक्तं च—एनं काष्ठभारकममुष्मिन् गृहे भविलपत्नी तिष्ठति तत्र नय, वक्तव्या पूर्णेन प्रेषितेति । तेनासौ नीतो यथावृत्तं चारोचितम् । सा उरसि प्रहारं दत्त्वा 5 कथयति—यद्यसावर्थात्परिभ्रष्टः, किं प्रज्ञयापि परिभ्रष्टः ? पक्कमानयेति पाचनं प्रेषितम् । तदेव नास्ति यत् पक्तव्यमिति । पूर्णेन शेषकतिपयकार्षापणैर्दासदासीगोमहिषीवस्त्राणि जीवितोपकरणानि पक्कमादायागत्य दम्पत्योरुपनामितवान् । तेन कुटुम्बं संतोषितम् ॥

अत्रान्तरे सौर्पारकीयो राजा दाहज्वरेण विक्लवीभूतः । तस्य वैद्यैर्गोशीर्षचन्दनमुपादिष्टम् । ततोऽमात्या गोशीर्षचन्दनं समन्वेषयितुमारब्धाः । तैर्वीथ्यां पारंपर्येण श्रुतम् । ते पूर्णस्य 10 सकाशं गत्वा कथयन्ति—तवास्ति गोशीर्षचन्दनम् ? स आह—अस्ति । ते ऊचुः—कियता मूल्येन दीयते ? स आह—कार्षापणसहस्रेण । तैः कार्षापणसहस्रेण गृहीत्वा राज्ञः प्रलेपो दत्तः, स्वस्थीभूतः । राजा संलक्षयति—कीदृशोऽसौ यस्य गृहे गोशीर्षचन्दनं नास्ति । राजा पृच्छति—कुत एतत् ? देव पूर्णात् । आहूयतां पूर्णकः । स दूतेन गत्वा उक्तः—पूर्ण, देवस्त्वां शब्दापयतीति । स विचारयितुमारब्धः—किमर्थं मां राजा शब्दापयति ? स संलक्षयति— 15 गोशीर्षचन्दनेनासौ राजा स्वस्थीभूतः । तदर्थं मां शब्दायति । सर्वथा गोशीर्षचन्दनमादाय गन्तव्यम् । स गोशीर्षचन्दनस्य तिस्रो गण्डिका वस्त्रेण पिधायैकं पाणिना गृहीत्वा राज्ञः सकाशं गतः । राज्ञा पृष्टः—पूर्ण, अस्ति किंचिद् गोशीर्षचन्दनम् । स कथयति—देव इदमस्ति । किमस्य मूल्यम् ? देव सुवर्णलक्षाः । अपरमस्ति ? देव अस्ति । तेन तास्तिस्रो गण्डिका दर्शिताः । राज्ञामात्यानामाज्ञा दत्ता—पूर्णस्य चतस्रः सुवर्णलक्षाः प्रयच्छतेति । 20 पूर्णः कथयति—देव, तिस्रो दीयन्ताम् । एकगण्डिका देवस्य प्राभृतमिति । ततस्तस्य तिस्रो दत्ताः । राजा कथयति—पूर्ण, परितुष्टोऽहम् । वद किं ते वरमनुप्रयच्छामीति । पूर्णः कथयति—यदि मे देवः परितुष्टो देवस्य विजितेऽपरिभूतो वसेयमिति । राज्ञा अमात्यानामाज्ञा दत्ता—भवन्तः, अद्याग्रेण कुमाराणामाज्ञा देया न त्वेवं पूर्णस्येति । यावन्महासमुद्रात् पञ्चमात्राणि वणिक्शतानि संसिद्धयानपात्राणि सूर्पारकं नगरमनुप्राप्तानि । वणिग्ग्रामेण क्रियाकारः 25 कृतः—न केनचिदस्माकं समस्तानां निर्गत्यैकाकिना वणिजां सकाशमुपसंक्रमितव्यम् । गण एव संभूय भाण्डं ग्रहीष्यतीति । अपरे कथयन्ति—पूर्णमपि शब्दापयामः । अन्ये कथयन्ति—किं तस्य कृपणस्यास्ति यः शब्दायत इति । तेन खलु समयेन पूर्णो बहिर्निर्गतः । तेन श्रुतं महासमुद्रात् पञ्च वणिक्छतानि संसिद्धयानपात्राणि सूर्पारकं नगरमनुप्राप्तानीति । सोऽप्रविश्यैव नगरं तेषां सकाशमुपसंक्रान्तः । पृच्छति—भवन्तः, किमिदं द्रव्यमिति ? ते 30 कथयन्ति—इदं चेदं चेति । किं मूल्यम् ? ते कथयन्ति—सार्थवाह, दूरमपि परमपि गत्वा त्वमेव प्रष्टव्यः । यद्यप्येवं तथापि उच्यतां मूल्यम् । तैरष्टादश सुवर्णलक्षा मूल्यमुपदिष्टम् । स

C 32

कथयति—भवन्तस्तिस्रो लक्षा अवद्रंगं गृह्णीत, ममैतत्। पण्यमवशिष्टं दास्यामि। तथा भवतु। तेन तिस्रो लक्षा आनाय्य दत्ताः। स्वमुद्रालक्षितं च कृत्वा प्रक्रान्तः। ततो वणिग्ग्रामेणावचरकाः पुरुषाः प्रेषिताः—पश्यत किं द्रव्यमिति। तैर्गत्वा पृष्टाः—किं द्रव्यम्? इदं चेदं च। अस्माकमपि पूर्णानि कोशकोष्ठागाराणि तिष्ठन्ति। पूर्णानि वा भवन्तु मा वा। अपि C 33 5 विक्रीतम्। कस्यान्तिके? पूर्णस्य। प्रभूतमासादयिष्यथ पूर्णस्यान्तिकाद् विक्रीय। ते कथयन्ति—यत्तेनावद्रङ्गे दत्तं तद् यूयं मूल्येऽपि न दास्यथ। किं तेनावद्रङ्गे दत्तम्? तिस्रः सुवर्णलक्षाः। सुमुषितास्तेन भ्रातरः कृताः। तैरागत्य वणिग्ग्रामस्यारोचितम्। तत्पण्यं विक्रीतम्। कस्यान्तिके? पूर्णस्य। प्रभूतमासादयिष्यन्ति पूर्णस्यान्तिके विक्रीय। यत्तेनावद्रङ्गे दत्तं तद्यूयं मूल्येऽपि न दास्यथ। किं तेनावद्रङ्गे दत्तम्? तिस्रः सुवर्णलक्षाः। 10 सुमुषितास्तेन ते भ्रातरः कृताः। स तैराहूयोक्तः—पूर्ण वणिग्ग्रामेण क्रियाकारः कृतः—न केनचिदेकाकिना ग्रहीतव्यम्। वणिग्ग्राम एव ग्रहीष्यतीत्येव। कस्मात्ते गृहीतम्? स कथयति—भवन्तः, यदा युष्माभिः क्रियाकारः कृतस्तदा किमहं न शब्दितो मम भ्राता वा? युष्माभिरेव क्रियाकारः कृतो यूयमेव पालयत। ततो वणिग्ग्रामेण संजातामर्षेण षष्टेः कार्षापणानामर्थायातपे धारितः। राज्ञः पौरुषेयैर्दृष्टः। तै राज्ञे आरोचितम्। राजा कथयति—भवन्तः, 15 शब्दयतैतान्। तैः शब्दिताः। कथयति राजा—भवन्तः, कस्यार्थे युष्माभिः पूर्ण आतपे विधारितः? ते कथयन्ति—देव वणिग्ग्रामेण क्रियाकारः कृतो न केनचिदेकाकिना पण्यं ग्रहीतव्यमिति। तदनेनैकाकिना गृहीतम्। पूर्णः कथयति—देव, समनुयुज्यन्तां यदैभिः क्रियाकारः कृतस्तदा किमहमेभिः शब्दितो मम भ्राता वा? ते कथयन्ति—देव नेति। राजा कथयति—भवन्तः, शोभनं पूर्णः कथयति—स तैर्व्रीडितैर्मुक्तः। यावदपरेण समयेन 20 राज्ञस्तेन द्रव्येण प्रयोजनमुत्पन्नम्। तेन वणिग्ग्राम आहूयोक्तः—भवन्तः, ममामुकेन द्रव्येण प्रयोजनम्। अनुप्रयच्छतेति। ते कथयन्ति—देव पूर्णस्यास्ति। राजा कथयति—भवन्तः, नाहं तस्याज्ञां ददामि। यूयमेव तस्यान्तिकात् क्रीत्वानुप्रयच्छत। तैः पूर्णस्य दूतः प्रेषितः—वणिग्ग्रामः शब्दयतीति। स कथयति—नाहमागच्छामि। ते वणिग्ग्रामाः सर्व एव संभूय C 34 तस्य निवेशनं गत्वा द्वारि स्थित्वा तैर्दूतः प्रेषितः। पूर्ण, निर्गच्छ वणिग्ग्रामो द्वारि तिष्ठ- 25 तीति। स साहंकारः कामकारमदत्त्वा निर्गतः। वणिग्ग्रामः कथयति—सार्थवाह यथाक्रीतकं पण्यमनुप्रयच्छ। स कथयति—अतिवाणिजकोऽहं यदि यथाक्रतं पण्यमनुप्रयच्छामीति। ते कथयन्ति—सार्थवाह, द्विगुणमूल्येन दत्तम्। पञ्चदश लक्षाणि तेषां वणिज्यं दत्तमवशिष्टं स्वगृहं प्रवेशितम्। स संलक्षयति—किं शक्यमवश्यायबिन्दुना कुम्भं पूरयितुम्? महासमुद्रमवतरामीति। तेन सूर्पारके नगरे घण्टावघोषणं कारितम्—शृण्वन्तु भवन्तः सौर्पार- 30 कीया वणिजः। पूर्णः सार्थवाहो महासमुद्रमवतरति। यो युष्माकमुत्सहते पूर्णेन सार्थवाहेन सार्धमशुल्केनागुल्मेनातरपण्येन महासमुद्रमवतर्तुं स महासमुद्रगमनीयं पण्यं समुदानयत्विति। पञ्चमात्रैर्वणिक्शतैर्महासमुद्रगमनीयं पण्यं समुदानीतम्। ततः पूर्णः सार्थवाहः कृतकुतूहल-

मङ्गलस्वस्त्ययनः पञ्चवणिक्शतपरिवारो महासमुद्रमवतीर्णः । स संसिद्धयानपात्रश्च प्रत्यागतः । एवं यावत् षट्कृत्वः । सामन्तकेन शब्दो विश्रुतः । पूर्णः षट्कृत्वो महासमुद्रमवतीर्णः संसिद्धयानपात्रश्च प्रत्यागत इति । श्रावस्तेया वणिजः पण्यमादाय सूर्पारकं नगरं गताः । ते मार्गश्रमं प्रतिविनोद्य येन पूर्णः सार्थवाहस्तेनोपसंक्रान्ताः । उपसंक्रम्य कथयन्ति—सार्थवाह महासमुद्रमवतरामेति । स कथयति—भवन्तः, अस्ति कश्चिद्युष्माभिर्दृष्टः 5 श्रुतो वा षट्कृत्वो महासमुद्रात्संसिद्धयानपात्रागतः सप्तमं वारमवतरन्? ते कथयन्ति—पूर्ण, वयं त्वामुद्दिश्य दूरादागताः । यदि नावतरसि, त्वमेव प्रमाणमिति । स संलक्षयति—किं चाप्यहं धनेनानर्थी तथाप्येषामर्थायावतरामीति । स तैः सार्धं महासमुद्रं संप्रस्थितः । ते रात्र्याः प्रत्यूषसमये उदानात् पारायणात् सत्यदृशः स्थविरगाथाः शैलगाथा मुनिगाथा C 35 अर्थवर्गीयाणि च सूत्राणि विस्तरेण स्वरेण स्वाध्यायं कुर्वन्ति । तेन ते श्रुताः । स कथयति— 10 भवन्तः, शोभनानि गीतानि गायथ । ते कथयन्ति—सार्थवाह, नैतानि? किंतु खल्वेतद्बुद्धवचनम् । स बुद्ध इत्यश्रुतपूर्वं शब्दं श्रुत्वा सर्वरोमकूपानि आहृष्टानि । स आदरजातः पृच्छति—भवन्तः, कोऽयं बुद्धनामेति । ते कथयन्ति—अस्ति श्रमणो गौतमः शाक्यपुत्रः शाक्यकुलात्केशश्मश्रूण्यवतार्य काषायाणि वस्त्राणि आच्छाद्य सम्यगेव श्रद्धया अगारादनगारिकां प्रव्रजितः । सोऽनुत्तरां सम्यक्संबोधिमभिसंबुद्धः । स एष सार्थवाह बुद्धो नाम । 15 कुत्र भवन्तः स भगवानेतर्हि विहरति? सार्थवाह, श्रावस्त्यां जेतवनेऽनाथपिण्डदस्यारामे । स तं हृदि कृत्वा तैः सार्धं महासमुद्रमवतीर्णः संसिद्धयानपात्रश्च प्रत्यागतः । भ्रातास्य भविलः संलक्षयति—परिखिन्नोऽयं महासमुद्रगमनेन, निवेशोऽस्य कर्तव्य इति । स तेनोक्तः—भ्रातः, कथय कतरस्य धनिनः सार्थवाहस्य वा तवार्थाय दुहितरं प्रार्थयामीति । स कथयति--नाहं कामैरर्थी । यद्यनुजानासि, प्रव्रजामीति । स कथयति—यदास्माकं गृहे वार्ता नास्ति, तदा 20 न प्रव्रजितः । इदानीं कामार्थं प्रव्रजसि । पूर्णः कथयति—भ्रातः, तदानीं न शोभते, इदानीं तु युक्तम् । स तेनावश्यं निर्बन्धं ज्ञात्वानुज्ञातः । स कथयति—भ्रातः, महासमुद्रो बह्वादीनवोऽल्पास्वादः । बहवोऽवतरन्ति, अल्पा व्युत्तिष्ठन्ति । सर्वथा न त्वया महासमुद्रमवतर्तव्यम् । न्यायोपार्जितं ते प्रभूतं धनमस्ति, एषां तु तव भ्रातॄणामन्यायोपार्जितम् । यद्येते कथयन्ति एकध्ये वसामेति, न वस्तव्यम् । इत्युक्त्वोपस्थायकमादाय श्रावस्तीं संप्रस्थितः । अनुपूर्वेण श्रावस्तीमनुप्राप्तः ॥ 25

श्रावस्त्यामुद्याने स्थितेन अनाथपिण्डदस्य गृहपतेर्दूतोऽनुप्रेषितः । तेन गत्वा अनाथपिण्डदस्य गृहपतेरारोचितम्—गृहपते, पूर्णः सार्थवाह उद्याने तिष्ठति गृहपतिं द्रष्टुकाम इति । अनाथपिण्डदः गृहपतिः संलक्षयति—नूनं जलयानेन खिन्न इदानीं C 36 स्थलयानेनागतः । ततः पृच्छति—भोः पुरुष, कियत्प्रभूतं पण्यमानीतम् । स कथयति—कुतोऽस्य पण्यम्? उपस्थायकद्वितीयः । स चाहं च । अनाथपिण्डदः संलक्षयति— 30 न मम प्रतिरूपं यदहं प्रधानपुरुषमसत्कारेण प्रवेशयेयमिति । स तेन महता सत्कारेण प्रवेशित उद्वर्तितः स्नापितो भोजितः । स्वैरालापेनावस्थितयोरनाथपिण्डदः पृच्छति—

सार्थवाह, किमागमनप्रयोजनम्? अपूर्वेण गृहपते इच्छामि स्वाख्याते धर्मविनये प्रव्रज्यामुपसंपदं भिक्षुभावमिति। ततोऽनाथपिण्डदो गृहपतिः पूर्वं कायमभ्युन्नमय्य दक्षिणं बाहुं प्रसार्योदानमुदानयति—अहो बुद्धः। अहो धर्मः। अहो संघस्य स्वाख्याततता। यत्रेदानीमीदृशाः प्रधानपुरुषा विस्तीर्णस्वजनबन्धुवर्गमपहाय स्फीतानि च कोशकोष्ठागाराणि 5 आकाङ्क्षन्ति स्वाख्याते धर्मविनये प्रव्रज्यामुपसंपदं भिक्षुभावमिति। ततोऽनाथपिण्डदो गृहपतिः पूर्णं सार्थवाहमादाय येन भगवांस्तेनोपसंक्रान्तः। तेन खलु समयेन भगवाननेकशताया भिक्षुपरिषदः पुरस्तान्निषण्णो धर्मं देशयति। अद्राक्षीद् भगवाननाथपिण्डदं गृहपतिं सप्राभृतमागच्छन्तम्। दृष्ट्वा च पुनर्भिक्षूनामन्त्रयते स्म—एष भिक्षवोऽनाथपिण्डदो गृहपतिः सप्राभृत आगच्छति। नास्ति तथागतस्यैवंविधः प्राभृतो यथा वैनेयप्राभृत इति। 10 ततोऽनाथपिण्डदो गृहपतिर्भगवतः पादाभिवन्दनं कृत्वा पूर्णेन सार्थवाहेन सार्धमेकान्ते निषण्णः। एकान्तनिषण्णोऽनाथपिण्डदो गृहपतिर्भगवन्तमिदमवोचत्—अयं भदन्त पूर्णः सार्थवाह आकाङ्क्षति स्वाख्याते धर्मविनये प्रव्रज्यामुपसंपदं भिक्षुभावम्। तं भगवान् प्रव्राजयतु उपसंपादयेदनुकम्पामुपादायेति। अधिवासयति भगवाननाथपिण्डदस्य गृहपतेस्तूष्णीभावेन। ततो भगवान् पूर्णं सार्थवाहमामन्त्रयते—एहि भिक्षो चर ब्रह्मचर्यमिति। स C 37 15 भगवतो वाचावसाने मुण्डः संवृत्तः संघाटिप्रावृतः पात्रकरकव्यग्रहस्तः सप्ताहावरोपितकेशश्मश्रुर्वर्षशतोपसंपन्नस्य भिक्षोरीर्यापथेनावस्थितः।

एहीति चोक्तः स तथागतेन
मुण्डश्च संघाटिपरीतदेहः।
सद्यः प्रशान्तेन्द्रिय एव तस्थौ
20 एवं स्थितो बुद्धमनोरथेन॥ ४॥

अथापरेण समयेनायुष्मान् पूर्णो येन भगवांस्तेनोपसंक्रान्तः। उपसंक्रम्य भगवतः पादौ शिरसा वन्दित्वैकान्तेऽस्थात्। एकान्ते स्थित आयुष्मान् पूर्णो भगवन्तमिदमवोचत्—साधु मे भगवांस्तथा संक्षिप्तेन धर्मं देशयतु यथाहं भगवतोऽन्तिकात् संक्षिप्तेन धर्मं श्रुत्वैको व्यपकृष्टोऽप्रमत्त आतापी प्रहितात्मा विहरेयम्। यदर्थं कुलपुत्राः केशश्मश्रूणि अवतार्य 25 काषायाणि वस्त्राणि आच्छाद्य सम्यगेव श्रद्धया अगारादनगारिकां प्रव्रजन्ति, तदनुत्तरं ब्रह्मचर्यपर्यवसानं दृष्टधर्मे स्वयमभिज्ञाय साक्षात्कृत्वोपसंपद्य प्रव्रजयेयम्—क्षीणा मे जातिरुषितं ब्रह्मचर्यं कृतं करणीयं नापरमस्माद्भवं प्रजानामीति। एवमुक्ते भगवानायुष्मन्तं पूर्णमिदमवोचत्—साधु पूर्ण, साधु खलु त्वं पूर्ण यस्त्वमेवं वदसि—साधु मे भगवांस्तथा संक्षिप्तेन धर्मं देशयतु पूर्ववद्यावन्नापरमस्माद् भवं प्रजानामीति। तेन हि पूर्ण शृणु, साधु च सुष्ठु 30 च मनसि कुरु, भाषिष्ये॥

सन्ति पूर्ण चक्षुर्विज्ञेयानि रूपाणीष्टकानि कान्तानि प्रियाणि मनापानि कामोपसंहितानि रञ्जनीयानि। तानि चेद्भिक्षुर्दृष्ट्वाभिनन्दति अभिवदति अध्यवस्यति अध्यवसाय

तिष्ठति, तानि अभिनन्दतोऽभिवदतोऽध्यवसतोऽध्यवसाय तिष्ठत आनन्दी भवति। आनन्द्या नन्दीसौमनस्यं भवति। नन्दीसौमनस्ये सति सरागो भवति। नन्दीसरागे सति नन्दी-सरागसंयोजनं भवति। नन्दीसरागसंयोजनसंयुक्तः पूर्ण भिक्षुरारान्निर्वाणस्योच्यते। सन्ति पूर्ण श्रोत्रविज्ञेयाः शब्दाः, घ्राणविज्ञेया गन्धाः, जिह्वाविज्ञेया रसाः, कायविज्ञेयानि स्प्रष्टव्यानि, मनोविज्ञेया धर्मा इष्टाः कान्ताः प्रिया मनापाः कामोपसंहिता रञ्जनीयाः। 5 C 38 तांश्च भिक्षुर्दृष्ट्वा पूर्ववद् यावदारान्निर्वाणस्येति उच्यते। सन्ति तु पूर्ण चक्षुर्विज्ञेयानि रूपाणि इष्टानि कान्तानि प्रियाणि मनापानि पूर्ववद् यावत् शुक्लपक्षेणान्तिके निर्वा-णस्येति उच्यते। अनेन त्वं पूर्ण मया संक्षिप्तेनाववादेन चोदितः। कुत्रेच्छसि वस्तुं कुत्रेच्छसि वासं कल्पयितुम्? अनेनाहं भदन्त भगवता संक्षिप्तेनाववादेन चोदित इच्छामि श्रोणापरान्तकेषु जनपदेषु वस्तुं श्रोणापरान्तकेषु जनपदेषु वासं कल्पयितुम्। चण्डाः 10 पूर्ण श्रोणापरान्तका मनुष्या रभसाः कर्कशा आक्रोशका रोषकाः परिभाषकाः। सचेत् त्वां पूर्ण श्रोणापरान्तका मनुष्या संमुखं पापिकया असत्यया परुषया वाचा आक्रोक्ष्यन्ति रोषयिष्यन्ति परिभाषिष्यन्ते, तस्य ते कथं भविष्यति? सचेन्मां भदन्त श्रोणापरान्तका मनुष्याः संमुखं पापिकया असत्यया परुषया वाचा आक्रोक्ष्यन्ति रोषयिष्यन्ति परिभाषि-ष्यन्ते, तस्य ममैवं भविष्यति—भद्रका बत श्रोणापरान्तका मनुष्याः, स्निग्धका बत श्रोणा- 15 परान्तका मनुष्याः, ये मां संमुखं पापिकया असत्यया परुषया वाचा आक्रोशन्ति रोषयन्ति परिभाषन्ते। नो तु पाणिना वा लोष्टेन वा प्रहरन्तीति। चण्डाः पूर्ण श्रोणापरान्तका मनुष्याः पूर्ववत् यावत् परिभाषकाः। सचेत् त्वां पूर्ण श्रोणापरान्तका मनुष्याः पाणिना वा लोष्टेन वा प्रहरिष्यन्ति, तस्य ते कथं भविष्यति? सचेन्मां भदन्त श्रोणापरान्तका मनुष्याः पाणिना वा लोष्टेन वा प्रहरिष्यन्ति, तस्य ममैवं भविष्यति—भद्रका बत श्रोणापरा- 20 न्तका मनुष्याः, स्नेहका बत श्रोणापरान्तका मनुष्याः, ये मां पाणिना वा लोष्टेन वा प्रह-रन्ति, नो तु दण्डेन वा शस्त्रेण वा प्रहरन्तीति। चण्डाः पूर्ण श्रोणापरान्तका मनुष्याः पूर्व-वद् यावत् परिभाषकाः। सचेत् त्वां पूर्ण श्रोणापरान्तका मनुष्या दण्डेन वा शस्त्रेण वा प्रहरिष्यन्ति, तस्य ते कथं भविष्यति? सचेन्मां भदन्त श्रोणापरान्तका मनुष्या दण्डेन वा शस्त्रेण वा प्रहरिष्यन्ति, तस्य ममैवं भविष्यति—भद्रका बत श्रोणापरान्तका मनुष्याः, 25 स्नेहका बत श्रोणापरान्तका मनुष्याः, ये मां दण्डेन वा शस्त्रेण वा प्रहरन्ति, नो तु सर्वेण C 39 सर्वं जीविताद् व्यपरोपयन्ति। चण्डाः पूर्ण श्रोणापरान्तका मनुष्या यावत् परिभाषकाः। सचेत् त्वां पूर्ण श्रोणापरान्तका मनुष्याः सर्वेण सर्वं जीविताद् व्यपरोपयिष्यन्ति, तस्य ते कथं भविष्यति? सचेन्मां भदन्त श्रोणापरान्तका मनुष्याः सर्वेण सर्वं जीविताद् व्यप-रोपयिष्यन्ति, तस्य मे एवं भविष्यति—सन्ति भगवतः श्रावका ये अनेन पूतिकायेनार्दीय- 30 माना जेह्रीयन्ते, विजुगुप्समानाः शस्त्रमपि आधारयन्ति, विषमपि भक्षयन्ति, रज्वा बद्धा अपि म्रियन्ते, प्रपातादपि प्रपतन्त्यपि। भद्रका बत श्रोणापरान्तका मनुष्यकाः, स्नेहका

बत श्रोणापरान्तका मनुष्याः, ये मामस्मात् पूतिकलेवरादल्पकृच्छ्रेण परिमोचयन्तीति। साधु साधु पूर्ण, शक्यस्त्वं पूर्ण अनेन क्षान्तिसौरभ्येन समन्वागतः श्रोणापरान्तकेषु जनपदेषु वस्तुं श्रोणापरान्तकेषु वासं कल्पयितुम्। गच्छ त्वं पूर्ण, मुक्तो मोचय, तीर्णस्तारय, आश्वस्त आश्वासय, परिनिर्वृतः परिनिर्वापयेति ॥

5 अथायुष्मान् पूर्णो भगवतो भाषितमभिनन्द्यानुमोद्य भगवतः पादौ शिरसा वन्दित्वा भगवतोऽन्तिकात् प्रक्रान्तः। अथायुष्मान् पूर्णस्तस्या एव रात्रेरत्ययात् पूर्वाह्णे निवास्य पात्रचीवरमादाय श्रावस्तीं पिण्डाय प्राविक्षत्। श्रावस्तीं पिण्डाय चरित्वा कृतभक्तकृत्यः पश्चाद्भक्तपिण्डपात्रः प्रतिक्रान्तः। यथापरिभुक्तशयनासनं प्रतिसमय्य समादाय पात्रचीवरं येन श्रोणापरान्तका जनपदास्तेन चारिकां चरन् श्रोणापरान्तकान् जनपदाननुप्राप्तः।
10 अथायुष्मान् पूर्णः पूर्वाह्णे निवास्य पात्रचीवरमादाय श्रोणापरान्तकं पिण्डाय प्राविक्षत्। अन्यतमश्च लुब्धको धनुष्पाणिर्मृगयां निर्गच्छति। तेन दृष्टः। स संलक्षयति—अमङ्गलोऽयं मुण्डकः श्रमणको मया दृष्ट इति विदित्वा आ कर्णाद् धनुः पूरयित्वा येनायुष्मान् पूर्णस्तेन प्रधावितः। स आयुष्मता पूर्णेन दृष्टः। दृष्ट्वा चोत्तरासङ्गं विवर्त्य कथयति—भद्रमुख, अस्य
C 40 दुष्पूरस्यार्थे प्रविशामि, अत्र प्रहरेति। गाथां च भाषते—

15 यस्यार्थे गहने चरन्ति विहगा गच्छन्ति बन्धं मृगाः
संग्रामे शरशक्तितोमरधरा नश्यन्त्यजस्रं नराः।
दीना दुर्दिनचारिणश्च कृपणा मत्स्या ग्रसन्त्यायसम्
अस्यार्थे उदरस्य पापकलिले दूरादिहाभ्यागतः ॥ ५ ॥ इति ॥

स संलक्षयति—अयं प्रव्रजित ईदृशेन क्षान्तिसौरभ्येन समन्वागतः। किमस्य
20 प्रहरामीति मत्वा अभिप्रसन्नः। ततोऽस्यायुष्मता पूर्णेन धर्मो देशितः, शरणगमनशिक्षापदेशेषु च प्रतिष्ठापितः। अन्यानि च पञ्चोपासकशतानि कृतानि पञ्चोपासिकाशतानि। पञ्चविहारशतानि कारितानि, अनेकानि च मञ्चपीठवृषिकोच्चकबिम्बोपधानचतुरस्रकशतानि अनुप्रदापितानि। तस्यैव च त्रिमासस्यात्ययात् तिस्रो विद्याः कायेन साक्षात्कृताः। अर्हन् संवृत्तः। त्रैधातुकवीतरागः यावत् सेन्द्रोपेन्द्राणां देवानां पूज्यो मान्योऽभिवाद्यश्च संवृत्तः ॥

25 यावदपरेण समयेन दारुकर्णिभ्रात्रोर्भोगास्तनुत्वं परिक्षयं पर्यादानं गताः। तौ कथयतः—गतोऽसौ अस्माकं गृहात् कालकर्णिप्रख्यः। आगच्छ, एकध्ये प्रतिवसामः। स कथयति—कतरोऽसौ कालकर्णिप्रख्यः? तौ कथयतः—पूर्णकश्रीः। सा मम गृहान्निष्क्रान्ता। नासौ कालकर्णिप्रख्यः। तौ कथयतः—श्रीर्वा भवतु कालकर्णी वा, आगच्छ एकध्ये प्रतिवसामः। स कथयति—युवयोरन्यायोपार्जितं धनम्, मम न्यायोपार्जितम्। नाहं युवाभ्यां सार्धमेकध्ये
30 वासं कल्पयामीति। तौ कथयतः—तेन दासीपुत्रेण महासमुद्रमवतीर्यावतीर्य भोगाः समुदानीता येन त्वं भुञ्जानो विकत्थसे। कुतस्तव सामर्थ्यं महासमुद्रमवतर्तुमिति। स ताभ्यां मानं ग्राहितः। स संलक्षयति—अहमपि महासमुद्रमवतरामि। पूर्ववत् यावन्महासमुद्रमव-

तीर्णः। यावत्तद्वहनं वायुना गोशीर्षचन्दनवनमनुप्रेरितम्। कर्णधारः कथयति—भवन्तः, यत्तत् श्रूयते गोशीर्षचन्दनवनमिति, इदं तत्। गृह्णन्तु अत्र यत्सारमिति। तेन खलु समयेन गोशीर्षचन्दनवनं महेश्वरस्य यक्षस्य परिग्रहोऽभूत्। स च यक्षाणां यक्षसमितिं गतः। ततो गोशीर्षचन्दनवने पञ्चमात्राणि कुठारशतानि वोढुमारब्धानि। अद्राक्षीदप्रियाख्यो यो यक्षो गोशीर्षचन्दनवने पञ्चमात्राणि कुठारशतानि वहतः। दृष्ट्वा च येन महेश्वरो यक्षः, तेनोपसंक्रान्तः। उपसंक्रम्य महेश्वरं यक्षमिदमवोचत्—यत् खलु ग्रामणीर्जानीया गोशीर्षचन्दनवने पञ्चमात्राणि कुठारशतानि वहन्ति। यत्ते कृत्यं वा करणीयं वा तत्कुरुष्वेति। अथ महेश्वरो यक्षो यक्षाणां समितिमसमितिं कृत्वा संजातामर्षो महान्तं कालिकावातभयं संजन्य येन गोशीर्षचन्दनवनं तेन संप्रस्थितः। कर्णधारेणारोचितम्—शृण्वन्तु भवन्तो जाम्बुद्वीपका वणिजः—यत्तत् श्रूयते महाकालिकावातभयमिति, इदं तत्। किं मन्यध्वमिति? ततस्ते वणिजो भीतास्त्रस्ताः संविग्ना आहृष्टरोमकूपा देवतायाचनं कर्तुमारब्धाः।

शिववरुणकुबेरशक्रब्रह्माद्या
सुरमनुजोरगयक्षदानवेन्द्राः।
व्यसनमतिभयं वयं प्रपन्नाः
विगतभया हि भवन्तु नोऽद्य नाथाः॥ ६॥

केचिन्नमस्यन्ति शचीपतिं नराः
ब्रह्माणमन्ये हरिशंकरावपि।
भूम्याश्रितान् वृक्षवनाश्रितांश्च
त्राणार्थिनो वातपिशाचदस्थाः (यक्षाः?)॥ ७॥

दारुकर्णी अल्पोत्सुकस्तिष्ठति। वणिजः कथयन्ति—सार्थवाह, वयं कृच्छ्रसंकटसंबाधप्राप्ताः। किमर्थमल्पोत्सुकस्तिष्ठसीति? स कथयति—भवन्तः, अहं भ्रात्रा अभिहितः—महासमुद्रोऽल्पास्वादो बह्वादीनवः। तृष्णान्धा बहवोऽवतरन्ति, स्वल्पा व्युत्थास्यन्ति। न त्वया केनचित् प्रकारेण महासमुद्रमवतर्तव्यमिति। सोऽहं तस्य वचनमवचनं कृत्वा महासमुद्रमवतीर्णः। किमिदानीं करोमि? कस्तव भ्राता? पूर्णः। वणिजः कथयन्ति—भवन्तः, स एवार्यपूर्णः पुण्यमहेशाख्यः। तमेव शरणं प्रपद्याम इति। तैरेकस्वरेण सर्वैरेवं नादो मुक्तः—नमस्तस्मै आर्याय पूर्णाय, नमो नमस्तस्मै आर्याय पूर्णायेति। अथ या देवता आयुष्मती पूर्णेऽभिप्रसन्ना, सा येनायुष्मान् पूर्णस्तेनोपसंक्रान्ता। उपसंक्रम्य आयुष्मन्तं पूर्णमिदमवोचत्—आर्य, भ्राता ते कृच्छ्रसंकटसंबाधप्राप्तः, समन्वाहरेति। तेन समन्वाहृतम्। तत आयुष्मान् पूर्णस्तद्रूपं समाधिं समापन्नो यथा समाहिते चित्ते श्रोणापरान्तकेऽन्तर्हितो महासमुद्रे वहनसीमायां पर्यङ्कं बद्ध्वा अवस्थितः। ततोऽसौ कालिकावातः सुमेरुप्रत्याहत इव प्रतिनिवृत्तः। अथ महेश्वरो यक्षः संलक्षयति—पूर्वं यत् किंचिद्वहनं कालिकावातेन स्पृश्यते, तत्तूलपिचुवत् क्षिप्यते विशीर्यते च। इदानीं को योगो येन कालिकावातः

सुमेरुप्रत्याहत इव प्रतिनिवृत्तः ? स इतश्चामुतश्च प्रत्यवेक्षितुमारब्धो यावत् पश्यति आयुष्मन्तं पूर्णं वहनसीमायां पर्यङ्कं बद्ध्वावस्थितम् । दृष्ट्वा च पुनः कथयति—आर्य पूर्ण, किं विहेठयसीति ? आयुष्मान् पूर्णः कथयति—जराधर्मोऽहम् । किं मामेवं विहेठयसि ? यदि मयेदृशा गुणगणा नाधिगताः स्युर्भ्राता मे त्वया नामावशेषः कृतः स्यात् । महेश्वरो यक्षः
5 कथयति—आर्य इदं गोशीर्षचन्दनवनं राज्ञश्चक्रवर्तिनोऽर्थाय धार्यते । किं मन्यसे ग्रामणीः किं वरं राजा चक्रवर्ती उत तथागतोऽर्हन् सम्यक्संबुद्धः ? किं आर्य भगवान् लोक उत्पन्नः ? उत्पन्नः । यदि एवं यदपरिपूर्णं तत्परिपूर्यताम् । ततस्ते वणिजो गतप्रत्यागतप्राणा आयुष्मति पूर्णे चित्तमभिप्रसाद्य तद्वहनं गोशीर्षचन्दनस्य पूरयित्वा संप्रस्थिताः । अनुपूर्वेण सूर्पारकं नगरमनुप्राप्ताः ॥

10 तत आयुष्मान् पूर्णो भ्रातुः कथयति—यस्य नाम्ना वहनं संसिद्धयानपात्रमागच्छति, तत्तस्य गम्यं भवति । त्वमेषां वणिजां रत्नसंविभागं कुरु । अहमनेन गोशीर्षचन्दनेन
C 43 भगवतोऽर्थाय चन्दनमालं प्रासादं कारयामीति । तेन तेषां वणिजां रत्नैः संविभागः कृतः । तत आयुष्मान् पूर्णो गोशीर्षचन्दनेन प्रासादं मापयितुमारब्धः । तेन शिल्पानाहूयोक्ताः—भवन्तः, किं दिवसे दिवसे पञ्च कार्षापणशतानि गृह्णीध्वमाहोस्वित् गोशीर्षचन्दनचूर्णस्य
15 बिडालपदम् ? ते कथयन्ति—आर्य गोशीर्षचन्दनचूर्णस्य बिडालपदम् । यावत् अल्पीयसा कालेन चन्दनमालः प्रासादः कृतः । राजा कथयति—भवन्तः, शोभनं प्रासादम् । सर्वजातकृतनिष्ठितः संवृत्तः । यत्तत्र संकलिका चूर्णं चावशिष्टम्, तत् पिष्ट्वा तत्रैव प्रलेपो दत्तः । ते च भ्रातरः परस्परं सर्वे क्षमिता उक्ताश्च—बुद्धप्रमुखं भिक्षुसंघमुपनिमन्त्र्य भोजयत । आर्य, कुत्र भगवान् ? श्रावस्त्याम् । कियद्दूरमितः श्रावस्ती ? सातिरेकं योजनशतम् । राजानं
20 तावदवलोकयामः । एवं कुरुत । ते राज्ञः सकाशमुपसंक्रान्ताः । उपसंक्रम्य शिरसा प्रणामं कृत्वा कथयन्ति—देव, इच्छामो वयं बुद्धप्रमुखं भिक्षुसंघमुपनिमन्त्र्य भोजयितुम् । देवोऽस्माकं साहाय्यं कल्पयतु । राजा कथयति—ततः शोभनम् । तथा भवतु । कल्पयामि । तत आयुष्मान् पूर्णः शरणपृष्ठमभिरुह्य जेतवनाभिमुखं स्थित्वा उभे जानुमण्डले पृथिव्यां प्रतिष्ठाप्य पुष्पाणि क्षिप्त्वा धूपं संचार्य आरामिकेन च सौवर्णभृङ्गारं ग्राहयित्वा आराधितुं प्रवृत्तः ।

25 विशुद्धशील सुविशुद्धबुद्धे
भक्ताभिसारे सततार्थदर्शिन् ।
अनाथभूतान् प्रसमीक्ष्य साधो
कृत्वा कृपामागमनं कुरुष्व ॥ ८ ॥ इति ।

ततस्तानि पुष्पाणि बुद्धानां बुद्धानुभावेन देवतानां च देवतानुभावेनोपरि पुष्पमण्डपं
30 कृत्वा जेतवने गत्वा वृद्धान्ते स्थितानि धूपोऽभ्रकूटवदुदकं वैदूर्यशलाकावत् । आयुष्मानानन्दो निमित्तकुशलः । स कृतकरपुटो भगवन्तं पप्रच्छ—कुतो भगवन् निमन्त्रणमागतम् ?
C 44 सूर्पारकात् आनन्द नगरात् । कियद्दूरे भदन्त सूर्पारकं नगरम् ? सातिरेकं आनन्द

योजनशतम्। गच्छामः? आनन्द, भिक्षूनारोचय—यो युष्माकमुत्सहते श्वः सूर्पारकं नगरं गत्वा भोक्तुम्, स शलाकां गृह्णातु इति। एवं भदन्तेति आयुष्मानानन्दो भगवतः प्रतिश्रुत्य शलाकां गृहीत्वा भगवतः पुरस्तात् स्थितः। भगवता शलाका गृहीता, स्थविरस्थविरैश्च भिक्षुभिः॥

तेन खलु समयेनायुष्मान् पूर्णः कुण्डोपधानीयकः स्थविरः प्रज्ञाविमुक्तः तस्यामेव परिषदि संनिषण्णोऽभूत्। संनिपतितः। सोऽपि शलाकां गृहीतुमारब्धः। तमायुष्मानानन्दो 5 गाथया प्रत्यभाषत—

नैतद्भोक्तव्यमायुष्मन् कोशलाधिपतेर्गृहे।
अगारे वा सुजातस्य मृगारभवनेऽथवा॥ ९॥
साधिकं योजनशतं सूर्पारकमितः पुरम्।
ऋद्धिभिर्यत्र गन्तव्यं तूष्णी त्वं भव पूर्णक॥ १०॥ इति॥ 10

स प्रज्ञाविमुक्तः। तेन ऋद्धिर्नोत्पादिता। तस्यैतदभवत्—येन मया सकलं क्लेशगणं वान्तं छर्दितं त्यक्तं प्रतिनिःसृष्टम्, सोऽहं तीर्थिकसाधारणायां ऋद्धयां विषण्णः। तेन वीर्यमास्थाय ऋद्धिमुत्पाद्य यावदायुष्मानानन्दः तृतीयस्थविरस्य शलाकां न ददाति, तावत् तेन गजभुजसदृशं बाहुमभिप्रसार्य शलाका गृहीता। ततो गाथां भाषते—

न वपुष्मत्तया श्रुतेन वा न बलात्कारगुणैश्च गौतम। 15
प्रबलैरपि वाङ्मनोरथैः षडभिज्ञत्वमिहाधिगम्यते॥ ११॥
शमशीलविपश्यनाबलैर्विविधैर्ध्यानबलैः परीक्षिताः।
जरया हि निपीडितयौवनाः षडभिज्ञा हि भवन्ति मद्विधाः॥ १२॥ इति॥

तत्र भगवान् भिक्षूनामन्त्रयते स्म—एषोऽग्रो मे भिक्षवो भिक्षूणां मम श्रावकाणां चैत्य-शलाकाग्रहणे। तत्प्रथमतः शलाकां गृह्णतां यदुत पूर्णः कुण्डोपधानीयकः स्थविरः। तत्र 20 C 45 भगवानायुष्मन्तमानन्दमामन्त्रयते—गच्छ आनन्द भिक्षूणामारोचय। किं चापि उक्तं मया—प्रतिच्छन्नकल्याणैर्वो भिक्षवो विहर्तव्यं विवृतपापैरिति, अपि तु तीर्थिकावस्तब्धं तन्नगरम्। यो वो यस्या ऋद्धेर्लाभी, तेन तया तत्र सूर्पारकं नगरं गत्वा भोक्तव्यमिति। एवं भदन्तेति आयुष्मानानन्दो भगवतः प्रतिश्रुत्य भिक्षूणामारोचयति—आयुष्मन्तः, भगवानेव-माह—किं चापि उक्तं मया प्रतिच्छन्नकल्याणैर्वो भिक्षवो विहर्तव्यमिति पूर्ववत् यावत् गत्वा 25 भोक्तव्यमिति। ततः सूर्पारकराज्ञा सूर्पारकनगरमपगतपाषाणशर्करकठल्लं व्यवस्थापितं चन्दनवारिपरिषिक्तं नानाविधसुरभिधूपघटिकासमलंकृतमामुक्तपट्टदामकलापं नानापुष्पा-भिकीर्णं रमणीयम्। सूर्पारकस्य नगरस्याष्टादश द्वाराणि। तस्यापि राज्ञः सप्तदश पुत्राः। प्रत्येकमेकैकस्मिन् द्वारे परमया विभूत्या राजपुत्रा व्यवस्थिताः। मूलद्वारे च महता राजानुभावेन सूर्पारकाधिपती राजा आयुष्मान् पूर्णो दारुकर्णी स्तवकर्णी त्रपुकर्णी च 30 व्यवस्थितः। यावत् पत्रचारिका ऋद्ध्या हरितचारिका भाजनचारिकाश्चागताः। तान् दृष्ट्वा राजा कथयति—भदन्त पूर्ण, किं भगवानागतः? आयुष्मान पूर्णः कथयति—महाराज

पत्रचारिका हरितचारिका भाजनचारिकाश्चैते, न तावत् भगवान्। यावत् स्थविरस्थविरा भिक्षवोऽनेकविधाभिर्ध्यानसमापत्तिभिः संप्राप्ताः। पुनरपि पृच्छति—भदन्त पूर्ण, किं भगवानागतः? आयुष्मान् पूर्णः कथयति—महाराज न भगवान्, अपि तु खलु स्थविरस्थविरा एव ते भिक्षव इति। अथान्यतमोपासकस्तस्यां वेलायां गाथां भाषते—

5 सिंहव्याघ्रगजाश्वनागवृषभानाश्रित्य केचित् शुभान्
केचिद्रत्नविमानपर्वततरूंश्चित्रान् रथांश्चोज्ज्वलान्।
अन्ये तोयधरा इवाम्बरतले विद्युल्लतालंकृता
ऋद्ध्या देवपुरीमिव प्रमुदिता गन्तुं समभ्युद्यताः॥ १३॥

C 46 गां भित्त्वा ह्युत्पतन्त्येके पतन्त्यन्ये नभस्तलात्।
10 आसने निर्मिताश्चैके पश्य ऋद्धिमतां बलम्॥ १४॥ इति॥

ततो भगवान् बहिर्विहारस्य पादौ प्रक्षाल्य विहारं प्रविश्य ऋजुं कायं प्रणिधाय प्रतिमुखं स्मृतिमुपस्थाप्य प्रज्ञप्त एवासने निषण्णः। यावद् भगवता गन्धकुट्यां साभिसंस्कारं पादो न्यस्तः, षड्विकारः पृथिवीकम्पो जातः—इयं महापृथिवी चलति संचलति संप्रचलति। व्यधति प्रव्यधति संप्रव्यधति। पूर्वदिग्भाग उन्नमति, पश्चिमोऽवनमति। 15 पश्चिम उन्नमति, पूर्वोऽवनमति। दक्षिण उन्नमति, उत्तरोऽवनमति। उत्तर उन्नमति, दक्षिणोऽवनमति। अन्त उन्नमति, मध्योऽवनमति। मध्य उन्नमति, अन्तोऽवनमति। राजा आयुष्मन्तं पूर्णं पृच्छति—आर्य पूर्ण, किमेतत्? स कथयति—महाराज, भगवता गन्धकुट्यां साभिसंस्कारः पादो न्यस्तः, तेन षड्विकारः पृथिवीकम्पो जातः। ततो भगवता कनकमरीचिवर्णप्रभा उत्सृष्टा यया जम्बुद्वीपो विलीनकनकावभासः संवृत्तः। पुनरपि राजा विस्मयोत्फुल्ललोचनः पृच्छति— 20 आर्य पूर्ण, इदं किम्? स कथयति—महाराज भगवता कनकमरीचिवर्णप्रभा उत्सृष्टेति॥

ततो भगवान् दान्तो दान्तपरिवारः शान्तः शान्तपरिवारः पञ्चभिरर्हच्छान्तैः सार्धं सूर्पारकाभिमुखः संप्रस्थितः। अथ या जेतवननिवासिनी देवता, सा बकुलशाखां गृहीत्वा भगवतश्छायां कुर्वन्ती पृष्ठतः संप्रस्थिता। तस्या भगवता आशयं धातुं प्रकृतिं च ज्ञात्वा तादृशी चतुरार्यसत्यसंप्रतिवेधकी धर्मदेशना कृता, यां श्रुत्वा तया देवतया विंशतिशिखरसमुद्गतं 25 सत्कायदृष्टिशैलं ज्ञानवज्रेण भित्त्वा स्रोतापत्तिफलं साक्षात्कृतम्। यावदन्यतमस्मिन् प्रदेशे पञ्चमात्राणि घरिणीशतानि प्रतिवसन्ति। अद्राक्षुस्ता बुद्धं भगवन्तं द्वात्रिंशता महापुरुषलक्षणैः समलंकृतमशीत्यानुव्यञ्जनैर्विराजितगात्रं व्यामप्रभालंकृतं सूर्यसहस्रातिरेकप्रभं जङ्गममिव रत्नपर्वतं समन्ततो भद्रकम्। सहदर्शनाच्च तासां भगवति महाप्रसाद उत्पन्नः। धर्मतैषा—न तथा द्वादशवर्षाभ्यस्तः शमथश्चित्तस्य कल्यतां जनयति अपुत्रस्य च पुत्रलाभो 30 दरिद्रस्य वा निधिदर्शनं राज्याभिनन्दिनो वा राज्याभिषेको यथोपचितकुशलमूलहेतुकस्य सत्त्वस्य तत्प्रथमतो बुद्धदर्शनम्। ततो भगवांस्तासां विनयकालमवेक्ष्य पुरस्ताद् भिक्षुसंघस्य

C 47

प्रज्ञप्त एवासने निषण्णः। ता अपि भगवतः पादौ शिरसा वन्दित्वैकान्ते निषण्णाः। ततो भगवता तासामाशयानुशयं धातुं प्रकृतिं च ज्ञात्वा यावत् स्रोतआपत्तिफलं साक्षात्कृतम्। ता दृष्टसत्याः त्रिरुदानमुदानयन्ति–इदमस्माकं भदन्त न मात्रा कृतं न पित्रा कृतं न राज्ञा नेष्टस्वजनबन्धुवर्गेण न देवताभिर्न पूर्वप्रेतैर्न श्रमणब्राह्मणैर्यद् भगवतास्माकं तत्कृतम्। उच्छोषिता रुधिराश्रुसमुद्राः, लङ्घिता अस्थिपर्वताः, पिहितान्यपायद्वाराणि, प्रतिष्ठापिता वयं 5 देवमनुष्येषु अतिक्रान्तातिक्रान्ताः। एता वयं भगवतं शरणं गच्छामो धर्मं च भिक्षुसंघं च। उपासिकाश्चास्मान् भगवान् धारयतु। तत उत्थायासनात् येन भगवांस्तेनाञ्जलिं प्रणम्य भगवन्तमिदमवोचन्–अहो बत भगवानस्माकं किंचिदत्र प्रयच्छेत् यत्र वयं कारां करिष्यामः। ततो भगवता ऋद्ध्या केशनखमुत्सृष्टम्। ताभिर्भगवतः केशनखस्तूपः प्रतिष्ठापितः। ततस्तया जेतवननिवासिन्या तस्मिन् स्तूपे यष्ट्यां सा बकुलशाखारोपिता। भग- 10 वांश्चोक्तः–भगवन्, अहमस्मिन् स्तूपे कारां कुर्वन्ती तिष्ठामीति। सा तत्रैव आस्थिता। तत्र केचित् घरिणीस्तूप इति संजानते, केचित् बकुलमेधीति, यमद्यापि चैत्यवन्दका भिक्षवो वन्दन्ते। ततो भगवान् संप्रस्थितः॥

यावदन्यस्मिन्नाश्रमपदे पञ्च ऋषिशतानि प्रतिवसन्ति। तच्चेषामाश्रमपदं पुष्पफलसलिलसंपन्नम्। ते तेन मदेन मत्ता न किंचिन्मन्यन्ते। ततो भगवांस्तेषां विनयकालमवेक्ष्य 15 तदाश्रमपदमुपसंक्रान्तः। उपसंक्रम्य तस्मादाश्रमपदात् पुष्पफलमृद्ध्या शामितम्, सलिलं शोषितम्, हरितशाड्वलं कृष्णं स्थण्डिलानि पातितानि। ततस्ते ऋषयः करे कपोलं दत्त्वा चिन्तापरा व्यवस्थिताः। ततो भगवता अभिहिताः–महर्षयः, किमर्थं चिन्तापरास्तिष्ठतेति। ते कथयन्ति–भगवंस्त्वं द्विपादकं पुण्यक्षेत्रमिह प्रविष्टोऽस्माकं चेदृशी समवस्था। भगवानाह–किम्? ते कथयन्ति–भगवन्, पुष्पफलसलिलसंपन्नमाश्रमपदं विनष्टं यथापौराणं भवतु। 20 भवतु इत्याह भगवान्। ततो भगवता ऋद्धिः प्रस्रब्धा, यथापौराणं संवृत्तम्। ततस्ते परं विस्मयमुपगता भगवति चित्तमभिप्रसादयामासुः। ततो भगवता तेषामाशयानुशयं धातुं प्रकृतिं च ज्ञात्वा तादृशी चतुरार्यसत्यसंप्रतिवेधिकी धर्मदेशना कृता, यां श्रुत्वा तैः पञ्चभिर्ऋषिशतैरनागामिफलं साक्षात्कृतम्, ऋद्धिश्चाभिनिर्हृता। ततो येन भगवांस्तेनाञ्जलिं प्रणम्य भगवन्तमिदमवोचन्–लभेम वयं भदन्त स्वाख्याते धर्मविनये प्रव्रज्यामुपसंपदं भिक्षुभावम्। 25 चरेम वयं भगवतोऽन्तिके ब्रह्मचर्यम्। ततस्ते भगवता एहिभिक्षुकया आभाषिताः–एत भिक्षवश्चरत ब्रह्मचर्यमिति। भगवतो वाचावसाने मुण्डाः संवृत्ताः संघाटिप्रावृताः पात्रकरव्यग्रहस्ताः सप्ताहावरोपितकेशश्मश्रवो वर्षशतोपसंपन्नस्य भिक्षोरीर्यापथेन अवस्थिताः।

C 48

एहीति चोक्ता हि तथागतेन
मुण्डाश्च संघाटिपरीतदेहाः। 30
सद्यः प्रशान्तेन्द्रिया एव तस्थु-
रेवं स्थिता बुद्धमनोरथेन॥ १५॥

तैर्युज्यमानैर्घटमानैर्व्यायच्छमानैरिदमेव पञ्चगण्डकं पूर्ववत् यावदभिज्ञाश्च संवृत्ताः। यस्तेषां ऋषिरववादकः स कथयति—भगवन्, मया अनेन वेषेण महाजनकायो विप्रलब्धः। तं यावदभिप्रसादयामि पश्चात् प्रव्रजिष्यामीति। ततो भगवान् पञ्चभिर्ऋषिशतैः पूर्वकैश्च
C 49 पञ्चभिर्भिक्षुःशतैरर्धचन्द्राकारोपगूढस्तत एव ऋद्ध्या उपरि विहायसा प्रक्रान्तोऽनुपूर्वेण
5 मुसलकं पर्वतमनुप्राप्तः। तेन खलु समयेन मुसलके पर्वते वक्कली नाम ऋषिः प्रतिवसति। अद्राक्षीत् स ऋषिर्भगवन्तं दूरादेव द्वात्रिंशता महापुरुषलक्षणैः समलंकृतं पूर्ववत् यावत् समन्ततो भद्रकम्। सहदर्शनाच्चानेन भगवतोऽन्तिके चित्तमभिप्रसादितम्। स प्रसादजातश्चिन्तयति—यन्न्वहं पर्वतादवतीर्य भगवन्तं दर्शनायोपसंक्रमिष्यामि। भगवान् वैनेयापेक्षया अतिक्रमिष्यति। यन्न्वहमात्मानं पर्वतान्मुञ्चेयमिति। तेन पर्वतादात्मा मुक्तः। असंमोषधर्माणो
10 बुद्धा भगवन्तः। भगवता ऋद्ध्या प्रतीष्टः। ततोऽस्य भगवता आशयानुशयं धातुं प्रकृतिं च ज्ञात्वा तादृशी धर्मदेशना कृता, यां श्रुत्वा वक्कलिना अनागामिफलं साक्षात्कृतम्, ऋद्धिश्चाभिनिर्हृता। ततो भगवन्तमिदमवोचत्—लभेयाहं भदन्त स्वाख्याते धर्मविनये प्रव्रज्यामुपसंपदं भिक्षुभावं पूर्ववत् यावत् भगवता एहिभिक्षुकया प्रव्राजितो यावदेवं स्थितो बुद्धमनोरथेन॥

तत्र भगवान् भिक्षूनामन्त्रयते स्म—एषोऽग्रो मे भिक्षवो भिक्षूणां मम श्रद्धाधिमुक्तानां
15 यदुत वक्कली भिक्षुरिति। ततो भगवान् भिक्षुसहस्रपरिवृतो विचित्राणि प्रातिहार्याणि कुर्वन् सूर्पारकं नगरमनुप्राप्तः। भगवान् संलक्षयति—यदि एकेन द्वारेण प्रविशामि, अपरेषां भविष्यति अन्यथात्वम्। यन्न्वहं ऋद्ध्यैव प्रविशेयमिति। तत ऋद्ध्या उपरि विहायसा मध्ये सूर्पारकस्य नगरस्यावतीर्णः। ततः सूर्पारकाधिपती राजा आयुष्मान् पूर्णो दारुकर्णी स्तवकर्णी त्रपुकर्णी ते च सप्तदश पुत्राः स्वकस्वकेन परिवारेण येन भगवांस्तेनोपसंक्रान्ताः,
20 अनेकानि च प्राणिशतसहस्राणि। ततो भगवाननेकैः प्राणिशतसहस्रैरनुगम्यमानो येन चन्दनमालः प्रासादः तेनोपसंक्रान्तः। उपसंक्रम्य पुरस्ताद्भिक्षुसंघस्य प्रज्ञप्त एवासने निषण्णः।
C 50 स जनकायो भगवन्तमपश्यन् चन्दनमालं प्रासादं भेत्तुमारब्धः। भगवान् संलक्षयति—यदि चन्दनमालः प्रासादो भेत्स्यते, दातॄणां पुण्यान्तरायो भविष्यति। यन्न्वहमेनं स्फटिकमयं निर्मिनुयामिति। स भगवता स्फटिकमयो निर्मितः। ततो भगवता तस्याः परिषद
25 आशयानुशयं धातुं प्रकृतिं च ज्ञात्वा तादृशी धर्मदेशना कृता, यां श्रुत्वा अनेकैः प्राणिशतसहस्रैर्महान् विशेषोऽधिगतः। कैश्चिन्मोक्षभागीयानि कुशलमूलानि उत्पादितानि, कैश्चिन्निर्वेधभागीयानि, कैश्चित् स्रोतआपत्तिफलं साक्षात्कृतम्, कैश्चित् सकृदागामिफलम्, कैश्चिदनागामिफलम्, कैश्चित् सर्वक्लेशप्रहाणादर्हत्त्वं साक्षात्कृतम्, कैश्चित् श्रावकबोधौ चित्तान्युत्पादितानि, कैश्चित् प्रत्येकबोधौ, कैश्चिदनुत्तरायां सम्यक्संबोधौ चित्तान्युत्पादि-
30 तानि। यद्भूयसा सा पर्षद् बुद्धनिम्ना धर्मप्रवणा संघप्राग्भारा व्यवस्थापिता॥

अथ दारुकर्णी स्तवकर्णी त्रपुकर्णी च प्रणीतं खादनीयं भोजनीयं समुदानीय आसनानि प्रज्ञाप्य भगवतो दूतेन कालमारोचयन्ति—समयो भदन्त, सज्जं भक्तं यस्येदानीं भगवान् कालं

मन्यत इति। तेन खलु समयेन कृष्णगौतमकौ नागराजौ महासमुद्रे प्रतिवसतः। तौ संलक्षयतः–
भगवान् सूर्पारके नगरे धर्मं देशयति। गच्छावः, धर्मं श्रोष्याव इति। ततस्तौ पञ्चनागशत-
परिवारौ पञ्चनदीशतानि संजन्य सूर्पारकं नगरं संप्रस्थितौ। असंमोषधर्माणो बुद्धा भगवन्तः।
भगवान् संलक्षयति–इमौ कृष्णगौतमौ नागराजौ यदि सूर्पारकं नगरमागमिष्यतः, अगोचरी-
करिष्यतः। तत्र भगवानायुष्मन्तं महामौद्गल्यायनमामन्त्रयते–प्रतिगृहाण महामौद्गल्यायन 5
तथागतस्यात्ययिकपिण्डपातम्। तत्कस्य हेतोः? पञ्च मे मौद्गल्यायन आत्ययिकपिण्डपाताः।
कतमे पञ्च? आगन्तुकस्य गमिकस्य ग्लानस्य ग्लानोपस्थायकस्योपधिवारिकस्य च। अस्मिं-
स्त्वर्थे भगवानुपाधौ वर्तते। अथ भगवान् मौद्गल्यायनसहायो येन कृष्णगौतमकौ नागराजौ    C 51
तेनोपसंक्रान्तः। उपसंक्रम्य कथयति–समन्वाहरत नागेन्द्रौ सूर्पारकं नगरमगोचरी-
भविष्यति। तौ कथयतः–तादृशेन भदन्त प्रसादेन वयमागता यन्न शक्यमस्माभिः 10
कुन्तपिपीलिकस्यापि प्राणिनः पीडामुत्पादयितुं प्रागेव सूर्पारकनगरनिवासिनो जनकाय-
स्येति। ततो भगवता कृष्णगौतमकयोर्नागराजयोस्तादृशो धर्मो देशितो यं श्रुत्वा बुद्धं शरणं
गतौ, धर्मं संघं च शरणं गतौ, शिक्षापदानि च गृहीतानि। भगवान् भक्तकृत्यं
कर्तुमारब्धः। एकैको नागः संलक्षयति–अहो बत भगवान् मम पानीयं पिबतु इति।
भगवान् संलक्षयति–यदि एकस्यैव पानीयं पास्यामि, एषां भविष्यति अन्यथात्वम्। उपाय- 15
संविधानं कर्तव्यमिति। तत्र भगवानायुष्मन्तं महामौद्गल्यायनमामन्त्रयते -गच्छ मौद्गल्यायन,
यत्र पञ्चानां नदीशतानां संभेदः, तस्मादुदकस्य पात्रपूरमानय। एवं भदन्तेति आयुष्मान्
महामौद्गल्यायनो भगवतः प्रतिश्रुत्य यत्र पञ्चानां नदीशतानां संभेदस्तत्रोदकस्य पात्रपूर-
मादाय येन भगवांस्तेनोपसंक्रान्तः। उपसंक्रम्य भगवत उदकस्य पात्रपूरमुपनामयति।
भगवता गृहीत्वा परिभुक्तम्। आयुष्मान् महामौद्गल्यायनः संलक्षयति–पूर्वमुक्तं भगवता– 20
दुष्करकारकौ हि भिक्षवः पुत्रस्य मातापितरौ आप्यायकौ पोषकौ संवर्धकौ स्तन्यस्य दातारौ
चित्रस्य जम्बुद्वीपस्य दर्शयितारौ। एकेनांशेन पुत्रो मातरं द्वितीयेन पितरं पूर्णवर्षशतं
परिचरेत्, यद्वा अस्यां महापृथिव्यां मणयो मुक्ता वैदूर्यशङ्खशिलाप्रवालं रजतं जातरूप-
मश्मगर्भो मुसारगल्वो लोहितिका दक्षिणावर्त इति, एवंरूपे वा विविधैश्वर्याधिपत्ये प्रतिष्ठा-
पयेत्, नेयता पुत्रेण मातापित्रोः कृतं वा स्यादुपकृतं वा। यस्तु असावश्राद्धं मातापितरं 25
श्रद्धासंपदि समादापयति विनयति निवेशयति प्रतिष्ठापयति, दुःशीलं शीलसंपदि, मत्सरिणं    C 52
त्यागसंपदि, दुष्प्रज्ञं प्रज्ञासंपदि समादापयति विनयति निवेशयति प्रतिष्ठापयति, इयता
पुत्रेण मातापित्रोः कृतं वा स्यादुपकृतं वेति। मया च मातुर्न कश्चिदुपकारः कृतः। यदहं
समन्वाहरेयं कुत्र मे माता उपपन्नेति। समन्वाहर्तुं संवृत्तः पश्यति मरीचिके लोकधातौ
उपपन्ना। स संलक्षयति–कस्य विनेया? पश्यति भगवतः। तस्यैतदभवत्–दूरं वयमिहागताः। 30
यन्न्वहमेतमर्थं भगवतो निवेदयेयमिति भगवन्तमिदमवोचत्–उक्तं भदन्त भगवता पूर्वम्–दुष्कर-
कारकौ हि भिक्षवः पुत्रस्य मातापितरौ इति। तन्मम माता मरीचिके लोकधातौ उपपन्ना,

सा च भगवतो विनेया । तदर्हति भगवान् तां विनेतुमनुकम्पामुपादायेति । भगवान् कथयति—मौद्गल्यायन, कस्य ऋद्ध्या गच्छामः ? भगवन् मदीयया । ततो भगवानायुष्मांश्च महामौद्गल्यायनः सुमेरुमूर्ध्नि पादान् स्थापयन्तौ संप्रस्थितौ । सप्तमे दिवसे मरीचिकं लोकधातुमनुप्राप्तः । अद्राक्षीत् सा भद्रकन्या आयुष्मन्तं महामौद्गल्यायनं दूरादेव । दृष्ट्वा च 5 पुनः ससंभ्रमात् तत्सकाशमुपसंक्रम्य कथयति—चिराद्बत पुत्रकं पश्यामीति । ततो जनकायः कथयति—भदन्तोऽयं प्रव्रजितो वृद्धः । इयं च कन्या । कथमस्य माता भवतीति ? आयुष्मान् मौद्गल्यायनः कथयति—भवन्तः, मम इमे स्कन्धा अन्याः संवृद्धाः । तेन ममेयं मातेति । ततो भगवता तस्या भद्रकन्याया आशयानुशयं धातुं प्रकृतिं च ज्ञात्वा तादृशी चतुरार्यसत्यसंप्रतिवेधिकी धर्मदेशना कृता, यां श्रुत्वा तया भद्रकन्यया विंशतिशिखरसमुद्गतं 10 सत्कायदृष्टिशैलं ज्ञानवज्रेण भित्त्वा स्रोतआपत्तिफलं साक्षात्कृतम् । सा दृष्टसत्या त्रिरुदानमुदानयति पूर्ववत् यावत् प्रतिष्ठापिता देवमनुष्येषु । आह च—

तवानुभावात्पिहितः सुघोरो ह्यपायमार्गो बहुदोषदुष्टः ।
अपावृता स्वर्गगतिः सुपुण्या निर्वाणमार्गं च मयोपलब्धम् ॥ १६ ॥
त्वदाश्रयाच्चाप्तमपेतदोषं ममाद्य शुद्धं सुविशुद्धचक्षुः ।
C 53 15 प्राप्तं च कान्तं पदमार्यकान्तं तीर्णा च दुःखार्णवपारमस्मि ॥ १७ ॥
जगति दैत्यनरामरपूजित विगतजन्मजरामरणामय ।
भवसहस्रसुदुर्लभदर्शन सफलमद्य मुने तव दर्शनम् ॥ १८ ॥

अतिक्रान्ताहं भदन्त अतिक्रान्ता । एषाहं भगवन्तं शरणं गच्छामि धर्मं च भिक्षुसंघं च । उपासिकां च मां धारय अद्याग्रेण यावज्जीवं प्राणोपेतां शरणं गतामभिप्रसन्नाम् । 20 अधिवासयतु मे भगवानद्य पिण्डपातेन सार्धमार्यमहामौद्गल्यायनेनेति । अधिवासयति भगवान् तस्या भद्रकन्यायास्तूष्णीभावेन । अथ सा भद्रकन्या भगवन्तमायुष्मन्तं च महामौद्गल्यायनं सुखोपनिषण्णं विदित्वा शुचिना प्रणीतेन खादनीयेन भोजनीयेन स्वहस्तं संतर्प्य संप्रवार्य भगवन्तं भुक्तवन्तं विदित्वा धौतहस्तमपनीतपात्रं नीचतरमासनं गृहीत्वा भगवतः पुरस्तान्निषण्णा धर्मश्रवणाय । भगवता तस्या धर्मो देशितः । आयुष्मान् महामौद्गल्यायनो 25 भगवतः पात्रग्राहकः पात्रं निर्यातयति । भगवता अभिहितः—मौद्गल्यायन गच्छामः । गच्छामो भगवन् । कस्य ऋद्ध्या ? तथागतस्य भगवतः । यदि एवम्, समन्वाहर जेतवनम् । आगताः स्मो भगवन्, आगताः । मौद्गल्यायनस्ततो विस्मयावर्जितमतिः कथयति—किं नामेयं भगवन् ऋद्धिः ? मनोजवा मौद्गल्यायन । न मया भदन्त विज्ञातमेवं गम्भीरमेवं गम्भीरा बुद्धधर्मा इति । यदि विज्ञातमभविष्यत्, तिलशोऽपि मे संचूर्णितशरीरेणानुत्तरायाः 30 सम्यक्संबोधेश्चित्तं व्यावर्तितमभविष्यत् । इदानीं किं करोमि दग्धेन्धन इति ॥

ततो भिक्षवः संशयजाताः सर्वसंशयच्छेत्तारं बुद्धं भगवन्तं पप्रच्छुः—किं भदन्त आयुष्मता पूर्णेन कर्म कृतं येनाढ्ये महाधने महाभोगे कुले जातः, किं कर्म कृतं येन

दास्याः कुक्षौ उपपन्नः, प्रव्रज्य च सर्वक्लेशप्रहाणादर्हत्त्वं साक्षात्कृतम्? भगवानाह—पूर्णेन　C 54
भिक्षवो भिक्षुणा कर्माणि कृतानि उपचितानि लब्धसंभाराणि परिणतप्रत्ययानि ओघवत्प्रत्यु-
पस्थितानि अवश्यंभावीनि। पूर्णेन कर्माणि कृतानि उपचितानि। कोऽन्यः प्रत्यनुभविष्यति?
न भिक्षवः कर्माणि कृतानि उपचितानि बाह्ये पृथिवीधातौ विपच्यन्ते, नाब्धातौ, न
तेजोधातौ, न वायुधातौ, अपि तूपात्तेष्वेव स्कन्धधात्वायतनेषु कर्माणि कृतान्युपचितानि 5
विपच्यन्ते शुभान्यशुभानि च।

न प्रणश्यन्ति कर्माणि अपि कल्पशतैरपि।
सामग्रीं प्राप्य कालं च फलन्ति खलु देहिनाम्॥ १९॥

भूतपूर्वं भिक्षवोऽस्मिन्नेव भद्रकल्पे विंशतिवर्षसहस्रायुषि प्रजायां काश्यपो नाम
सम्यक्संबुद्धो लोक उदपादि विद्याचरणसंपन्नः सुगतो लोकविदनुत्तरः पुरुषदम्यसारथिः 10
शास्ता देवानां मनुष्याणां च। बुद्धो भगवान् वाराणसीं नगरीमुपनिश्रित्य विहरति।
तस्यायं शासने प्रव्रजितः। त्रिपिटकसंघस्य च धर्मवैयावृत्यं करोति। यावदन्यतमस्यार्हत
उपधिवारः प्राप्तः। स विहारं संमार्ष्टुमारब्धः। वायुनेतश्चामुतश्च संकारो नीयते। स
संलक्षयति—तिष्ठतु तावद् यावद्वायुरुपशमं गच्छतीति। वैयावृत्यकरेणासंमृष्टो विहारो दृष्टः।
तेन तीव्रेण पर्यवस्थानेन खरवाक्कर्म निश्चारितम्—कस्य दासीपुत्रस्योपधिवार इति। तेन 15
अर्हता श्रुतम्। स संलक्षयति—पर्यवस्थितोऽयम्। तिष्ठतु तावत्। पश्चात् संज्ञापयिष्यामीति।
यदा अस्य पर्यवस्थानं विगतं तदा तस्य सकाशमुपसंक्रम्य कथयति—जानीषे त्वं कोऽह-
मिति? स कथयति—जाने त्वं काश्यपस्य सम्यक्संबुद्धस्य शासने प्रव्रजितोऽहमपीति। स
कथयति—यद्यप्येवं तथापि तु यन्मया प्रव्रज्य चरणीयं तत्कृतमहं सकलबन्धनाबद्धः। खरं　C 55
ते वाक्कर्म निश्चारितम्। अत्ययमत्ययतो देशय। अप्येवैतत्कर्म तनुत्वं परिक्षयं पर्यादानं 20
गच्छेदिति। तेनात्ययमत्ययतो देशितम्। यत्तेन नरक उपपद्य दासीपुत्रेण भवितव्यम्,
तन्नरके नोपपन्नः। पञ्च तु जन्मशतानि दास्याः कुक्षौ उपपन्नः। यावदेतर्ह्यपि चरमे
भवे दास्या एव कुक्षौ उपपन्नः। यत् संघस्योपस्थानं कृतम्, तेनाढ्ये महाधने महाभोगे
कुले जातः। यत्तत्र पठितं स्वाध्यायितं स्कन्धकौशलं च कृतम्, तेन मम शासने प्रव्रज्य
सर्वक्लेशप्रहाणादर्हत्त्वं साक्षात्कृतम्। इति हि भिक्षव एकान्तकृष्णानां कर्मणामेकान्त- 25
कृष्णो विपाकः, एकान्तशुक्लानां कर्मणामेकान्तशुक्लो विपाकः, व्यतिमिश्राणां व्यतिमिश्रः।
तस्मात् तर्हि भिक्षव एकान्तकृष्णानि कर्माण्यपास्य व्यतिमिश्राणि च, एकान्तशुक्लेष्वेव
कर्मस्वाभोगः करणीयः। इत्येवं वो भिक्षवः शिक्षितव्यम्॥

इदमवोचद्भगवान्। आत्तमनसस्ते भिक्षवो भगवतो भाषितमभ्यनन्दन्निति॥

इति श्रीदिव्यावदाने पूर्णावदानं द्वितीयम्॥　30

## ३ मैत्रेयावदानम् ।

यदा राज्ञा मागधेन अजातशत्रुणा वैदेहीपुत्रेण नौक्रमो मातापित्रोर्मापितस्तदा वैशालकैर्लिच्छविभिर्भगवतोऽर्थे नौक्रमो मापितः । नागाः संलक्षयन्ति—वयं विनिपतितशरीरा यन्नु वयं फणसंक्रमेण भगवन्तं नदी[दीं]गङ्गामुत्तारयेम इति । तैः फणसंक्रमो 5 मापितः । तत्र भगवान् भिक्षूनामन्त्रयते स्म—राजगृहात् श्रावस्तीं गन्तुं यो युष्माकं भिक्षव उत्सहते राज्ञो मागधस्याजातशत्रोर्वैदेहीपुत्रस्य नौसंक्रमेण नदीगङ्गामुत्तर्तुम्, स तेन तरतु, यो वा भिक्षवो वैशालकानां लिच्छवीनां नौसंक्रमेण, सोऽपि तेनोत्तरतु । अहमपि आयुष्मता आनन्देन भिक्षुणा सार्धं नागानां फणसंक्रमेण नदीं गङ्गामुत्तरिष्यामि । तत्र केचित् राज्ञो मागधस्याजातशत्रोर्वैदेहीपुत्रस्य नौसंक्रमेणोत्तीर्णाः, केचित् वैशालिकानां लिच्छवीनां 10 नौसंक्रमेण । भगवानपि आयुष्मता आनन्देन सार्धं नागानां फणसंक्रमेणोत्तीर्णः । अथान्यतमोपासकस्तस्यां वेलायां गाथां भाषते—

ये तरन्त्यर्णवं सरः सेतुं कृत्वा विसृज्य पल्वलानि ।
कोलं हि जनाः प्रवन्धिता उत्तीर्णा मेधाविनो जनाः ॥ १ ॥

उत्तीर्णो भगवान् बुद्धो ब्राह्मणस्तिष्ठति स्थले ।
15 भिक्षवोऽत्र परिस्नान्ति कोलं बध्नन्ति श्रावकाः ॥ २ ॥

किं कुर्यादुदपानेन आपश्चेत् सर्वतो यदि ।
छित्त्वेह मूलं तृष्णायाः कस्य पर्येषणां चरेत् ॥ ३ ॥ इति ॥

अद्राक्षीद्भगवानन्यतमस्मिन् भूभागे उन्नतोन्नतं पृथिवीप्रदेशम् । दृष्ट्वा च पुनरायुष्मन्तमामन्त्रयते—इच्छसि त्वमानन्द योऽसौ यूप ऊर्ध्वं व्यामसहस्रं तिर्यक् षोडशप्रवेधो नानारत्नविचित्रो 20 दिव्यः सर्वसौवर्णो राज्ञा महाप्रणादेन दानानि दत्त्वा पुण्यानि कृत्वा नद्यां गङ्गायामाप्लावितः, तं द्रष्टुम् ? एतस्य भगवन् कालः, एतस्य सुगतसमयः, योऽयं भगवान् यूपमुच्छ्रापयेत्, भिक्षवः पश्येयुः । ततो भगवता चक्रस्वस्तिकनन्द्यावर्तेन जालावनद्धेनानेकपुण्यशतनिर्जातेन भीतानामाश्वासनकरेण पृथिवी परामृष्टा । नागाः संलक्षयन्ति—किमर्थं भगवता पृथिवी परामृष्टेति ? यावत् पश्यन्ति यूपं द्रष्टुकामाः । ततस्तैरुच्छ्रापितः । भिक्षवो 25 यूपं द्रष्टुमारब्धाः । आयुष्मानपि भद्दाली अल्पोत्सुकः पांसुकूलं सीव्यति । तत्र भगवान् भिक्षूनामन्त्रयते स्म—आरोहपरिणाहं निमित्तं भिक्षवो यूपस्य गृह्णीत, अन्तर्धास्यतीति । अन्तर्हितः । भिक्षवो बुद्धं भगवन्तं पप्रच्छुः—पश्य भदन्त भिक्षवो यूपं पश्यन्ति । आयुष्मानपि भद्दाली अल्पोत्सुकः पांसुकूलं सीव्यति । किं तावत् वीतरागत्वादाहोस्वित् पर्युपासितपूर्वत्वात् ? तद्यदि तावद् वीतरागत्वात्, सन्त्यन्येऽपि वीतरागाः । अथ पर्युपासितपूर्वत्वात्, कुत्र केन 30 पर्युपासितमिति । भगवानाह—अपि भिक्षवो वीतरागत्वादपि पर्युपासितपूर्वत्वात् । कुत्रानेन पर्युपासितम् ?

C 56 C 57

भूतपूर्वं भिक्षवो राजाभूत् प्रणादो नाम शक्रस्य देवेन्द्रस्य वयस्यकः। सोऽपुत्रः पुत्राभिनन्दी करे कपोलं दत्त्वा चिन्तापरो व्यवस्थितः—अनेकधनसमुदितोऽहमपुत्रश्च। ममात्ययाद् राजवंशसमुच्छेदो भविष्यतीति। ततः शक्रेण दृष्टः पृष्टश्च—मार्ष, कस्मात् त्वं करे कपोलं दत्त्वा चिन्तापरस्तिष्ठसीति? स कथयति—कौशिक, अनेकधनसमुदितोऽहमपुत्रश्च। ममात्ययाद् राजवंशस्योच्छेदो भविष्यति। शक्रः कथयति—मार्ष, मा त्वं चिन्तापरस्तिष्ठ। यदि कश्चित् च्यवनधर्मा देवपुत्रो भविष्यति, तत्ते पुत्रत्वे समादापयिष्यामीति। धर्मता खलु च्यवनधर्मणो देवपुत्रस्य पञ्च पूर्वनिमित्तानि प्रादुर्भवन्ति—अक्लिष्टानि वासांसि संक्लिश्यन्ति, अम्लानानि माल्यानि म्लायन्ते, दौर्गन्ध्यं मुखान्निश्चरति, उभाभ्यां कक्षाभ्यां स्वेदः प्रघरति, स्वे चासने धृतिं न लभते। यावदन्यतमस्य देवपुत्रस्य पञ्च पूर्वनिमित्तानि प्रादुर्भूतानि। स शक्रेण देवेन्द्रेणोक्तः—मार्ष, प्रणादस्य राज्ञोऽग्रमहिष्याः कुक्षौ प्रतिसंधिं गृहाणेति। स कथयति—प्रमादस्थानं कौशिक। बहुकिल्बिषकारिणो हि कौशिक राजानः। मा अधर्मेण राज्यं कृत्वा नरकपरायणो भविष्यामीति। शक्रः कथयति—मार्ष, अहं ते स्मारयिष्यामि। प्रमत्ताः कौशिक देवा रतिबहुलाः। एवमेतन्मार्ष। तथापि त्वहं भवन्तं स्मारयामि। तेन प्रणादस्य राज्ञोऽग्रमहिष्याः कुक्षौ प्रतिसंधिर्गृहीता। यस्मिन्नेव दिवसे प्रतिसंधिर्गृहीता, तस्मिन् दिवसे महाजनकायेन प्रणादो मुक्तः। सा अष्टानां वा नवानां वा मासानामत्ययात् प्रसूता। दारको जातोऽभिरूपो दर्शनीयः प्रासादिको गौरः कनकवर्णश्छत्राकारशिराः प्रलम्बबाहुर्विस्तीर्णललाटः संगतभ्रूस्तुङ्गनासः। तस्य ज्ञातयः संगम्य समागम्य नामधेयं व्यवस्थापयन्ति—किं भवतु दारकस्य नामेति। ज्ञातय ऊचुः—यस्मिन्नेव दिवसेऽयं दारको मातुः कुक्षिमवक्रान्तः, तस्मिन्नेव दिवसे महाजनकायेन नादो मुक्तः। यस्मिन्नेव दिवसे जातस्तस्मिन्नेव दिवसे महाजनकायेन नादो मुक्तः। तस्मात् भवतु दारकस्य महाप्रणाद इति नाम। तस्य महाप्रणाद इति नामधेयं व्यवस्थापितम्। महाप्रणादो दारकोऽष्टाभ्यो धात्रीभ्योऽनुप्रदत्तो द्वाभ्यामंसधात्रीभ्यां द्वाभ्यां मलधात्रीभ्यां द्वाभ्यां क्षीरधात्रीभ्यां द्वाभ्यां क्रीडनिकाभ्याम्। सोऽष्टाभिर्धात्रीभिरुन्नीयते वर्ध्यते क्षीरेण दध्ना नवनीतेन सर्पिषा सर्पिर्मण्डेनान्यैश्चोत्तप्तोत्तप्तैरुपकरणविशेषैः। आशु वर्धते ह्रदस्थमिव पङ्कजम्। यदा महान् संवृत्तस्तदा लिप्यामुपन्यस्तः। संख्यायां गणनायां मुद्रायामुद्धारे न्यासे निक्षेपे वस्तुपरीक्षायां दारुपरीक्षायां रत्नपरीक्षायां हस्तिपरीक्षायामश्वपरीक्षायां कुमारपरीक्षायां कुमारीपरीक्षायाम्। सोऽष्टासु परीक्षासूद्घट्टको वाचकः पटुप्रचारः पण्डितः संवृत्तः। स यानि तानि राज्ञां क्षत्रियाणां मूर्धाभिषिक्तानां जनपदैश्वर्यस्थामवीर्यमनुप्राप्तानां महान्तं पृथिवीमण्डलमभिनिर्जित्याध्यासतां पृथग् भवन्ति शिल्पस्थानकर्मस्थानानि, तद्यथा—हस्तिशिक्षायामश्वपृष्ठे रथे शरे धनुषि प्रयाणे निर्याणेऽङ्कुशग्रहे पाशग्रहे तोमरग्रहे यष्टिबन्धे मुष्टिबन्धे पदबन्धे शिखाबन्धे दूरवेधे मर्मवेधेऽक्षुण्णवेधे दृढप्रहारितायां पञ्चसु स्थानेषु कृतावी संवृत्तः॥

धर्मता खलु न तावत् पुत्रस्य नाम प्रज्ञायते यावत् तातो जीवति। अपरेण समयेन

प्रणादो राजा कालगतः। महाप्रणादो राज्ये प्रतिष्ठितः। स यावत्तावद् धर्मेण राज्यं कारयित्वा अधर्मेण राज्यं कारयितुं प्रवृत्तः। ततः शक्रेण देवेन्द्रेणोक्तः—मार्ष, मया त्वं प्रणादस्य राज्ञः पुत्रत्वे समादापितः। मा अधर्मेण राज्यं कारय, मा नरकपरायणो भविष्यसीति। स यावत्तावद् धर्मेण राज्यं कारयित्वा पुनरपि अधर्मेण राज्यं कारयितुं प्रवृत्तः। द्विरपि 5 शक्रेणोक्तः—मार्ष, मया त्वं प्रणादस्य राज्ञः पुत्रत्वे समादापितः। मा अधर्मेण राज्यं कारय, मा नरकपरायणो भविष्यसीति। स कथयति—कौशिक, वयं राजानः प्रमत्ता इति रतिबहुलाः क्षणाद् विस्मरामः। किंचित्त्वमस्माकं चिह्नं स्थापय, यं दृष्ट्वा दानानि दास्यामः, पुण्यानि कारयिष्याम इति। न च शक्यते विना निमित्तेन पुण्यं कर्तुम्। ततः शक्रेण देवेन्द्रेण विश्वकर्मणो देवपुत्रस्याज्ञा दत्ता—गच्छ त्वं विश्वकर्मन् राज्ञो महाप्रणादस्य निवेशने। दिव्यं 10 मण्डलवाटं निर्मिणु, यूपं चोच्छ्रापय। ऊर्ध्वं व्यामसहस्रेण तिर्यक् षोडशप्रवेधं नानारत्नविचित्रं सर्वसौवर्णमिति। ततो विश्वकर्मणा देवपुत्रेण महाप्रणादस्य राज्ञो निवेशने दिव्यो मण्डलवाटो निर्मितो यूपश्चोच्छ्रितः। ऊर्ध्वं व्यामसहस्रं नानारत्नविचित्रो दिव्यः सर्वसौवर्णः। ततो महाप्रणादेन राज्ञा दानशाला मापिता। तस्य मातुलोऽशोको नाम यूपस्य परिचारको व्यवस्थितः। ततो यूपदर्शनोद्युक्तः सर्व एव जम्बुद्वीपनिवासी जनकाय आगत्य भुक्त्वा यूपं 15 पश्यति, स्वकर्मानुष्ठानं न करोति। ततः कृषिकर्मान्ताः समुच्छिन्नाः। राज्ञः करप्रत्याया नोत्तिष्ठन्ते। अमात्यैः स्तोकाः करप्रत्याया उपनीताः। महाप्रणादो राजा पृच्छति—भवन्तः, कस्मात् स्तोकाः करप्रत्याया उपनीताः? देव, जम्बुद्वीपनिवासी जनकाय आगत्य भुक्त्वा यूपं पश्यति, स्वकर्मानुष्ठानं न करोति। कृषिकर्मान्ताः समुच्छिन्नाः। राज्ञः करप्रत्याया C 60 नोत्तिष्ठन्त इति। राजा कथयति—समुच्छिद्यतां दानशालेति। तैः समुच्छिन्ना। ततोऽप्यसौ 20 जनकायः स्वपथ्यदनमादाय भुक्त्वा यूपं निरीक्षमाणस्तिष्ठति, स्वकर्मानुष्ठानं न करोति। कृषिकर्मान्ताः समुच्छिन्नाः। तथापि करप्रत्याया नोत्तिष्ठन्ते। राजा पृच्छति—भवन्तः, दानशालाः समुच्छिन्नाः। इदानीं करप्रत्याया नोत्तिष्ठन्त इति। अमात्याः कथयन्ति—देव, जनकायः स्वपथ्यदनमादाय भुक्त्वा यूपं निरीक्षमाणस्तिष्ठति, स्वकर्मानुष्ठानं न करोति। कृषिकर्मान्ताः समुच्छिन्नाः, यतः करप्रत्याया नोत्तिष्ठन्ते। ततो राज्ञा महाप्रणादेन दानानि दत्त्वा पुण्यानि 25 कृत्वा स यूपो नद्यां गङ्गायामाप्लावितः। किं मन्यध्वे भिक्षवो योऽसौ राज्ञो महाप्रणादस्याशोको नाम मातुलः, एष एवासौ भद्दाली भिक्षुः। तत्रानेन पर्युपासितपूर्वः॥

कुत्र भदन्त असौ यूपो विलयं गमिष्यति? भविष्यन्ति भिक्षवोऽनागतेऽध्वनि अशीतिवर्षसहस्रायुषो मनुष्याः। अशीतिवर्षसहस्रायुषां मनुष्याणां शङ्खो नाम राजा भविष्यति संयमनी चक्रवर्ती चतुरन्तविजेता धार्मिको धर्मराजा सप्तरत्नसमन्वागतः। तस्येमान्येवं रूपाणि 30 सप्त रत्नानि भविष्यन्ति। तद्यथा—चक्ररत्नं हस्तिरत्नमश्वरत्नं मणिरत्नं स्त्रीरत्नं गृहपतिरत्नं परिणायकरत्नमेव सप्तमम्। पूर्णं चास्य भविष्यति सहस्रं पुत्राणां शूराणां वीराणां वराङ्गरूपिणां परसैन्यप्रमर्दकानाम्। स इमामेव समुद्रपर्यन्तां पृथिवीमखिलामकण्टकामनुत्पीडामदण्डेनाशस्त्रेण धर्मेण

समयेन अभिनिर्जित्याध्यावसिष्यति। शङ्खस्य राज्ञो ब्रह्मायुर्नाम ब्राह्मणः पुरोहितो भविष्यति। तस्य ब्रह्मवती नाम पत्नी भविष्यति। सा मैत्रेयांशेन स्फुरित्वा पुत्रं जनयिष्यति मैत्रेयं नाम। ब्रह्मायुर्माणवोऽशीतिमाणवकशतानि ब्राह्मणकान् मन्त्रान् वाचयिष्यति। स तान् माणवकान् मैत्रेयाय अनुप्रदास्यति। मैत्रेयो माणवोऽशीतिमाणवकसहस्राणि ब्राह्मणकान् मन्त्रान् वाचयिष्यति। अथ चत्वारो महाराजाश्चतुर्महानिधिस्थाः— C 61 5

पिङ्गलश्च कलिङ्गेषु मिथिलायां च पाण्डुकः।
एलापत्रश्च गान्धारे शङ्खो वाराणसीपुरे॥ ४॥

एनं च यूपमादाय शङ्खस्य राज्ञ उपनामयिष्यन्ति। शङ्खोऽपि राजा ब्रह्मायुषे ब्राह्मणायानुप्रदास्यति। ब्रह्मायुरपि ब्राह्मणो मैत्रेयाय माणवायानुप्रदास्यति। मैत्रेयोऽपि माणवस्तेषां माणवकानामनुप्रदास्यति। ततस्ते माणवकास्तं यूपं खण्डं खण्डं छित्त्वा भाजयिष्यन्ति। 10 ततो मैत्रेयो माणवकस्तस्य यूपस्यानित्यतां दृष्ट्वा तेनैव संवेगेन वनं संश्रयिष्यति। यस्मिन्नेव दिवसे वनं संश्रयिष्यति, तस्मिन्नेव दिवसे मैत्रेयांशेन स्फुरित्वा अनुत्तरं ज्ञानमधिगमिष्यति। तस्य मैत्रेयः सम्यक्संबुद्ध इति संज्ञा भविष्यति। यस्मिन्नेव दिवसे मैत्रेयः सम्यक्संबुद्धोऽनुत्तरज्ञानमधिगमिष्यति, तस्मिन्नेव दिवसे शङ्खस्य राज्ञः सप्तरत्नान्यन्तर्धास्यन्ते। शङ्खोऽपि राजा अशीतिकोट्टराजसहस्रपरिवारो मैत्रेयं सम्यक्संबुद्धं प्रव्रजितमनुप्रव्रजिष्यति। यदप्यस्य 15 स्त्रीरत्नं विशाखा नाम, सापि अशीतिस्त्रीसहस्रपरिवारा मैत्रेयं सम्यक्संबुद्धं प्रव्रजितमनुप्रव्रजिष्यति। ततो मैत्रेयः सम्यक्संबुद्धोऽशीतिभिक्षुकोटिपरिवारो येन गुरुपादकः पर्वतस्तेनोपसंक्रमिष्यति, यत्र काश्यपस्य भिक्षोरस्थिसंघातोऽविकोपितस्तिष्ठति। गुरुपादकपर्वतो मैत्रेयाय सम्यक्संबुद्धाय विवरमनुप्रदास्यति। यतो मैत्रेयः सम्यक्संबुद्धः काश्यपस्य भिक्षोरविकोपितमस्थिसंघातं दक्षिणेन पाणिना गृहीत्वा वामे पाणौ प्रतिष्ठाप्य एवं श्रावकाणां धर्मं देशयिष्यति—योऽसौ भिक्षवो वर्षशतायुषि प्रजायां शाक्यमुनिर्नाम शास्ता लोक उत्पन्नस्तस्यायं श्रावकः काश्यपो नाम्ना अल्पेच्छानां संतुष्टानां धूतगुणवादिनामग्रो निर्दिष्टः। शाक्यमुनेः परिनिर्वृतस्यानेन शासनसंगीतिः कृता इति। ते दृष्ट्वा संवेगमापत्स्यन्ते—कथमिदानीमीदृशेनात्मभावेनेदृशा गुणगणा अधिगता इति। ते तेनैव संवेगेनार्हत्त्वं साक्षात्करिष्यन्ति। षण्णवतिकोट्योऽर्हतां भविष्यन्ति धूतगुणसाक्षात्कृताः। यं च संवेगमापत्स्यन्ते, तत्रासौ यूपो विलयं गमिष्यति॥ 20 C 62 25

को भदन्त हेतुः कः प्रत्ययो द्वयो रत्नयोर्युगपल्लोके प्रादुर्भावाय? भगवानाह—प्रणिधानवशात्। कुत्र भगवन् प्रणिधानं कृतम्?

भूतपूर्वं भिक्षवोऽतीतेऽध्वनि मध्यदेशे वासवो नाम राजा राज्यं कारयति ऋद्धं च स्फीतं च क्षेमं च सुभिक्षं च आकीर्णबहुजनमनुष्यं च। तस्य सदापुष्पफला वृक्षाः। देवः कालेन कालं सम्यग्वारिधारामनुप्रयच्छति। अतीव शस्यसंपत्तिर्भवति। उत्तरापथे धनसंमतो नाम राजा राज्यं कारयति ऋद्धं च स्फीतं च क्षेमं च सुभिक्षं च आकीर्णबहुजनमनुष्यं च। तस्यापि सदापुष्पफला वृक्षाः। देवः कालेन कालं सम्यग्वारिधारामनुप्रयच्छतीति। अतीव 30

शस्यसंपत्तिर्भवति। यावदपरेण समयेन वासवस्य राज्ञः पुत्रो जातो रत्नप्रत्युप्तया शिखया। तस्य विस्तरेण जातिमहं कृत्वा रत्नशिखीति नामधेयं व्यवस्थापितम्। सोऽपरेण समयेन जीर्णातुरमृतसंदर्शनादुद्विग्नो वनं संश्रितः। यस्मिन्नेव दिवसे वनं संश्रितस्तस्मिन्नेव दिवसे-ऽनुत्तरं ज्ञानमधिगतम्। तस्य रत्नशिखी सम्यक्संबुद्ध इति संज्ञोदपादि। अथापरेण समयेन 5 धनसंमतो राजा उपरिप्रासादतलगतोऽमात्यगणपरिवृतस्तिष्ठति। सोऽमात्यानामन्त्रयते—भवन्तः, कस्यचिदन्यस्यापि राज्ञो राज्यमेवमृद्धं च स्फीतं च क्षेमं च सुभिक्षं च आकीर्ण-बहुजनमनुष्यं च। सदापुष्पफला वृक्षाः। देवः कालेन कालं सम्यग्वारिधारामनुप्रयच्छ-तीति। अतीव शस्यसंपत्तिर्भवति यथा अस्माकमिति? मध्यदेशाद् वणिजः पण्यमादायोत्तरापथं गताः। ते कथयन्ति—अस्ति देव मध्यदेशे वासवो नाम राजा इति। सहश्रवणादेव धन-10 संमतस्य राज्ञोऽमर्ष उत्पन्नः। स संजातामर्षोऽमात्यानामन्त्रयते—संनाहयन्तु भवन्तश्चतुरङ्गं बलकायम्। राष्ट्रापमर्दनमस्य करिष्यामि इति। ततो धनसंमतो राजा चतुरङ्गं बलकायं संनाह्य हस्तिकायमश्वकायं रथकायं पत्तिकायं मध्यदेशमागत्य गङ्गाया दक्षिणे कूले-ऽवस्थितः। अश्रौषीद्वासवो राजा—धनसंमतो राजा चतुरङ्गं बलकायं संनाह्य हस्तिकायमश्व-कायं रथकायं पत्तिकायं मध्यदेशमागत्य गङ्गाया दक्षिणे कूलेऽवस्थित इति। श्रुत्वा च पुनः 15 सोऽपि चतुरङ्गं बलकायं संनाह्य हस्तिकायमश्वकायं रथकायं पत्तिकायं गङ्गाया उत्तरे कूलेऽ-वस्थितः। अथ रत्नशिखी सम्यक्संबुद्धस्तयोर्विनयकालं ज्ञात्वा नद्या गङ्गायास्तीरे रात्रिं वास-मुपगतः। ततो रत्नशिखिना सम्यक्संबुद्धेन लौकिकं चित्तमुत्पादितम्। धर्मता खलु यदा बुद्धा भगवन्तो लौकिकं चित्तमुत्पादयन्ति, तस्मिन् समये शक्रब्रह्मादयो देवा भगवतश्चेतसा चित्तमाजानन्ति। अथ शक्रब्रह्मादयो देवा येन रत्नशिखी सम्यक्संबुद्धस्तेनोपसंक्रान्ताः। 20 उपसंक्रम्य रत्नशिखिनः सम्यक्संबुद्धस्य पादौ शिरसा वन्दित्वैकान्ते निषण्णाः। तेषां वर्णा-नुभावेन महानुदारावभासः संवृत्तः। धनसंमतेन राज्ञा दृष्टः। दृष्ट्वा च पुनरमात्यान् पृच्छति—किमयं भवन्तो वासवस्य राज्ञो विजिते महानुदारावभासः? ते कथयन्ति—देव, वासवस्य राज्ञो विजिते रत्नशिखी नाम सम्यक्संबुद्धः उत्पन्नः। तस्य शक्रब्रह्मादयो देवा दर्शनायोपसंक्रमन्ति। तेनैवोदारावभासः संवृत्तः। महर्द्धिकोऽसौ महानुभावः। तस्याय-25 मनुभाव इति। धनसंमतो राजा कथयति—भवन्तः, यस्य विजिते ईदृशं द्विपादकं पुण्यक्षेत्र-मुत्पन्नम्, यं शक्रब्रह्मादयोऽपि देवा दर्शनायोपसंक्रामन्ति, तस्याहं कीदृशमनर्थं करिष्यामि? तेन तस्य दूतोऽनुप्रेषितः। वयस्य, आगच्छ। न तेऽहं किंचित् करिष्यामि इति। पुण्य-महेशाख्यस्त्वम्, यस्य विजिते द्विपादकं पुण्यक्षेत्रं रत्नशिखी सम्यक्संबुद्धोऽयम्। शक्रब्रह्मादयो देवा दर्शनायोपसंक्रामन्ति। किं तु कण्ठाश्लेषं ते दत्वा गमिष्यामि। एवमावयोः परस्परं 30 चित्तसौमनस्यं भवतीति। वासवो राजा विश्वासं न गच्छति। स येन रत्नशिखी सम्य-क्संबुद्धस्तेनोपसंक्रान्तः। उपसंक्रम्य रत्नशिखिनः सम्यक्संबुद्धस्य पादौ शिरसा वन्दित्वा एकान्ते निषण्णः। एकान्तनिषण्णो वासवो राजा रत्नशिखिनं सम्यक्संबुद्धमिदमवोचत्—

C 63 C 64

मम भदन्त धनसंमतेन राज्ञा संदिष्टम्—प्रियवयस्य आगच्छ, न तेऽहं किंचित् करिष्यामि। कण्ठा कण्ठाश्लेषं श्लेषं दत्वा गमिष्यामि। एवमावयोः परस्परं चित्तसौमनस्यं भवतीति। तत्र मया कथं प्रतिपत्तव्यम्? रत्नशिखी सम्यक्संबुद्धः कथयति—गच्छ महाराज, शोभनं भविष्यति। भगवन्, किं मया तस्य पादयोर्निपतितव्यम्? महाराज, बलश्रेष्ठा हि राजानः। निपतितव्यम्। अथ वासवो राजा रत्नशिखिनः सम्यक्संबुद्धस्य पादौ शिरसा वन्दित्वा उत्थायासनात् प्रक्रान्तः। येन धनसंमतो राजा तेनोपसंक्रान्तः। उपसंक्रम्य धनसंमतस्य राज्ञः पादयोर्निपतितः। ततो धनसंमतेन राज्ञा कण्ठे श्लेषं दत्त्वा विश्वासमुत्पाद्य प्रेषितः॥ 5

अथ वासवो राजा येन रत्नशिखी सम्यक्संबुद्धस्तेनोपसंक्रान्तः। उपसंक्रम्य रत्नशिखिनः सम्यक्संबुद्धस्य पादौ शिरसा वन्दित्वा एकान्ते निषण्णः। एकान्तनिषण्णो वासवो राजा रत्नशिखिनं सम्यक्संबुद्धमिदमवोचत्—कस्य भदन्त सर्वे राजानः पादयोर्निपतन्ति? राज्ञो महाराज 10 चक्रवर्तिनः। अथ वासवो राजा उत्थायासनादेकांसमुत्तरासङ्गं कृत्वा येन रत्नशिखी तथागतः सम्यक्संबुद्धस्तेनाञ्जलिं प्रणम्य रत्नशिखिनं सम्यक्संबुद्धमिदमवोचत्—अधिवासयतु मे भगवान् श्वोऽन्तर्गृहे भक्तेन सार्धं भिक्षुसंघेन। अथ वासवो राजा तामेव रात्रिं शुचि प्रणीतं खादनीयं भोजनीयं समुदानीय काल्यमेवोत्थाय आसनानि प्रज्ञाप्य उदकमणीन् प्रतिष्ठाप्य रत्नशिखिनः सम्यक्संबुद्धस्य दूतेन कालमारोचयति—समयो भदन्त, सज्जं भक्तम्, 15 यस्येदानीं भगवान् कालं मन्यते इति। अथ रत्नशिखी सम्यक्संबुद्धः पूर्वाह्णे निवास्य पात्रचीवरमादाय भिक्षुसंघपरिवृतो भिक्षुसंघपुरस्कृतो येन राज्ञो वासवस्य भक्ताभिसारस्तेनोपसंक्रान्तः। उपसंक्रम्य पुरस्ताद्भिक्षुसंघस्य प्रज्ञप्त एवासने निषण्णः। अथ राजा वासवो रत्नशिखिनं सम्यक्संबुद्धं सुखोपनिषण्णं विदित्वा शुचिना प्रणीतेन खादनीयेन भोजनीयेन स्वहस्तं संतर्पयति संप्रवारयति। अनेकपर्यायेण शुचिना खादनीयेन भोजनीयेन स्वहस्तं 20 संतर्प्य संप्रवार्य भगवन्तं रत्नशिखिनं सम्यक्संबुद्धं भुक्तवन्तं विदित्वा धौतहस्तमपनीतपात्रं पादयोर्निपत्य प्रणिधानं कर्तुमारब्धः—अनेनाहं भदन्त कुशलमूलेन राजा स्यां चक्रवर्तीति। तत्समनन्तरं च शङ्ख आपूरितः। ततो रत्नशिखी सम्यक्संबुद्धो वासवं राजानमिदमवोचत्—भविष्यसि महाराज अशीतिवर्षसहस्रायुषि प्रजायां शङ्खो नाम राजा चक्रवर्तीति। तत उच्चशब्दो महाशब्दो जातः। धनसंमतो राजा कोलाहलशब्दं श्रुत्वा अमात्यान् पृच्छति— 25 किमेष भवन्तो वासवस्य राज्ञो विजिते कोलाहलशब्दः श्रूयते इति? तैरागम्य निवेदितम्—देव, रत्नशिखिना सम्यक्संबुद्धेन वासवो राजा चक्रवर्तिराज्ये व्याकृत इति जनकायो हृष्टतुष्टप्रमुदितः। तेन कोलाहलशब्दो जात इति। अथ धनसंमतो राजा येन रत्नशिखी सम्यक्संबुद्धस्तेनोपसंक्रान्तः। उपसंक्रम्य रत्नशिखिनः सम्यक्संबुद्धस्य पादौ शिरसा वन्दित्वा एकान्ते निषण्णः। एकान्तनिषण्णो धनसंमतो राजा रत्नशिखिनं सम्यक्संबुद्धमिदमवोचत्—कस्य 30 भदन्त सर्वे चक्रवर्तिनः पादयोर्निपतन्ति? तथागतस्य महाराज अर्हतः सम्यक्संबुद्धस्य। अथ धनसंमतो राजा उत्थायासनादेकांसमुत्तरासङ्गं कृत्वा येन रत्नशिखी सम्यक्संबुद्धस्तेना-

C 65

ञ्जलिं प्रणम्य रत्नशिखिनं सम्यक्संबुद्धमिदमवोचत्–अधिवासयतु मे भगवान् श्वोऽन्तर्गृहे
C 66 भक्तेन सार्धं भिक्षुसंघेन । अधिवासयति रत्नशिखी सम्यक्संबुद्धो धनसंमतस्य राज्ञोऽपि
तूष्णीभावेन । अथ धनसंमतो राजा रत्नशिखिनः सम्यक्संबुद्धस्य तूष्णीभावेनाधिवासनं
विदित्वा रत्नशिखिनः सम्यक्संबुद्धस्य पादौ शिरसा वन्दित्वा रत्नशिखिनः सम्यक्संबुद्धस्यान्ति-
5 कात् प्रक्रान्तः ॥

अथ धनसंमतो राजा तामेव रात्रिं शुचि प्रणीतं खादनीयं भोजनीयं समुदानीय
काल्यमेवोत्थाय आसनानि प्रज्ञप्य उदकमणीन् प्रतिष्ठाप्य रत्नशिखिनः सम्यक्संबुद्धस्य
दूतेन कालमारोचयति– समयो भदन्त, सज्जं भक्तम्, यस्येदानीं भगवान् कालं मन्यते
इति । अथ रत्नशिखी सम्यक्संबुद्धः पूर्वाह्णे निवास्य पात्रचीवरमादाय भिक्षुगणपरिवृतो
10 भिक्षुसंघपुरस्कृतो येन धनसंमतस्य राज्ञो भक्ताभिसारस्तेनोपसंक्रान्तः । उपसंक्रम्य पुर-
स्ताद्भिक्षुसंघस्य प्रज्ञप्त एवासने निषण्णः । अथ धनसंमतो राजा सुखोपनिषण्णं रत्नशिखिनं
सम्यक्संबुद्धं तत्प्रमुखं भिक्षुसंघं विदित्वा शुचिना प्रणीतेन खादनीयेन भोजनीयेन स्वहस्तेन
संतर्पयति संप्रवारयति । अनेकपर्यायेण शुचिना प्रणीतेन खादनीयेन भोजनीयेन स्वहस्तेन
संतर्प्य संप्रवार्य रत्नशिखिनं सम्यक्संबुद्धं भुक्तवन्तं विदित्वा धौतहस्तमपनीतपात्रं पादयो-
15 र्निपत्य सर्वमिमं लोकं मैत्रेणांशेन स्फुरित्वा प्रणिधानं कर्तुमारब्धः–अनेनाहं कुशलमूलेन
शास्ता लोके भवेयं तथागतोऽर्हन् सम्यक्संबुद्ध इति । रत्नशिखी सम्यक्संबुद्धः कथयति–
भविष्यसि त्वं महाराज अशीतिवर्षसहस्रायुषि प्रजायां मैत्रेयो नाम तथागतोऽर्हन् सम्य-
क्संबुद्ध इति । तत्प्रणिधानवशाद् द्वयो रत्नयोर्लोके प्रादुर्भावो भविष्यति ॥

इदमवोचद्भगवान् । आत्तमनसस्ते भिक्षवो भगवतो भाषितमभ्यनन्दन् ॥

इति श्रीदिव्यावदाने मैत्रेयावदानं तृतीयम् ॥



## ४ ब्राह्मणदारिकावदानम् ।

भगवान् न्यग्रोधिकामनुप्राप्तः । अथ भगवान् पूर्वाह्णे निवास्य पात्रचीवरमादाय C 67
न्यग्रोधिकां पिण्डाय प्राविक्षत् । कपिलवस्तुनो ब्राह्मणस्य दारिका न्यग्रोधिकायां निविष्टा ।
अद्राक्षीत् सा ब्राह्मणदारिका भगवन्तं द्वात्रिंशता महापुरुषलक्षणैः समलंकृतमशीत्यानुव्यञ्जनै-
र्विराजितगात्रं व्यामप्रभालंकृतं सूर्यसहस्रातिरेकप्रभं जङ्गममिव रत्नपर्वतं समन्ततो भद्रकम् ।
सहदर्शनादस्या एतदभवत्—अयं स भगवान् शाक्यकुलनन्दनश्चक्रवर्तिकुलाद् राज्यमपहाय 5
स्फीतमन्तःपुरं स्फीतानि च कोशकोष्ठागाराणि प्रव्रजित इदानीं भिक्षामटते। यदि ममान्ति-
कात्सक्तुकभिक्षां प्रतिगृह्णीयात्, अहमस्मै दद्यामिति। ततो भगवता तस्याश्चेतसा चित्तमाज्ञाय
पात्रमुपनामितम्—यदि ते भगिनि परित्यक्तम्, आकीर्यतामस्मिन् पात्र इति । ततो भूयस्या
मात्रया तस्याः प्रसाद उत्पन्नः । जानाति मे भगवांश्चेतसा चित्तमिति विदित्वा तीव्रेण
प्रसादेन भगवते सक्तुभिक्षां दत्तवती । ततो भगवता स्मितमुपदर्शितम् । धर्मता खलु 10
यस्मिन् समये बुद्धा भगवन्तः स्मितं प्राविष्कुर्वन्ति, तस्मिन् समये नीलपीतलोहितावदाताः
पुष्परागपद्मरागवज्रवैडूर्यमुसारगल्वार्कलोहितकादक्षिणावर्तशङ्खशिलाप्रवालजातरूपरजतवर्णा
अर्चिषो मुखान्निश्चार्य काश्चिदधस्ताद्गच्छन्ति, काश्चिदुपरिष्टाद्गच्छन्ति। या अधस्ताद्गच्छन्ति,
ताः संजीवं कालसूत्रं संघातं रौरवं महारौरवं तपनं प्रतापनमवीचिमर्बुदं निरर्बुदमटटं
हहवं हुहुवमुत्पलं पद्मं महापद्ममवीचिपर्यन्तान् नरकान् गत्वा ये उष्णनरकास्तेषु शीतीभूत्वा 15 C 68
निपतन्ति, ये शीतनरकास्तेषूष्णीभूत्वा निपतन्ति । तेनानुगतास्तेषां सत्त्वानां तस्मिन् क्षणे
कारणाविशेषाः, ते प्रतिप्रस्रभ्यन्ते । तेषामेवं भवति—किं नु वयं भवन्त इतश्च्युता आहो-
स्विदन्यत्रोपपन्ना इति । तेषां प्रसादसंजननार्थं भगवान्निर्मितं [दर्शनं] विसर्जयति ।
तेषां निर्मितं दृष्ट्वैवं भवति—न ह्येव वयं भवन्त इतश्च्युताः, नाप्यन्यत्रोपपन्ना इति । अपि
त्वयमपूर्वदर्शनः सत्त्वः, अस्यानुभावेनास्माकं कारणाविशेषाः प्रतिप्रस्रब्धा इति । ते निर्मिते 20
चित्तमभिप्रसाद्य तन्नरकवेदनीयं कर्म क्षपयित्वा देवमनुष्येषु प्रतिसंधिं गृह्णन्ति, यत्र सत्यानां
भाजनभूता भवन्ति। या उपरिष्टाद्गच्छन्ति, ताश्चातुर्महाराजिकान् देवान् गत्वा त्रायस्त्रिंशान्
यामांस्तुषितान् निर्माणरतीन् परनिर्मितवशवर्तिनो देवान् ब्रह्मकायिकान् ब्रह्मपुरोहितान्
महाब्रह्मणः परीत्ताभानप्रमाणाभानाभास्वरान् परीत्तशुभानप्रमाणशुभान् शुभकृत्स्नाननभ्रकान्
पुण्यप्रसवान् बृहत्फलानबृहानतपान् सुदृशान् सुदर्शानकनिष्ठपर्यन्तान् देवान् गत्वा अनित्यं 25
दुःखं शून्यमनात्मेत्युद्घोषयन्ति । गाथाद्वयं च भाषन्ते—

आरभध्वं निष्क्रामत युज्यध्वं बुद्धशासने ।
धुनीत मृत्युनः सैन्यं नडागारमिव कुञ्जरः ॥ १ ॥
यो ह्यस्मिन् धर्मविनये अप्रमत्तश्चरिष्यति ।
प्रहाय जातिसंसारं दुःखस्यान्तं करिष्यति ॥ २ ॥ 30

अथ ता अर्चिषस्त्रिसाहस्रमहासाहस्रं लोकधातुमन्वाहिण्ड्य भगवन्तमेव पृष्ठतः पृष्ठतः समनुबद्धा गच्छन्ति । तद्यदि भगवानतीतं व्याकर्तुकामो भवति, पृष्ठतोऽन्तर्धीयन्ते । अनागतं व्याकर्तुकामो भवति, पुरस्तादन्तर्धीयन्ते । नरकोपपत्तिं व्याकर्तुकामो भवति, पादतलेऽन्तर्धीयन्ते । तिर्यगुपपत्तिं व्याकर्तुकामो भवति, पार्ष्ण्यामन्तर्धीयन्ते । प्रेतोपपत्तिं C 69 5 व्याकर्तुकामो भवति, पादाङ्गुष्ठेऽन्तर्धीयन्ते । मनुष्योपपत्तिं व्याकर्तुकामो भवति, जानुनोरन्तर्धीयन्ते । बलचक्रवर्तिराज्यं व्याकर्तुकामो भवति, वामे करतलेऽन्तर्धीयन्ते । चक्रवर्तिराज्यं व्याकर्तुकामो भवति, दक्षिणे करतलेऽन्तर्धीयन्ते । श्रावकबोधिं व्याकर्तुकामो भवति, आस्येऽन्तर्धीयन्ते । प्रत्येकबोधिं व्याकर्तुकामो भवति, ऊर्णायामन्तर्धीयन्ते । यदि अनुत्तरां सम्यक्संबोधिं व्याकर्तुकामो भवति, उष्णीषेऽन्तर्धीयन्ते ॥

10 अथ ता अर्चिषो भगवन्तं त्रिः प्रदक्षिणीकृत्योर्णायामन्तर्हिताः । अथायुष्मानानन्दः कृतकरपुटो भगवन्तं पप्रच्छ—

नानाविधो रङ्गसहस्रचित्रो
वक्त्रान्तरान्निष्क्रमितः कलापः ।
अवभासिता येन दिशः समन्तात्
15 दिवाकरेणोदयता यथैव ॥ ३ ॥

गाथाद्वयं च भाषते—

विगतोद्भवा दैन्यमदप्रहीणा
बुद्धा जगत्युत्तमहेतुभूताः ।
नाकारणं शङ्खमृणालगौरं
20 स्मितमुपदर्शयन्ति जिना जितारयः ॥ ४ ॥

तत्कालं स्वयमधिगम्य धीर बुद्ध्या
श्रोतॄणां श्रमण जिनेन्द्र काङ्क्षितानाम् ।
धीराभिर्मुनिवृष वाग्भिरुत्तमाभि-
रुत्पन्नं व्यपनय संशयं शुभाभिः ॥ ५ ॥

25 नाकस्माल्लवणजलाद्रिराजधैर्याः
संबुद्धाः स्मितमुपदर्शयन्ति नाथाः ।
यस्यार्थे स्मितमुपदर्शयन्ति धीरा-
स्तं श्रोतुं समभिलषन्ति ते जनौघाः ॥ ६ ॥ इति ॥

30 भगवानाह—एवमेतदानन्द, एवमेतत् । नाहेतुप्रत्ययमानन्द तथागता अर्हन्तः सम्यक्संबुद्धाः स्मितं प्राविष्कुर्वन्ति । दृष्टा तवैषा सा आनन्द ब्राह्मणदारिका, यया

प्रसादजातया मह्यं सक्तुभिक्षानुप्रदत्ता ? दृष्टा भदन्त । असावानन्द ब्राह्मणदारिका अनेन कुशलमूलेन त्रयोदश कल्पान् विनिपातं न गमिष्यति । किं तर्हि देवांश्च मनुष्यांश्च संवाच्य संसृत्य पश्चिमे भवे पश्चिमे निकेते पश्चिमे समुच्छ्रये पश्चिम आत्मभावप्रतिलम्भे सुपर्णिहितो नाम प्रत्येकबुद्धो भविष्यति । सामन्तकेन शब्दो विसृतः—अमुकया ब्राह्मणदारिकया प्रसादजातया भगवते सक्तुभिक्षा प्रतिपादिता, सा भगवता प्रत्येकायां बोधौ व्याकृतेति । तस्याश्च स्वामी पुष्पसमिधामर्थायारण्यं गतः । तेन श्रुतं मम पत्न्या श्रमणाय गौतमाय सक्तुभिक्षा प्रतिपादिता, सा च श्रमणेन गौतमेन प्रत्येकायां बोधौ व्याकृता इति । श्रुत्वा पुनः संजातामर्षो येन भगवांस्तेनोपसंक्रान्तः । भगवता सार्धं संमुखं संमोदनीं संरञ्जनीं विविधां कथां व्यतिसार्य भगवन्तमिदमवोचत्—अगमद्भवान् गौतमोऽस्माकं निवेशनम् ? अगमं ब्राह्मण । सत्यं भवते तया मम पत्न्या सक्तुभिक्षा प्रतिपादिता, सा च त्वया प्रत्येकायां बोधौ व्याकृता इति ? सत्यं ब्राह्मण । त्वं गौतम चक्रवर्तिराज्यमपहाय प्रव्रजितः । कथं नाम त्वमेतर्हि सक्तुभिक्षाहेतोः संप्रजानन् मृषावादं संभाषसे, कस्ते श्रद्धास्यति इयत्प्रमाणस्य बीजस्येयत् फलमिति ? तेन हि ब्राह्मण त्वामेव प्रक्ष्यामि, यथा ते क्षमते तथैनं व्याकुरु । किं मन्यसे ब्राह्मण अस्ति कश्चित्त्वया आश्चर्याद्भुतो धर्मो दृष्टः ? तिष्ठन्तु तावत् भो गौतम अन्ये आश्चर्याद्भुता धर्माः । यो मया अस्यामेव न्यग्रोधिकायामाश्चर्याद्भुतो धर्मो दृष्टः, स तावच्छ्रूयताम् । अस्यां भो गौतम न्यग्रोधिकायां पूर्वेण न्यग्रोधो वृक्षो यस्य नाम्नेयं न्यग्रोधिका, तस्याधस्तात् पञ्च शकटशतानि असंसक्तानि तिष्ठन्ति अन्योन्यासंबाधमानानि । कियत्प्रमाणं तस्य न्यग्रोधस्य फलम् ? कियत् तावत् ? केदारमात्रम् । नो भो गौतम किलिञ्जमात्रम् । तैलिकचक्रमात्रम् । शकटचक्रमात्रम् । गोपिटकमात्रम् । बिल्वमात्रम् । कपित्थमात्रम् ? नो भो गौतम सर्षपचतुष्टयभागमात्रम् । कस्ते श्रद्धास्यति इयत्प्रमाणस्य बीजस्यायं महावृक्षो निर्वृत्त इति ? श्रद्दधातु मे भवान् गौतमः मा वा । नैतत् प्रत्यक्षं क्षेत्रम् । तावद्भो गौतम निरुपहतं स्निग्धमधुरमृत्तिकाप्रदेशं बीजं च नवसारं सुखारोपितम् । कालेन च कालं देवो वृष्यते, तेनायं महान्यग्रोधवृक्षोऽभिनिर्वृत्तः । अथ भगवानस्मिन्नुत्पन्ने गाथां भाषते—

यथा क्षेत्रे च बीजेन प्रत्यक्षस्त्वमिह द्विज ।
एवं कर्मविपाकेषु प्रत्यक्षा हि तथागताः ॥ ७ ॥

यथा त्वया ब्राह्मण दृष्टमेत-
दल्पं च बीजं सुमहांश्च वृक्षः ।
एवं मया ब्राह्मण दृष्टमेतत्
अल्पं च बीजं महती च संपत् ॥ ८ ॥ इति ॥

ततो भगवता मुखात् जिह्वां निर्नमय्य सर्वं मुखमण्डलमाच्छादितं यावत् केशपर्यन्तमुपादाय, स च ब्राह्मणोऽभिहितः—किं मन्यसे ब्राह्मण यस्य मुखात् जिह्वां निश्चार्य सर्वं

मुखमण्डलमाच्छादयति, अपि त्वसौ चक्रवर्तिराज्यशतसहस्रहेतोरपि संप्रजानन् मृषावदां भाषेत ? नो भो गौतम। ततोऽन्वेव गाथां भाषते—

अप्येव हि स्यादनृताभिधायिनी
ममेह जिह्वार्जवसत्यवादिता।
5 तदेवमेतन्न यथा हि ब्राह्मण
तथागतोऽस्मीत्यवगन्तुमर्हसि ॥ ९ ॥

अथ स ब्राह्मणोऽभिप्रसन्नः। ततोऽस्य भगवता आशयानुशयं धातुं प्रकृतिं च ज्ञात्वा तादृशी चतुरार्यसत्यसंप्रतिवेधिकी धर्मदेशना कृता, यां श्रुत्वा ब्राह्मणेन विंशतिशिखरसमुद्गतं सत्कायदृष्टिशैलं ज्ञानवज्रेण भित्त्वा स्रोतआपत्तिफलं साक्षात्कृतम्—अतिक्रान्तोऽहं C 72 10 भदन्त अतिक्रान्तः। एषोऽहं भगवन्तं शरणं गच्छामि धर्मं च भिक्षुसंघं च। उपासकं च मां धारय अद्याग्रेण यावज्जीवं प्राणोपेतं शरणं गतमभिप्रसन्नम्। अथ स ब्राह्मणो भगवतो भाषितमभिनन्द्यानुमोद्य भगवतः पादौ शिरसा वन्दित्वा उत्थायासनात् प्रक्रान्तः ॥

इदमवोचद्भगवान्। आत्तमनसस्ते भिक्षवो भगवतो भाषितमभ्यनन्दन् ॥

इति श्रीदिव्यावदाने ब्राह्मणदारिकावदानं चतुर्थम् ॥



## ५ स्तुतिब्राह्मणावदानम्।

अथ भगवान् हस्तिनापुरमनुप्राप्तः। अन्यतमो ब्राह्मणो भगवन्तं दूरादेव द्वात्रिंशता महापुरुषलक्षणैः समलंकृतमशीत्यानुव्यञ्जनैर्विराजितगात्रं व्यामप्रभालंकृतं सूर्यसहस्रातिरेकप्रभं जङ्गममिव पर्वतं समन्ततो भद्रकं दृष्ट्वा च पुनर्भगवन्तमभिगम्य गाथाभिः स्तोतुमारब्धः—

सुवर्णवर्णो नयनाभिरामः 5
प्रीत्याकरः सर्वगुणैरुपेतः।
देवातिदेवो नरदम्यसारथिः
तीर्णोऽसि पारं भवसागरस्य ॥ १ ॥ इति ॥

ततो भगवता स्मितमुपदर्शितम्। धर्मता खलु यस्मिन् समये बुद्धा भगवन्तः स्मितं प्राविष्कुर्वन्ति, पूर्ववद् यावद् भगवत ऊर्णायामन्तर्हिताः। अथायुष्मानानन्दः कृत- 10
करपुटो भगवन्तं पप्रच्छ—

नानाविधो रङ्गसहस्रचित्रो
वक्त्रान्तरान्निष्क्रमितः कलापः।
अवभासिता येन दिशः समन्ता-
द्दिवाकरेणोदयता यथैव ॥ २ ॥ 15

गाथां च भाषते—

विगतोद्भवा दैन्यमदप्रहीणा
बुद्धा जगत्युत्तमहेतुभूताः।
नाकारणं शङ्खमृणालगौरं C 73
स्मितमुपदर्शयन्ति जिना जितारयः ॥ ३ ॥ 20

तत्कालं स्वयमधिगम्य धीर बुद्ध्या
श्रोतॄणां श्रमण जिनेन्द्र काङ्क्षितानाम्।
धीराभिर्मुनिवृष वाग्भिरुत्तमाभि-
रुत्पन्नं व्यपनय संशयं शुभाभिः ॥ ४ ॥

नाकस्माल्लवणजलाद्रिराजधैर्याः 25
संबुद्धाः स्मितमुपदर्शयन्ति नाथाः।
यस्यार्थे स्मितमुपदर्शयन्ति धीरा—
स्तं श्रोतुं समभिलषन्ति ते जनौघाः ॥ ५ ॥ इति ॥

भगवानाह—एवमेतदानन्द, एवमेतत्। नाहेतुप्रत्ययमानन्द तथागता अर्हन्तः सम्यक्संबुद्धाः स्मितं प्राविष्कुर्वन्ति। दृष्टस्ते आनन्द ब्राह्मणो येन तथागतो गाथया अभि- 30

ष्टुतः ? दृष्टो भदन्त । असौ अनेन कुशलमूलेन विंशतिकल्पं विनिपातं न गमिष्यति । किं तु देवांश्च मनुष्यांश्च गत्वा संसृत्य पश्चिमे निकेते पश्चिमे समुच्छ्रये पश्चिमे आत्मभाव-प्रतिलम्भे स्तवार्हो नाम प्रत्येकबुद्धो भविष्यति । भिक्षवः संशयजाताः सर्वसंशयच्छेत्तारं बुद्धं भगवन्तं पृच्छन्ति—पश्य भदन्त अनेन ब्राह्मणेन भगवानेकया गाथया स्तुतो भगवता 5 च प्रत्येकायां बोधौ व्याकृत इति । भगवानाह—न भिक्षव एतर्हि, यथा अतीतेऽध्वनि अनेनाहमेकया गाथया स्तुतः, मया च पञ्चसु ग्रामवरेषु प्रतिष्ठापितः । तच्छृणु[त], साधु च सुष्ठु च मनसि कुरु[त], भाषिष्ये ॥

भूतपूर्वं भिक्षवोऽतीतेऽध्वनि वाराणस्यां नगर्यां ब्रह्मदत्तो नाम राजा राज्यं कारयति ऋद्धं च स्फीतं च सुभिक्षं च आकीर्णबहुजनमनुष्यं च । स चातीव कविप्रियः । वाराणस्या-10 मन्यतमो ब्राह्मणः कविः । स ब्राह्मण्योच्यते—ब्राह्मण शीतकालो वर्तते । गच्छ, अस्य राज्ञः C 74 कच्चिदनुकूलं भाषितं कृत्वा कदाचित् किंचित् शीतत्राणं संपद्यत इति । स संप्रस्थितः । यावद्राजा हस्तिस्कन्धारूढो निर्गच्छति । स ब्राह्मणः संलक्षयति—किं तावद्राजानं स्तुनोमि आहोस्विद् हस्तिनागमिति । तस्यैतदभवत्—अयं हस्तिनागः सर्वलोकस्य प्रियो मनापश्च । तिष्ठतु तावद्राजा, हस्तिनागं तावदभिष्टौमीति । गाथां च भाषते—

15 ऐरावणस्याकृतितुल्यदेहो
रूपोपपन्नो वरलक्षणैश्च ।
लक्षे प्रशस्तोऽसि महागजेन्द्र
वर्णप्रमाणेन सुरूपरूप ॥ ६ ॥ इति ॥

ततो राजा अभिप्रसन्नो गाथां भाषते—

20 यो मे गजेन्द्रो दयितो मनापः
प्रीतिप्रदो दृष्टिहरो नराणाम् ।
त्वं भाषसे वर्णपदानि तस्य
ददामि ते ग्रामवराणि पञ्च ॥ ७ ॥ इति ॥

किं मन्यध्वे भिक्षवो योऽसौ हस्तिनागः, अहमेव तेन कालेन तेन समयेन । 25 तदाप्यहमनेनैकया गाथया स्तुतः, मया चायं पञ्चग्रामवरेषु प्रतिष्ठापितः । एतर्हि अनेनैक-गाथया स्तुतः, मयापि चायं प्रत्येकबोधौ व्याकृत इति ॥

इदमवोचद्भगवान् । आत्तमनसः ते भिक्षवो भगवतो भाषितमभ्यनन्दन् ॥

इति श्रीदिव्यावदाने स्तुतिब्राह्मणावदानं पञ्चमम् ॥

## ६ इन्द्रनामब्राह्मणावदानम् ।

भगवान् श्रुघ्नामनुप्राप्तः । श्रुघ्नायामिन्द्रो नाम ब्राह्मणः प्रतिवसति । स च रूप-यौवनश्रुतमनुप्राप्तो न ममास्ति कश्चित् तुल्य इत्यतीव विकत्थते । भगवांश्चान्यतमस्मिन् प्रदेशे पुरस्ताद्भिक्षुसंघस्य प्रज्ञप्त एवासने निषण्णो धर्मं देशयति । अश्रौषीदिन्द्रो नाम ब्राह्मणः—श्रमणो गौतमः श्रुघ्नामनुप्राप्त इति । तस्यैतदभवत्—श्रमणो गौतमः श्रूयतेऽभिरूपो 5 दर्शनीयः प्रासादिक इति । गच्छामि पश्यामि किं ममान्तिकादभिरूपतर आहोस्विन्नेति । C 75 स निर्गतो यावत् पश्यति भगवन्तं द्वात्रिंशता महापुरुषलक्षणैः समलंकृतमशीत्या चानु-व्यञ्जनैर्विराजितगात्रं व्यामप्रभालंकृतं सूर्यसहस्रातिरेकप्रभं जङ्गममिव रत्नपर्वतं समन्ततो भद्रकम् । दृष्ट्वा च पुनरस्यैतदभवत्—किं चापि श्रमणो गौतमो ममान्तिकादभिरूपतरः, नोच्चतर इति । स भगवतो मूर्धानमवलोकयितुमारब्धो यावन्न पश्यति । स ऊर्ध्वतरं प्रदेश- 10 मारूढः । तत्र भगवानिन्द्रं ब्राह्मणमामन्त्रयते—अलं ब्राह्मण, खेदमापत्स्यसे । यदि सुमेरु-मूर्धानमपि अभिरुह्य तथागतस्य मूर्धानमवलोकयसि, तथा सुतरां खेदमापत्स्यसे, न च द्रक्ष्यसि। अपि तु न त्वया श्रुतं ससुरासुरजगदनवलोकितमूर्धानो बुद्धा भगवन्त इति? अपि तु यदीप्ससि तथागतस्य शरीरप्रमाणं द्रष्टुम्, तत्र गृहेऽग्निहोत्रकुण्डं तस्याधस्ताद्गोशीर्षचन्दन-मयी यष्टिरुपतिष्ठते, तामुद्धृत्य मापय । तत्तथागतमातापैतृकस्याश्रयस्य प्रमाणमिति । इन्द्रो 15 ब्राह्मणः संलक्षयति—एतदस्याश्चर्यं न कदाचिन्मया श्रुतम्, गच्छामि पश्यामीति। त्वरितत्वरित-गतोऽग्निहोत्रकुण्डकस्याधस्तात् खनितुमारब्धः । सर्वं तथैव । सोऽभिप्रसन्नः । स संलक्षयति—नूनं श्रमणो गौतमः सर्वज्ञः । गच्छामि पर्युपासितुमिति । स प्रसादजातो येन भगवांस्तेनोप-संक्रान्तः । उपसंक्रम्य भगवता सार्धं संमुखं संमोदनीं संरञ्जनीं विविधां कथां व्यतिसार्य एकान्ते निषण्णः । ततो भगवता आशयानुशयं धातुं प्रकृतिं च ज्ञात्वा तादृशी चतुरार्य- 20 सत्यसंप्रतिवेधिकी धर्मदेशना कृता, यथेन्द्रेण ब्राह्मणेन विंशतिशिखरसमुद्गतं सत्कायदृष्टि-शैलं ज्ञानवज्रेण भित्त्वा स्रोतआपत्तिफलं साक्षात्कृतम् । स दृष्टसत्यः कथयति—अतिक्रान्तोऽहं भदन्त, अतिक्रान्तः । एषोऽहं भगवन्तं शरणं गच्छामि धर्मं च भिक्षुसंघं च । उपासकं च मां धारय अद्याग्रेण यावज्जीवं प्राणोपेतं शरणं गतम् । अभिप्रसन्नोऽथेन्द्रो ब्राह्मण उत्थाया- C 76 सनात् एकांसमुत्तरासङ्गं कृत्वा येन भगवांस्तेनाञ्जलिं प्रणम्य भगवन्तमिदमवोचत्—यदि 25 भगवाननुजानीयात्, अहं गोशीर्षचन्दनमय्या यष्ट्या महं प्रज्ञापयेयमिति । भगवानाह—गच्छ ब्राह्मण अनुज्ञातं प्रज्ञपयसि । ततस्तेन विविक्तावकाशे महता सत्कारेणासौ यष्टिरुच्छ्रापिता, महश्च प्रज्ञपितः । अन्यैरपि ब्राह्मणगृहपतिभिः कुशलमधिष्ठानाय भवत्विति विदित्वा कुला बद्धा (?) । इन्द्रेण ब्राह्मणेन यष्ट्या महः प्रज्ञपित इति इन्द्रमह इन्द्रमह इति संज्ञा संवृत्ता ॥

तत्र भगवानायुष्मन्तमानन्दमामन्त्रयते—आगमय आनन्द येन तोयिका । एवं 30 भदन्तेति आयुष्मानानन्दो भगवतः प्रत्यश्रौषीत् । अथ भगवांस्तोयिकामनुप्राप्तः । तस्मिंश्च प्रदेशे ब्राह्मणो लाङ्गलं वाहयति । अथासौ ददर्श बुद्धं भगवन्तं द्वात्रिंशता महापुरुषलक्षणैः

समलंकृतमशीत्या चानुव्यञ्जनैर्विराजितगात्रं व्यामप्रभालंकृतं सूर्यसहस्रातिरेकप्रभं जङ्गममिव रत्नपर्वतं समन्ततो भद्रकम्। दृष्ट्वा संलक्षयति–यदि भगवन्तं गौतममुपेत्याभिवादयिष्यामि, कर्मपरिहाणिर्मे भविष्यतीति। अथ नोपेत्याभिवादयिष्यामि, पुण्यपरिहाणिर्भविष्यति। तत् कोऽसौ उपायः स्यात् येन मे कर्मपरिहाणिर्न स्यान्नापि पुण्यपरिहाणिरिति। तस्य बुद्धि-
5 रुत्पन्ना–अत्रस्थ एवाभिवादनं करोमि। एवं न कर्मपरिहाणिर्न पुण्यपरिहाणिरिति। तेन यथागृहीतयैव प्रतोदयष्ट्या तत्रस्थेनैवाभिवादनं कृतम्–अभिवादये बुद्धं भगवन्तमिति। तत्र भगवानायुष्मन्तमानन्दमामन्त्रयते–भवक्षयकरः क्षणः। एष ब्राह्मणः। सचेदस्यैवं सम्यक्प्रत्ययज्ञानदर्शनं प्रवर्तते, एतस्मिन् प्रदेशे काश्यपस्य सम्यक्संबुद्धस्याविकोपितोऽस्थि-
C 77 संघातस्तिष्ठतीति अहमनेनोपक्रमेण वन्दितो भवेयम्, एवमनेन द्वाभ्यां सम्यक्संबुद्धाभ्यां
10 वन्दना कृता भवेत्। तत्कस्य हेतोः? अस्मिन्नानन्द प्रदेशे काश्यपस्य सम्यक्संबुद्धस्या-विकोपितोऽस्थिसंघातस्तिष्ठति। अथायुष्मानानन्दो लघुलघ्वेव चतुर्गुणमुत्तरासङ्गं प्रज्ञप्य भगवन्तमिदमवोचत्–निषीदतु भगवान् प्रज्ञप्त एवासने। एवमयं पृथिवीप्रदेशो द्वाभ्यां सम्यक्संबुद्धाभ्यां परिभुक्तो भविष्यति, यच्च काश्यपेन सम्यक्संबुद्धेन, यच्चैतर्हि भगवता इति। निषण्णो भगवान् प्रज्ञप्त एवासने। निषद्य भिक्षूनामन्त्रयते स्म–इच्छथ यूयं भिक्षवः
15 काश्यपस्य सम्यक्संबुद्धस्य शरीरसंघातमविकोपितं द्रष्टुम्? एतस्य भगवन् कालः, एतस्य सुगत समयः, यं भगवान् भिक्षूणां काश्यपस्य सम्यक्संबुद्धस्याविकोपितं शरीरसंघातमुपदर्शयेत्। दृष्ट्वा भिक्षवश्चित्तमभिप्रसादयिष्यन्ति। ततो भगवता लौकिकं चित्तमुत्पादितम्। धर्मता खलु यस्मिन् समये बुद्धा भगवन्तो लौकिकं चित्तमुत्पादयन्ति, तस्मिन् समये कुन्तपिपीलिका अपि प्राणिनो भगवतश्चेतसा चित्तमाजानन्ति। नागाः संलक्षयन्ति–किं कारणं भगवता
20 लौकिकचित्तमुत्पादितमिति? पश्यन्ति–काश्यपस्य सम्यक्संबुद्धस्य शरीरसंघातमविकोपितं द्रष्टुकाम इति। ततस्तैः काश्यपस्य सम्यक्संबुद्धस्याविकोपितशरीरसंघात उच्छ्रापितः। तत्र भगवान् भिक्षूनामन्त्रयते स्म–उद्गृह्णीत भिक्षवो निमित्तम्। अन्तर्धास्यति। अन्तर्हितः॥

राज्ञा प्रसेनजिता श्रुतं भगवता श्रावकाणां दर्शनायाविकोपितं काश्यपस्य सम्यक्संबुद्धस्य शरीरसंघातं समुच्छ्रितमिति। श्रुत्वा च पुनः कुतूहलजातः सहान्तःपुरेण कुमारै-
25 रमात्यैर्भटबलाग्रैर्नैगमजानपदैश्च द्रष्टुं संप्रस्थितः। एवं विरूढकः, अनाथपिण्डदो गृहपतिः, ऋषिदत्तः पुराणस्थपतिः, विशाखा मृगारमाता, अनेकानि च प्राणिशतसहस्राणि कुतूहल-
C 78 जातानि द्रष्टुं संप्रस्थितानि पूर्वकैश्च कुशलमूलैः संचोद्यमानानि। यावदसौ अन्तर्हितः। तैः श्रुतम्–अन्तर्हितोऽसौ भगवतः काश्यपस्य सम्यक्संबुद्धस्य शरीरसंघातधातुरविकोपित इति। श्रुत्वा च पुनस्तेषां दुःखदौर्मनस्यमुत्पन्नम्–वृथा अस्माकमागमनं जातमिति। अथान्यतमेन
30 चोपासकेन स प्रदेशः प्रदक्षिणीकृतः। एवं च चेतसा चित्तमभिसंस्कृतम्–अस्मान्मे पदाविहारात् कियत् पुण्यं भविष्यतीति। अथ भगवांस्तस्य महाजनकायस्याविप्रतिसारसंजननार्थं तस्य चोपासकस्य चेतसा चित्तमाज्ञाय गाथां भाषते–

शतंसहस्राणि सुवर्णनिष्का
जाम्बूनदा नास्य समा भवन्ति।
यो बुद्धचैत्येषु प्रसन्नचित्तः
पदाविहारं प्रकरोति विद्वान्॥ १॥

अन्यतमेन उपासकेन तस्मिन् प्रदेशे मृत्तिकापिण्डो दत्तः। एवं च चित्तमभिसंस्कृतम्— 5
पदाविहारस्य तावदियत् पुण्यमाख्यातं भगवता अन्यत्र। मृत्तिकापिण्डस्य कियत् पुण्यं भविष्यतीति? अथ भगवांस्तस्यापि चेतसा चित्तमाज्ञाय गाथां भाषते—

शतंसहस्राणि सुवर्णनिष्का
जाम्बूनदा नास्य समा भवन्ति।
यो बुद्धचैत्येषु प्रसन्नचित्त 10
आरोपयेन्मृत्तिकपिण्डमेकम्॥ २॥

ततः श्रुत्वा अनेकैः प्राणिशतसहस्रैर्मृत्तिकापिण्डसमारोपणं कृतम्। अपरैस्तत्र मुक्तपुष्पाण्यवक्षिप्तानि, एवं च चित्तमभिसंस्कृतम्—पदाविहारस्य मृत्तिकापिण्डस्य चेयत् पुण्यमुक्तं भगवता, अस्माकं तु मुक्तपुष्पाणां कियत् पुण्यं भविष्यतीति? अथ भगवांस्तेषामपि चेतसा चित्तमाज्ञाय गाथां भाषते— 15

शतंसहस्राणि सुवर्णनिष्का
जाम्बूनदा नास्य समा भवन्ति।
यो बुद्धचैत्येषु प्रसन्नचित्तः
आरोपयेन्मुक्तसुपुष्पराशिम्॥ ३॥

अपरैस्तत्र मालाविहारः कृतः, चित्तं चाभिसंस्कृतम्—मुक्तपुष्पाणां भगवता इयत् 20
पुण्यमुक्तम्। अस्माकं मालाविहारस्य कियत्पुण्यं भविष्यतीति? अथ भगवांस्तेषामपि चेतसा चित्तमाज्ञाय गाथां भाषते—

शतंसहस्राणि सुवर्णवाहा C 79
जाम्बूनदा नास्य समा भवन्ति।
यो बुद्धचैत्येषु प्रसन्नचित्तो 25
मालाविहारं प्रकरोति विद्वान्॥ ४॥

अपरैस्तत्र प्रदीपमाला दत्ता, चित्तं चाभिसंस्कृतम्—मालाविहारस्य भगवता इयत् पुण्यमुक्तम्। अस्माकं प्रदीपदानस्य कियत्पुण्यं भविष्यतीति? अथ भगवांस्तेषामपि चेतसा चित्तमाज्ञाय गाथां भाषते—

शतंसहस्राणि सुवर्णकोट्यो
जाम्बूनदा नास्य समा भवन्ति ।
यो बुद्धचैत्येषु प्रसन्नचित्तः
प्रदीपदानं प्रकरोति विद्वान् ॥ ५ ॥

5 अपरैस्तत्र गन्धाभिषेको दत्तः । एवं चेतसा चित्तमभिसंस्कृतम्—प्रदीपस्य भगवता इयत् पुण्यमुक्तम् । अस्माकं गन्धाभिषेकस्य कियत्पुण्यं भविष्यतीति ? अथ भगवांस्तेषामपि चेतसा चित्तमाज्ञाय गाथां भाषते—

शतंसहस्राणि सुवर्णराशयो
जाम्बूनदा नास्य समा भवन्ति ।
10 यो बुद्धचैत्येषु प्रसन्नचित्तो
गन्धाभिषेकं प्रकरोति विद्वान् ॥ ६ ॥

अपरैस्तत्र छत्रध्वजपताकारोपणं कृतम्। एवं च...चेतसा चित्तमाज्ञाय गाथां भाषते—

तिष्ठन्तं पूजयेद्यच्च यच्चापि परिनिर्वृतम् ।
समं चित्तं प्रसाद्येह नास्ति पुण्यविशेषता ॥ ७ ॥
15 एवं ह्यचिन्तिया बुद्धा बुद्धधर्मोऽप्यचिन्तिया ।
अचिन्तिये प्रसन्नानां विपाकोऽपि अचिन्तियः ॥ ८ ॥
तेषामचिन्तियानामप्रतिहतधर्मचक्रवर्तिनाम् ।
सम्यक्संबुद्धानां नालं गुणपारमधिगन्तुम् ॥ ९ ॥ इति ॥

ततो भगवता तस्य महाजनकायस्य तथाविधा धर्मदेशना कृता, यां श्रुत्वा अनेकैः 20 प्राणिशतसहस्रैर्महान् विशेषोऽधिगतः । कैश्चिच्छ्रावकबोधौ चित्तान्युत्पादितानि, कैश्चित् प्रत्येकबोधौ, कैश्चिदनुत्तरायां सम्यक्संबोधौ, कैश्चिन्मूर्धगतानि, कैश्चिन्मूर्धानः, कैश्चिदुष्णगतान्यासादितानि, कैश्चित् सत्यानुलोमाः क्षान्तयः, कैश्चित्स्रोतआपत्तिफलं साक्षात्कृतम्, कैश्चित् सकृदागामिफलम्, कैश्चित् सर्वक्लेशप्रहाणादर्हत्त्वं साक्षात्कृतम् । यद्भूयसा बुद्धनिम्ना धर्मप्रवणाः संघप्राग्भारा व्यवस्थापिताः ॥

25 अथ अनाथपिण्डदो गृहपतिर्भगवन्तमिदमवोचत्—यदि भगवाननुजानीयात्, अत्र महं प्रज्ञापयेयम् । अनुजानामि गृहपते, प्रज्ञापयितव्यम् । ततोऽनाथपिण्डदेन गृहपतिना महः प्रज्ञापितः । तोयिकामह इति संज्ञा संवृत्ता ॥

C 80

इदमवोचद्भगवान् । आत्तमनसः ते भिक्षवो भगवतो भाषितमभ्यनन्दन् ॥

इति श्रीदिव्यावदाने इन्द्रनामब्राह्मणावदानं षष्ठम् ॥

## ७ नगरावलम्बिकावदानम् ।

अथ भगवान् कोशलेषु जनपदेषु चारिकां चरन् श्रावस्तीमनुप्राप्तः । श्रावस्त्यां विहरति जेतवने अनाथपिण्डदस्यारामे । अश्रौषीदनाथपिण्डदो गृहपतिः—भगवान् कोशलेषु जनपदेषु चारिकां चरन् श्रावस्तीमनुप्राप्तः । श्रावस्त्यां विहरति जेतवने अनाथपिण्डदस्याराम इति । श्रुत्वा च पुनर्येन भगवांस्तेनोपसंक्रान्तः । उपसंक्रम्य भगवतः पादौ शिरसा 5 वन्दित्वा एकान्ते निषण्णः । एकान्तनिषण्णमनाथपिण्डदं गृहपतिं भगवान् धर्म्यया कथया संदर्शयति समादापयति समुत्तेजयति संप्रहर्षयति । अनेकपर्यायेण धर्म्यया कथया संदर्श्य समादाप्य समुत्तेज्य संप्रहर्ष्य तूष्णीम् । अनाथपिण्डदो गृहपतिः उत्थायासनादेकांसमुत्तरासङ्गं कृत्वा येन भगवांस्तेनाञ्जलिं प्रणम्य भगवन्तमिदमवोचत्—अधिवासयतु मे भगवान् C 81 श्वोऽन्तर्गृहे भक्तेन सार्धं भिक्षुसंघेन इति । अधिवासयति भगवाननाथपिण्डदस्य गृहपते- 10 स्तूष्णीभावेन । अनाथपिण्डदो गृहपतिर्भगवतस्तूष्णीभावेनाधिवासनां विदित्वा भगवतो भाषितमभिनन्द्यानुमोद्य भगवतः पादौ शिरसा वन्दित्वा भगवतोऽन्तिकात् प्रक्रान्तो येन स्वनिवेशनं तेनोपसंक्रान्तः । उपसंक्रम्य दौवारिकं पुरुषमामन्त्रयते—न तावद्भोः पुरुष तीर्थ्यानां प्रवेशो दातव्यो यावद् बुद्धप्रमुखेन भिक्षुसंघेन भुक्तं भवति । ततः पश्चादहं तीर्थ्यानां दास्यामीति । एवमार्येति दौवारिकः पुरुषोऽनाथपिण्डदस्य गृहपतेः प्रत्यश्रौषीत् । 15 अनाथपिण्डदो गृहपतिस्तामेव रात्रिं शुचि प्रणीतं खादनीयभोजनीयं समुदानीय काल्यमेवोत्थाय आसनानि प्रज्ञप्य उदकमणीन् प्रतिष्ठाप्य भगवतो दूतेन कालमारोचयति—समयो भदन्त, सज्जं भक्तं यस्येदानीं भगवान् कालं मन्यत इति । अथ भगवान् पूर्वाह्णे निवास्य पात्रचीवरमादाय भिक्षुगणपरिवृतो भिक्षुसंघपुरस्कृतो येन अनाथपिण्डदस्य गृहपतेर्भक्ताभिसारस्तेनोपसंक्रान्तः । उपसंक्रम्य पुरस्ताद्भिक्षुसंघस्य प्रज्ञप्त एवासने निषण्णः । अथ अनाथपिण्डदो 20 गृहपतिः सुखोपनिषण्णं बुद्धप्रमुखं भिक्षुसंघं विदित्वा शुचिना प्रणीतेन खादनीयभोजनीयेन स्वहस्तं संतर्पयति संप्रवारयति । अनेकपर्यायेण शुचिना प्रणीतेन खादनीयभोजनीयेन स्वहस्तं संतर्प्य संप्रवार्य भगवन्तं भुक्तवन्तं विदित्वा धौतहस्तमपनीतपात्रं नीचतरमासनं गृहीत्वा भगवतः पुरस्तान्निषण्णो धर्मश्रवणाय ॥

अथायुष्मान् महाकाश्यपोऽन्यतमस्मादारण्यकाच्छयनासनात् दीर्घकेशश्मश्रुर्लूहचीवरो 25 जेतवनं गतः । स पश्यति जेतवनं शून्यम् । तेनोपधिवारिकः पृष्टः—कुत्र बुद्धप्रमुखो भिक्षुसंघ इति । तेन समाख्यातम्—अनाथपिण्डदेन गृहपतिनोपनिमन्त्रित इति । स संलक्षयति- C 82 गच्छामि, तत्रैव पिण्डपातं परिभोक्ष्यामि, बुद्धप्रमुखं च भिक्षुसंघं पर्युपासिष्यामीति । सोऽनाथपिण्डदस्य गृहपतेर्निवेशनं गतः । अतो दौवारिकेन उक्तः—आर्य तिष्ठ, मा प्रवेक्ष्यसि । कस्यार्थाय ? अनाथपिण्डदेन गृहपतिना आज्ञा दत्ता—मा तावत् तीर्थ्यानां प्रवेशं दास्यसि, 30 यावद्बुद्धप्रमुखेन भिक्षुसंघेन भुक्तम् । ततः पश्चात् तीर्थ्यानां दास्यामि इति । अथायुष्मान् महाकाश्यपः संलक्षयति—तस्य मे लाभाः सुलब्धाः, यन्मां श्राद्धा ब्राह्मणगृहपतयः श्रमणशाक्य-

पुत्रीय इति न जानन्ते। गच्छामि, कृपणजनस्यानुग्रहं करोमीति विदित्वा उद्यानं गतः। स संलक्षयति—अद्य मया कस्यानुग्रहः कर्तव्य इति। यावदन्यतमा नगरावलम्बिका कुष्ठाभिद्रुता सरुजार्ता पक्वगात्रा भिक्षामटति। स तस्याः सकाशमुपसंक्रान्तः। तस्याश्च भिक्षायामायासः संपन्नः। तया आयुष्मान् महाकाश्यपो दृष्टः कायप्रासादिकश्चित्तप्रासादिकः शान्तेन ईर्यापथेन। 5 सा संलक्षयति—नूनं मया एवंविधे दक्षिणीये कारा न कृता, येन मे इयमेवंरूपा समवस्था। यदि आर्यो महाकाश्यपो ममान्तिकादनुकम्पामुपादाय आचामं प्रतिगृह्णीयात्, अहमस्मै दद्यामिति। तत आयुष्मता महाकाश्यपेन तस्याश्चेतसा चित्तमाज्ञाय पात्रमुपनामितम्—यदि ते भगिनि परित्यक्तम्, दीयतामस्मिन् पात्र इति। ततस्तया चित्तमभिप्रसाद्य तस्मिन् पात्रे दत्तम्। मक्षिका च पतिता। सा तामपनेतुमारब्धा। तस्यास्तस्मिन्नाचामेऽङ्गुलिः पतिता। संलक्षयति—किं 10 चाप्यार्येण मम चित्तानुरक्षया न च्छोरितः, अपि तु न परिभोक्ष्यतीति। अथायुष्मता महाकाश्यपेन तस्याश्चेतसा चित्तमाज्ञाय तस्या एव प्रत्यक्षमन्यतमं कुड्यमूलं निश्रित्य परिभुक्तम्। सा संलक्षयति—किं चापि आर्येण मम चित्तानुरक्षया परिभुक्तम्, नानेनाहारेणाहारकृत्यं करिष्यति इति। अथायुष्मान् महाकाश्यपस्तस्याश्चित्तमाज्ञाय तां नगरावलम्बिकामिदमवोचत्—भगिनि प्रामोद्यमुत्पादयसि, अहं त्वदीयेनाहारेण रात्रिंदिवसमतिनामयिष्यामि इति। तस्या C 83 15 अतीव औद्बिल्यमुत्पन्नम्—ममार्येण महाकाश्यपेन पिण्डपातः प्रतिगृहीत इति। तत आयुष्मती महाकाश्यपे चित्तमभिप्रसाद्य कालं गता तुषिते देवनिकाये उपपन्ना। सा शक्रेण देवेन्द्रेण दृष्टा आचामं प्रतिपादयन्ती चित्तमभिप्रसादयन्ती कालं च कुर्वाणा। नो तु दृष्टा कुत्रोपपन्ना इति। स नरकान् व्यवलोकयितुमारब्धो न पश्यति, तिर्यक् च प्रेतं च मनुष्यांश्चातुर्महाराजिकान् देवांस्त्रायस्त्रिंशान् यावन्न पश्यति। तथा ह्यधस्ताद्देवानां ज्ञानदर्शनं 20 प्रवर्तते नो तूपरिष्टात्। अथ शक्रो देवानामिन्द्रो येन भगवांस्तेनोपसंक्रान्तः। उपसंक्रम्य गाथाभिगीतेन प्रश्नं पप्रच्छ—

चरतः पिण्डपातं हि काश्यपस्य महात्मनः।
कुत्रासौ मोदते नारी काश्यपाचामदायिका॥ १॥

भगवानाह—

25 तुषिता नाम ते देवाः सर्वकामसमृद्धयः।
यत्रासौ मोदते नारी काश्यपाचामदायिका॥ २॥ इति॥

अथ शक्रस्य देवानामिन्द्रस्यैतदभवत्—इमे च तावन्मनुष्याः पुण्यापुण्यानामप्रत्यक्षदर्शिनो दानानि ददति, पुण्यानि कुर्वन्ति। अहं प्रत्यक्षदर्शनेन पुण्यानां स्वपुण्यफले व्यवस्थितः कस्मात् दानानि न ददामि, पुण्यानि वा न करोमि? अयमार्यो महाकाश्यपो 30 दीनानाथकृपणवनीपकानुकम्पी। यन्न्वहमेनं पिण्डकेन प्रतिपादयेयम्। इति विदित्वा कृपणवीथ्यां गृहं निर्मितवान्। अवचीरविचीरकं काकाभिलीनकं नातिपरमरूपं कुविन्दं चात्मानमभिनिमार्य उदूढशिरस्कः सणशाटिकानिवासितः स्फटितपाणिपादो वस्त्रं वायितु-

मारब्धः । शची अपि देवकन्या कुविन्दनर्या वेशधारिणी तसरिकां कर्तुमारब्धा । पार्श्वे चास्या दिव्या सुधा सज्जीकृता तिष्ठति । अथायुष्मान् महाकाश्यपः कृपणानाथवनीपकजनानुकम्पकोऽनुपूर्वेण तद्गृहमनुप्राप्तः । दुःखितकोऽयमिति कृत्वा द्वारे स्थितेन पात्रं प्रसारितम् । शक्रेण देवानामिन्द्रेण दिव्यया सुधया पूरितम् । अथायुष्मतो महाकाश्यपस्यैतदभवत्— C 84 5

दिव्यं चास्य सुधाभक्तमयं च गृहविस्तरः ।
सुविरुद्धमिति कृत्वा जातो मे हृदि संशयः ॥ ३ ॥ इति ॥

धर्मता ह्येषा—असमन्वाहृत्य अर्हतां ज्ञानदर्शनं न प्रवर्तते । स समन्वाहर्तुं प्रवृत्तः । यावत् पश्यति शक्रं देवेन्द्रम् । स कथयति—कौशिक, किं दुःखितजनस्यान्तरायं करोषि, यस्य ते भगवता दीर्घरात्रानुगतो विचिकित्साकथंकथाशल्यः समूल आरूढो यथापि तत्तथागतेनार्हता सम्यक्संबुद्धेन । आर्य महाकाश्यप किं दुःखितजनस्यान्तरायं करोमि ? इमे तावत् मनुष्याः पुण्यानामप्रत्यक्षदर्शिनो दानानि ददति पुण्यानि कुर्वन्ति । अहं प्रत्यक्षदर्शी एव पुण्यानां कथं दानानि न ददामि ? ननु चोक्तं भगवता— 10

करणीयानि पुण्यानि दुःखा ह्यकृतपुण्यता ।
कृतपुण्यानि मोदन्ते अस्मिँल्लोके परत्र च ॥ ४ ॥ 15

ततःप्रभृति आयुष्मान् महाकाश्यपः समन्वाहृत्य कुलानि पिण्डपातं प्रवेष्टुमारब्धः । अथ शक्रो देवेन्द्र आकाशस्थश्चायुष्मतो महाकाश्यपस्य पिण्डपातं चरतो दिव्यया सुधया पात्रं पूरयति । आयुष्मानपि महाकाश्यपः पात्रमधोमुखं करोति । अन्नपानं छोर्यते । एतत् प्रकरणं भिक्षवो भगवत आरोचयन्ति । भगवानाह—तस्मादनुजानामि पिण्डोपधानं धारयितव्यमिति ॥ 20

सामन्तकेन शब्दो विसृतः—अमुकया नगरावलम्बिकया आर्यो महाकाश्यप आचामेन प्रतिपादितः, सा च तुषिते देवनिकाये उपपन्ना इति । राज्ञा प्रसेनजिता कौशलेन श्रुतम्—अमुकया नगरावलम्बिकया आर्यो महाकाश्यप आचामेन प्रतिपादितः । सा तुषिते देवे उपपन्ना इति । श्रुत्वा च पुनर्येन भगवांस्तेनोपसंक्रान्तः । उपसंक्रम्य भगवतः पादौ शिरसा वन्दित्वा एकान्ते निषण्णः । एकान्तनिषण्णं राजानं प्रसेनजितं कौशलं भगवान् धर्म्यया कथया संदर्शयति समादापयति समुत्तेजयति संप्रहर्षयति, अनेकपर्यायेण धर्म्यया कथया संदर्श्य समादाप्य समुत्तेज्य संप्रहर्ष्य तूष्णीम् । अथ राजा प्रसेनजित् कौशल उत्थायासनादेकांसमुत्तरासङ्गं कृत्वा येन भगवांस्तेनाञ्जलिं प्रणम्य भगवन्तमिदमवोचत्—अधिवासयतु मे भगवानार्यमहाकाश्यपमुद्दिश्य भक्तं सप्ताहेन इति । अधिवासयति भगवान् राज्ञः प्रसेनजितः कौशलस्य तूष्णीभावेन । अथ राजा प्रसेनजित् कौशलो भगवतस्तूष्णीभावेनाधिवासनां विदित्वा भगवतोऽन्तिकात् प्रक्रान्तः । अथ राजा प्रसेनजित् कौशलस्तामेव रात्रिं शुचि प्रणीतं खादनीयं भोजनीयं समुदानीय काल्यमेवोत्थाय आसनानि 25 C 85 30

प्रज्ञाप्य उदकमणीन् प्रतिष्ठाप्य भगवतो दूतेन कालमारोचयति—समयो भदन्त, सज्जं भक्तं यस्येदानीं भगवान् कालं मन्यत इति । अथ भगवान् पूर्वाह्णे निवास्य पात्रचीवरमादाय भिक्षुगणपरिवृतो भिक्षुसंघपुरस्कृतो येन राज्ञः प्रसेनजितः कौशलस्य भक्ताभिसारस्तेनोपसंक्रान्तः । उपसंक्रम्य पुरस्ताद्भिक्षुसंघस्य प्रज्ञप्त एवासने निषण्णः । अथ राजा प्रसेनजित्
5 कौशलः सुखोपनिषण्णं बुद्धप्रमुखं भिक्षुसंघं विदित्वा शुचिना प्रणीतेन खादनीयभोजनीयेन स्वहस्तं संतर्पयति संप्रवारयति । अन्यतमश्च क्रोडमल्लको वृद्धान्ते चित्तमभिप्रसादयंस्तिष्ठति—अयं राजा प्रत्यक्षदर्शी एव पुण्यानां स्वे पुण्यफले प्रतिष्ठापितोऽतृप्त एव पुण्यैर्दानानि ददाति, पुण्यानि करोति । अथ राजा प्रसेनजित् कौशलोऽनेकपर्यायेण बुद्धप्रमुखं भिक्षुसंघं शुचिना प्रणीतेन खादनीयेन भोजनीयेन स्वहस्तं संतर्प्य संप्रवार्य भगवन्तं भुक्तवन्तं
10 विदित्वा धौतहस्तमपनीतपात्रं नीचतरमासनं गृहीत्वा भगवतः पुरस्तात् निषण्णो धर्मश्रवणाय। ततो भगवता अभिहितः—महाराज, कस्य नाम्ना दक्षिणामादिशामि? किं तव, आहोस्विद्येन तवान्तिकात् प्रभूततरं पुण्यं प्रसूतमिति? राजा संलक्षयति—मम भगवान् पिण्डपातं परिभुङ्क्ते । कोऽन्यो ममान्तिकात् प्रभूततरं पुण्यं प्रसविष्यतीति विदित्वा कथयति—भगवन् येन ममान्तिकात् प्रभूततरं पुण्यं प्रसूतं तस्य भगवान् नाम्ना दक्षिणामादिशतु इति । ततो
15 भगवता क्रोडमल्लकस्य नाम्ना दक्षिणा आदिष्टा । एवं यावत् षड्दिवसान् । ततोऽन्यदिवसे राजा करे कपोलं दत्त्वा चिन्तापरो व्यवस्थितः—मम भगवान् पिण्डपातं परिभुङ्क्ते, क्रोडमल्लकस्य नाम्ना दक्षिणामादिशति इति । सोऽमात्यैर्दृष्टः । ते कथयन्ति—किमर्थं करे कपोलं दत्त्वा चिन्तापरो व्यवस्थित इति? राजा कथयति—भवन्तः, कथं न चिन्तापरस्तिष्ठामि, यत्रेदानीं स भगवान् मम पिण्डपातं परिभुङ्क्ते, क्रोडमल्लकस्य नाम्ना दक्षिणामादिशतीति?
20 तत्रैको वृद्धोऽमात्यः कथयति—अल्पोत्सुको भवतु । वयं तथा करिष्यामो यथा श्वो भगवान् देवस्यैव नाम्ना दक्षिणामादिशतीति । तैः पौरुषेयाणामाज्ञा दत्ता यतः श्वो भवद्भिः प्रणीत आहारः सज्जीकर्तव्यः प्रभूतश्चैव समुदानयितव्यो यथोपार्धं भिक्षूणां पात्रे पतति उपार्धं भूमौ इति । अमात्यैरपरस्मिन् दिवसे प्रभूत आहारः सज्जीकृतः प्रणीतश्च । ततः सुखोपनिषण्णं बुद्धप्रमुखं भिक्षुसंघं परिवेषितुमारब्धाः । उपार्धं भिक्षूणां पात्रे पतति, उपार्धं
25 भूमौ । ततः क्रोडमल्लकाः प्रधाविताः—भूमौ निपतितं गृह्णीम इति। ते परिवेषकैर्निवारिताः । ततः क्रोडमल्लकः कथयति—यद्यस्य राज्ञः प्रभूतमन्नम्, स्वापतेयमस्ति, सन्त्यन्येऽपि अस्मद्विधा दुःखितका आकाङ्क्षन्ते । किमर्थं न दीयते? किमनेनापरिभोगं छोरितेन इति । तस्य क्रोडमल्लकस्य चित्तविक्षेपो जातः—न शक्यं तेन तथा चित्तं प्रसादयितुं यथा पूर्वम् । ततो राजा बुद्धप्रमुखं भिक्षुसंघं भोजयित्वा न मम नाम्ना दक्षिणामादिशतीति विदित्वा दक्षिणा-
30 मश्रुत्वैव प्रविष्टः । ततो भगवता राज्ञः प्रसेनजितः कौशलस्य नाम्ना दक्षिणा आदिष्टा—

C 86

हस्त्यश्वरथपत्तियायिनो भुञ्जानस्य पुरं सनैर्गमम् ।
पश्यसि (?) फलं हि रूक्षिकाया अलवणिकायाः कुल्माषपिण्डिकायाः ॥ ५ ॥

C 87

अथायुष्मानानन्दो भगवन्तमिदमवोचत्—बहुशो बहुशो भदन्त भगवता राज्ञः प्रसेनजितः कौशलस्य निवेशने भुक्त्वा नाम्ना दक्षिणामादिष्टा। नाभिजानामि कदाचिदेवंरूपां दक्षिणामादिष्टपूर्वाम्। भगवानाह—इच्छसि त्वमानन्द राज्ञः प्रसेनजितः कौशलस्यालवणिकां कुल्माषपिण्डिकामारभ्य कर्मप्लोतिं श्रोतुम्? एतस्य भगवन् कालः, एतस्य सुगत समयः। अयं भगवान् राज्ञः प्रसेनजितः कौशलस्यालवणिकां कुल्माषपिण्डिकामारभ्य कर्मप्लोतिं वर्णयेत्, भगवतः श्रुत्वा भिक्षवो धारयिष्यन्ति इति। तत्र भगवान् भिक्षूनामन्त्रयते स्म— 5

भूतपूर्वं भिक्षवोऽन्यतमस्मिन् कर्पटके गृहपतिः प्रतिवसति। तेन सदृशात् कुलात् कलत्रमानीतम्। स तया सार्धं क्रीडति रमते परिचारयति। तस्य क्रीडतो रममाणस्य परिचारयतः पुत्रो जातः। स उन्नीतो वर्धितः पटुः संवृत्तः। यावदसौ गृहपतिः पत्नीमामन्त्रयते—भद्रे, जातोऽस्माकमृणहारको धनहारकश्च। गच्छामि पण्यमादाय देशान्तरमिति। 10 सा कथयति—आर्यपुत्र, एतत् कुरुष्व इति। स पण्यमादाय देशान्तरं गतः। तत्रैवानयेन व्यसनमापन्नः। अल्पपरिच्छदोऽसौ गृहपतिः। तस्य गृहपतेर्धनजातं परिक्षीणम्। सोऽस्य पुत्रो दुःखितो जातः। तस्य गृहपतेर्वयस्यकः। तेन तस्य दारकस्य माता अभिहिता—अयं तव पुत्रः क्षेत्रं रक्षतु, अहमस्य सुखं भक्तेन योगोद्वहनं करिष्यामि। एवं भवतु। स तस्य क्षेत्रं रक्षितुमारब्धः। स तस्य सुखं भक्तकेन योगोद्वहनं कर्तुमारब्धः। यावदपरेण 15 समयेन पर्वणी प्रत्युपस्थिता। तस्य दारकस्य माता संलक्षयति—अद्य गृहपतिपत्नी सुहृत्संबन्धिबान्धवाः सह श्रमणब्राह्मणभोजनेन व्यग्रा भविष्यति। गच्छामि सानुकालं तस्य दारकस्य भक्तं नयामि इति। सा सानुकालं गत्वा गृहपतिपत्न्या एतमर्थं निवेदयति। सा रुषिता कथयति—न तावच्छ्रमणब्राह्मणेभ्यो ददामि ज्ञातीनां वा, तावत् प्रेष्यमनुष्याय ददामि? अद्य तावत् तिष्ठतु, श्वो द्विगुणं दास्यामीति। ततस्तस्य दारकस्य माता संलक्षयति—मा 20 मे पुत्रो बुभुक्षितकः स्थास्यतीति। तया आत्मनोऽर्थेऽलवणिका कुल्माषपिण्डिका संपादिता। सा तामादाय गता। तेन दारकेण दूरत एव दृष्टा। स कथयति—अम्ब, अस्ति किंचिन्मृष्टं मृष्टम्? सा कथयति—पुत्र, यदेव प्रातिदैवसिकं तदप्यद्य नास्ति। मया आत्मनोऽर्थेऽलवणिका कुल्माषपिण्डिका साधिता। तामहं गृहीत्वा आगता। एतां परिभुङ्क्ष्वेति। स कथयति—स्थापयित्वा गच्छस्वेति। सा स्थापयित्वा प्रक्रान्ता॥ 25

C 88

असति बुद्धानामुत्पादे प्रत्येकबुद्धा लोक उत्पद्यन्ते हीनदीनानुकम्पकाः प्रान्तशयनासनभक्ता एकदक्षिणीया लोकस्य। यावदन्यतमः प्रत्येकबुद्धस्तत्प्रदेशमनुप्राप्तः। स तेन दृष्टः कायप्रासादिकश्चित्रप्रासादिकश्च शान्तेर्यापथवर्ती। स संलक्षयति—नूनं मया एवंविधे सद्भूते दक्षिणीये कारा न कृता, येन मे ईदृशी समवस्था। यद्ययं ममान्तिकादलवणिकां कुल्माषपिण्डिकां प्रतिगृह्णीयात्, अहमस्मै दद्यामिति। ततोऽसौ प्रत्येकबुद्धस्तस्य दरिद्रपुरुषस्य चेतसा 30 चित्तमाज्ञाय पात्रं प्रसारितवान्—भद्रमुख, सचेत्ते परित्यक्तम्, दीयतामस्मिन् पात्र इति। ततस्तेन तीव्रेण प्रसादेन सा अलवणिका कुल्माषपिण्डिका तस्मै प्रत्येकबुद्धाय प्रतिपादिता॥

किं मन्यध्वे भिक्षवो योऽसौ दरिद्रपुरुषः, एष एवासौ राजा प्रसेनजित् कौशलस्तेन कालेन तेन समयेन। यदनेन प्रत्येकबुद्धायालवणिका कुल्माषपिण्डिका प्रतिपादिता, तेन कर्मणा षट्कृत्वो देवेषु त्रायस्त्रिंशेषु राज्यैश्वर्याधिपत्यं कारितवान्, षट्कृत्वोऽस्यामेव श्रावस्त्यां C 89 राजा क्षत्रियो मूर्धाभिषिक्तः, तेनैव च कर्मणा अवशेषेण एतर्हि राजा क्षत्रियो मूर्धाभिषिक्तः 5 संवृत्तः। सोऽस्य पिण्डको विपकः। तमहं संधाय कथयामि—

हस्त्यश्वरथपत्तियायिनो भुञ्जानस्य पुरं सनैर्गमनम्।

पश्यसि फलं हि रूक्षिकाया अलवणिकाया कुल्माषपिण्डकायाः॥ इति।

सामन्तकेन शब्दो विसृतः—भगवता राज्ञः प्रसेनजितोऽलवणिकां कुल्माषपिण्डिकामारभ्य कर्मप्लोतिर्व्याकृता इति। राज्ञापि प्रसेनजिता श्रुतम्। स येन भगवांस्तेनोपसंक्रान्तः। 10 उपसंक्रम्य भगवतः पादौ शिरसा वन्दित्वा एकान्ते निषण्णः। एकान्तनिषण्णं राजानं प्रसेनजितं कौशलं भगवान् धर्म्यया कथया संदर्शयति समादापयति समुत्तेजयति संप्रहर्षयति। अनेकपर्यायेण धर्म्यया कथया संदर्श्य समादाप्य समुत्तेज्य संप्रहर्ष्य तूष्णीम्। अथ राजा प्रसेनजित् कौशल उत्थायासनादेकांसमुत्तरासङ्गं कृत्वा भगवन्तमिदमवोचत्—अधिवासयतु मे भगवान् त्रैमासीं चीवरपिण्डपातशयनासनग्लानप्रत्ययभैषज्यपरिष्कारैः सार्धं 15 संघेनेति। अधिवासयति भगवान् राज्ञः प्रसेनजितः कौशलस्य तूष्णीभावेन। ततो राज्ञा प्रसेनजिता कौशलेन बुद्धप्रमुखाय भिक्षुसंघाय त्रैमास्यं शतरसं भोजनं दत्तम्। एकैकश्च भिक्षुः शतसहस्रेण वस्त्रेणाच्छादितः। तैलस्य च कुम्भकोटिं समुदानीय दीपमाला अभ्युद्यतो दातुम्। तत्र भक्ते पूजायां च महान् कोलाहलो जातः। यावदन्यतमा नगरावलम्बिका अतीव दुःखिता। तया क्रोडमल्लकेन भिक्षामटन्त्या उच्चशब्दः श्रुतः। श्रुत्वा च पुनः पृच्छति- 20 भवन्तः, किमेष उच्चशब्दो महाशब्द इति। अपरैः समाख्यातम्—राज्ञा प्रसेनजिता कौशलेन बुद्धप्रमुखो भिक्षुसंघस्त्रैमास्यं भोजितः, एकैकश्च भिक्षुः शतसहस्रेण वस्त्रेण आच्छादितः, तैलस्य कुम्भकोटिं च समुदानीय दीपमाला अभ्युद्यतो दातुमिति। ततस्तस्या नगरावलम्बिकाया एतदभवत्—अयं तावद्राजा प्रसेनजित् कौशलः पुण्यैरतृप्तोऽद्यापि दानानि ददाति, C 90 पुण्यानि करोति। यन्न्वहमपि कुतश्चित् समुदानीय भगवतः प्रदीपं दद्यामिति। तया 25 खण्डमल्लके तैलस्य स्तोकं याचयित्वा प्रदीपं प्रज्वाल्य भगवतश्चङ्क्रमे दत्तः। पादयोर्निपत्य प्रणिधानं कृतम्—अनेनाहं कुशलमूलेन यथायं भगवान् शाक्यमुनिर्वर्षशतायुषि प्रजायां शाक्यमुनिर्नाम शास्ता लोक उत्पन्नः, एवमहमपि वर्षशतायुषि प्रजायां शाक्यमुनिरेव शास्ता भवेयम्। यथा चास्य शारिपुत्रमौद्गल्यायनाग्रयुगं भद्रयुगमानन्दो भिक्षुरुपस्थायकः, शुद्धोदनः पिता, माता महामाया, राहुलभद्रः कुमारः पुत्रः। यथायं भगवान् धातुविभागं 30 कृत्वा परिनिर्वास्यति, एवमहमपि धातुविभागं कृत्वा परिनिर्वापयेयमिति। यावत् सर्वे ते दीपा नैर्वाणाः। स तया प्रज्वलितः प्रदीपः प्रज्वलत्येव। धर्मता खलु बुद्धानां भगवताम्—न तावदुपस्थायकाः प्रतिसंलीयन्ते न यावद्बुद्धा भगवन्तः प्रतिसंलीना इति। अथायुष्मानानन्दः संलक्षयति—अस्थानमनवकाशो यद्बुद्धा भगवन्त आलोके शय्यां कल्पयन्ति। यन्न्वहं दीपं

निर्वापयेयमिति । स हस्तेन निर्वापयितुमारब्धो न शक्नोति । ततश्चीवरकर्णिकेन, ततो व्यजनेन, तथापि न शक्नोति निर्वापयितुम् । तत्र भगवानायुष्मन्तमानन्दमामन्त्रयते—किमेतदानन्देति । स कथयति—भगवन्, मम बुद्धिरुत्पन्ना—अस्थानमनवकाशो यद्बुद्धा भगवन्त आलोके शय्यां कल्पयन्ति । यन्न्वहं दीपं निर्वापयेयमिति । सोऽहं हस्तेन निर्वापयितुमारब्धो न शक्नोमि, ततश्चीवरकर्णिकेन, ततो व्यजनेन, तथापि न शक्नोमीति । भगवानाह—खेद- 5 मानन्द आपत्स्यसे । यदि वैरम्भका अपि वायवो वायेयुः, तेऽपि न शक्नुयुर्निर्वापयितुं प्रागेव हस्तगतश्चीवरकर्णिको व्यजनं वा । तथा हि—अय प्रदीपस्तया दारिकया महता चित्ताभिसंस्कारेण प्रज्वलितः । अपि तु आनन्द भविष्यत्यसौ दारिका वर्षशतायुषि प्रजायां शाक्यमुनिर्नाम तथागतोऽर्हन् सम्यक्संबुद्धः । शारिपुत्रमौद्गल्यायनौ तस्याग्रयुगं भद्रयुगम्, आनन्दो भिक्षुरुपासकः, शुद्धोदनः पिता, महामाया माता, कपिलवस्तु नगरम्, राहुलभद्रः कुमारः 10 पुत्रः । सापि धातुविभागं कृत्वा परिनिर्वास्यतीति ॥ C 91

इदमवोचद्भगवान् । आत्तमनसस्ते च भिक्षवो भगवतो भाषितमभ्यनन्दन् ॥

इति श्रीदिव्यावदाने नगरावलम्बिकावदानं सप्तमम् ॥



# ८ सुप्रियावदानम् ।

बुद्धो भगवान् श्रावस्त्यां विहरति जेतवने अनाथपिण्डदस्यारामे सत्कृतो गुरुकृतो मानितः पूजितो राजभी राजमात्रैर्धनिभिः पौरैर्ब्राह्मणैर्गृहपतिभिः श्रेष्ठिभिः सार्थवाहैर्देवै-र्नागैर्यक्षैरसुरैर्गरुडैः किन्नरैर्महोरगैरिति देवनागयक्षासुरगरुडकिन्नरमहोरगाभ्यर्चितो बुद्धो
5 भगवान् लाभी चीवरपिण्डपातशयनासनग्लानप्रत्ययभैषज्यपरिष्काराणां सश्रावकसंघः। तत्र खलु वर्षावासं भगवानुपगतो जेतवने अनाथपिण्डदस्यारामे । अथ तदैव प्रवारणायां प्रत्युपस्थितायां संबहुलाः श्रावस्तीनिवासिनो वणिजो येन भगवांस्तेनोपसंक्रान्ताः। उपसंक्रम्य भगवतः पादौ शिरसा वन्दित्वा एकान्ते निषण्णाः । एकान्तनिषण्णान् संबहुलान् श्रावस्तीनिवासिनो वणिजो भगवान् धर्म्यया कथया संदर्शयति समादापयति समुत्तेजयति
10 संप्रहर्षयति । अनेकपर्यायेण धर्म्यया कथया संदर्श्य समादाप्य समुत्तेज्य संप्रहर्ष्य तूष्णीम्। अथ संबहुलाः श्रावस्तीनिवासिनो वणिजो भगवतो भाषितमभिनन्द्यानुमोद्य भगवतः पादौ शिरसा वन्दित्वा भगवतोऽन्तिकात् प्रक्रान्ताः, येनायुष्मानानन्दस्तेनोपसंक्रान्ताः। उप-संक्रम्यायुष्मत आनन्दस्य पादौ शिरसा वन्दित्वा एकान्ते निषण्णाः। संबहुलान् श्रावस्ती-निवासिनो वणिज आयुष्मानानन्दो धर्म्यया कथया संदर्शयति समादापयति समुत्तेजयति
15 संप्रहर्षयति । अनेकपर्यायेण धर्म्यया कथया संदर्श्य समादाप्य समुत्तेज्य संप्रहर्ष्य तूष्णीम्। अथ ते वणिज उत्थायासनेभ्यः एकांसमुत्तरासङ्गं कृत्वा येनायुष्मानानन्दस्तेनाञ्जलिं प्रणम्य आयुष्मन्तमानन्दमिदमवोचन्—किंचित्ते आर्यानन्द श्रुतं वर्षोषितो भगवान् कतमेषु जनपदेषु चारिकां चरिष्यतीति, यद्वयं तद्यात्रिकं भाण्डं समुदानीमहे ? धर्मता चैषा षण्महानगर-निवासिनो वणिजो यस्यां दिशि बुद्धा भगवन्तो गन्तुकामा भवन्ति, तद्यात्रिकभाण्डं
20 समुदानयन्ति । स कथयति—बुद्धं भगवन्तं किं न पृच्छथ ? दुरासदा हि बुद्धा भगवन्तो दुष्प्रसहाः । न शक्नुमो वयं भगवन्तं प्रष्टुम् । ममापि भवन्तो दुरासदा हि बुद्धा भगवन्तो दुष्प्रसहाः । अहमपि न शक्नोमि भगवन्तं प्रष्टुम् । यदि भदन्तानन्दस्यापि दुरासदा बुद्धा भगवन्तो दुष्प्रसहाः, कथं भदन्तानन्दो जानीतेऽमुकां दिशं भगवान् गमिष्यतीति ? निमित्तेन वा भवन्तः परिकथया वा । कथं निमित्तेन ? यां दिशं भगवान् गन्तुकामस्ततोऽभिमुखो
25 निषीदति, एवं निमित्तेन। कथं परिकथया ? तेषां जनपदानां वर्णं भाषते, एवं परिकथया। कुतोमुखो भदन्तानन्द भगवान् निषीदति, कतमेषां च जनपदानां वर्णं भाषते ? मगधाभि-मुखो भवन्तो भगवान् निषीदति, मागधकानां जनपदानां वर्णं भाषते। अपि तु भवन्तोऽष्टा-दशानुशंसा बुद्धचारिकायाम्। कतमेऽष्टादश ? नाग्निभयं नोदकभयं न सिंहभयं न व्याघ्रभयं न द्वीपितरक्षुपरचक्रभयं न चौरभयं न गुल्मतरपण्यातियात्राभयं न मनुष्यामनुष्यभयम्।
30 कालेन च कालं दिव्यानि रूपाणि दृश्यन्ते, दिव्याः शब्दाः श्रूयन्ते, उदाराश्चावभासाः प्रज्ञायन्ते, आत्मव्याकरणानि च श्रूयन्ते, धर्मसंभोग आमिषसंभोगोऽल्पाबाधा च बुद्धचन्द्रिका ॥

C 92

C 93

अथ संबहुलाः श्रावस्तीनिवासिनो वणिजः आयुष्मतः आनन्दस्य भाषितमभि-
नन्द्यानुमोद्य आयुष्मत आनन्दस्य पादौ शिरसा वन्दित्वा उत्थायासनात् प्रक्रान्ताः। धर्मता
खलु बुद्धा भगवन्तो जीवन्तो ध्रियन्तो यापयन्तो महाकरुणया संचोद्यमानाः परानुग्रहप्रवृत्ताः
कालेन कालमरण्यचारिकां चरन्ति, नदीचारिकां पर्वतचारिकां श्मशानचारिकां जनपद-
चारिकां चरन्ति। अस्मिंस्त्वर्थे बुद्धो भगवान् मगधेषु जनपदचारिकां चर्तुकामस्तदेव प्रवारणां 5
प्रवारयित्वा आयुष्मन्तमानन्दमामन्त्रयते स्म—गच्छ आनन्द, भिक्षूणामारोचय—इतः सप्तमे दिवसे
तथागतो मगधेषु जनपदेषु चारिकां चरिष्यति। यो युष्माकमुत्सहते तथागतेन सार्धं जनपद-
चारिकां चर्तुम्, स चीवरकर्म करोतु। एवं भदन्तेत्यायुष्मानानन्दो भगवतः प्रतिश्रुत्य भिक्षूणा-
मारोचयति—भगवानायुष्मन्त इतः सप्तमे दिवसे मगधेषु जनपदेषु चारिकां चरिष्यति। यो
युष्माकमुत्सहते भगवता सार्धं मगधेषु जनपदेषु चारिकां चर्तुम्, स चीवरकर्म करोतु। 10
अथ भगवान् भिक्षुगणपरिवृतो भिक्षुसंघपुरस्कृतः संबहुलैश्च श्रावस्तीनिवासिभिर्वणिग्ब्राह्मण-
गृहपतिभिः सार्धं मगधेषु जनपदेषु चारिकां प्रक्रान्तः॥

अथ संबहुलाश्च श्रावस्तीनिवासिनो वणिजो येन भगवांस्तेनोपसंक्रान्ताः। उपसंक्रम्य
भगवतः पादौ शिरसा वन्दित्वा भगवन्तमिदमवोचन्—अधिवासयत्वस्माकं भगवान् यावच्च
श्रावस्ती यावच्च राजगृहम्, अत्रान्तरा चीवरपिण्डपातशयनासनग्लानप्रत्ययभैषज्यपरिष्कारैः 15
सार्धं भिक्षुसंघेन। अधिवासयति भगवान् संबहुलानां श्रावस्तीनिवासिनां वणिजां
तूष्णीभावेन। अथ संबहुलाः श्रावस्तीनिवासिनो वणिजो भगवतस्तूष्णीभावेनाधिवासनां
विदित्वा भगवतोऽन्तिकात् प्रक्रान्ताः॥

अथ संप्रस्थिते बुद्धे भगवति अन्तरा च श्रावस्तीमन्तरा च राजगृहम्, अत्रान्तरा- C 94
न्महाटव्यां चौरसहस्रं प्रतिवसति। अद्राक्षीत्तच्चौरसहस्रं भगवन्तं सार्थपरिवृतं भिक्षुसंघपुर- 20
स्कृतम्। दृष्ट्वा च पुनः परस्परं कथयन्ति—गच्छतु भगवान् सश्रावकसंघः। शेषं सार्थं मुषि-
ष्यामः। इत्यनुविचिन्त्य सर्वे जवेन प्रसृता येन सार्थः। भगवता अभिहितः—किमेतद्भवन्तः
समारब्धम्? चौराः कथयन्ति—वयं स्मो भदन्त चौरा अटवीचराः। नास्माकं कृषिर्न वाणिज्या
न गौरक्ष्यम्। अनेनोपक्रमेण जीविकां कल्पयामः। गच्छतु भगवान् सश्रावकसंघः। शेषं
सार्थं मुषिष्यामः। भगवानाह—ममैष सार्थः संनिश्रितः। अपि तु सकलस्य सार्थस्य परिगणय्य 25
सुवर्णं गृह्णीध्वम्। तथा भवत्विति चौरसहस्रेण प्रतिज्ञातम्। अस्मिन् सार्थे ये उपासका
वणिजस्तैः कृत्स्नस्य सार्थस्य मूल्यं गणय्य चौराणां निवेदितम्—इयन्ति शतानि सहस्राणि
चेति। ततस्तेषां चौराणां सार्थनिष्क्रयार्थं भगवता निधानं दर्शितम्। ततस्तेन चौरसहस्रेण
सार्थमूल्यप्रमाणं सुवर्णं गृहीतम्, अवशिष्टं तत्रैवान्तर्हितम्। एवं भगवता सार्थश्चौरसहस्रात्
प्रतिमोक्षितः॥ 30

अनुपूर्वेण भगवान् राजगृहमनुप्राप्तः। पुनरपि भगवान् सार्थपरिवृतो भिक्षुसंघ-
पुरस्कृतो राजगृहात् श्रावस्तीं संप्रस्थितः। तथैव चौरसहस्रसकाशात् सार्थो निष्क्रीतः।

एवं द्वित्रिचतुष्पञ्चषड्वारांश्च चौरसहस्रसकाशादागमनगमनेन सार्थः परित्रातो मूल्यं चानुप्रदत्तम्। सप्तमं तु वारं भगवान् सार्थरहितो भिक्षुसंघपुरस्कृतः श्रावस्त्या राजगृहं संप्रस्थितः। अद्राक्षीच्चौरसहस्रं बुद्धं भगवन्तं सार्थविरहितं भिक्षुसंघपरिवृतम्। दृष्ट्वा च पुनः परस्परं संलपन्ति—भगवान् गच्छतु, भिक्षुसंघं मुषिष्यामः। तत्कस्य हेतोः? एषो हि

C 95 5 भगवान् सुवर्णप्रदः। इत्युक्त्वा सर्वजवेन प्रधाविता भिक्षून् मुषितुमारब्धाः। भगवता चाभिहिताः—वत्साः, मम एते श्रावकाः। चौराः कथयन्ति—जानास्येव भगवान्—वयं चौरा अटवीचराः। नास्माकं कृषिर्न वाणिज्या न गौरक्ष्यम्। अनेन वयं जीविकां कल्पयामः। ततो भगवता चौराणां महानिधानं दर्शितम्, एवं चोक्ताः—वत्साः, यावदाप्तं धनं गृह्णीथेति। ततस्तेन चौरसहस्रेण तस्मान्महानिधानाद्यावदाप्तं सुवर्णमादत्तम्, अवशिष्टं तत्रैवान्त-

10 र्हितम्। अथ भगवांस्तच्चौरसहस्रं यावदाप्तं धनेन संतर्पयित्वा ततोऽनुपूर्वेण राजगृहमनुप्राप्तः। ततस्तेषां चौराणां बुद्धिरुत्पन्ना—या काचिदस्माकं श्रीसौभाग्यसंपत्, सर्वासौ बुद्धं भगवन्तमागम्य। यन्नु वयं भगवन्तं सश्रावकसंघमस्मिन् प्रदेशे भोजयेम इति। अत्रान्तरे नास्ति किंचिद्बुद्धानां भगवतां महाकारुणिकानामेकारक्षाणामेकवीराणामद्वयवादिनां शमथविपश्यनाविहारिणां त्रिविधदमथवस्तुकुशलानां चतुर्ऋद्धिपादचरणतलसुप्रतिष्ठितानां चतुरोघोत्तीर्णानां

15 चतुर्षु संग्रहवस्तुषु दीर्घरात्रकृतपरिचयानां दशबलबलिनां चतुर्वैशारद्यविशारदानामुदारार्षभसम्यक्सिंहनादनादिनां पञ्चाङ्गविप्रहीणानां पञ्चस्कन्धविमोचकानां पञ्चगतिसमतिक्रान्तानां षडायतनभेदकानां संघातविहारिणां षट्पारमितापरिपूर्णयशसां सप्तबोध्यङ्गकुसुमाढ्यानां सप्तसमाधिपरिष्कारदायकानामार्याष्टाङ्गमार्गदेशिकानामार्यमार्गपुद्गलनायकानां नवानुपूर्वसमापत्तिकुशलानां नवसंयोजनविसंयोजनकानां दशदिक्परिपूर्णयशसां दशशतवशवर्तिप्रति-

20 विशिष्टानां त्रीरात्रेस्त्रिर्दिवसस्य षट्कृत्वो रात्रिंदिवसेन बुद्धचक्षुषा लोकं व्यवलोकयन्ति—कस्यानवरोपितानि कुशलमूलान्यवरोपयामि, कस्यावरोपितानि विवर्धयामि, कः कृच्छ्रप्राप्तः, कः संकटप्राप्तः, कः संबाधप्राप्तः, कः कृच्छ्रसंकटसंबाधप्राप्तः, कं कृच्छ्रसंकटसंबाधात् परिमोचयामि, कोऽपायनिम्नः, कोऽपायप्रवणः, कोऽपायप्राग्भारः, कमहमपायाद् व्युत्थाप्य

C 96 स्वर्गे मोक्षफले च प्रतिष्ठापयामि, कस्य कामपङ्कनिमग्नस्य हस्तोद्धारमनुप्रयच्छामि, कस्य

25 बुद्धोत्पादविभूषितं लोकं सफलीकरोमि, कमार्यधनविरहितमार्यधनैश्वर्याधिपत्ये प्रतिष्ठापयेयम्, को हीयते को वर्धते।

अप्येवातिक्रमेद्वेलां सागरो मकरालयः।
न तु वैनेयवत्सानां बुद्धो वेलामतिक्रमेत्॥ १॥

यथा हि माता प्रियमेकपुत्रकं
30 ह्यवेक्षते रक्षति चास्य जीवितम्।
तथैव वैनेयजनं तथागतो
ह्यवेक्षते रक्षति चास्य संततिम्॥ २॥

सर्वज्ञसंताननिवासिनी हि
कारुण्यधेनुर्मृगयत्यखिन्ना ।
वैनेयवत्सान् भवदुःखनष्टान्
वत्सान् प्रणष्टानिव वत्सला गौः ॥ ३ ॥

ततो भगवांस्तेषां चौराणां वैनेयकालमपेक्ष्य राजगृहादनुपूर्वेण भिक्षुगणपरिवृतो 5 भिक्षुगणपुरस्कृतो दान्तो दान्तपरिवारः शान्तः शान्तपरिवारश्चन्दनश्चन्दनपरिवारो मुक्तो मुक्तपरिवार आश्वस्त आश्वस्तपरिवारः पूर्ववत् यावन्महाकरुणया समन्वागतः तां सालाटवीमनुप्राप्तः। अद्राक्षीत्तच्चौरसहस्रं बुद्धं भगवन्तं सश्रावकसंघं दूरादेवागच्छन्तम्। दृष्ट्वा च पुनश्चित्तान्यभिप्रसाद्य येन भगवांस्तेनोपसंक्रान्तः। उपसंक्रम्य भगवतः पादयोर्निपत्य भगवन्तमिदमवोचन्—अधिवासयतु अस्माकं भगवान् श्वोऽन्तर्गृहे भक्तेन सार्धं भिक्षुसंघेन। 10 अधिवासयति भगवांस्तस्य चौरसहस्रस्य तूष्णीभावेन। अथ चौरसहस्रं भगवतस्तूष्णीभावेनाधिवासनां विदित्वा भगवतोऽन्तिकान् प्रक्रान्तम्॥

अथ तच्चौरसहस्रं तामेव रात्रिं शुचि प्रणीतं खादनीयभोजनीयं समुदानीय काल्यमेवोत्थाय आसनानि प्रज्ञप्य उदकमणीन् प्रतिष्ठाप्य, भगवतो दूतेन कालमारोचयति—समयो भदन्त, सज्जं भक्तं यस्येदानीं भगवान् कालं मन्यसे। अथ भगवान् पूर्वाह्णे निवास्य 15 पात्रचीवरमादाय भिक्षुगणपरिवृतो भिक्षुसंघपुरस्कृतो येन तस्य चौरसहस्रस्य भक्ताभिसारस्तेनोपसंक्रान्तः। अथ तच्चौरसहस्रं बुद्धप्रमुखस्य भिक्षुसंघस्य चन्दनोदकेन पादौ प्रक्षालयामास। अथ भगवान् प्रक्षालितपाणिपादः पुरस्ताद्भिक्षुसंघस्य प्रज्ञप्त एवासने निषण्णः। निषण्णं बुद्धप्रमुखं भिक्षुसंघं विदित्वा शुचिना प्रणीतेन खादनीयभोजनीयेन स्वहस्तं संतर्प्य संप्रवार्य भगवन्तं भुक्तवन्तं विदित्वा धौतहस्तमपनीतपात्रं नीचतराण्यासनानि 20 गृहीत्वा भगवतः पुरस्तान्निषण्णा धर्मश्रवणाय। अथ भगवता तेषामाशयानुशयं विदित्वा धातुं प्रकृतिं च ज्ञात्वा तादृशी धर्मदेशना कृता, यां श्रुत्वा तेन चौरसहस्रेण तस्मिन्नेवासने निषण्णेन विंशतिशिखरसमुद्गतं सत्कायदृष्टिशैलं ज्ञानवज्रेण भित्त्वा स्रोतापत्तिफलं साक्षात्कृतम्। दृष्टसत्याश्च कथयन्ति—इदमस्माकं भदन्त न मात्रा कृतं न पित्रा कृतं न राज्ञा न देवताभिर्न पूर्वप्रेतैर्न श्रमणब्राह्मणैर्नेष्टैर्न स्वजनबन्धुवर्गेण यदस्माभिर्भगवन्तं कल्याणमित्रमागम्य। उद्धृतो 25 नरकतिर्यक्प्रेतेभ्यः पादः, प्रतिष्ठापिता देवमनुष्येषु, पर्यन्तीकृतः संसारः, उच्छोषिता रुधिराश्रुसमुद्राः, उत्तीर्णा अश्रुसागराः, लङ्घिता अस्थिपर्वताः। लभेम वयं भदन्त स्वाख्याते धर्मविनये प्रव्रज्यामुपसंपदं भिक्षुभावम्। चरेम वयं भगवतोऽन्तिके ब्रह्मचर्यम्। ततो भगवता ब्राह्मेण स्वरेणाभिहिताः—एत वत्साः, चरत ब्रह्मचर्यम्। वाचावसाने भगवतो मुण्डाः संवृत्ताः त्रैधातुकवीतरागाः समलोष्टकाञ्चना आकाशपाणितलसमचित्ता वासीचन्दनकल्पा विद्या- 30 विदारिताण्डकोशा विद्याभिज्ञाप्रतिसंवित्प्राप्ता भवलाभलोभसत्कारपराङ्मुखाः। सेन्द्रोपेन्द्राणां देवानां पूज्या मान्या अभिवाद्याश्च संवृत्ताः॥

C 97

C 98 भिक्षवः संशयजाताः सर्वसंशयच्छेत्तारं बुद्धं भगवन्तं पप्रच्छुः– पश्य भदन्त भगवता इदं चौरसहस्रं सप्तवारं धनेन संतर्पयित्वा अत्यन्तनिष्ठेऽनुत्तरे योगक्षेमे निर्वाणे प्रतिष्ठापितम्। भगवानाह–न भिक्षव एतर्हि, यथा अतीतेऽप्यध्वनि मया अस्यैव चौरसहस्रस्य सकाशादनेकभाण्डसहस्रः सार्थो निष्क्रीतः, न च शकिताः संतर्पयितुम्। ततो मया अनेकैर्दुष्करशत-5 सहस्रैर्देवमनुष्यदुष्प्राप्यां शक्रब्रह्माद्यैरपि दुरधिगमां बदरद्वीपयात्रां वर्षशतेन साधयित्वा एतदेव चौरसहस्रमारभ्य कृत्स्नो जाम्बुद्वीपः सुवर्णरजतवैडूर्यस्फटिकाद्यै रत्नविशेषैर्मनोरथेप्सितैश्चोपकरणविशेषैः संतर्पयित्वा दशभिः कुशलैः कर्मपथैः प्रतिष्ठापितः। तच्छृणुत–

भूतपूर्वं भिक्षवोऽतीतेऽध्वनि अस्मिन्नेव जम्बुद्वीपे वाराणस्यां नगर्यां ब्रह्मदत्तो नाम राजा राज्यं कारयति स्म ऋद्धं च क्षेमं च सुभिक्षं च आकीर्णबहुजनमनुष्यं च प्रशान्त-10 कलिकलहडिम्बडमरतस्करदुर्भिक्षरोगापगतम्। प्रियमिवैकपुत्रकमिव राज्यं कारयति। तेन खलु समयेन वाराणस्यां प्रियसेनो नाम सार्थवाहः प्रतिवसति आढ्यो महाधनो महाभोगो वैश्रवणधनप्रतिस्पर्धी। तेन सदृशात् कुलात् कलत्रमानीतम्। स तया सार्धं क्रीडते रमते परिचारयति। अथ अन्यतम उदारपुण्यमहेशाख्यः सत्त्वोऽन्यतमस्मात् प्रणीताद्देवनिकायाच्च्युत्वा तस्याः प्रजापत्याः कुक्षिमवक्रान्तः। पञ्चावेणीया धर्मा इहैकत्ये पण्डितजातीये मातृ-15 ग्रामे। कतमे पञ्च? रक्तं पुरुषं जानाति, कालं जानाति ऋतुं जानाति, गर्भमवक्रान्तं जानाति, यस्याः सकाशाद्गर्भोऽवक्रामति तं जानाति, दारकं जानाति दारिकां जानाति। सचेद्दारको भवति, दक्षिणं कुक्षिं निश्रित्य तिष्ठति। सचेद्दारिका भवति, वामं कुक्षिं निश्रित्य तिष्ठति। सा आत्तमनाः स्वामिन आरोचयति–दिष्ट्या आर्यपुत्र वर्धस्व, आपन्नसत्त्वास्मि संवृत्ता। यथा च मे दक्षिणं कुक्षिं निश्रित्य तिष्ठति, नियतं दारको भविष्यति। C 99

20 सोऽप्यात्तमनात्तमना उदानमुदानयति–अप्येवाहं चिरकालाभिलषितं पुत्रमुखं पश्येयम्। जातो मे स्यान्नावजातः। कृत्यानि मे कुर्यात्। भृतः प्रतिभरेत्। दायाद्यं प्रतिपद्येत। कुलवंशो मे चिरस्थितिकः स्यात्। अस्माकं चाप्यतीतकालगतानामुद्दिश्य दानानि दत्वा पुण्यानि कृत्वा नाम्ना दक्षिणामादिशेत्–इदं तयोर्यत्रतत्रोपपन्नयोर्गच्छतोरनुगच्छत्विति। आपन्नसत्त्वां चैनां विदित्वा उपरिप्रासादतलगतामयन्त्रितां धारयति–उष्ण उष्णोपकरणैः शीते 25 शीतोपकरणैर्वैद्यप्रज्ञप्तैराहारैर्नातिशीतैर्नात्युष्णैर्नातितिक्तैर्नात्यम्लैर्नातिलवणैर्नातिमधुरैर्नातिकटुकैर्नातिकषायैस्तिक्ताम्ललवणमधुरकटुककषायविवर्जितैराहारैः। हारार्धहारविभूषितगात्रीमप्सरसमिव नन्दनवनचारिणीं मञ्चान्मञ्चं पीठात्पीठमनवतरन्तीमधरिमां भूमिम्। न चास्याः किंचिदमनोज्ञशब्दश्रवणं यावदेव गर्भस्य परिपाकाय। सा अष्टानां वा नवानां वा मासानामत्ययात् प्रसूता। दारको जातोऽभिरूपो दर्शनीयः प्रासादिको गौरः कनकवर्णश्छत्रा-30 कारशिराः प्रलम्बबाहुर्विस्तीर्णललाटः संगतभ्रूस्तुङ्गनासो दृढकठिनशरीरो महानग्नबलः। तस्य ज्ञातयः संगम्य समागम्य त्रीणि सप्तकान्येकविंशतिरात्रिंदिवसानि तस्य जातस्य जातः महं कृत्वा नामधेयं व्यवस्थापयन्ति–किं भवतु दारकस्य नाम? अयं दारकः प्रियसेनस्य

सार्थवाहस्य पुत्रः। तद्भवतु दारकस्य नाम सुप्रिय इति। सुप्रियो दारकोऽष्टाभ्यो धात्रीभ्य उपन्यस्तो द्वाभ्यां क्षीरधात्रीभ्यां द्वाभ्यामंसधात्रीभ्यां द्वाभ्यां मलधात्रीभ्यां द्वाभ्यां क्रीड-निकाभ्यां धात्रीभ्याम्। सोऽष्टाभिर्धात्रीभिरुन्नीयते वर्ध्यते क्षीरेण दध्ना नवनीतेन सर्पिषा सर्पिमण्डेन अन्यैश्चोत्तप्तोत्तप्तैरुपकरणविशेषैः। आशु वर्धते ह्रदस्थमिव पङ्कजम्॥ C 100

यदा महान् संवृत्तस्तदा लिप्यामुपन्यस्तः। संख्यायां गणनायां मुद्रायामुद्धारे न्यासे 5 निक्षेपे हस्तिपरीक्षायामश्वपरीक्षायां रत्नपरीक्षायां दारुपरीक्षायां वस्त्रपरीक्षायां पुरुषपरीक्षायां स्त्रीपरीक्षायाम्। नानापण्यपरीक्षासु पर्यवदातः सर्वशास्त्रज्ञः सर्वकलाभिज्ञः सर्वशिल्पज्ञः सर्वभूतरुतज्ञः सर्वगतिगतिज्ञः उद्घट्टको वाचकः पण्डितः पटुप्रचारः परमतीक्ष्णनिशितबुद्धिः संवृत्तोऽग्निकल्प इव ज्ञानेन। स यानि तानि राज्ञां क्षत्रियाणां मूर्ध्नाभिषिक्तानां जनपदैश्वर्य-स्थामवीर्यमनुप्राप्तानां महान्तं पृथिवीमण्डलमभिनिर्जित्याध्यावसतां पृथग्भवन्ति शिल्पस्थान- 10 कर्मस्थानानि, तद्यथा-हस्तिग्रीवायां अश्वपृष्ठे रथे त्सरुधनुःषु उपयाने निर्याणेऽङ्कुशग्रहे तोमर-ग्रहे छेद्ये भेद्ये मुष्टिबन्धे पदबन्धे दूरवेधे शब्दवेधेऽक्षुण्णवेधे मर्मवेधे दृढप्रहारितायाम्। पञ्चसु स्थानेषु कृतावी संवृत्तः। धर्मता चैषा—न तावत् पुत्रस्य नाम निर्गच्छति यावत् पिता ध्रियते। अथापरेण समयेन प्रियसेनः सार्थवाहो ग्लानीभूतः। स मूलगण्डपत्रपुष्प-फलभैषज्यैरुपस्थीयमानो हीयत एव। 15

सर्वे क्षयान्ता निचयाः पतनान्ताः समुच्छ्रयाः।
संयोगा विप्रयोगान्ता मरणान्तं च जीवितम्॥ ४॥

इति स कालधर्मेण संयुक्तः। कालगते प्रियसेने सार्थवाहे ब्रह्मदत्तेन काशिराज्ञा सुप्रियो महासार्थवाहत्वेऽभिषिक्तः। तेन सार्थवाहभूतेन इयमेवंरूपा महाप्रतिज्ञा कृता—सर्वसत्त्वा मया धनेन संतर्पयितव्याः। अल्पं च देयं बहवश्च याचकाः। ततोऽल्पैरहोभिस्तद्धनं परिक्षयं 20 पर्यादानं गतम्। अथ सुप्रियो महासार्थवाहः संलक्षयति—अल्पं च देयं बहवश्च याचकाः। ततोऽल्पैरहोभिस्तद्धनं परिक्षयं पर्यादानं गतम्। यन्न्वहं सामुद्रं यानपात्रं समुदानीय महासमुद्रमवतरेयं धनहारिकः। ततः सुप्रियो महासार्थवाहः सामुद्रयानपात्रं समुदानीय पञ्चमात्रैर्वणिक्शतैः सार्धं महासमुद्रमवतीर्णः। ततोऽनुपूर्वेण रत्नद्वीपं गत्वा रत्नसंग्रहं कृत्वा C 101 स्वस्तिक्षेमाभ्यां महासमुद्रादुत्तीर्य स्थलजैर्वहित्रैर्भाण्डमारोप्य वाराणस्यभिमुखः संप्रस्थितः। 25 अटवीकान्तारमध्यगतश्चौरसहस्रेणासादितः। ततस्ते चौरा मुषितुकामाः सर्वजवेन प्रसृताः। सुप्रियेण च सार्थवाहेनावलोक्याभिहिताः—किमेतद्भवन्तः समारब्धम्? चौराः कथयन्ति—सार्थवाह, त्वमेकः स्वस्तिक्षेमाभ्यां गच्छ, अवशिष्टं सार्थं मुषिष्यामः। सार्थवाहः कथयति—ममैष भवन्तः सार्थः संनिश्रितः। नार्हन्ति भवन्तो मुषितुम्। एवमुक्ताश्चौराः कथयन्ति—वयं स्मः सार्थवाहचौरा अटवीचराः। नास्माकं कृषिर्न वाणिज्या न गौरक्ष्यम्। अनेन वयं 30 जीविकां कल्पयामः। तेषां सुप्रियः सार्थवाहः कथयति—सार्थस्य मूल्यं भवन्तो गण्यताम्। अहमेषामर्थे मूल्यं दास्यामीति। ततस्ते वणिजः परस्परं मूल्यं गणयित्वा चौराणां निवेद-

यन्ति—इयन्ति शतानि सहस्राणि चेति। ततः सुप्रियेण सार्थवाहेन भाण्डनिष्क्रयार्थं स्वं द्रव्यमनुप्रदत्तम्। चौरसकाशात् सार्थः परित्रातः। एवं द्विस्त्रिश्चतुःपञ्चषड्वारान् तस्यैव चौरसहस्रस्य सकाशात् सुप्रियेण सार्थवाहेन सार्थः परित्रातो मूल्यं चानुप्रदत्तम्। यावत् सप्तमं तु वारं सुप्रियः सार्थवाहो महासमुद्रमवतीर्णः। ततः संसिद्धयानपात्रोऽभ्यागतोऽटवी-
5 कान्तारमध्यगतस्तेनैव चौरसहस्रेणासादितः। ततस्ते चौरा मुषितुकामाः सर्वजवेन प्रसृताः। सुप्रियेण च सार्थवाहेनावलोक्याभिहिताः—सुप्रियोऽहं भवन्तः सार्थवाहः। चौराः कथयन्ति—जानास्येव महासार्थवाह वयं चौरा अटवीचराः। नास्माकं कृषिर्न वाणिज्यं न गौरक्ष्यम्। अनेन वयं जीविकां कल्पयामः। ततः सुप्रियेण सार्थवाहेन पूर्विकां प्रतिज्ञामनुस्मृत्य
C 102 दृढप्रतिज्ञेन तस्य चौरसहस्रस्य भाण्डमनुप्रदत्तम्। सुप्रियो महासार्थवाहः संलक्षयति—इमे
10 चौरा लब्धं लब्धमर्थजातसंनिचयं कुर्वन्ति। मया च महती प्रतिज्ञा कृता सर्वसत्त्वा धनेन मया संतर्पयितव्या इति। सोऽहमिमं चौरसहस्रं न शक्नोमि धनेन संतर्पयितुम्। कथं पुनः सर्वसत्त्वान् धनेन संतर्पयिष्यामीति चिन्तापरो मिद्धमवक्रान्तः॥

अथ तस्य महात्मन उदारपुण्यमहेशाख्यस्योदारचेतसोपपन्नस्य सर्वसत्त्वमनोरथ-परिपूरकस्य लोकहितार्थमभ्युद्गतस्य अन्यतरा महेशाख्या देवता उपसंक्रम्य समाश्वासयति—
15 मा त्वं सार्थवाह खेदमापद्यस्व। ऋद्धिष्यति ते प्रणिधिरिति। अस्ति खलु महासार्थवाह अस्मिन्नेव जम्बुद्वीपे बदरद्वीपो नाम महापत्तनोऽमनुष्यावचरितो महेशाख्यमनुष्याधिष्ठितः। सन्ति तस्मिन् बदरद्वीपे प्रधानानि रत्नानि सर्वसत्त्वविचित्रमनोरथपरिपूरकाणि। यदि महासार्थवाहो बदरद्वीपयात्रां साधयेत्, एवमिमां महतीं प्रतिज्ञां प्रतिनिस्तरेत। इयं हि महाप्रतिज्ञा शक्रब्रह्मादीनामपि दुस्तरा, प्रागेव मनुष्यभूतस्य। इत्युक्त्वा सा देवता तत्रैवान्तर्हिता। न
20 च शकिता सुप्रियेण महासार्थवाहेन सा देवता प्रष्टुम्—कतरस्यां दिशि बदरद्वीपः, कथं वा तत्र गम्यत इति। अथ सुप्रियस्य सार्थवाहस्य सुप्तप्रतिबुद्धस्य एतदभवत्—अहो बत मे सा देवता पुनरपि दर्शयेत्, दिशं चोपायं च व्यपदिशेद् बदरद्वीपमहापत्तनस्य गमनायेति चिन्तापरो मिद्धमवक्रान्तः। अथ सा देवता तस्य महात्मन उदारपुण्यमहेशाख्यस्य दृढोदार-प्रतिज्ञस्योदारवीर्यपराक्रमनामनिक्षिप्तोत्साहतां विदित्वा उपसंक्रम्य एवमाह—मा त्वं सार्थवाह
25 खेदमापद्यस्व। अस्ति खलु महासार्थवाह पश्चिमे दिग्भागे पञ्चान्तरद्वीपशतानि समतिक्रम्य सप्त महापर्वताः, उच्चैश्च प्रगृहीताश्च सप्त च महानद्यः। तान् वीर्यबलेन लङ्घयित्वा अन्तरोदानमनुलोमप्रतिलोमद्वयमावर्तः शङ्खनाभः शङ्खनाभी च नीलोदस्तारकाक्षश्च पर्वतौ नीलग्रीव
C 103 एव च वैरंभा ताम्राटवी वेणुगुल्मः सप्त पर्वताः सकण्टकाः क्षारनदी त्रिशङ्कुः अयस्किलमष्टादशवक्रो नदीश्लक्ष्ण एव च धूमनेत्रमुदकं सप्ताशीविषपर्वता नदी भवति पश्चिमा। अनु-
30 लोमो प्रतिलोमो नाम महासमुद्रः। अनुलोमप्रतिलोमे महासमुद्रे मनुष्यानवचरिते अनुलोम-प्रतिलोमा वायवो वान्ति। तत्र योऽसौ पुरुषो भवति महेशाख्यो महेशाख्यदेवतापरिगृहीतः, स महता पुण्यबलेन वीर्यबलेन चित्तबलेन महान्तं प्लवमास्थाय अनुलोमप्रतिलोममहासमुद्र-

मवतरति। स यन्मासेन गच्छति, तदेकेन दिवसेन प्रत्याह्रियते। एवं द्विः त्रिः। ह्रियमाणश्च प्रत्याह्रियमाणश्च यदि मध्यमामुदकधारां प्रतिपद्यते, एवमसौ मैत्रीबलपरिगृहीतो लोकहितार्थमभ्युद्गम्योत्तरति, निस्तरति, अभिनिष्क्रमति। अनुलोमप्रतिलोमं महासमुद्रं समतिक्रम्य अनुलोमप्रतिलोमो नाम पर्वतः। अनुलोमप्रतिलोमे महापर्वतेऽमनुष्यावचरितेऽनुलोमप्रतिलोमा नाम वायवो वान्ति, यैः पुरुषस्तिमिरीकृतनेत्रो नष्टसंज्ञः संतिष्ठते। स वीर्यबलेनात्मानं 5 संधार्य तस्मादेव महापर्वतादमोघां नामौषधीं समन्विष्य गृहीत्वा नेत्रे अञ्जयित्वा शिरसि बद्ध्वा समालभ्य अनुलोमप्रतिलोमं नाम महापर्वतमभिनिष्क्रमितव्यम्। सचेदेतं विधिमनुतिष्ठते, नास्य संमोहो भवति, स्वस्तिक्षेमेणातिक्रमत्यनुलोमप्रतिलोमं महापर्वतम्। सचेदेवं विधिं वा नानुतिष्ठति औषधीं वा न लभते, लब्ध्वा वा न गृह्णाति, स षण्मासान् मुह्यति, उन्मादमपि प्राप्नोति, उच्छ्रित्य वा कालं करोति। अनुलोमप्रतिलोमं महापर्वतं समति- 10 क्रम्य आवर्तो नाम महासमुद्रः। तत्र वैरम्भका वायवो वान्ति यैस्तदुदकं भ्राम्यते। तत्र योऽसौ पुरुषो भवत्युदारपुण्यविपाकमहेशाख्यो देवतापरिगृहीतः, स महता पुण्यबलेन वीर्यबलेन चित्तबलेन कायबलेन महान्तं प्लवमास्थाय आवर्तं महासमुद्रमवरति। स एक- C 104 स्मिन्नावर्ते सप्तकृत्वो भ्रामयित्वा निरुध्यते। योजनं गत्वा द्वितीये आवर्ते उन्मज्जते। स तस्मिन्नप्यावर्ते सप्तकृत्वो भ्रामयित्वा निरुध्यते। एवं द्वितीये तृतीये चतुर्थे पञ्चमे षष्ठे आवर्ते 15 सप्तकृत्वो भ्रामयित्वा निरुध्यते, योजनं गत्वा उन्मज्जते। एवमसौ मैत्रीबलपरिगृहीतो लोकहितार्थमभ्युद्गत उत्तरति निस्तरत्यभिनिष्क्रामति। आवर्तं महासमुद्रमभिनिष्क्रम्य आवर्तो नाम पर्वतोऽमनुष्यावचरितः। तत्र शङ्खो नाम राक्षसः प्रतिवसति रौद्रः परप्राणहरो महाबलो महाकायः। तस्योपरिष्टाद्योजनमात्रे शङ्खनाभी नामौषधी दिवा धूमायते रात्रौ प्रज्वलति। सा नागपरिगृहीता तिष्ठति। स खलु नागो दिवा स्वपिति रात्रौ चरति। तत्र तेन पुरुषेण 20 दिवा सुखसुप्तस्य नागस्य आत्मानं समनुरक्षता नागशरीरमविहेठयता औषधिबलेन मन्त्रबलेन पुण्यबलेन शङ्खनाभी औषधी ग्रहीतव्या। गृहीत्वा नेत्रे अञ्जयित्वा शिरसि बद्ध्वा समालभ्य आवर्तः पर्वतोऽधिरोढव्यः। सचेदेतां विधिमनुतिष्ठति, स्वस्तिक्षेमेणातिक्रामति आवर्तं पर्वतमविहेठितः शङ्खनाभेन राक्षसेन। सचेदेतां विधिं नानुतिष्ठति, औषधीं वा न लभते, लब्धां वा न गृह्णाति, तमेनं शङ्खनाभो राक्षसः पञ्चत्वमापादयति। आवर्तं पर्वतमतिक्रम्य नीलोदो 25 नाम महासमुद्रः। गम्भीरोऽयं गम्भीरावभासः। नीलोदे महासमुद्रे ताराक्षो नाम राक्षसः प्रतिवसति रक्तनेत्रः प्रदीप्तशिरोरुहो विकृतचरणदशननयनः पर्वतायतकुक्षिः। सचेत् स्वपिति, विवृतान्यस्य नेत्राणि भवन्ति, तद्यथा अचिरोदितो भास्करः। औदारिकाश्चास्य आश्वासप्रश्वासा गुरुगुरुकाः प्रवर्तन्ते यथा मेघस्य गर्जतोऽशन्यां च स्फूर्जन्त्यां शब्दः। यदा जागर्ति, निमीलितान्यस्य भवन्ति नेत्राणि। तत्र तेन पुरुषेण तस्मादेव समुद्रकूला- 30 C 105 न्महामकरिनामौषधीं समन्विष्य गृह्य नेत्रे अञ्जयित्वा शिरसि बद्ध्वा समालभ्य महान्तं प्लवमास्थाय सुप्तं ताराक्षं दकराक्षसं विदित्वा पूर्वबुद्धभाषितामेरण्डां नाम महाविद्यामुच्चारयता

मन्त्रपदां दकराक्षससमीपेन गन्तव्यम् । सचेदेतां विधिं नानुतिष्ठति, औषधीं वा न लभते, लब्धां वा न गृह्णाति, तमेनं ताराक्षो दकराक्षस ओजं वा घट्टयति, चित्तं वा क्षिपति, सर्वेण वा सर्वं जीविताद्व्यपरोपयति । नीलोदं महासमुद्रं समतिक्रम्य नीलोदो नाम महापर्वतः । तत्र नीलग्रीवो नाम राक्षसः प्रतिवसति पञ्चशतपरिवार उग्रतेजा रौद्रः परप्राणहरः । नीलोदो महा-
5 पर्वत एकनीलोऽखण्डोऽच्छिद्रोऽसुषिरः संवृत एकघनः । अपीदानीमनिमिषं पश्यतो नेत्राणि व्याबाधयते, मूर्च्छां च संजनयति । तस्योपरिष्टाद्योजनमात्रेऽमोघा नामौषधी विचित्ररूपा । सा नागपरिगृहीता तिष्ठति । स खलु नागो दृष्टिविषोऽपि श्वासविषोऽपि स्पर्शविषोऽपि दंष्ट्रा-विषोऽपि । यदा स्वपिति, तदा धूमायते । यः खलु तेन धूमेन मृगो वा पक्षी वा स्पृश्यते, स पञ्चत्वमापद्यते । तत्र तेन पुरुषेण शिरःस्नातेनोपोषितेन मैत्रायता करुणायता अव्यापन्नेन
10 चित्तेनात्मानं समनुरक्षता नागशरीरमविहेठयता औषधी ग्रहीतव्या । गृहीत्वा नेत्रे अञ्जयित्वा शिरसि बद्ध्वा समालभ्य अनेन विधिना जानतानुष्ठितेन नीलोदः पर्वतोऽभिरोढव्यः । तिमिरं न भविष्यति, मूर्च्छा च न भविष्यति । न चास्य गुह्यकाः शरीरे प्रहरिष्यन्ति । सचेदेतां विधिं नानुतिष्ठति, औषधीं वा न लभते, लब्धां वा न गृह्णाति, तमेनं नीलग्रीवो राक्षसः पञ्चत्वमापादयिष्यति । नीलोदं पर्वतं समतिक्रम्य वैरम्भो नाम महासमुद्रः । वैरम्भे महासमुद्रे
15 वैरम्भा नाम वायवो वान्ति यैस्तदुदकं क्षोभ्यते, यत्रागतिर्मकरकच्छपवल्लकशिशुमारादीनां प्रेतपिशाचकुम्भाण्डकटपूतनादीनां कः पुनर्वादो मनुष्याणाम् । तमुत्सृज्य उत्तरेण वैरम्भस्य

C 103

महासमुद्रस्य महती ताम्राटवी अनेकयोजनायामविस्तारा । तस्यास्ताम्राटव्या मध्ये महत् सालवनं महच्चोदपानम् । तत्र ताम्राक्षो नाम अजगरः प्रतिवसति रौद्रः परप्राणहरः परम-दुर्गन्धः पञ्चयोजनायामः । स षण्मासान् स्वपिति । यदा स्वपिति, तदा अस्य योजनं सामन्त-
20 केन लालास्य स्फरित्वा तिष्ठति, यदा जागर्ति, अल्पास्य लाला भवति । तस्योपरिष्टान्महान् वेणुगुल्मः । तस्मिन् वेणुगुल्मे महत्यश्मशिला । तां वीर्यबलेन उत्पाट्य गुहा । तस्यां गुहायां संमोहनी नामौषधी । सा रात्रिंदिवसं प्रज्वलति । तां गृहीत्वा नेत्रे अञ्जयित्वा शिरसि बद्ध्वा समालभ्य सुप्तं ताम्राक्षमजगरं विदित्वा औषधीबलेन मन्त्रबलेन वा अजगरभवनसमीपेन गन्तव्यम् । सचेदेतां विधिमनुतिष्ठति, स्वस्तिक्षेमाभ्यामतिक्रम्य अविहेठितस्ताम्राक्षेणाजगरेण
25 ततः पश्चान्मूलफलानि भक्षयता गन्तव्यम् । महतीं ताम्राटवीमतिक्रम्य सप्त पर्वताः कण्टक-वेणुप्रतिच्छन्नाः । तत्र तेन पुरुषेण ताम्रपट्टैः पादौ बद्ध्वा तान् पर्वतान् वीर्यबलेन लङ्घयित्वा सप्त क्षारनद्यः । तासां तीरे महाशाल्मलीवनम् । ततः शाल्मलीफलकैः प्लवं बद्ध्वा अभि-रुह्यातिक्रमितव्या अस्पृशता पानीयम् । सचेत् स्पृशेत्, तदङ्गं शीर्यते । सप्त क्षारनदीः समतिक्रम्य त्रिशङ्कुर्नाम पर्वतः । त्रिशङ्कौ पर्वते त्रिशङ्कवो नाम कण्टकास्तीक्ष्णाः सुतीक्ष्णाः ।
30 ततस्तेन पुरुषेण ताम्रपट्टैर्वेत्रपाशैः पादौ बद्ध्वा अतिक्रमितव्यम् । त्रिशङ्कुपर्वतमतिक्रम्य त्रिशङ्कु-र्नाम नदी । त्रिशङ्कवो नाम कण्टकास्तीक्ष्णा अष्टादशाङ्गुला उदकेऽन्तर्गतास्तिष्ठन्ति । तत्र तेन पुरुषेण शाल्मलीफलकैः प्लवं बद्ध्वा अतिक्रमितव्यमस्पृशता पानीयम् । सचेत् पतति,

तत्रैवानयेन व्यसनमापद्यते। यथा त्रिशङ्कुः पर्वतः, एवं त्रिशङ्कुका नाम नदी। एवमय- C 107
स्किलः पर्वतोऽयस्किला नाम नदी। अयस्किलानदीमतिक्रम्य अष्टादशवक्रो नाम पर्वतः।
उच्छ्रितश्च सर्वतः संवृतोऽद्वारकश्च। अस्य न किंचित् निस्तरणमन्यत्र वृक्षाग्राद्
वृक्षमधिरुह्य गन्तव्यम्। अष्टादशवक्रं पर्वतमतिक्रम्य अष्टादशवक्रिका नाम नदी ग्राहमकरा-
कुला संवृता च। तत्र वेत्रपाशं बद्ध्वा अतिक्रमितव्यम्। सचेत् पतति, अनयेन व्यसन- 5
मापद्यते। अष्टादशवक्रिकां नदीमतिक्रम्य श्लक्ष्णो नाम पर्वतः। श्लक्ष्णः पर्वतो मृदुरुच्छ्रितो-
ऽद्वारकश्च। न चास्य किंचिन्निस्तरणम्। तत्रायस्कीलानां कोट्यातिक्रमितव्यम्। श्लक्ष्णं
पर्वतमतिक्रम्य श्लक्ष्णा नाम नदी ग्राहमकराकुला। संवृता च सा नदी। तत्र वेत्रपाशान्
बद्ध्वा अतिक्रमितव्यम्। सचेत् पतति, अनयेन व्यसनमापद्यते। श्लक्ष्णां नदीमतिक्रम्य धूमनेत्रो
नाम पर्वतो धूमायते संधूमायते। येन खलु तेन धूमेन मृगा वा पक्षिणो वा स्पृश्यन्ते, 10
पञ्चत्वमापद्यन्ते। धूमनेत्रः पर्वत उच्छ्रितो महाप्रपातोऽद्वारकश्च। तत्र तेन पुरुषेण गुहा
पर्येषितव्या। गुहां समन्विष्य तेनात्र गुहाद्वारमौषधिबलेन मन्त्रबलेन च मोक्तव्यम्। सा च
खलु गुहा आशीविषपरिपूर्णा तिष्ठति। ते खलु आशीविषा दृष्टिविषा अपि, स्पर्शविषा अपि।
धूमनेत्रस्य पर्वतस्योपरिष्टान्महदुदकपल्वलम्। तस्मिन्नुदकपल्वले महत्यश्मशिला। तां
वीर्यबलेनोत्पाट्य गुहा। तस्यां गुहायां संजीवनी नामौषधी ज्योतीरसश्च मणिर्दीपप्रभासः। 15
तामौषधीं गृहीत्वा सशीर्षपादं समालभ्य तां चौषधीं गृहीत्वा गुहा प्रवेष्टव्या। औषधीबलेन
मन्त्रबलेन औषधीप्रभावाच्चाशीविषाः काये न क्रमिष्यन्ति। एवं हि तस्मात् पर्वता-
न्निस्तरणं भविष्यति। धूमनेत्रपर्वतमतिक्रम्य सप्ताशीविषपर्वताः। औषधीबलेन मन्त्रबलेन
च सप्ताशीविषपर्वता अतिक्रमितव्याः। सप्ताशीविषपर्वतानतिक्रम्य सप्ताशीविषनद्यः। तीक्ष्ण-
गन्धा नाम तत्राशीविषाः। तत्र तेन पुरुषेण मांसपेश्यन्वेषितव्या। तासामाशीविषनदीनां 20
तीरे शाल्मलीवनम्। ततः शाल्मलीफलकैः प्लवं बद्ध्वा मांसपेश्या आत्मानमाच्छाद्य अधिरोढ-
व्यम्। ततस्ता आशीविषा मांसगन्धेन पारात् पारं गमिष्यन्ति। सप्ताशीविषमतिक्रम्य
महान् सुधावदातः पर्वतः, उच्चश्च प्रगृहीतश्च। सोऽधिरोढव्यः। तत्र द्रक्ष्यसि महान्तं
सौवर्णभूमिं पृथिवीप्रदेशं पुष्पफलच्छायावृक्षोपशोभितम्। रोहितकान् जनपदान् ऋद्धांश्च
क्षेमांश्च सुभिक्षांश्च आकीर्णबहुजनमनुष्यांश्च। रोहितकं च महानगरं द्वादशयोजनायामं 25 C 108
सप्तयोजनविस्तृतं सप्तप्राकारपरिक्षिप्तं द्वाषष्टिद्वारोपशोभितं भवनशतसहस्रविराजितं सुविविक्त-
रथ्यावीथिचत्वरशृङ्गाटकान्तरापणम्। वीणा वल्लिका महती सुघोषकैः श्रोत्राभिरामैश्च
गीतध्वनिभिरनुपरतप्रयोगं नानापण्यसंवृद्धं नित्यप्रमुदितजनौघसंकुलं त्रिदशेन्द्रोपेन्द्रसदृशो-
द्यानसभापुष्करिणीसंपन्नं कादम्बहंसकारण्डवचक्रवाकोपशोभिततडागं रोहितकं महाराजा-
ध्युषितं महापुरुषवणिग्भिसेवितम्। यत्र मघः सार्थवाहः प्रतिवसति अभिरूपो दर्शनीयः 30
प्रासादिकः पण्डितो व्यक्तो मेधावी आढ्यो महाधनो महाभोगो विस्तीर्णविशालपरिग्रहो
वैश्रवणधनसमुदितो वैश्रवणधनप्रतिस्पर्धी द्वीपान्तरद्वीपगमनविधिज्ञो महासमुद्रयानपात्र-

यायी। स ते बदरद्वीपमहापत्तनस्य प्रवृत्तिमाख्यास्यति, निमित्तानि च दर्शयिष्यति। यथोक्तं च विधिमनुष्ठास्यसि, न च खेदमापत्स्यसे। एवं महासार्थवाह परमदुष्करकारक इमां सुमेरुमलयमन्दरसदृशीं दृढां प्रतिज्ञां निस्तरिष्यसि। इयं च महाप्रतिज्ञा शक्रब्रह्मादीनामपि दुष्करा, प्रागेव मनुष्यभूतानाम्॥

5 इत्युक्त्वा सा देवता तत्रैवान्तर्हिता। अथ सुप्रियः सार्थवाहः सुप्तप्रतिबुद्धो देवतावचनं श्रुत्वा परमविस्मयमापन्नश्चिन्तयति—नूनमनया देवतया अनेकैरेवंविधैः परमदुष्करशतसहस्रैर्बदरद्वीपयात्रा साधितपूर्वा भविष्यति। यदि तावत् साधिता, दुष्करकारिका इयं देवता। अथ साध्यमाना, दृष्टाः परमदुष्करकारकास्ते मनुष्याः, यैरनेकैर्दुष्करशतसहस्रैर्बदरद्वीपयात्रा साधिता। अतिदुष्करं चैतदस्माभिः करणीयम्। अथवा यद्यप्यहं लोकहितार्थे 10 प्रतिपद्येयम्, सफलो मे परिश्रमः स्यात्। यथा अनेकैर्दुष्करशतसहस्रैर्बदरद्वीपमहापत्तनयात्रां साधयिष्यामि, परं लोकानुग्रहं करिष्यामि। तेऽपि मनुष्याः, यैरनेकैर्दुष्करशतसहस्रैर्बदरद्वीपयात्रा साधितपूर्वा। अहमपि मनुष्यः। तैः साधिता। कस्मादहं न साधयिष्यामीत्यनुविचिन्त्य सुप्रियो महासार्थवाहो दृढप्रतिज्ञो दृढवीर्यपराक्रमोऽनिक्षिप्तोत्साह उदारपुण्यविपाकमहेशाख्यो लोकहितार्थमभ्युद्गतो यथोपदिष्टोद्देशस्मृतिपरिगृहीतो दृढप्रतिज्ञां समनु- 15 स्मृत्य महता वीर्यबलेन एकाकी अद्वितीयव्यवसायो यथोपदिष्टानि पञ्चान्तरद्वीपशतानि समतिक्रामति। सप्त महापर्वतान्, सप्त महानद्यो विस्तरेण सर्वाणि संकटानि यथोक्तेन विधिना मूलकन्दफलाहारो गुणवति फलके बद्ध्वा परिपूर्णैर्द्वादशभिर्वर्षै रोहितकं महानगरमनुप्राप्तः। उद्याने स्थित्वा अन्यतमं पुरुषमामन्त्रयते—कश्चिद्भोः पुरुष अस्मिन् रोहितके महानगरे मघो नाम सार्थवाहः प्रतिवसति? स एवमाह—अस्ति भोः पुरुष। किं तर्हि महा- 20 व्याधिना ग्रस्तः। स्थानमेतद्विद्यते यत्तेनैवाबाधेन कालं करिष्यतीति। अथ सुप्रियस्य महासार्थवाहस्यैतदभवत्—मा हैव मघो महासार्थवाहोऽदृष्ट एव कालं कुर्यात्। को मे व्यपदेशं करिष्यति तस्य बदरद्वीपमहापत्तनस्य गमनायेति विदित्वा त्वरितत्वरितं येन मघस्य सार्थवाहस्य निवेशनं तेनोपसंक्रान्तः। स द्वारे निवार्यते, न लभते प्रवेशं महासार्थवाहदर्शनाय। धर्मता खलु कुशला बोधिसत्त्वास्तेषु तेषु शिल्पस्थानकर्मस्थानेषु। ततो वैद्यसंज्ञां 25 घोषयित्वा प्रविष्टः। अद्राक्षीत् सुप्रियो महासार्थवाहोऽरिष्टाध्यायेषु विदितवृत्तान्तः—मघः सार्थवाहः षड्भिर्मासैः कालं करिष्यतीति विदित्वा सुप्रियो महासार्थवाहोऽधीत्य वैद्यमतानि स्वयमेव मूलगण्डपत्रपुष्पफलभैषज्यान्यनुलोमिकानि व्यपदिशति स्म व्याधिव्युपशमार्थम्। परं चैनं तोषयति चित्राक्षरव्यञ्जनपदाभिधानैः, शास्त्रबद्धाभिः कथाभिः, नानाश्रुतिमनोरथाख्यायिकाभिः संरञ्जयति। दाक्ष्यदाक्षिण्यचातुर्यमाधुर्योपेतमुपस्थानकर्मणि सत्पुत्र इव पितरं 30 भक्त्या गौरवेण शुश्रूषते। ततो मघस्य सार्थवाहस्य क्षेमणीयतरं चाभूद्यापनीयतरं च। संज्ञा अनेन प्रतिलब्धा। अथ मघः महासार्थवाहः प्रतिलब्धसंज्ञः सुप्रियं महासार्थवाहमिदमवोचत्—कुतो भवान् ज्ञानविज्ञानसंपन्नोऽभिरूपो दर्शनीयः प्रासादिकः पण्डितो व्यक्तो

C 109

C 110

मेधावी पटुप्रचारः सर्वशास्त्रज्ञः सर्वशास्त्रविशारदः सर्वकलाभिज्ञः सर्वभूतरुतज्ञ इङ्गितज्ञः ? किं जात्या भवान् ? किंगोत्रः ? केन वा कारणेन अमनुष्यावचरितं देशमभ्यागतः ? एवमुक्तः सुप्रियः सार्थवाहः कथयति–साधु साधु महासार्थवाह। कालेऽस्मि महासार्थवाहेन जातिकुलगोत्रागमनप्रयोजनं पृष्टः। अथ सुप्रियो महासार्थवाहो मघाय सार्थवाहाय जातिकुलगोत्रागमनप्रयोजनं विस्तरेणारोचयति स्म, परं चैनं विज्ञापयति–सार्थवाहानुभावादहं 5 बदरद्वीपमहापत्तनं पश्येयम्। एवमहं स्यात् परिपूर्णमनोरथो निस्तीर्णदृढप्रतिज्ञः सर्वसत्त्वमनोरथपरिपूरकः। अथ मघो महासार्थवाहः सुप्रियस्य महासार्थवाहस्याश्रुतपूर्वां परहितार्थमभ्युद्यतां दृढप्रतिज्ञां श्रुत्वा परमविस्मयजातोऽनिमिषदृष्टिः सुचिरं निरीक्ष्य सुप्रियं महासार्थवाहमिदमवोचत्–तरुणश्च भवान् धर्मकामश्च। आश्चर्यममानुषपराक्रमं ते पश्यामि, यो नाम भवान् जम्बुद्वीपादमनुष्यावचरितं पर्वतसमुद्रनद्योत्तरणं कृत्वा इहागतः, यत्रामनुष्याः 10 प्रलयं गच्छन्ति, प्रागेव मनुष्याः। देवं तद्भवन्तं पश्यामि देवान्यतमं वा मनुष्यवेषधारिणम्। न ते किंचिद्दुस्तरमसाध्यं वा। अपि तु अहं महाव्याधिना ग्रस्तो मुमूर्षुः। भवांश्चायातः। अपि तु को भवतोऽर्थे परहितार्थेऽभ्युद्यतस्यात्मपरित्यागमपि न कुर्यात् ? तेन हि वत्स क्षिप्रं मङ्गलपोतं समुदानय, संवरं चारोपय, यदावयोर्यात्रायनं भविष्यतीति। एवं सार्थवाहेति सुप्रियो महासार्थवाहो मघाय महासार्थवाहाय प्रतिश्रुत्य मङ्गलपोतं समुदानीय संवरं चारोप्य 15 C 111 येन मघो महासार्थवाहस्तेनोपसंक्रान्तः। उपसंक्रम्य मघं सार्थवाहमिदमवोचत्–देव समुदानीतो मङ्गलपोतः, संवरं चारोपितम्, यस्येदानीं महासार्थवाहः कालं मन्यते। अथ मघो महासार्थवाहो बदरद्वीपमहापत्तनगमनकृतबुद्धिः स्वजनबन्धुवर्गपुत्रदारमित्रामात्यज्ञातिसालोहितैः सभृत्यवर्गेण च रोहितकराज्ञा च निवार्यमाणोऽपि गुणवति फलके बद्ध्वा आशु सुप्रियसार्थवाहसहायो मङ्गलपोतमभिरुह्य महासमुद्रमवतीर्णः। अथ मघो महासार्थवाहः सुप्रियस्य 20 महासार्थवाहस्य कथयति–अहं बाढग्लानो न शक्यामि स्थितो गन्तुम्। तदर्हसि शय्यां कल्पयितुं यत्राहमपाश्रितो गमिष्यामीति। अपि तु अस्मिन् महासमुद्रे यावदेवंविधानि निमित्तानि भवन्ति उदकस्य वर्णसंस्थानानि च मम निवेदयितव्यानि। यथा अनेकानि योजनशतानि गत्वा अद्राक्षीत् सुप्रियो महासार्थवाह एकपाण्डरं पानीयम्। दृष्ट्वा पुनर्मघाय सार्थवाहायारोचयति–यत्खलु महासार्थवाह जानीयाः, एकपाण्डरं पानीयं पश्यामि। एवमुक्ते 25 मघः सार्थवाहः कथयति–नैतन्महासार्थवाह एकपाण्डरं पानीयम्। अपि तु पश्यसि त्वं दक्षिणकेन महत्सुधापर्वतं यदिदं तस्यैतदनुभावेन पानीयं रञ्जितम्। यत्रैकविंशतिधातुगोत्राणि, यं पक्त्वा सुवर्णरूप्यवैदूर्यान्यभिनिर्वर्तन्ते, यदेके जाम्बुद्वीपका मनुष्या रत्नान्यादाय प्रतिनिवर्तन्ते। इदं बदरद्वीपमहापत्तनस्य प्रथमनिमित्तम्। पुनरपि गच्छन् पश्यति सुप्रियो महासार्थवाहः शस्त्रवर्णं पानीयम्। दृष्ट्वा च पुनर्मघाय सार्थवाहायारोचयति–यत् खलु महा- 30 सार्थवाह जानीयाः–शस्त्रवर्णं पानीयं दृश्यते। मघः सार्थवाहः कथयति–नैतच्छस्त्रवर्णं पानीयम्। पश्यसि त्वं दक्षिणकेण महच्छस्त्रपर्वतम्। तस्यैतदनुभावेन पानीयं रञ्जितम्।

C 112 अत्राप्यनेकानि धातुगोत्राणि, यं पक्त्वा सुवर्णरूप्यवैदूर्यस्फटिकान्यभिनिर्वर्तन्ते, यदेके जाम्बुद्वीपका मनुष्या रत्नान्यादाय प्रतिनिवर्तन्ते । इदं बदरद्वीपमहापत्तनस्य द्वितीयं निमित्तम् । एवं लोहपर्वतास्ताम्रपर्वता रूप्यपर्वताः सुवर्णपर्वताः स्फटिकपर्वता वैदूर्यपर्वताः । अद्राक्षीत् सुप्रियो महासार्थवाहो नीलपीतलोहितावदातं पानीयम्, अन्तर्जले 5 च दीपार्चिषः पश्यति दीप्यमानाः । दृष्ट्वा च पुनर्मघाय सार्थवाहायारोचयति—यत्खलु महासार्थवाह जानीयाः—नीलपीतलोहितावदातं पानीयं दृश्यते, अन्तर्जले च दीपार्चिषो दीप्यमानाः । एवमुक्ते मघो महासार्थवाहः कथयति—नैतन्महासार्थवाह नीलपीतलोहितावदातं पानीयम्, नाप्येते दीपा इव दीप्यन्ते । पश्यसि त्वं दक्षिणकेन चतूरत्नमयं पर्वतम् । तस्यैतदनुभावेन पानीयं रञ्जितम् । येऽप्येते दीपा इव दीप्यन्ते, एतेऽन्तर्गता औषध्यो 10 दीप्यन्ते । अत्राप्यनेकानि धातुगोत्राणि, यं पक्त्वा सुवर्णरूप्यवैदूर्यस्फटिकान्यभिनिर्वर्तन्ते, यत्रैके जाम्बुद्वीपका मनुष्या रत्नान्यादाय प्रतिनिवर्तन्ते । इदं बदरद्वीपमहापत्तनस्य दशमं निमित्तम् । अपि तु महासार्थवाह इयन्त्येवाहं बदरद्वीपमहापत्तनस्य दश निमित्तानि जाने गमनं प्रति, अतः परेण न जाने । एवमुक्ते सुप्रियो महासार्थवाहः कथयति—कदा बदरद्वीपमहापत्तनस्य गमनायान्तो भविष्यति? एवमुक्ते मघः सार्थवाहः कथयति— 15 मयापि सुप्रिय बदरद्वीपमहापत्तनं कार्त्स्न्येन न दृष्टम् । अपि तु मया श्रुतं पौराणानां महासार्थवाहानामन्तिकाज्जीर्णानां वृद्धानां महल्लकानाम्—इतो जलमपहाय पश्चिमां दिशं स्थलेन गम्यते । तेन चैवमभिहितम्, मरणान्तिकाश्चास्य वेदनाः प्रादुर्भूताः । ततः सुप्रियाय महासार्थवाहाय कथयति—मरणान्तिका मे वेदनाः प्रादुर्भूताः । एतत्त्वं मङ्गलपोतं तीरमुपनीय वेत्रपाशं बद्ध्वा मच्छरीरे शरीरपूजां कुरुष्व । ततः सुप्रियो महासार्थ- 20 वाहस्तं मङ्गलपोतं तीरमुपनीय वेत्रपाशं बध्नाति । अत्रान्तरे मघो महासार्थवाहः कालगतः । अथ सुप्रियो महासार्थवाहो मघं सार्थवाहं कालगतं विदित्वा स्थले उत्थाप्य शरीरे शरीरपूजां कृत्वा चिन्तयति—मङ्गलपोतमारुह्य यास्यामीति । स च पोतो वायुना वेत्रपाशं छित्त्वा C 113 अपहृतः । ततः सुप्रियो महासार्थवाहश्चतूरत्नमयस्य पर्वतस्य दक्षिणेन पार्श्वेनाटव्यां स्थलेन संप्रस्थितो मूलफलानि भक्षयमाणः । अनेकानि योजनानि गत्वा अद्राक्षीत् श्लक्ष्णं पर्वत- 25 मनुपूर्वप्रवणमनुपूर्वप्राग्भारम् । न शक्यतेऽभिरोढुम् । ततः सुप्रियो महासार्थवाहो मधुना पादौ प्रलिप्याभिरूढश्च, अवतीर्णश्च, अनेकानि योजनानि गत्वा मूलफलाहारो गतः । स तत्र पश्यति महान्तं पर्वतमुच्चं च प्रगृहीतं च । निःसरणं पर्येषमाणो न लभते, न चास्य कश्चिन्निःसरणव्यपदेष्टा । ततश्चिन्तापरः शयितः । तत्र च पर्वते नीलादो नाम यक्षः प्रतिवसति । स संलक्षयति—अयं बोधिसत्त्वो लोकहितार्थमुद्यतः परिक्लिश्यते, यन्वह- 30 मस्य साहाय्यं कल्पयेयम् । इदमनुचिन्त्य सुप्रियं महासार्थवाहमिदमवोचत्—इतो महासार्थवाह पूर्वेण योजनं गत्वा त्रीणि पर्वतशृङ्गाण्यनुपूर्वनिम्नान्यनुपूर्वप्रवणान्यनुपूर्वप्राग्भाराणि । तत्र त्वया वेत्रशिटां (?) बद्ध्वा अतिक्रमितव्यम् । अथ सुप्रियो महासार्थवाहः सुप्तप्रबुद्धो वेत्रशिटां

बद्धा तानि पर्वतशृङ्गाण्यतिक्रान्तः। भूयः संप्रस्थितोऽद्राक्षीत् सुप्रियो महासार्थवाहः स्फटिकपर्वतं श्लक्ष्णं निरालम्बमगम्यं मनुष्यमात्रस्य। न चास्योपायं पश्यति तं पर्वतमभिरोहणायेति विदित्वा चिन्तापरोऽहोरात्रमवस्थितः। तस्मिंश्च पर्वते चन्द्रप्रभो नाम यक्षः प्रतिवसति। स चिन्तापरं सार्थवाहं विदित्वा लोकहितार्थमभ्युद्यतं महायानसंप्रस्थितं प्रसन्नचित्तं चोपेत्याश्वासयति—न खलु महासार्थवाहेन विषादः करणीय इति। पूर्वेण 5 क्रोशमात्रं गत्वा महच्चन्दनवनम्। तस्मिंश्च चन्दनवने महत्यश्मशिला। तां वीर्यबलेनोत्पाट्य गुहां द्रक्ष्यसि। तस्यां गुहायां प्रभास्वरा नामौषधी पञ्चगुणोपेता। तया गृहीतया नास्य काये शस्त्रं क्रमिष्यति, अमनुष्याश्चावतारं न लप्स्यन्ते, बलं च वीर्यं च संजनयति, आलोकं च करोति। तेनालोकेन द्रक्ष्यसि चतूरत्नमयं सोपानम्। तेन सोपानेन स्फटिकपर्वतमतिक्रमितव्यम्। स्फटिकपर्वतमतिक्रान्तस्य ते प्रभास्वरा औषध्यन्तर्धास्यति। तत्र ते न 10 शोचितव्यं न क्रन्दितव्यं न परिदेवितव्यम्। अथ चन्द्रप्रभो यक्षः सुप्रियं महासार्थवाहं समनुशास्य तत्रैवान्तर्हितः। अथ सुप्रियो महासार्थवाहश्चन्द्रप्रभेण महायक्षेण समाश्वास्य आदेशितमार्गो यथोक्तेन विधिना स्फटिकपर्वतमतिक्रान्तः। अतिक्रान्तस्य चास्य प्रभास्वरा औषध्यन्तर्हिता। भूयः संप्रस्थितोऽद्राक्षीत् सुप्रियो महासार्थवाहः सौवर्णं महानगरमारामसंपन्नं पुष्करिणीसंपन्नम्। ततः सुप्रियो महासार्थवाहो नगरद्वारं गतः। यावद्वृद्धं नगरं 15 पश्यति। दृष्ट्वा च पुनरुद्यानं गत्वा चिन्तयति—यद्यप्यहं नगरमद्राक्षम्, तदपि शून्यम्। कदा बदरद्वीपस्य महापत्तनस्यागमनायाध्वा भविष्यतीति विदित्वा शयितः। अथ सा पूर्वदेवता सुप्रियं महासार्थवाहं दुर्मनसं विदित्वा रात्र्याः प्रत्यूषसमय उपसंक्रम्य समाश्वास्य उत्कर्षयति—साधु साधु महासार्थवाह, निस्तीर्णानि ते महासमुद्रपर्वतनदीकान्ताराणि मनुष्यामनुष्यागम्यानि। संप्राप्तोऽसि बदरद्वीपमहापत्तनं मनुष्यामनुष्यानवचरितं महेशाख्य- 20 पुरुषाध्युषितम्। किं तर्हि न सांप्रतमप्रमादः करणीयः। इन्द्रियाणि च गोपयितव्यानि चक्षुरादीनि, कायगता स्मृतिर्भावयितव्या। श्वोभूते नगरद्वारं त्रिकोटयितव्यम्। ततश्चतस्रः किन्नरकन्या निर्गमिष्यन्ति अभिरूपा दर्शनीयाः प्रासादिकाश्चातुर्यमाधुर्यसंपन्नाः सर्वाङ्गप्रत्यङ्गोपेताः परमरूपाभिजाताः सर्वालंकारविभूषिता हसितरमितपरिचारितनृत्तगीतवादित्रकलास्वभिज्ञाः। तास्त्वामत्यर्थमुपलालयन्ति, एवं च वक्ष्यन्ति—एतु महासार्थवाहः। स्वागतं 25 महासार्थवाह, अस्माकमस्वामिनीनां स्वामी भव, अपतिकानां पतिरलयनानां लयनोऽद्वीपानां द्वीपोऽत्राणानां त्राणोऽशरणानां शरणमपरायणानां परायणः। इमानि च तेऽन्नगृहाणि पानगृहाणि वस्त्रगृहाणि शयनगृहाण्यारामरमणीयानि, प्रभूतानि च जाम्बुद्वीपकानि रत्नानि, तद्यथा—मणयो मुक्ता वैदूर्यशङ्खशिलाप्रवालरजतजातरूपमश्मगर्भमुसारगल्वो लोहितिका दक्षिणावर्ताः। एतानि च ते रत्नानि। त्वं चास्माभिः सार्धं क्रीडस्व रमस्व परिचारयस्व। 30 तत्र ते तासु मातृसंज्ञा उपस्थापयितव्या, भगिनीसंज्ञा दुहितृसंज्ञा उपस्थापयितव्या। दशाकुशलाः कर्मपथा विगर्हितव्याः, दश कुशलाः कर्मपथाः संवर्णयितव्याः। सुबह्वपि ते

C 114

C 115

प्रलोभ्यमानेन रागसंज्ञा नोत्पादयितव्या। सचेदुत्पादयिष्यसि तत्रैवानयेन व्यसनमापत्स्यसे। सूपस्थितस्मृतेस्तव सफलः श्रमो भविष्यति। यद्यपि ते सुभाषितस्यार्घमणिं प्रयच्छेयुः, ततस्त्वया निपुणं प्रष्टव्याः– अस्य रत्नस्य भगिन्यः कोऽनुभाव इति। एवं द्वितीयं किन्नर-नगरमनुप्राप्तस्याष्टौ किन्नरकन्या निर्गमिष्यन्ति, तासां पूर्विकानामन्तिकादभिरूपतराश्च।
5 तत्रापि ते एषानुपूर्वी करणीया। यावच्चतुर्थकिन्नरनगरप्राप्तस्य ते द्वात्रिंशत् किन्नरकन्या निर्गमिष्यन्ति तासां पूर्विकानामन्तिकादभिरूपतराश्च दर्शनीयतराश्च प्रासादिकतराश्चाप्सरसः-प्रतिस्पर्धिन्यः। शतसहस्रशोभिता भविष्यन्ति। तत्रापि ते एषैवानुपूर्वी करणीया। इत्युक्त्वा सा देवता तत्रैवान्तर्हिता॥

अथ सुप्रियो महासार्थवाहः प्रमुदितमनाः सुखप्रतिबुद्धः काल्यमेवोत्थाय सौवर्णं
10 किन्नरनगरमनुप्राप्तः। द्वारमूलमुपसंक्रम्य त्रिकोटयति। ततः सुप्रियेण महासार्थवाहेन त्रिकोटिते द्वारे चतस्रः किन्नरकन्या निर्गता अभिरूपा दर्शनीयाः प्रासादिकाश्चातुर्यमाधुर्य-
C 116 संपन्नाः सर्वाङ्गप्रत्यङ्गोपेताः परमरूपाभिजाता हसितरमितपरिचारितनृत्तगीतवादित्रकलास्व-भिज्ञाः। ता एवमाहुः—एतु महासार्थवाहः। स्वागतं महासार्थवाह। अस्माकमस्वामिनीनां स्वामी भव, अपतीनां पतिरलयनानां लयनोऽद्वीपानां द्वीपोऽशरणानां शरणोऽत्राणानां
15 त्राणोऽपरायणानां परायणः। इमानि च तेऽन्नगृहाणि पानगृहाणि वस्त्रगृहाणि शयनगृहा-ण्यारामरमणीयानि वनरमणीयानि पुष्करिणीरमणीयानि च। जाम्बुद्वीपकानि रत्नानि, तद्यथा—मणयो मुक्ता वैदूर्यशङ्खशिलाप्रवालरजतजातरूपमश्मगर्भो मुसारगल्वो लोहितिका दक्षिणा-वर्ताः एतानि च। त्वं चास्माभिः सार्धं क्रीडस्व रमस्व परिचारयस्व। अथ सुप्रियं महा-सार्थवाहं सूपस्थितस्मृतिं ताः किन्नरकन्याः सर्वाङ्गैरनुपरिगृह्य सौवर्णं किन्नरनगरं प्रवेश्य
20 प्रासादमभिरोप्य प्रज्ञप्त एवासने निषादयन्ति। निषण्णः सुप्रियो महासार्थवाहो दश-कुशलान् कर्मपथान् विगर्हति, दश कुशलान् कर्मपथान् संवर्णयति, सुबह्वपि प्रलोभ्यमानो न शक्यते स्खलयितुम्। तुष्टाश्च ताः किन्नरकन्याः कथयन्ति—आश्चर्यं यत्रेदानीं दहरश्च भवान् धर्मकामश्च। न च कामेषु सज्जसे वा बध्यसे वा। प्रभूतैश्च रत्नैश्च प्रवारयन्ति। धर्मदेशना-वर्जिताश्च एकं सौभासिनिकं रत्नमनुप्रयच्छन्ति। ततः सुप्रियो महासार्थवाहस्तस्य रत्नस्य
25 प्रभावान्वेषी कथयति—अस्य रत्नस्य भगिन्यः कोऽनुभाव इति। ताः कथयन्ति—यत्खुल सार्थ-वाह जानीयाः—तदेव पोषधे पञ्चदश्यां शिरःस्नात उपोषधोषित इदं मणिरत्नं ध्वजाग्रे आरोप्य योजनसहस्रं सामन्तकेन यो येनार्थी भवति हिरण्येन वा सुवर्णेन वा अन्नेन वा वस्त्रेण वा पानेन वा अलंकारविशेषेण वा द्विपादेन वा चतुष्पादेन वा यानेन वा वाहनेन वा धनेन वा धान्येन वा, स चित्तमुत्पादयतु, वाचं च निश्चारयतु। सहचित्तोत्पादाद् वाग्निश्चारणेन
30 यथेप्सिताश्चोपकरणविशेषा आकाशादवतरिष्यन्ति। अयमस्य रत्नस्यानुभावः। अथ सुप्रियो
C 117 महासार्थवाहस्ताः किन्नरकन्या धर्म्यया कथया संदर्श्य समादाप्य समुत्तेज्य संप्रहर्ष्य मातृ-भगिनीदुहितृवत् प्रतिसंमोद्य सौवर्णात् किन्नरनगरात् प्रतिनिष्क्रान्तः। अद्राक्षीत् सुप्रियो

महासार्थवाहो रूप्यमयं किन्नरनगरमारामसंपन्नं वनसंपन्नं पुष्करिणीसंपन्नम्। तत्रापि सुप्रियेण सार्थवाहेन त्रिकोटिते द्वारेऽष्टौ किन्नरकन्या निर्गताः। ता अप्येवमाहुः—एतु महासार्थवाहः। स्वागतं महासार्थवाहाय। अस्माकमस्वामिकानां स्वामी भव, पूर्ववद्यावत्ताभिरपि धर्मदेशनावर्जिताभिस्तद्विशिष्टतरं द्विसाहस्रयोजनवर्षकं मणिरत्नमनुप्रदत्तम्। तत्रापि सुप्रियो महासार्थवाहस्ताः किन्नरकन्या धर्म्यया कथया संदर्श्य समादाप्य समुत्तेज्य संप्रहर्ष्य मातृभगिनीदुहितृवत् प्रतिसंमोद्य रूप्यमयात् किन्नरनगरात् प्रतिनिष्क्रान्तो यावत् तृतीयं वैडूर्यमयं किन्नरनगरमनुप्राप्तः। तत्रापि सुप्रियेण सार्थवाहेन त्रिकोटिते द्वारे षोडश किन्नरकन्या निर्गताः, तासां पूर्विकानामन्तिकादभिरूपतराश्च प्रासादिकतराश्च। ता अपि धर्मदेशनावर्जितास्तत एव विशिष्टतरं सौभासिनिकं त्रिसाहस्रयोजनिकं रत्नमनुप्रयच्छन्ति। ततः सुप्रियो महासार्थवाहस्तस्य रत्नस्य प्रभावान्वेषी कथयति—अस्य रत्नस्य भगिन्यः कोऽनुभाव इति? किन्नरकन्याः कथयन्ति—पूर्ववत्। सुप्रियो महासार्थवाहस्ताः किन्नरकन्या धर्म्यया कथया संदर्श्य समादाप्य समुत्तेज्य संप्रहर्ष्य मातृभगिनीदुहितृवत् प्रतिसंमोद्य तृतीयात् किन्नरनगरात् प्रतिनिष्क्रान्तः। अद्राक्षीत् सुप्रियो महासार्थवाहश्चतुर्थं चतूरत्नमयं किन्नरनगरमारामोद्यानप्रासाददेवकुलपुष्करिणीतडागसुविभक्तरथ्यावीथीचत्वरशृङ्गाटकान्तरापणसुरचितगन्धोज्ज्वलं नानागीतवादितयुवतिमधुरस्वरवज्रवैडूर्यशातकुम्भमयप्राकारतोरणोपशोभितम्। द्वारं त्रिराकोटयति। ततः सुप्रियेण सार्थवाहेन त्रिराकोटिते द्वारे द्वात्रिंशत् किन्नरकन्या निर्गताः, तासां पूर्विकाणामन्तिकादभिरूपतराश्च दर्शनीयतराश्चाप्सरसःप्रतिस्पर्धिन्यः शतसहस्रशोभिताः। ता अप्येवमाहुः—एतु महासार्थवाहः। स्वागतं महासार्थवाहाय। अस्माकमस्वामिकानां स्वामी भव, अपतीनां पतिरलयनानां लयनोऽद्वीपानां द्वीपोऽशरणानां शरणोऽत्राणानां त्राणोऽपरायणानां परायणः। इमानि च तेऽन्नगृहाणि पानगृहाणि वस्त्रगृहाणि शयनगृहाण्यारामरमणीयानि वनरमणीयानि पुष्करिणीरमणीयानि। प्रभूतानि च जाम्बुद्वीपकानि रत्नानि, तद्यथा—मणयो मुक्ता वैडूर्यशङ्खशिलाप्रवालरजतं जातरूपमश्मगर्भो मुसारगल्वो लोहितिका दक्षिणावर्ताः। एतानि च ते वयं च। अस्माभिः सार्धं क्रीडस्व रमस्व परिचारयस्व। तत्रापि सुप्रियो महासार्थवाहः सूपस्थितस्मृतिस्ताः किन्नरकन्या विविधैर्धर्मपदव्यञ्जनैः परितोषयामास। तुष्टाश्च ताः किन्नरकन्याः सुप्रियं महासार्थवाहं सर्वाङ्गैरनुपरिगृह्य चतूरत्नमयं किन्नरनगरमनुप्रवेश्य प्रासादमभिरोप्य प्रज्ञप्त एवासने निषादयन्ति। निषण्णः सुप्रियो महासार्थवाहो दशाकुशलान् कर्मपथान् विगर्हति, दश कुशलान् कर्मपथान् संवर्णयति, सुबह्वपि प्रलोभ्यमानो न शक्यते स्खलयितुम्। तुष्टाश्च ताः किन्नरकन्याः कथयन्ति—आश्चर्यं यत्रेदानीं दहरश्च भवान् धर्मकामश्च। न च कामेषु सज्जसे वा बध्यसे वा। प्रभूतैश्च रत्नैः प्रवारयन्ति। ता अपि धर्मदेशनावर्जिताः सौभासिनिकं जाम्बुद्वीपप्रधानमनर्घ्येयमूल्यमनन्तगुणप्रभावं बदरद्वीपमहापत्तने सर्वस्वभूतं रत्नमनुप्रयच्छन्ति। एवं च कथयन्ति—इदमस्माकं महासार्थवाह मणिरत्नं बदरेण भ्रात्रा किन्नरराज्ञा अनुप्रदत्तम्, अस्मिन् बदरद्वीपमहापत्तने

5 10 15 C 118 20 25 30

चिह्नभूतमालक्ष्यभूतं मण्डनभूतं च। ततः सुप्रियो महासार्थवाहः कथयति—अस्य रत्नस्य कोऽनुभाव इति? ताः कथयन्ति—यत्खलु महासार्थवाह जानीयाः—इदं मणिरत्नं तदेव पोषधोषितो ध्वजाग्रे बद्ध्वा आरोप्य कृत्स्ने जम्बुद्वीपे घण्टावघोषणं करणीयम्—शृण्वन्तु भवन्तो जम्बुद्वीपनिवासिनः स्त्रीमनुष्याः, युष्माकं यो येनार्थी उपकरणविशेषेण हिरण्येन वा (C 119) 5 सुवर्णेन वा रत्नेन वा अन्नेन वा पानेन वा वस्त्रेण वा भोजनेन वा अलंकारविशेषेण वा द्विपदेन वा चतुष्पदेन वा वाहनेन वा यानेन वा धनेन वा धान्येन वा, स चित्तमुत्पादयतु, वचनं च निश्चारयतु। सहचित्तोत्पादाद्वाग्निश्चारणेन च यथेप्सिताश्चोपकरणविशेषा अस्य रत्नस्यानुभावादाकाशादवतरिष्यन्ति। अयं तु प्रतिविशेषः—यानि चास्य लोकस्य भवन्ति महाभयानि, तद्यथा—राजतो वा चौरतो वा अग्नितो वा उदको वा मनुष्यतो वा अमनुष्यतो 10 वा सिंहतो वा व्याघ्रतो वा द्वीपतरक्षुतो वा यक्षराक्षसप्रेतपिशाचकुम्भाण्डपूतनकटपूतनतो वा, ईतयोपद्रवो वा, उपसर्गो वा, अनावृष्टिर्वा दुर्भिक्षभयानि वा, अस्मिन्नुच्छ्रिते रत्नविशेषे इम ईतयोपद्रवा न भविष्यन्ति। इत्युक्त्वा ताः किन्नरकन्याः सुप्रियं महासार्थवाहं संराधयामासुः—साधु साधु महासार्थवाह, निस्तीर्णानि महासमुद्रपर्वतनदीकान्ताराणि। पूरिता ते दृढसुप्रतिज्ञा। सफलीकृता ते श्रद्धा। ते गोपितानीन्द्रियाणि। साधिता बदरद्वीपमहापत्तन-15 यात्रा। अधिगतं ते सर्वजनमनोरथसंपादकं जम्बुद्वीपप्रधानं रत्नविशेषम्। अपि तु येन त्वं पथेनागतः, अमनुष्यास्तावत् प्रलयं गच्छेयुः प्रागेव मनुष्याः। अन्यदेव वयं सन्मार्गं व्यपदेक्ष्यामः क्षिप्रं वाराणसीगमनाय। तच्छृणु, मनसि कुरु, भाषिष्यामः—इतः पश्चिमे दिग्भागे सप्त पर्वतानतिक्रम्य महापर्वत उच्चः। तस्मिन् पर्वते लोहिताक्षो नाम राक्षसः प्रतिवसति रौद्रः परप्राणहरः। स च पर्वतोऽमनुष्यावचरितः कृष्णमन्धकारं सविस्फुलिङ्गं 20 वायुं मोक्ष्यति। तत्र ते एतदेव रत्नं ध्वजाग्रेऽवरोपयित्वा गन्तव्यम्। रत्नप्रभावाच्च ते ईतयो विलयं गमिष्यन्ति। महापर्वतमतिक्रम्य अपरपर्वतः। तस्मिन् पर्वतेऽग्निमुखो नागः प्रतिवसति। स तव गन्धमाघ्राय सप्त रात्रिंदिवसान्यशनिं पातयिष्यति। तत्र रत्नगुहां समन्विष्य प्रवेष्टव्यम्। (C 120) सप्तरात्रस्य चात्ययाद्दुष्टनागः स्वपिष्यति। शयिते दुष्टनागे पर्वतमधिरोढव्यम्। तत्र द्रक्ष्यसि समं भूमिप्रदेशमकृष्टोप्तं च तण्डुलफलशालिमकणकमतुषं शुचिं निस्फुटिगन्धिकं चतु-25 रङ्गुलपर्यवनद्धम्। यस्तमष्टम्यां पञ्चदश्यां वा बालाहोऽश्वराजः परिभुज्य सुखी अरोगो बलवान् प्रीणितेन्द्रियः पूर्वकायमभ्युन्नमय्योदानमुदानयति—कः पारगामी, कः पारगामी, कं पारं नयामि, स्वस्तिक्षेमाभ्यां जम्बुद्वीपमनुप्रापयामि, स त्वयोपसंक्रम्य इदं स्याद्वचनीयम्—अहं पारगामी, मां पारं नय, मां स्वस्तिक्षेमाभ्यां वाराणसीमनुप्रापय। अथ स सुप्रियो महासार्थवाहस्ताः किन्नरकन्या धर्म्यया कथया संदर्श्य समादाप्य समुत्तेज्य संप्रहर्ष्य मातृदुहितृवत् 30 प्रतिसंमोद्य यथोद्दिष्टेन मार्गेण यथोक्तेन विधिना अनुपूर्वेण तं भूमिप्रदेशमनुप्राप्तः। स च बालाहोऽश्वराजश्चरन्नेवमाह—कः पारगामी, कः पारगामी, कं पारं नयामि, स्वस्तिक्षेमाभ्यां जम्बुद्वीपमनुप्रापयामि? ततः सुप्रियो महासार्थवाहो येन बालाहोऽश्वराजस्तेनोपसंक्रान्तः।

उपसंक्रम्य एकांसमुत्तरासङ्गं कृत्वा दक्षिणं जानुमण्डलं पृथिव्यां प्रतिष्ठाप्य येन बालाहोऽश्वराजस्तेनाञ्जलिं प्रणम्य बालाहमश्वराजमिदवोचत्—अहं पारगामी, अहं पारगामी, नय माम्। स्वस्तिक्षेमाभ्यां वाराणसीमनुप्रापय। एवमुक्ते बालाहोऽश्वराजः सुप्रियं महासार्थवाहमिदमवोचत्—न ते महासार्थवाह मम पृष्ठाधिरूढेन दिशो नावलोकयितव्याः, निमीलिताक्षेण ते स्थेयम्। इत्युक्त्वा बालाहोऽश्वराजः पृष्ठमुपनामयति। अथ सुप्रियो महासार्थवाहो बालाहस्याश्वराजस्य पृष्ठमधिरुह्य यथानुशिष्टोऽल्पैश्च क्षणलवमुहूर्तैर्वाराणसीमनुप्राप्तः। स्व उद्यानेऽवतरितः। अवतीर्य सुप्रियो महासार्थवाहो बालाहाश्वराजपृष्ठाद्बालाहाश्वराजं त्रिप्रदक्षिणीकृत्य पादाभिवन्दनं करोति। ततो बालाहोऽश्वराजः सुप्रियं महासार्थवाहं संराधयामास—साधु साधु महासार्थवाह। निस्तीर्णानि ते महासमुद्रपर्वतनदीकान्ताराणि। पूरिता ते दृढप्रतिज्ञा। सफलीकृतस्तेऽध्वा। गोपितानीन्द्रियाणि। साधिता ते बदरद्वीपमहापत्तनयात्रा। अधिगतस्ते सर्वजनमनोरथसंपादको जम्बुद्वीपस्य प्रधानो रत्नविशेषः। एवं हि परहितार्थमभ्युद्यताः कुर्वन्ति सत्त्वविशेषाः। इत्युक्त्वा बालाहोऽश्वराजः प्रक्रान्तः। अथाचिरप्रक्रान्ते बालाहेऽश्वराजनि सुप्रियो महासार्थवाहः स्वगृहं प्रविष्टः। अश्रौषुर्वाराणसीनिवासिनः पौरा ब्रह्मदत्तश्च काशिराजः—सुप्रियो महासार्थवाहः पूर्णेन वर्षशतेन संसिद्धयात्रः पूर्णमनोरथः स्वगृहमनुप्राप्त इति। श्रुत्वा च पुनर्ब्रह्मदत्तः काशिराज आनन्दितः। पौरवर्गः सुप्रियं सार्थवाहं संराधयामास। अश्रौषीत् तत् पूर्वकं चौरसहस्रमन्यश्च जनो धनार्थी—सुप्रियो महासार्थवाहः संसिद्धयात्रः परिपूर्णमनोरथ आगत इति। श्रुत्वा च पुनरुपसंक्रम्य सुप्रियं महासार्थवाहमिदमवोचन्—परिक्षीणधनाः स्म इति। एवमुक्ते महासार्थवाहस्तान् सर्वान् मैत्रेण चक्षुषा व्यवलोक्य विज्ञापयति—गच्छतु भवन्तः स्वकस्वकेषु विजितेषु। यो येनार्थी उपकरणविशेषेण भवति, स तस्यार्थे चित्तमुत्पादयतु, वाचं च निश्चारयतु। श्रुत्वा च पुनः प्रक्रान्तः। अथ सुप्रियो महासार्थवाहस्तदेव पोषधे पञ्चदश्यां शिरःस्नात उपोषधोषितो यत्तत्प्रथमलब्धं मणिरत्नं ध्वजाग्रे आरोप्य वाचं च निश्चारयति, योजनसहस्रसामन्तकेन यथेप्सितानि सत्त्वानामुपकरणान्युत्पद्यन्ते, सहाभिधानच्च यो येनार्थी तस्य तद्वर्षं भवति। ततः परिपूर्णमनोरथास्ते सत्त्वाः। तच्चौरसहस्रं सुप्रियेण महासार्थवाहेन दशसु कुशलेषु कर्मपथेषु प्रतिष्ठापितः॥

अत्रान्तरात् कालगते ब्रह्मदत्ते काशिराजनि पौरामात्यैः सुप्रियो महासार्थवाहो राजाभिषेकेणाभिषिक्तः। सहाभिषिक्तेन सुप्रियेण महाराज्ञा द्वितीयं मणिरत्नं ध्वजाग्रे आरोप्य पूर्वविधिना द्वियोजनसहस्रसामन्तकेन यथेप्सितानि सत्त्वानामुपकरणान्युत्पद्यन्तामिति सहाभिधानाच्च यो येनार्थी तस्य तद्वर्षति। तृतीयेन मणिरत्नेन यथोक्तेन विधिना ध्वजाग्रोच्छ्रितेन यथेप्सितोपकरणविशेषवर्षणानि संपन्नानि। एवं त्रियोजनसहस्रसामन्तकेनोपकरणैः स्त्रीमनुष्याः संतर्पिताः। ततोऽनुपूर्वेण जम्बुद्वीपैश्वर्यभूतेन सुप्रियेण महाराज्ञा तदेव पोषधे पञ्चदश्यां शिरःस्नातेनोपोषधोषितेन कृत्स्ने जम्बुद्वीपे घण्टावघोषणं कृत्वा उपकरणोत्पन्नाभिलाषिणां स्त्रीमनुष्याणां जम्बुद्वीपनिवासिनां यन्मणिरत्नं बदरद्वीपमहापत्तनसर्वस्वभूतं यथेप्सितं

सर्वोपकरणवर्षिणं ध्वजाग्रे आरोपयामास । समनन्तरं ध्वजाग्रावरोपिते तस्मिन् जम्बुद्वीपप्रधानमणिरत्ने कृत्स्नो जम्बुद्वीपनिवासी महाजनकायो यथेप्सितैरुपकरणविशेषैः संतर्पितः । उपकरणसंतर्पितश्च जम्बुद्वीपनिवासी जनकायः सुप्रियेण राज्ञा दशसु कुशलेषु कर्मपथेषु प्रतिष्ठापितः । ततो ज्येष्ठं कुमारं राज्यैश्वर्याधिपत्ये प्रतिष्ठाप्य राजर्षिर्ब्रह्मचर्यं चरित्वा चतुरो 5 ब्राह्मान् विहारान् भावयित्वा कामेषु कामच्छन्दं प्रहाय तद्बहुलविहारी ब्रह्मलोकसभागतायां चोपपन्नो महाब्रह्मा संवृत्तः ॥

भगवानाह—किं मन्यध्वे भिक्षवो योऽसौ सुप्रियो नाम महासार्थवाहः, अहमेव तेन कालेन तेन समयेन बोधिसत्त्वचर्यायां वर्तितवान् । यत्तचौरसहस्रम्, एतदेव भिक्षुसहस्रम् । या सा पूर्वदेवता, काश्यपः सम्यक्संबुद्धो बोधिसत्त्वभूतः स तेन कालेन तेन 10 समयेन । यश्चासौ मघो महासार्थवाहः, एष एव शारिपुत्रो भिक्षुः स तेन कालेन तेन समयेन । यश्चासौ नीलादो नाम महायक्षः, एष एवानन्दो भिक्षुस्तेन कालेन तेन समयेन । यश्चासौ चन्द्रप्रभो यक्षः, एष एवानिरुद्धो भिक्षुः स तेन कालेन तेन समयेन । यश्चासौ लोहिताक्षो नाम महायक्षः, स एष एव देवदत्तस्तेन कालेन तेन समयेन । यश्चासौ अग्निमुखो नाम नागः, एष एव मारः पापीयान् स तेन कालेन तेन समयेन । यश्चासौ 15 बालाहोऽश्वराजः, मैत्रेयो बोधिसत्त्वस्तेन कालेन तेन समयेन । तदा तावन्मया भिक्षवो दृढप्रतिज्ञेन प्रतिज्ञापूरणार्थं सप्तवारांश्चौरसहस्रात् सार्थः परित्रातः । अपरितुष्टांश्च चौरान् विदित्वा दृढप्रतिज्ञा कृता । कृत्वा चानेकैर्दुष्करशतसहस्रैर्बदरद्वीपमहापत्तनस्य यात्रां साधयित्वा चौरसहस्रप्रमुखं कृत्स्नं जम्बुद्वीपं धनेन संतर्पयित्वा दशसु कुशलेषु कर्मपथेषु प्रतिष्ठापितः । इदानीमपि मया अनेकैर्दुष्करशतसहस्रैरनुत्तरं ज्ञानमधिगम्य मैत्रायता 20 करुणया सप्तकृत्वश्चौरसहस्रसकाशात् सार्थः परित्रातः । अपरितुष्टं च चौरसहस्रं विदित्वा यावदाप्तं धनेन संतर्पयित्वा अत्यन्तनिष्ठेऽनुत्तरे योगक्षेमे निर्वाणे प्रतिष्ठापिताः । अनेकानि च देवमनुष्यशतसहस्राणि यक्षराक्षसप्रेतपिशाचकुम्भाण्डपूतनकटपूतनकोटिशतसहस्राणि शरणगमनशिक्षापदेषु प्रतिष्ठापितानि ॥

C 123

इदमवोचद्भगवान् । आत्तमनसस्ते भिक्षवो भगवतो भाषितमभ्यनन्दन् ॥

25 इति श्रीदिव्यावदाने सुप्रियावदानमष्टमम् ॥



## ९ मेण्ढकगृहपतिविभूतिपरिच्छेदः ।

श्रावस्त्यां निदानम् । तेन खलु समयेन भद्रंकरे नगरे षड् जना महापुण्याः प्रतिवसन्ति—मेण्ढको गृहपतिः मेण्ढकपत्नी मेण्ढकपुत्रो मेण्ढकस्नुषा मेण्ढकदासो मेण्ढकदासी । कथं मेण्ढको गृहपतिर्ज्ञातो महापुण्यः ? स यदि रिक्तकानि कोशकोष्ठागाराणि पश्यति, सहदर्शनादेव पूर्यन्ते । एवं मेण्ढको गृहपतिर्ज्ञातो महापुण्यः । कथं मेण्ढकपत्नी ? सा एकस्यार्थाय स्थालिकां साधयति, शतानि सहस्राणि च भुञ्जते । एवं मेण्ढकपत्नी । कथं मेण्ढकपुत्रः ? तस्य पञ्चशतिको नकुलको कट्यां बद्धस्तिष्ठति । स यदि शतं सहस्रं वा परित्यजति, तदा पूर्ण एव तिष्ठति, न परिक्षीयते । एवं मेण्ढकपुत्रः । कथं मेण्ढकस्नुषा ? सा एकस्यार्थाय गन्धं संपादयति, शतसहस्रस्य पर्याप्तिर्भवति । एवं मेण्ढकस्नुषा । कथं मेण्ढकदासः ? स यदैकं हलसीरं कृषति, तदा सप्त सीराः कृष्टा भवन्ति । एवं मेण्ढकदासः । कथं मेण्ढकदासी महापुण्या ? सा यदैकं वस्तु रक्षति, तत्सप्तगुणं स्यात् । यदा एकमात्रं प्रतिजागर्ति, तदा सप्त मात्राः संपद्यन्ते । एवं मेण्ढकदासी महापुण्या ॥

धर्मता खलु बुद्धानां भगवतां महाकारुणिकानां लोकानुग्रहप्रवृत्तानामेकारक्षाणां शमथविपश्यनाविहारिणां त्रिदमथवस्तुकुशलानां चतुरोघोत्तीर्णानां चतुर्ऋद्धिपादचरणतलसुप्रतिष्ठितानां चतुर्षु संग्रहवस्तुषु दीर्घरात्रकृतपरिचयानां पञ्चाङ्गविप्रतिहीणानां पञ्चगतिसमतिक्रान्तानां षडङ्गसमन्वागतानां षट्पारमितापरिपूर्णानां सप्तबोध्यङ्गकुसुमाढ्यानामष्टाङ्गमार्गदेशिकानां नवानुपूर्वसमापत्तिकुशलानां दशबलबलिनां दशदिक्समापूर्णयशसां दशशतवशवर्तिप्रतिविशिष्टानां त्री रात्रेस्त्रिर्दिवसस्य षट्कृत्वो रात्रिंदिवसस्य बुद्धचक्षुषा लोकं व्यवलोक्य ज्ञानदर्शनं प्रवर्तते—को हीयते, को वर्धते, कः कृच्छ्रप्राप्तः, कः संकटप्राप्तः, कः संबाधप्राप्तः, कः कृच्छ्रसंकटसंबाधप्राप्तः, कोऽपायनिम्नः, कोऽपायप्रवणः, कोऽपायप्राग्भारः, कमहमपायमार्गाद्व्युत्थाप्य स्वर्गफले मोक्षे च प्रतिष्ठापयेयम्, कस्य कामपङ्कनिमग्नस्य हस्तोद्धारमनुप्रदद्याम्, कमार्यधनविरहितमार्यधनैश्वर्याधिपत्ये प्रतिष्ठापयामि, कस्यानवरोपितानि कुशलमूलान्यवरोपयेयम्, कस्यावरोपितानि परिपाचयेयम्, कस्य पक्वानि विमोचयेयम्, कस्याज्ञानतिमिरपटलपर्यवनद्धनेत्रस्य ज्ञानाञ्जनशलाकया चक्षुर्विशोधयेयम् ।

अप्येवातिक्रमेद्वेलां सागरो मकरालयः ।<br>
न तु वैनेयवत्सानां बुद्धो वेलामतिक्रमेत् ॥ १ ॥<br>
सर्वज्ञसंतानानिवासिनी हि<br>
कारुण्यधेनुर्मृगयत्यखिन्ना ।<br>
वैनेयवत्सान् भवदुर्गनष्टान्<br>
वत्सान् प्रणष्टानिव वत्सला गौः ॥ २ ॥

भगवान् संलक्षयति—अयं मेण्ढको गृहपतिः सपरिवारो भद्रंकरे नगरे प्रतिवसति । तस्य वैनेयकालं पक्वमिव गण्डं शस्त्राभिनिपातमवेक्षते । यन्न्वहं भद्रंकरेषु जनपदेषु चारिकां

चरेयम् । तत्र भगवानायुष्मन्तमानन्दमामन्त्रयते–गच्छ त्वमानन्द, भिक्षूणामारोचय–तथागतो भिक्षवो भद्रंकरेषु जनपदेषु चारिकां चरिष्यति । यो युष्माकमुत्सहते तथागतेन सार्धं भद्रंकरेषु जनपदेषु चारिकां चर्तुम्, स चीवरकाणि प्रतिगृह्णातु इति । एवं भदन्तेत्यायुष्मानानन्दो भगवतः प्रतिश्रुत्य भिक्षूणामारोचयति–तथागत आयुष्मन्तो भद्रंकरेषु जनपदेषु 5 चारिकां चरिष्यति । यो युष्माकमुत्सहते तथागतेन सार्धं भद्रंकरेषु जनपदेषु चारिकां चरितुम्, स चीवरकाणि प्रतिगृह्णातु इति । एवमायुष्मन्निति ते भिक्षव आयुष्मत आनन्दस्य प्रतिश्रुत्य पृष्ठतः पृष्ठतः समनुबद्धा गच्छन्ति ॥

अथ भगवान् दान्तो दान्तपरिवारः शान्तः शान्तपरिवारो मुक्तो मुक्तपरिवार आश्वस्त आश्वस्तपरिवारो विनीतो विनीतपरिवारोऽर्हन्नर्हत्परिवारो वीतरागो वीतरागपरिवारः 10 प्रासादिकः प्रासादिकपरिवारः, वृषभ इव गोगणपरिवृतः, सिंह इव दंष्ट्रगणपरिवारः, हंसराज इव हंसगणपरिवृतः, सुपर्ण इव पक्षिगणपरिवृतः, विप्र इव शिष्यगणपरिवृतः, सुवैद्य इवातुरगणपरिवृतः, शूर इव योधगणपरिवृतः, देशिक इवाध्वगणपरिवृतः, सार्थवाह इव वणिग्गणपरिवृतः, श्रेष्ठीव पौरजनपरिवृतः, कोट्टराज इव मन्त्रिगणपरिवृतः, चक्रवर्तीव पुत्रसहस्रपरिवृतः, चन्द्र इव नक्षत्रगणपरिवृतः, सूर्य इव रश्मिसहस्रपरिवृतः, धृतराष्ट्र इव 15 गन्धर्वगणपरिवृतः, विरूढक इव कुम्भाण्डगणपरिवृतः विरूपाक्ष इव नागगणपरिवृतः, धनद इव यक्षगणपरिवृतः, वेमचित्तिरिवासुरगणपरिवृतः, शक्र इव त्रिदशगणपरिवृतः, ब्रह्मेव ब्रह्मकायिकपरिवृतः, स्तिमित इव जलनिधिः, सजल इव जलनिधिः, विमद इव गजपतिः, सुदान्तैरिन्द्रियैरसंक्षोभितेर्यापथप्रचारो द्वात्रिंशता महापुरुषलक्षणैरशीत्यानुव्यञ्जनैर्विराजितगात्रो दशभिर्बलैश्चतुर्भिर्वैशारद्यैस्त्रिभिः स्मृत्युपस्थानैर्महाकरुणया च । एवमनेकगुणगण- 20 समन्वागतो बुद्धो भगवान् जनपदचारिकया भद्रंकरं नगरं संप्रस्थितः । यदा भगवता श्रावस्त्यां महाप्रातिहार्यं विदर्शितम्, निर्भर्त्सिता आनन्दिता देवमनुष्याः, तोषितानि सज्जनहृदयानि, तदा भग्नप्रभावास्तीर्थ्याः प्रत्यन्तान् संश्रिताः । ततः केचिद्भद्रंकरं नगरं गत्वा अवस्थिताः । तैः श्रुतं श्रमण गौतम आगच्छतीति । श्रुत्वा च पुनर्व्यथितास्ते परस्परं कथयन्ति–पूर्वं तावद्वयं श्रमणेन गौतमेन मध्यदेशान्निर्वासिताः । स यदीहागमिष्यति, नियतमितोऽपि 25 निर्वासयिष्यति । तदुपायसंविधानं कर्तव्यमिति । ते कुलोपकरणशाला उपसंक्रम्य कथयन्ति–धर्मलाभो धर्मलाभः । ते कथयन्ति–किमिदम् ? अवलोकिता गमिष्यामः । कस्यार्थाय ? दृष्टा अस्माभिर्युष्माकं संपत्तिः, यावद्विपत्तिं न पश्यामः । आर्यकाः, अस्माकं विपत्तिर्भविष्यति । भवन्तः, श्रमणो गौतमः क्षुराशनिं पातयन्ननेका अपुत्रिका अपतिकाश्च कुर्वन्नागच्छति । आर्याः, यद्येवम्, यस्मिन्नेव काले स्थातव्यं तस्मिन्नेव कालेऽस्माकं परित्यागः क्रियते । 30 तिष्ठत, न गन्तव्यम् । ते कथयन्ति–किं वयं न तिष्ठामः ? न यूयमस्माकं श्रोष्यथ । आर्याः कथयत, श्रोष्यामः । ते कथयन्ति–भद्रंकरसामन्तकेन सर्वजनकायमुद्वास्य भद्रंकरं नगरं प्रवासयत । शाद्वलानि कृषत । स्थण्डिलानि पातयत । पुष्पफलवृक्षं छेदयत । पानीयानि

C 126 C 127

विषेण दूषयत। ते कथयन्ति—आर्याः, तिष्ठत, सर्वमनुतिष्ठाम इति। तेऽवस्थिताः। ततस्तै-र्भद्रंकरनगरसामन्तकेन सर्वो जनकाय उद्वास्य भद्रंकरं नगरं प्रवासितः, शाद्वलानि कृष्टानि, स्थण्डिलानि पातितानि, पुष्पफलवृक्षाश्छिन्नाः, पानीयानि विषदूषितानि। ततः शक्रो देवेन्द्रः संलक्षयति—न मम प्रतिरूपं यदहं भगवतोऽसत्कारमध्युपेक्षेयम्। येन नाम भगवता त्रिभिः कल्पासंख्येयैरनेकैः दुष्करशतसहस्रैः षट् पारमिताः परिपूर्यानुत्तरज्ञानमधिगतम्, 5 स नाम भगवान् सर्वलोकप्रतिविशिष्टः सर्ववादविजयी शून्ये जनपदे चारिकां चरिष्यति। यन्न्वहं भगवतः सश्रावकसंघस्य सुखस्पर्शार्थाय औत्सुक्यमापद्येयमिति। तेन वातबला-हकानां देवपुत्राणामाज्ञा दत्ता—गच्छत भद्रंकरनगरसामन्तकेन, विषपानीयानि शोषयत इति। वर्षवलाहकानां देवपुत्राणामाज्ञा दत्ता—अष्टाङ्गोपेतस्य पानीयस्यापूर्यतेति। चातुर्महाराजिका देवा उक्ताः—यूयं भद्रंकराणां जनपदानां वासयतेति। ततो वातबलाहकैर्देवपुत्रैर्विषदूषितानि 10 पानीयानि [शोषितानि], वर्षवलाहकैस्तान्येव कूपोदपानवापीसरस्तडागान्यष्टाङ्गोपेतस्य पानीयस्य पूरितानि। चातुर्महाराजिकैर्देवैर्भद्रंकरनगरसामन्तकं सर्वमावासितम्। जनपदा ऋद्धाः स्फीताः संवृत्ताः। तीर्थ्यैर्नगरजनकायसमेतैरवचरकाः प्रेषिताः—गत्वा पश्यत कीदृशा जनपदा इति। ते गताः पश्यन्त्यतिशयेन जनपदान् ऋद्धान् स्फीतान्। तत आगत्य कथ-यन्ति—भवन्तः, न कदाचिदस्माभिरेवंरूपा जनपदा ऋद्धाः स्फीता दृष्टपूर्वा इति। तीर्थ्याः 15 कथयन्ति—भवन्तः, यो यस्तावदचेतनान् भावानन्वावर्तयति, स युष्मान्नान्वावर्तयिष्यतीति? C 128 कुत एतत्? सर्वथा अवलोकिता भवन्तः, अपश्चिमं वो दर्शनम्, गच्छाम इति। ते कथ-यन्ति—आर्याः, तिष्ठत, किं युष्माकं श्रमणो गौतमः करोति? सोऽपि प्रव्रजितः, यूयमपि प्रव्रजिता भिक्षाचराः। किमसौ युष्माकं भिक्षां चरिष्यतीति? तीर्थ्याः कथयन्ति—समयेन तिष्ठामो यदि यूयं क्रियाकारं कुरुत—न केनचिच्छ्रमणं गौतमं दर्शनायोपसंक्रमितव्यम्। य 20 उपसंक्रामति, स षष्टिकार्षापणो दण्ड्य इति। तैः प्रतिज्ञातं क्रियाकारश्च कृतः॥

ततो [भगवान्] जनपदचारिकां चरन् भद्रंकरं नगरमनुप्राप्तः। भद्रंकरे नगरे विहरति दक्षिणायतने। तेन खलु समयेन कपिलवस्तुनो ब्राह्मणदारिका भद्रंकरे नगरे परिणीता। तया प्राकारस्थया भगवानन्धकारे दृष्टः। सा संलक्षयति—अयं भगवान् शाक्यकुलनन्दनः शाक्यकुलाद्राज्यमपहाय प्रव्रजितः। स इदानीमन्धकारे तिष्ठति। यद्यत्र सोपानं स्यात्, 25 अहं प्रदीपमादायावतरेयमिति। ततो भगवता तस्याश्चेतसा चित्तमाज्ञाय सोपानं निर्मितम्। ततो हृष्टतुष्टप्रमुदिता प्रदीपमादाय सोपानेनावतीर्य येन भगवांस्तेनोपसंक्रान्ता। उपसंक्रम्य भगवतः पुरस्तात् प्रदीपं स्थापयित्वा पादौ शिरसा वन्दित्वा निषण्णा धर्मश्रवणाय। ततो भगवता तस्या आशयानुशयं धातुं प्रकृतिं च ज्ञात्वा तादृशी चतुरार्यसत्यसंप्रतिवेधिकी पूर्ववद्यावच्छरणगतामभिप्रसन्नामिति। अथ भगवांस्तां दारिकामिदमवोचत्—एहि त्वं दारिके 30 येन मेण्ढको गृहपतिस्तेनोपसंक्रम, उपसंक्रम्यैवं मद्वचनादारोग्यापय, एवं च वद—गृहपते, त्वामुद्दिश्याहमिहागतः, त्वं च द्वारं बद्ध्वा स्थितः। युक्तमेतदेवमतिथेः प्रतिपत्तुं यथा त्वं

प्रतिपन्न इति ? यदि कथयति—गणेन क्रियाकारः कृत इति, वक्तव्यः—तव पुत्रस्य पञ्चशतिको नकुलकः कट्यां बद्धस्तिष्ठति। स यदि शतं वा सहस्रं वा व्ययीकरोति, पूर्यत एव, न परिक्षीयते। न शक्नोषि षष्टिकार्षापणं दत्त्वा आगन्तुमिति ? एवं भदन्तेति सा दारिका भगवतः प्रतिश्रुत्य संप्रस्थिता। यथापरिज्ञातैव केनचिदेव मेण्ढकस्य गृहपतेः सकाशं गता। गत्वा च कथयति—गृहपते भगवांस्त्व आरोग्ययति। स कथयति—वन्दे बुद्धं भगवन्तम्। गृहपते, भगवानेवमाह—त्वामेवाहमुद्दिश्यागतः, त्वं च द्वारं बद्ध्वा अवस्थितः। युक्तमेतदेवमतिथेः प्रतिपत्तुं यथा त्वं प्रतिपन्न इति ? स कथयति—दारिके, गणेन क्रियाकारः कृतः—न केनचिच्छ्रमणं गौतमं दर्शनाय उपसंक्रमितव्यम्। य उपसंक्रामति, स गणेन षष्टिकार्षापणो दण्ड्य इति। गृहपते, भगवान् कथयति—तव पुत्रस्य पञ्चशतिको नकुलकः कट्यां बद्धस्तिष्ठति। स यदि शतं वा सहस्रं वा व्ययीकरोति, पूर्यत एव, न परिक्षीयते। न शक्नोषि त्वं षष्टिकार्षापणं दत्वा आगन्तुमिति ? स संलक्षयति—न कश्चिदेतज्जानीते। नूनं सर्वज्ञः स भगवान्। गच्छामीति। स षष्टिकार्षापणान् द्वारे स्थापयित्वा ब्राह्मणदारिकोपदिष्टेन सोपानेनावतीर्य येन भगवांस्तेनोपसंक्रान्तः। उपसंक्रम्य भगवतः पादौ शिरसा वन्दित्वा भगवतः पुरस्तान्निषण्णो धर्मश्रवणाय। ततो भगवता मेण्ढकस्य गृहपतेराशयानुशयं धातुं प्रकृतिं च ज्ञात्वा तादृशी चतुरार्यसत्यसंप्रतिवेधिकी धर्मदेशना कृता, यां श्रुत्वा मेण्ढकेन गृहपतिना यावच्छ्रोतापत्तिफलं साक्षात्कृतम्। स दृष्टसत्यः कथयति—भगवन्, किमेषोऽपि भद्रंकरनगरनिवासी जनकाय एवंविधानां धर्माणां लाभीति ? भगवानाह—गृहपते, त्वामागम्य भूयसा सर्व एव जनकायो लाभीति। ततो मेण्ढको गृहपतिर्भगवतः पादौ शिरसा वन्दित्वा भगवतोऽन्तिकात् प्रक्रान्तः। स्वगृहं गत्वा नगरमध्ये कार्षापणानां राशिं व्यवस्थाप्य गाथां भाषते—

यो द्रष्टुमिच्छति जिनं जितरागदोषं
निर्बन्धमप्रतिसमं करुणावदातम्।
सोऽनिश्चरेण हृदयेन सुनिश्चितेन
क्षिप्रं प्रयातु धनमस्य मया प्रदेयम्॥ २ ॥ इति ॥

जनकायः कथयति—गृहपते, श्रेयः श्रमणस्य गौतमस्य दर्शनम् ? स कथयति—श्रेयः। ते कथयन्ति—यद्येवम्, गणेनैवं क्रियाकारः कृतो गण एव उद्घाटयतु। कोऽत्र विरोधः ? ते क्रियाकारमुद्घाट्य निर्गन्तुमारब्धाः। ततः परस्परं संघट्टनेन न शक्नुवन्ति निर्गन्तुमिति वज्रपाणिना यक्षेण विनेयजनानुकम्पया वज्रः क्षिप्तः। प्राकारस्य खण्डः पतितः। अनेकानि प्राणिशतसहस्राणि निर्गतानि, कानिचित् कुतूहलजातानि, कानिचित् पूर्वकैः कुशलमूलैः संचोद्यमानानि। ते गत्वा भगवतः पादाभिवन्दनं कृत्वा पुरतो निषण्णाः। यावद्भगवतः सामन्तकेन पर्षत् संनिपतिता। अथ भगवांस्तां पर्षदमभ्यवगाह्य पुरस्ताद्भिक्षुसंघस्य प्रज्ञप्त एवासने निषद्यानेकसत्त्वसंतानकुशलमूलसमारोपिकां धर्मदेशनां कृतवान्, यां

श्रुत्वा कैश्चिच्छ्रोतापत्तिफलं साक्षात्कृतम्, कैश्चिच्छरणगमनशिक्षापदानि गृहीतानि। भगवतोऽचि[तश्चि]रं धर्मं देशयतो भोजनकालोऽतिक्रान्तः। मेण्ढको गृहपतिः कथयति—भगवन् भक्तकृत्यं क्रियतामिति। भगवानाह—गृहपते, भोजनकालोऽतिक्रान्त इति। स कथयति—भगवन्, किमकाले कल्पते? भगवानाह—घृतगुडशर्करापानकानि चेति। ततो मेण्ढकेन गृहपतिना शिल्पिन आहूय उक्ताः—भगवतोऽकालखाद्यकानि शीघ्रं सज्जीकुरुतेति। 5 तैरकालकानि सज्जीकृतानि। ततो मेण्ढकेन गृहपतिना बुद्धप्रमुखो भिक्षुसंघोऽकालखाद्यकैरकालपानकैश्च संतर्पितः। ततो भगवान् मेण्ढकं गृहपतिं सपरिवारं सत्येषु प्रतिष्ठापितं कर्वटनिवासिनं जनकायं यथाभव्यतया विनीय प्रक्रान्तः॥

इदमवोचद्भगवान्। आत्तमनसस्ते भिक्षवो भगवतो भाषितमभ्यनन्दन्॥

इति श्रीदिव्यावदाने मेण्ढकगृहपतिविभूतिपरिच्छेदो नवमः॥ 10



## १० मेण्ढकावदानम् ।

C 131 भिक्षवः संशयजाताः सर्वसंशयच्छेत्तारं बुद्धं भगवन्तं पप्रच्छुः—किं भदन्त मेण्ढकेन मेण्ढकपत्न्या मेण्ढकपुत्रेण मेण्ढकस्नुषया मेण्ढकदासेन मेण्ढकदास्या कर्म कृतं येन षडभिज्ञाता महापुण्याः संवृत्ताः, भगवतोऽन्तिके सत्यानि दृष्टानि, भगवांश्चैभिरारागितो न विरा-
5 गित इति ? भगवानाह—एभिरेव भिक्षवः कर्माणि कृतान्युपचितानि लब्धसंभाराणि परिणतप्रत्ययानि ओघवत्प्रत्युपस्थितान्यवश्यंभावीनि । एभिः कर्माणि कृतान्युपचितानि । कोऽन्यः प्रत्यनुभविष्यति ? न भिक्षवः कर्माणि कृतान्युपचितानि बाह्ये पृथिवीधातौ विपच्यन्ते, नाब्धातौ, न तेजोधातौ, न वायुधातौ, अपि तूपात्तेष्वेव स्कन्धधात्वायतनेषु कर्माणि कृतानि विपच्यन्ते शुभान्यशुभानि च ।

10 न प्रणश्यन्ति कर्माणि कल्पकोटिशतैरपि ।
सामग्रीं प्राप्य कालं च फलन्ति खलु देहिनाम् ॥ १ ॥

भूतपूर्वं भिक्षवोऽतीतेऽध्वनि वाराणस्यां नगर्यां ब्रह्मदत्तो नाम राजा राज्यं कारयति ऋद्धं च स्फीतं च क्षेमं च सुभिक्षं च आकीर्णबहुजनमनुष्यं च प्रशान्तकलिकलहडिम्बडमरतस्करोगापगतं शालीक्षुगोमहिषीसंपन्नमखिलमकण्टकम् । एकपुत्रमिव राज्यं पालयति ।
15 तेन खलु समयेन वाराणस्यां नैमित्तिकैर्द्वादशवर्षिका अनावृष्टिर्व्याकृता । त्रिविधं दुर्भिक्षं भविष्यति—चञ्चु श्वेतास्थि शलाकावृत्ति च । तत्र चञ्चु उच्यते—समुद्गके तस्मिन् मनुष्या
C 132 बीजानि प्रक्षिप्य अनागते सत्त्वापेक्षया स्थापयन्ति । मृता नाम अनेन ते बीजकार्यं करिष्यन्तीति । इदं समुद्गकं बद्धा चञ्चु उच्यते । श्वेतास्थि नाम दुर्भिक्षम्—तस्मिन् काले मनुष्या अस्थीन्युपसंहृत्य तावत् क्राथयन्ति, यावत् तान्यस्थीनि श्वेतानि संवृत्तानीति । ततस्तत्क्राथं
20 पिबन्ति । इदं श्वेतास्थि दुर्भिक्षमित्युच्यते । शलाकावृत्तिर्नाम—तस्मिन् काले मनुष्याः खलु बिलेभ्यो धान्यगुडकानि शलाकया आकृष्य बहूदकस्थाल्यां क्राथयित्वा पिबन्ति । इयं शलाकासंबद्धत्वाच्छलाकावृत्तिरित्युच्यते । ततो राज्ञा ब्रह्मदत्तेन वाराणस्यां घण्टावघोषणं कारितम्—शृण्वन्तु भवन्तो वाराणसीनिवासिनः पौराः । नैमित्तिकैर्द्वादशवर्षिका अनावृष्टिर्व्याकृता शलाकावृत्ति दुर्भिक्षं चञ्चु श्वेतास्थि च । येषां वो द्वादशवार्षिकं भक्तमस्ति, तैः
25 स्थातव्यम् । येषां नास्ति, ते यथेष्टं गच्छन्तु । विगतदुर्भिक्षभयाः सुभिक्षे पुनरप्युपागमिष्यन्ति । तस्मिंश्च समये वाराणस्यामन्यतमो गृहपतिराढ्यो महाधनो महाभोगो विस्तीर्णपरिवारः । तेन कोष्ठागारिक आहूय उक्तः—भोः पुरुष, भविष्यति मे सपरिवाराणां द्वादश वर्षाणि भक्तमिति ? स कथयति—आर्य भविष्यतीति । स तत्रैवावस्थितः । समनन्तरानुबद्धं चैतत् दुर्भिक्षम् । तस्य कोशकोष्ठागाराः परिक्षीणाः । सर्वश्च परिजनः कालगतः । आत्मना षष्ठो
30 व्यवस्थितः । ततस्तेन गृहपतिना कोशकोष्ठागाराणि शोधयित्वा धान्यप्रस्थ उपसंहृतः । सोऽस्य पत्न्या स्थाल्यां प्रक्षिप्य साधितः । असति बुद्धानामुत्पादे प्रत्येकबुद्धा लोक उत्पद्यन्ते हीनदीनानुकम्पकाः प्रान्तशयनभक्ता एकदक्षिणीया लोकस्य । यावदन्यतमः प्रत्येकबुद्धो

जनपदचारिकां चरन् वाराणसीमनुप्राप्तः। स पूर्वाह्णे निवास्य पात्रचीवरमादाय वाराणसीं पिण्डाय प्रविष्टः। स च गृहपतिरात्मना षष्ठोऽवस्थितो भोक्तुम्। स च प्रत्येकबुद्धोऽनुपूर्वेण पिण्डपातमटन् तस्य गृहपतेर्निवेशनमनुप्राप्तः। स तेन गृहपतिना दृष्टश्चित्तप्रासादिकः कायप्रासादिकश्च। दृष्ट्वा च पुनः संलक्षयति—एतदप्यहं परित्यज्य नियतं प्राणैर्वियोक्ष्ये। यन्वहं स्वप्रत्यंशमस्मै प्रव्रजिताय दद्यामिति। तेन भार्या अभिहिता—भद्रे, यो मम प्रत्यंश- 5 C 133 स्तमहमस्मै प्रव्रजितायानुप्रयच्छामीति। सा संलक्षयति—मम स्वामी न परिभुङ्क्ते, कथमहं परिभोक्ष्य इति। सा कथयति—आर्यपुत्र, अहमपि प्रत्यंशमस्मै प्रयच्छामि। एवं पुत्रेण स्नुषया दासेन दास्या च विचार्य स्वस्वप्रत्यंशाः परित्यक्ताः। ततस्तैः सर्वैः संभूय प्रत्येकबुद्धः पिण्डकेन प्रतिपादितः। कायिकी तेषां महात्मनां धर्मदेशना, न वाचिकी। स विततपक्ष इव हंसराज उपरि विहायसमुद्गम्य ज्वलनतपनवर्षणविद्योतनप्रातिहार्याणि कर्तुमारब्धः। आशु 10 पृथग्जनावर्जनकरी ऋद्धिः। ते मूलनिकृत्ता इव द्रुमाः पादयोर्निपत्य प्रणिधानं कर्तुमारब्धाः। गृहपतिः प्रणिधानं कर्तुमारब्धः—यन्मया एवंविधे सद्भूतदक्षिणीये कारः कृतः, अनेनाहं कुशल-मूलेन यदि रिक्तकानि कोशकोष्ठागाराणि सहदर्शनान्मे पूर्णानि स्युः—एवंविधानां च धर्माणां लाभी स्याम्, प्रतिविशिष्टतरं चातः शास्तारमारागयेयं मा विरागयेयमिति। पत्नी प्रणिधानं कर्तुमारब्धा—यन्मया एवंविधे सद्भूतदक्षिणीये कारः कृतः, अनेनाहं कुशलमूलेन यद्येकस्यार्थाय 15 स्थालीं पचेयम्, सा शतेनापि परिभुज्येत, सहस्रेणापि, न परिक्षयं गच्छेत्, यावन्मया प्रयोगोऽप्रतिप्रश्रब्धः, इत्येवंविधानां च धर्माणां लाभिनी स्याम्, प्रतिविशिष्टतरं चातः शास्तारमारागयेयं मा विरागयेयमिति। पुत्रः प्रणिधानं कर्तुमारब्धः—यन्मया एवंविधे सद्भूतदक्षिणीये कारः कृतः, अनेनाहं कुशलमूलेन पञ्चशतिको नकुलकः कट्यामुपरिबद्ध-स्तिष्ठेत्, यदि च शतं वा सहस्रं वा ततो व्ययं कुर्यात्, पूर्ण एव तिष्ठेत्, मा परिक्षयं 20 गच्छेत्—एवंविधानां च धर्माणां लाभी स्याम्, प्रतिविशिष्टतरं चातः शास्तारमारागयेयं मा विरागयेयमिति। स्नुषा प्रणिधानं कर्तुमारब्धा—यन्मया एवंविधे सद्भूतदक्षिणीये कारः कृतः, C 134 अनेनाहं कुशलमूलेन यद्येकस्य गन्धं योजयेयम्, शतं वा सहस्रं वा गन्धं घ्रास्यति, तं न च परिक्षयं गच्छेयुर्यावन्मया अप्रतिप्रश्रब्धम्—एवंविधानां धर्माणां लाभिनी स्याम्, प्रतिविशिष्टतरं चातः शास्तारमारागयेयं मा विरागयेयमिति। दासः प्रणिधानं कर्तुमारब्धः—यन्मया एवंविधे 25 सद्भूतदक्षिणीये कारः कृतः, अनेनाहं कुशलमूलेन यद्येकहलसीरं कृषेयम्, सप्त सीराः कृष्टाः स्युः—एवंविधानां धर्माणां च लाभी स्याम्, प्रतिविशिष्टतरं चातः शास्तारमारागयेयं मा विरागयेयमिति। दासी प्रणिधानं कर्तुमारब्धा—एवंविधे सद्भूतदक्षिणीये कारः कृतः, अनेनाहं कुशलमूलेन यद्येकां मात्रामारभेयम्, सप्त मात्राः संपद्येरन्—एवंविधानां धर्माणां च लाभिनी स्याम्, प्रतिविशिष्टतरं चातः शास्तारमारागयेयं मा विरागयेयमिति। तैश्चैवं प्रणि- 30 धानं कृतम्। स च महात्मा प्रत्येकबुद्धस्तेषामनुकम्पया ऋद्ध्या उपरि विहायसा राजकुलस्यो-परिष्टात् संप्रस्थितः॥

तेन खलु समयेन राजा ब्रह्मदत्त उपरिप्रासादतलगतस्तिष्ठति । तस्य ऋद्ध्या गच्छतो राज्ञो ब्रह्मदत्तस्योपरि छाया निपतिता । स ऊर्ध्वमुखो निरीक्षितुमारब्धः । पश्यति तं प्रत्येकबुद्धम् । तस्यैतदभवत्—कस्याप्यनेन महात्मना ऋद्धिमहालाङ्गलैर्दारिद्र्यमूलान्युत्पाटितानि । बलवती आशा । ततोऽसौ गृहपतिः कोशकोष्ठागाराणि प्रत्यवेक्षितुमारब्धो यावत्पूर्णानि 5 पश्यति । स पत्नीमामन्त्रयते—मम तावत् प्रणिधानं पूर्णम्, युष्माकमपीदानीं पश्याम इति । ततो दास्या धान्यानामेकां मात्रामारब्धा परिकर्मयितुम्, सप्त मात्राः संपन्नाः । पत्न्या एकस्यार्थाय स्थाली साधिता, सर्वैस्तैः परिभुक्तम्, तथैवावस्थिता । प्रातिवेश्यैरनेकैश्च प्राणिशतसहस्रैः परिभुक्तम्, तथैवावस्थिता । तथैव पुत्रस्य स्नुषाया दासस्य प्रणिधिः सिद्धा । ततो गृहपतिना घण्टावघोषणं कारितं वाराणस्याम्—यो भवन्तोऽन्नेनार्थी, स आगच्छतु इति । 10 वाराणस्यामुच्चशब्दो महाशब्दो जातः । राज्ञा श्रुतम् । कथयति—किमेष भवन्त उच्चशब्दो महाशब्द इति? अमात्यैः समाख्यातम्—देव, अमुकेन गृहपतिना कोशकोष्ठागाराणि उद्घाटितानीति । राजा तमाहूय कथयति—यदा सर्व एव लोकः कालगतः, तदा त्वया कोशकोष्ठागाराण्युद्घाटितानीति । देव, कस्य कोशकोष्ठागाराण्युद्घाटितानि? अपि तु अद्यैव मे बीजमुप्तमद्यैव फलदायकमिति । राजा पृच्छति—यथा कथम्? स एतत् प्रकरणं 15 विस्तरेणारोचयति । राजा कथयति—गृहपते, त्वया असौ महात्मा पिण्डकेन प्रतिपादितः? देव मयैव प्रतिपादितः । सोऽभिप्रसन्नो गाथां भाषते—

अहो गुणमयं क्षेत्रं सर्वदोषविवर्जितम् ।
यत्रोप्तं बीजमद्यैव अद्यैव फलदायकम् ॥ २ ॥ इति ।

किं मन्यध्वे भिक्षवो योऽसौ गृहपतिर्गृहपतिपत्नी गृहपतिपुत्रो गृहपतिस्नुषा गृह- 20 पतिदासो गृहपतिदासी, अयमेव मेण्ढको गृहपतिः मेण्ढकपत्नी मेण्ढकपुत्रो मेण्ढकस्नुषा मेण्ढकदासो मेण्ढकदासी च । यदेभिः प्रत्येकबुद्धे कारान् कृत्वा प्रणिधानं कृतम्, तस्य कर्मणो विपाकेन षड् महापुण्या जाताः, ममान्तिके दृष्टसत्यानि । अहं चैभिः प्रत्येकबुद्धकोटीशतसहस्रेभ्यः प्रतिविशिष्टः शास्ता आरागितो न विरागितः । इति हि भिक्षव एकान्तकृष्णानां कर्मणामेकान्तकृष्णो विपाकः, एकान्तशुक्लानां कर्मणामेकान्तशुक्लः, व्यति- 25 मिश्राणां व्यतिमिश्रः । तस्मात्तर्हि एवं शिक्षितव्यम्, यदेकान्तकृष्णानि कर्माण्यपास्य व्यतिमिश्राणि च, एकान्तशुक्लेष्वेव कर्मस्वाभोगः करणीयः । इत्येवं वो भिक्षवः शिक्षितव्यम् ॥

इदमवोचद्भगवान् । आत्तमनसस्ते भिक्षवो भगवतो भाषितमभ्यनन्दन् ॥

इति श्रीदिव्यावदाने मेण्ढकावदानं दशमम् ॥

———:०:———

## ११ अशोकवर्णावदानम्।

एवं मया श्रुतम्। एकस्मिन् समये भगवान् सत्कृतो गुरुकृतो मानितः पूजितो C 136
राजभी राजमात्रैर्धनिभिः पौरैः श्रेष्ठिभिः सार्थवाहैर्देवैर्नागैरसुरैर्यक्षैर्गरुडैः किन्नरैर्महोरगैरिति
देवनागयक्षासुरगरुडकिन्नरमहोरगाभ्यर्चितो बुद्धो भगवान् ज्ञातो महापुण्यो लाभी चीवर-
पिण्डपातशयनासनग्लानप्रत्ययभैषज्यपरिष्काराणां सश्रावकसंघो वैशाल्यां विहरति स्म 5
मर्कटह्रदतीरे कूटागारशालायाम्। तेन खलु समयेन वैशालिका लिच्छवय इदमेवंरूपं
क्रियाकारमकार्षुः—पञ्चदश्यां भवन्तः पक्षस्य अष्टम्यां चतुर्दश्यां च प्राणिनो हन्तव्याः
यत्कारणमेयुर्मनुष्या मांसमन्वेषन्त इति। तेन खलु समयेन अन्यतमो गोघातको महान्तं
वृषभमादाय नगरान्निष्क्रमति प्रघातयितुम्। तमेनं महाजनकायः पृष्ठतः पृष्ठतः समनुबद्धो
मांसार्थी कथयति—शीघ्रमेनं वृषं घातय, वयं मांसेनार्थिन इति। स कथयति—एवं करि- 10
ष्यामि, किं तु मुहूर्तमुदीक्षध्वमिति। ततो वृष ईदृशमनार्यं वचो दुरुक्तं श्रुत्वा भीतस्त्रस्तः
संविग्न आहृष्टरोमकूप इतश्चामुतश्च संभ्रान्तो निरीक्षते, चिन्तयति च—को मां कृच्छ्रसंकट-
संबाधप्राप्तमत्राणमशरणमिष्टेन जीवितेनाच्छादयेदिति। स चैवं विह्वलवदनस्त्राणान्वेषी
तिष्ठति। भगवांश्च पूर्वाह्णे निवास्य पात्रचीवरमादाय भिक्षुगणपरिवृतो भिक्षुसंघपुरस्कृतो
वैशालीं पिण्डाय प्राविशत्। अथासौ ददर्श बुद्धं भगवन्तं द्वात्रिंशता महापुरुषलक्षणैः 15
समलंकृतमशीत्यानुव्यञ्जनैर्विराजितगात्रं व्यामप्रभालंकृतं सूर्यसहस्रातिरेकप्रभं जङ्गममिव
रत्नपर्वतं समन्ततो भद्रकम्। सहदर्शनैश्चास्य भगवतोऽन्तिके चित्तमभिप्रसन्नम्। प्रसन्न- C 137
चित्तश्च संलक्षयति—प्रासादिकोऽयं सत्त्वविशेषः। शक्यस्त्वेषो मम प्राणपरित्राणं कर्तुम्।
यन्न्वहमेनमुपसंक्रमेयमिति। अथ स वृषो भगवत्सव्यपेक्षावान् प्रतिबद्धचित्तः एषो मे शरण-
मिति सहसैव तानि दृढानि वरत्रकाणि बन्धनानि छित्त्वा प्रधावन् येन भगवांस्तेनोप- 20
संक्रान्तः। उपसंक्रम्योभाभ्यां जानुभ्यां भगवतः पादयोर्निपत्य पादौ जिह्वया निलेढुमारब्धः।
स चास्य रौद्रकर्मा गोघातकः पृष्ठतः पृष्ठतः समनुबद्ध एव शस्त्रव्यग्रहस्तः। ततो भगवांस्तं
रौद्रकर्माणं गोघातकमिदमवोचत्—कुरुष्व त्वं भोः पुरुष अनेन गोवृषभेण सार्धं सात्म्यम्।
जीवितेनाच्छादयेति। स कथयति—नाहं भदन्त प्रभवाम्येनं जीवितेनाच्छादयितुम्। तत्कस्य
हेतोः? मया एष बहुना मूल्येन क्रीतः। पुत्रदारं च मे बहु पोषितव्यमिति। भगवानाह— 25
यदि मूल्यं दीयते, प्रतिमुञ्चसीति?। स कथयति—प्रतिमोक्ष्यामि भगवन्निति। अथ भगवां-
ल्लौकिकचित्तमुत्पादयति—अहो बत शक्रो देवेन्द्रस्त्रीणि कार्षापणसहस्राण्यादायागच्छेदिति।
सहचित्तोत्पादाद्भगवतः शक्रो देवेन्द्रः कार्षापणसहस्रत्रयमादाय भगवतः पुरस्तादस्थात्।
अथ भगवान् शक्रं देवेन्द्रमिदमवोचत्—अनुप्रयच्छ कौशिक अस्य गोघातकस्य त्रिगुणं मूल्यम्।
अदाच्छक्रो देवेन्द्रस्तस्य गोघातकस्य कार्षापणत्रयसहस्रं वृषमूल्यम्। अथ गोघातकः कार्षा- 30
पणसहस्रत्रयं वृषमूल्यं गृहीत्वा हृष्टस्तुष्टः प्रमुदितो भगवतः पादौ शिरसा वन्दित्वा तं गोवृषं
बन्धनान्मुक्त्वा प्रक्रान्तः। शक्रो देवेन्द्रो भगवतः पादौ शिरसा वन्दित्वा तत्रैवान्तर्हितः॥

अथ गोवृषो गतप्रत्यागतप्राणो भूयस्या मात्रया भगवत्यभिप्रसन्नो भगवन्तं त्रिः प्रदक्षिणीकृत्य पृष्ठतः पृष्ठतः समनुबद्धो भगवतो मुखं व्यवलोकयमानोऽस्थात्। अथ भगवान्
C 138 स्मितमकार्षीत्। धर्मता खलु यस्मिन् समये बुद्धा भगवन्तः स्मितं प्राविष्कुर्वन्ति, तस्मिन् समये नीलपीतलोहितावदाताः पुष्पपरागपद्मरागवज्रवैडूर्यमुसारगल्वार्कलोहितकादक्षिणावर्तशङ्खशिला-
5 प्रवालजातरूपरजतवर्णा अर्चिषो मुखान्निश्चार्य काश्चिदधस्ताद्गच्छन्ति, काश्चिदुपरिष्टाद्गच्छन्ति। या अधस्ताद्गच्छन्ति, ताः संजीवं कालसूत्रं रौरवं महारौरवं तपनं प्रतापनमवीचिमर्बुदं निरर्बुद-मटटं हहवं हुहुवमुत्पलं पद्मं महापद्मपर्यन्तान् नरकान् गत्वा ये उष्णनरकास्तेषु शीतीभूत्वा निपतन्ति, ये शीतनरकास्तेषूष्णीभूत्वा निपतन्ति। तेन तेषां सत्त्वानां कारणाविशेषाः प्रति-प्रस्रभ्यन्ते। तेषामेवं भवति—किं नु वयं भवन्त इतश्च्युताः, आहोस्विदन्यत्रोपपन्ना इति। तेषां
10 प्रसादसंजननार्थं भगवान् निर्मितं विसर्जयति। तेषां निर्मितं दृष्ट्वा एवं भवति—न ह्येव वयं भवन्त इतश्च्युताः, नाप्यन्यत्रोपपन्ना इति। अपि त्वयमपूर्वदर्शनः सत्त्वः, अस्यानुभावेनास्माकं कारणा-विशेषाः प्रतिप्रस्रब्धा इति। ते निर्मिते चित्तमभिप्रसाद्य तन्नरकवेदनीयं कर्म क्षपयित्वा देवमनुष्येषु प्रतिसंधिं गृह्णन्ति यत्र सत्त्वानां भाजनभूता भवन्ति। या उपरिष्टाद्गच्छन्ति, ताश्चातुर्महाराजकायिकान् देवांस्त्रायस्त्रिंशान् यामांस्तुषितान् निर्माणरतीन् परनिर्मितवशवर्तिनो
15 ब्रह्मकायिकान् ब्रह्मपुरोहितान् महाब्रह्मणः परीत्ताभानप्रमाणाभानाभास्वरान् परीत्तशुभान-प्रमाणशुभान् शुभकृत्स्नाननभ्रकान् पुण्यप्रसवान् बृहत्फलानबृहानतपान् सुदृशान् सुदर्शना-नकनिष्ठपर्यन्तान् देवान् गत्वा अनित्यं दुःखं शून्यमनात्मेत्युद्घोषयन्ति। गाथाद्वयं भाषन्ते—

आरभध्वं निष्क्रामत युज्यध्वं बुद्धशासने।
धुनीत मृत्युनः सैन्यं नडागारमिव कुञ्जरः॥ १॥
20 यो ह्यस्मिन् धर्मविनये अप्रमत्तश्चरिष्यति।
प्रहाय जातिसंसारं दुःखस्यान्तं करिष्यति॥ २॥ इति।

C 139 अथ ता अर्चिषस्त्रिसाहस्रमहासाहस्रं लोकधातुमन्वाहिण्ड्य भगवन्तमेव पृष्ठतः पृष्ठतः समनुगच्छन्ति। तद्यदि भगवानतीतं कर्म व्याकर्तुकामो भवति, भगवतः पृष्ठतोऽन्तर्धीयन्ते। अनागतं व्याकर्तुकामो भवति, पुरस्तादन्तर्धीयन्ते। नरकोपपत्तिं व्याकर्तुकामो भवति,
25 पादतलेऽन्तर्धीयन्ते। तिर्यगुपपत्तिं व्याकर्तुकामो भवति, पार्ष्ण्यामन्तर्धीयन्ते। प्रेतोपपत्तिं व्याकर्तुकामो भवति, पादाङ्गुष्ठेऽन्तर्धीयन्ते। मनुष्योपपत्तिं व्याकर्तुकामो भवति, जान्वोरन्त-र्धीयन्ते। बलचक्रवर्तिराज्यं व्याकर्तुकामो भवति, वामे करतलेऽन्तर्धीयन्ते। चक्रवर्तिराज्यं व्याकर्तुकामो भवति, दक्षिणे करतलेऽन्तर्धीयन्ते। देवोपपत्तिं व्याकर्तुकामो भवति, नाभ्या-मन्तर्धीयन्ते। श्रावकबोधिं व्याकर्तुकामो भवति, आस्येऽन्तर्धीयन्ते। प्रत्येकां बोधिं व्याकर्तु-
30 कामो भवति, ऊर्णायामन्तर्धीयन्ते। अनुत्तरां सम्यक्संबोधिं व्याकर्तुकामो भवति, उष्णीषे-ऽन्तर्धीयन्ते। अथ ता अर्चिषो भगवन्तं त्रिः प्रदक्षिणीकृत्य भगवत ऊर्णायामन्तर्हिताः॥

अथायुष्मानानन्दः कृतकरपुटो भगवन्तं पप्रच्छ—

नानाविधो रङ्गसहस्रचित्रो
वक्त्रान्तरान्निष्कसितः कलापः।

अवभासिता येन दिशः समन्ता-
द्दिवाकरेणोदयता यथैव ॥ ३ ॥

गाथां च भाषते—

विगतोद्भवा दैन्यमदप्रहीणा
बुद्धा जगत्युत्तमहेतुभूताः । 5
नाकारणं शङ्खमृणालगौरं
स्मितमुपदर्शयन्ति जिना जितारयः ॥ ४ ॥
तत्कालं स्वयमधिगम्य धीर बुद्ध्या
श्रोतॄणां श्रमण जिनेन्द्र काङ्क्षितानाम् ।
धीराभिर्मुनिवृष वाग्भिरुत्तमाभि- 10
रुत्पन्नं व्यपनय संशयं शुभाभिः ॥ ५ ॥
नाकस्माल्लवणजलाद्रिराजधैर्याः C 140
संबुद्धाः स्मितमुपदर्शयन्ति नाथाः ।
यस्यार्थे स्मितमुपदर्शयन्ति धीरा-
स्तं श्रोतुं समभिलषन्ति ते जनौघाः ॥ ६ ॥ इति ॥ 15

भगवानाह—एवमेतदानन्द, एवमेतत् । नाहेत्वप्रत्ययमानन्द तथागता अर्हन्तः सम्यक्संबुद्धाः स्मितं प्राविष्कुर्वन्ति । दृष्टस्ते आनन्द अयं गोवृषः ? दृष्टो भदन्त । एष आनन्द गोवृषस्तथागतस्यान्तिके प्रसन्नचित्तः सप्तमे दिवसे कालं कृत्वा चातुर्महाराजिकेषु देवेषूपपत्स्यते । वैश्रवणस्य महाराजस्य पुत्रो भविष्यति । ततश्च्युत्वा त्रायस्त्रिंशेषु देवेषूपपत्स्यते । शक्रस्य देवेन्द्रस्य पुत्रो भविष्यति । ततश्च्युत्वा यामेषु देवेषूपपत्स्यते । यामस्य देवस्य पुत्रो 20 भविष्यति । ततश्च्युत्वा तुषितेषु देवेषूपपत्स्यते । स तुषितस्य देवस्य पुत्रो भविष्यति । ततश्च्युत्वा निर्माणरतिषु देवेषूपपत्स्यते । सुनिर्मितस्य देवपुत्रस्य पुत्रो भविष्यति । ततश्च्युत्वा परनिर्मितवशवर्तिषु देवेषूपपत्स्यते । वशवर्तिनो देवपुत्रस्य पुत्रो भविष्यति । तदनया संतत्या नवनवतिकल्पसहस्राणि विनिपातं न गमिष्यति । ततः कामावचरेषु देवेषु दिव्यं सुखमनुभूय पश्चिमे भवे पश्चिमे निकेते समुच्छ्रये पश्चिमे आत्मभावप्रतिलम्भे मनुष्यत्वं प्रति- 25 लभ्य राजा भविष्यति अशोकवर्णो नाम चक्रवर्ती चतुरर्णवान्तविजेता धार्मिको धर्मराजः सप्तरत्नसमन्वागतः । तस्येमान्येवंरूपाणि सप्त रत्नानि भविष्यन्ति । तद्यथा—चक्ररत्नं हस्तिरत्नमश्वरत्नं मणिरत्नं स्त्रीरत्नं गृहपतिरत्नं परिणायकरत्नमेव सप्तमम् । पूर्णं चास्य भविष्यति सहस्रं पुत्राणां शूराणां वीराणां वराङ्गरूपिणा परसैन्यप्रमर्दकानाम् । स इमामेव समुद्रपर्यन्तां महापृथिवीमखिलामकण्टकामनुत्पीडामदण्डेनाशस्त्रेण धर्म्येण समयेनाभिनिर्जित्य अध्यावत्स्यति । 30 सोऽपरेण समयेन दानानि दत्वा चक्रवर्तिराज्यमपहाय केशश्मश्रूण्यवतार्य काषायाणि वस्त्राणि ....सम्यगेव श्रद्धया अगारादनगारिकां प्रव्रज्य प्रत्येकां बोधिं साक्षात्करिष्यति, अशोकवर्णो नाम प्रत्येकबुद्धो भविष्यति । अथायुष्मानानन्दः कृतकरपुटो भगवन्तं पप्रच्छ—किं भदन्त C 141 अनेन गोवृषेण कर्म कृतं येन तिर्यग्योनावुपपन्नः, किं कर्म कृतं येन दिव्यमानुषसुखमनुभूय

प्रत्येकां बोधिमधिगमिष्यति ? भगवानाह—अनेनैव आनन्द गोवृषेण कर्माणि कृतान्युपचितानि लब्धसंभाराणि परिणतप्रत्ययानि ओघवत्प्रत्युपस्थितान्यवश्यंभावीनि । गोवृषेण कर्माणि कृतान्युपचितानि । कोऽन्यः प्रत्यनुभविष्यति ? न ह्यानन्द कर्माणि कृतान्युपचितानि बाह्ये पृथिवीधातौ विपच्यन्ते, नाब्धातौ, न तेजोधातौ, न वायुधातौ, अपि तूपात्तेष्वेव स्कन्ध-
5 धात्वायतनेषु कर्माणि कृतानि विपच्यन्ते शुभाशुभानि च ।

न प्रणश्यन्ति कर्माणि अपि कल्पशतैरपि ।
सामग्रीं प्राप्य कालं च फलन्ति खलु देहिनाम् ॥ ७ ॥

भूतपूर्वमानन्द अतीतेऽध्वनि एकनवते कल्पे विपश्यी नाम सम्यक्संबुद्धो लोक उदपादि विद्याचरणसंपन्नः सुगतो लोकविदनुत्तरः पुरुषदम्यसारथिः शास्ता देवमनुष्याणां
10 बुद्धो भगवान् । स बन्धुमतीं राजधानीमुपनिश्रित्य विहरति, अन्यतमस्मिन् वनषण्डे । तस्य नातिदूरे षष्टिभिक्षवः प्रतिवसन्त्यारण्यकाः पिण्डपातिकाः । सर्वे च वीतरागा विगतद्वेषा विगतमोहा यावत् पञ्चमात्राणि धूर्तकशतानि तेन तेनाहिण्ड्यमानानि तं प्रदेशमनुप्राप्तानि । तेषामेतदभवत्—एते हि प्रव्रजिता महात्मानः ईदृशेषु स्थानेष्वभिरमन्ते । यद्येषां जीवितोपच्छेदं न करिष्यामः, न भूय एतस्मिन् प्रदेशे स्वस्थैर्विहर्तव्यं भविष्यति । यद्यप्येते
15 महात्मानः सर्वसत्त्वहितोदयप्रवृत्ता न परेषामारोचयिष्यन्ति, तथाप्येषां प्रधानपुरुषा उपसंक्रमिष्यन्ति । तेऽस्माकं राज्ञः समर्पयिष्यन्ति । तत्रास्माभिश्चारकावरुद्धैर्मर्तव्यं भविष्यति । कथमत्र प्रतिपत्तव्यमिति ? एकस्तत्रैव निर्घृणहृदयस्त्यक्तपरलोकः । स कथयति—अघातयित्वा एतान् कुतः क्षेम इति ? तैस्ते जीविताद्व्यपरोपिताः । ते चैतत्कर्म कृत्वा पापकमकुशलमेकनवतिकल्पानपायेषूपपन्नाः । यद्भूयसा तु नरकेषु तिर्यग्योनौ उपपन्नाश्च सन्तो नित्यं
20 शस्त्रेण प्रघातिताः । तत्र योऽसौ चौरस्तेषां समादापकः, स एवायं गोवृषः । तस्य कर्मणो विपाकेन इयन्तं कालं न कदाचित् सुगतौ उपपन्नः । यत्पुनरिदानीं ममान्तिके चित्तं प्रसादितम्, तस्य कर्मणो विपाकेन दिव्यं मानुषं सुखमनुभूय प्रत्येकां बोधिमधिगमिष्यति । एवं हि आनन्द तथागतानां चित्तप्रसादोऽप्यचिन्त्यविपाकः, किं पुनः प्रणिधानम् । तस्मात्तर्हि आनन्द एवं शिक्षितव्यं यत्स्तोकस्तोकं मुहूर्तमुहूर्तमन्ततोऽच्छटासंघातमात्रमपि
25 तथागतमाकारतः समनुस्मरिष्यामीत्येवं ते आनन्द शिक्षितव्यम् ॥

अथायुष्मान् आनन्दो भगवतो भाषितमभ्यानन्द्यानुमोद्य भिक्षूणां पुरस्ताद्गाथा भाषते—

अहो नाथस्य कारुण्यं सर्वज्ञस्य हितैषिणः ।
सुकृतेनैव वात्सल्यं यस्येदशमहाद्भुतम् ॥ ८ ॥
आपन्नो हि परं कृच्छ्रं गोवृषो येन मोचितः ।
30 व्याकृतश्च भवे दिव्ये प्रत्येकश्च जिनो ह्यसौ ॥ ९ ॥ इति ॥

इदमवोचद्भगवान् । आत्तमनसस्ते भिक्षवो भाषितमभ्यनन्दन् ॥

इति श्रीदिव्यावदानेऽशोकवर्णावदानमेकादशमम् ॥



# १२ प्रातिहार्यसूत्रम् ।

स भगवान् राजगृहे विहरति वेणुवने कलन्दकनिवापे सत्कृतो गुरुकृतो मानितः C 143
पूजितो राजभी राजमात्रैर्धनिभिः पौरैः श्रेष्ठिभिः सार्थवाहैर्देवैर्नागैर्यक्षैरसुरैर्गरुडैः किन्नरैर्महो-
रगैरिति देवनागयक्षासुरगरुडकिन्नरमहोरगाभ्यर्चितो बुद्धो भगवान् ज्ञातो महापुण्यो लाभी
चीवरपिण्डपातशयनासनग्लानप्रत्ययभैषज्यपरिष्काराणां सश्रावकसंघो दिव्यानां मानुष्याणां 5
च भगवाननुपलिप्तो विहरति पद्मपत्रमिवाम्भसा ॥

तेन खलु समयेन राजगृहे नगरे षट् पूर्णाद्याः शास्तारोऽसर्वज्ञाः सर्वज्ञमानिनः
प्रतिवसन्ति स्म । तद्यथा—पूर्णः काश्यपः, मस्करी गोशालीपुत्रः, संजयी वैरट्टीपुत्रः, अजितः
केशकम्बलः, ककुदः कात्यायनः, निर्ग्रन्थो ज्ञातिपुत्रः । अथ षण्णां पूर्णादीनां तीर्थ्यानां
कुतूहलशालायां संनिषण्णानां संनिपतितानामयमेवंरूपोऽभूदन्तराकथासमुदाहारः—यत्खलु 10
भवन्तो जानीरन्—यदा श्रमणो गौतमो लोकेऽनुत्पन्नः, तदा वयं सत्कृताश्चाभूवन् गुरुकृताश्च
मानिताश्च पूजिताश्च राज्ञां राजमात्राणां ब्राह्मणानां गृहपतीनां नैगमानां जानपदानां श्रेष्ठिनां
सार्थवाहानाम् । लाभिनश्चाभूवंश्चीवरपिण्डपातशयनासनग्लानप्रत्ययभैषज्यपरिष्काराणाम् ।
यदा तु श्रमणो गौतमो लोके उत्पन्नः, तदा श्रमणो गौतमः सत्कृतो गुरुकृतो मानितः पूजितो
राज्ञां राजमात्राणां ब्राह्मणानां गृहपतीनां जनपदानां धनिनां श्रेष्ठिनां सार्थवाहानाम् । लाभी 15
च श्रमणो गौतमः सश्रावकसंघश्चीवरपिण्डपातशयनासनग्लानप्रत्ययभैषज्यपरिष्काराणाम् ।
अस्माकं च लाभसत्कारः सर्वेण सर्वं समुच्छिन्नः । वयं स्म ऋद्धिमन्तो ज्ञानवादिनः । C 144
श्रमणोऽपि गौतमो रिद्धिमान् ज्ञानवादीत्यात्मानं प्रतिजानीते । अर्हति ज्ञानवादी ज्ञानवादिना
सार्धमुत्तरे मनुष्यधर्मे रिद्धिप्रातिहार्यं विदर्शयितुम् । यद्येकं श्रमणो गौतमोऽनुत्तरे मनुष्यधर्मे
रिद्धिप्रातिहार्यं विदर्शयिष्यति, वयं द्वे । द्वे श्रमणो गौतमः, वयं चत्वारि । चत्वारि श्रमणो 20
गौतमः, वयमष्टौ । अष्टौ श्रमणो गौतमः, वयं षोडश । षोडश श्रमणो गौतमः, वयं द्वात्रिंश-
दिति यावच्छ्रमणो गौतम उत्तरे मनुष्यधर्मे रिद्धिप्रातिहार्यं विदर्शयिष्यति, वयं तद्द्विगुणं
तत्त्रिगुणं विदर्शयिष्यामः । उपार्धं मार्गं श्रमणो गौतम आगच्छतु, वयमप्युपार्धं मार्गं गमि-
ष्यामः । तत्रास्माकं भवतु श्रमणेन गौतमेन सार्धमुत्तरे मनुष्यधर्मे रिद्धिप्रातिहार्यम् । अथ C 145
मारस्य पापीयस एतदभवत्—असकृदसकृन्मया श्रमणस्य गौतमस्य प्राक्रान्तम्, न च कदा- 25
चिदवतारो लब्धः । यन्न्वहं तीर्थ्यानां प्रहरेयम् । इति विदित्वा पूरणवदात्मानमभिनिर्माय
उपरि विहायसमभ्युद्गम्य ज्वलनतपनवर्षणविद्योतनप्रातिहार्याणि कृत्वा मस्करिणं गोशालीपुत्र-
मामन्त्रयते—यत्खलु मस्करिन् जानीयाः—अहं रिद्धिमान् ज्ञानवादी, श्रमणो गौतमो रिद्धिमान्
ज्ञानवादीत्यात्मानं परिजानीते । अर्हति ज्ञानवादी ज्ञानवादिना सार्धमुत्तरे मनुष्यधर्मे रिद्धि-
प्रातिहार्यं विदर्शयितुम् । यद्येकं श्रमणो गौतम उत्तरे मनुष्यधर्मे रिद्धिप्रातिहार्यं विदर्शयिष्यति, 30
अहं द्वे । द्वे श्रमणो गौतमः, अहं चत्वारि । चत्वारि श्रमणो गौतमः, अहमष्टौ । अष्टौ
श्रमणो गौतमः, अहं षोडश । षोडश श्रमणो गौतमः, अहं द्वात्रिंशदिति यावच्छ्रमणो

गौतम उत्तरे मनुष्यधर्मे रिद्धिप्रातिहार्यं विदर्शयिष्यति, वयं तद्द्विगुणमुत्तरं मनुष्यधर्मे रिद्धिप्रातिहार्यं विदर्शयिष्यामः। उपार्धं मार्गं श्रमणो गौतम आगच्छतु, अहमप्युपार्धं मार्गं गमिष्यामि। तत्रास्माकं भवतु श्रमणेन गौतमेन सार्धमुत्तरे मनुष्यधर्मे रिद्धिप्रातिहार्यम्। अथ मारस्य पापीयस एतदभवत्—असकृदसकृन्मया श्रमणस्य गौतमस्य पराक्रान्तम्, न 5 च कदाचिदवतारो लब्धः। यन्न्वहं तीर्थ्यानां प्रहरेयम्। इति विदित्वा मस्करिवदात्मानमभिनिर्माय उपरि विहायसमभ्युद्गम्य ज्वलनतपनविद्योतनवर्षणप्रातिहार्याणि कृत्वा संजयिनं वैरट्टीपुत्रमामन्त्रयते—यत्खलु संजयिन् जानीयाः—अहं रिद्धिमान् ज्ञानवादी, श्रमणो गौतमो रिद्धिमान् ज्ञानवादीत्यात्मानं प्रतिजानीते। अर्हति ज्ञानवादी ज्ञानवादिना सार्धमुत्तरे मनुष्यधर्मे रिद्धिप्रातिहार्यं विदर्शयितुम्। यद्येकं श्रमणो गौतम उत्तरे मनुष्यधर्मे रिद्धि- 10 प्रातिहार्यं विदर्शयिष्यति, अहं द्वे। द्वे श्रमणो गौतमः, अहं चत्वारि। चत्वारि श्रमणो गौतमः, अहमष्टौ। अष्टौ श्रमणो गौतमः, अहं षोडश। षोडश श्रमणो गौतमः, अहं द्वात्रिंशदिति यावच्छ्रमणो गौतम उत्तरे मनुष्यधर्मे रिद्धिप्रातिहार्यं विदर्शयिष्यति, अहं तद्द्विगुणमुत्तरं मनुष्यधर्मप्रातिहार्यं विदर्शयिष्यामि। उपार्धं मार्गं श्रमणो गौतम आगच्छतु, अहमप्युपार्धं मार्गं गमिष्यामि। तत्र मे भवतु श्रमणेन गौतमेन सार्धमुत्तरे मनुष्यधर्मे रिद्धि- 15 प्रातिहार्यम्। एवमन्योन्यं सर्वे विहेठिताः। एकैक एवमाह—रिद्धेर्लाभी नाहमिति॥

पूरणाद्याः षट् शास्तारः सर्वज्ञज्ञानिनो येन राजा मागधः श्रेण्यो बिम्बिसारस्तेनोपसंक्रामन्। उपसंक्रम्य राजानं मागधं श्रेण्यं बिम्बिसारमिदमवोचन्—यत्खलु देव जानीयाः—वयं ऋद्धिमन्तो ज्ञानवादिनः। श्रमणोऽपि गौतमो रिद्धिमान् ज्ञानवादीत्यात्मानं प्रतिजानीते। अर्हति ज्ञानवादी ज्ञानवादिना सार्धमुत्तरे मनुष्यधर्मे रिद्धिप्रातिहार्यं विदर्शयितुम्। यद्येकं श्रमणो गौतम 20 उत्तरे मनुष्यधर्मे रिद्धिप्रातिहार्यं विदर्शयिष्यति, वयं द्वे। द्वे श्रमणो गौतमः, वयं चत्वारि। C 146 चत्वारि श्रमणो गौतमः, वयमष्टौ। अष्टौ श्रमणो गौतमः, वयं षोडश। षोडश श्रमणो गौतमः, वयं द्वात्रिंशदिति यावच्छ्रमणो गौतम उत्तरे मनुष्यधर्मे रिद्धिप्रातिहार्यं विदर्शयिष्यति, वयं तद्द्विगुणं तत्त्रिगुणं रिद्धिप्रातिहार्यं विदर्शयिष्यामः। उपार्धं मार्गं श्रमणो गौतम आगच्छतु, वयमप्युपार्धं मार्गं गमिष्यामः। तत्रास्माकं भवतु श्रमणेन गौतमेन सार्धमुत्तरे 25 मनुष्यधर्मे रिद्धिप्रातिहार्यं विदर्शयितुम्। एवमुक्ते राजा मागधः श्रेण्यो बिम्बिसारस्तीर्थ्यानिदमवोचत्—यूयमपि शवा भूत्वा भगवता सार्धं रिद्धिं प्रारभध्वे ? अथ पूरणाद्याः षट् शास्तारोऽसर्वज्ञाः सर्वज्ञानज्ञानिनोऽधर्मार्गे राजानं मागधं श्रेण्यं बिम्बिसारं विज्ञापयन्ति—वयं स्मो देव रिद्धिमन्तो ज्ञानवादिनः। श्रमणोऽपि गौतमो रिद्धिमान् ज्ञानवादीत्यात्मानं प्रतिजानीते। अर्हति ज्ञानवादी ज्ञानवादिना सार्धमुत्तरे मनुष्यधर्मे रिद्धिप्रातिहार्यं विदर्शयितुम्। 30 यावत् तत्रास्माकं भवतु श्रमणेन गौतमेन सार्धमुत्तरे मनुष्यधर्मे रिद्धिप्रातिहार्यं विदर्शयितुम्। एवमुक्ते राजा मागधः श्रेण्यो बिम्बिसारस्तांस्तीर्थिकपरिव्राजकानिदमवोचत्—यद्येवं त्रिरप्येतमर्थं विज्ञापयिष्यथ, निर्विषयान् वः करिष्यामि। अथ तीर्थ्यानामेतदभवत्—अयं राजा

मागधः श्रेण्यो बिम्बिसारः श्रमणस्य गौतमस्य श्रावकः। बिम्बिसारस्तिष्ठतु। राजा प्रसेनजित् कौशलो मध्यस्थः। यदा श्रमणो गौतमः श्रावस्तीं गमिष्यति, तत्र वयं गत्वा श्रमणं गौतममुत्तरे मनुष्यधर्मे रिद्धिप्रातिहार्ये आह्वयिष्यामः। इत्युक्त्वा प्रक्रान्ताः॥

अथ राजा मागधः श्रेण्यो बिम्बिसारोऽन्यतमं पुरुषमामन्त्रयते—गच्छ त्वं भोः पुरुष क्षिप्रम्। भद्रं यानं योजय, यत्राहमधिरुह्य भगवन्तं दर्शनायोपसंक्रमिष्यामि पर्युपासनायै। 5 C 147 एवं देवेति स पुरुषो राज्ञो मागधस्य श्रेण्यस्य बिम्बिसारस्य प्रतिश्रुत्य क्षिप्रं भद्रं यानं योजयित्वा येन राजा मागधः श्रेण्यो बिम्बिसारस्तेनोपसंक्रान्तः। उपसंक्रम्य राजानं मागधं श्रेण्यं बिम्बिसारमिदमवोचत्—युक्तं देवस्य भद्रं यानं यस्येदानीं देवः कालं मन्यत इति। अथ राजा मागधः श्रेण्यो बिम्बिसारो भद्रं यानमभिरुह्य राजगृहान्निर्याति भगवतोऽन्तिकं भगवन्तं दर्शनायोपसंक्रमितुं पर्युपासनाय। तस्य यावती यानस्य भूमिस्तावद्यानेन गत्वा यानादवतीर्य 10 पद्भ्यामेवारामं प्राविक्षत्। अन्तरा राजा मागधः श्रेण्यो बिम्बिसारो भगवन्तमद्राक्षीत्। तदन्तरा पञ्च ककुदान्यपनीय तद्यथा—उष्णीषं छत्रं खड्गमणिं वालव्यजनं चित्रे चोपानहौ, स पञ्च ककुदान्यपनीय येन भगवांस्तेनोपसंक्रान्तः। उपसंक्रम्य भगवतः पादौ शिरसा वन्दित्वा एकान्ते निषण्णः। एकान्तनिषण्णं विदित्वा राजानं मागधं श्रेण्यं बिम्बिसारं भगवान् धर्म्यया कथया संदर्शयति समादापयति समुत्तेजयति संप्रहर्षयति। अनेकपर्यायेण 15 धर्म्यया कथया संदर्श्य समादाप्य समुत्तेज्य संप्रहर्ष्य तूष्णीम्। अथ राजा मागधः श्रेण्यो बिम्बिसारो भगवन्तमभ्यानन्द्यानुमोद्य भगवतः पादौ शिरसा वन्दित्वा भगवतोऽन्तिकात् प्रक्रान्तः॥

अथ भगवत एतदभवत्—कुत्र पूर्वकैः सम्यक्संबुद्धैर्महाप्रातिहार्यं विदर्शितं हिताय प्राणिनाम्? देवता भगवत आरोचयन्ति—श्रुतपूर्वं भदन्त पूर्वकैः सम्यक्संबुद्धैर्महाप्रातिहार्यं 20 विदर्शितं हिताय प्राणिनामिति। भगवतो ज्ञानदर्शनं प्रवर्तते—श्रावस्त्यां पूर्वकैः सम्यक्संबुद्धैर्महाप्रातिहार्यं विदर्शितं हिताय प्राणिनामिति। तत्र भगवानायुष्मन्तमानन्दमामन्त्रयते—गच्छ त्वमानन्द, भिक्षूणामारोचय। तथागतः कोशलेषु जनपदेषु चारिकां चरिष्यति। यो युष्माकमुत्सहते तथागतेन सार्धं कोशलेषु जनपदेषु चारिकां चर्तुम्, स चीवरकाणि C 148 धावतु सीव्यतु रञ्जयतु। एवं भदन्तेत्यायुष्मानानन्दो भगवतः प्रतिश्रुत्य भिक्षूणामारोचयति— 25 भगवानायुष्मन्तः कोशलेषु जनपदेषु चारिकां चरिष्यति। यो युष्माकमुत्सहते तथागतेन सार्धं कोशलेषु जनपदेषु चारिकां चरितुम्, स चीवराणि धावतु सीव्यतु रञ्जयतु इति। ते भिक्षव आयुष्मत आनन्दस्य प्रत्यश्रौषुः। अथ भगवान् दान्तो दान्तपरिवारः शान्तः शान्तपरिवारो मुक्तो मुक्तपरिवार आश्वस्त आश्वस्तपरिवारो विनीतो विनीतपरिवारोऽर्हन्नर्हत्परिवारो वीतरागो वीतरागपरिवारः प्रासादिकः प्रासादिकपरिवारो वृषभ इव गोगणपरिवृतो गज 30 इव कलभगणपरिवृतः सिंह इव दंष्ट्रगणपरिवृतो राजहंस इव हंसगणपरिवृतः सुपर्णीव पक्षिगणपरिवृतो विप्र इव शिष्यगणपरिवृतः सुवैद्य इवातुरगणपरिवृतः शूर इव योधगण-

परिवृतो देशिक इवाध्वगणपरिवृतः सार्थवाह इव वणिग्गणपरिवृतः श्रेष्ठीव पौरगणपरिवृतः कोट्टराज इव मन्त्रिगणपरिवृतश्चक्रवर्तीव पुत्रसहस्रपरिवृतश्चन्द्र इव नक्षत्रगणपरिवृतः सूर्य इव रश्मिसहस्रपरिवृतो विरूढक इव कुम्भाण्डगणपरिवृतो विरूपाक्ष इव नागगणपरिवृतो धनद इव यक्षगणपरिवृतो धृतराष्ट्र इव गन्धर्वगणपरिवृतो वेमचित्र इवासुरगणपरिवृतः 5 शक्र इव त्रिदशगणपरिवृतो ब्रह्मेव ब्रह्मकायिकगणपरिवृतः स्तिमिव इव जलनिधिः सजल इव जलधरो विमद इव गजपतिः सुदान्तैरिन्द्रियैरसंक्षोभितेर्यापथप्रचारोऽनेकैरावेणिकैर्बुद्धधर्मैर्महता भिक्षुसंघेन च पुरस्कृतो येन श्रावस्ती तेन चारिकां प्रक्रान्तः। अनेकैश्च देवताशतसहस्रैरनुगम्यमानोऽनुपूर्वेण चारिकां चरन् श्रावस्तीमनुप्राप्तः श्रावस्त्यां विहरति जेतवनेऽनाथपिण्डदस्यारामे ॥

10 अश्रौषुस्तीर्थ्याः श्रमणो गौतमः श्रावस्तीं गत इति। श्रुत्वा च पुनः श्रावस्तीं संप्रस्थिताः। ते श्रावस्तीं गत्वा राजानं प्रसेनजित्कौशलमिदमवोचन्—यत्खलु देव जानीथाः—वयं ऋद्धिमन्तो ज्ञानवादिनः। श्रमणो गौतमो ऋद्धिमान् ज्ञानवादीत्यात्मानं प्रतिजानीते। अर्हति ज्ञानवादी ज्ञानवादिना सार्धमुत्तरे मनुष्यधर्मे ऋद्धिप्रातिहार्यं विदर्शयितुम्। यद्येकं श्रमणो गौतम उत्तरे मनुष्यधर्मे ऋद्धिप्रातिहार्यं विदर्शयिष्यति, वयं द्वे। द्वे श्रमणो गौतमः, 15 वयं चत्वारि। चत्वारि श्रमणो गौतमः, वयमष्टौ। अष्टौ श्रमणो गौतमः, वयं षोडश। षोडश श्रमणो गौतमः, वयं द्वात्रिंशदिति यावच्छ्रमणो गौतम उत्तरे मनुष्यधर्मे रिद्धिप्रातिहार्यं विदर्शयिष्यति, वयं तद्द्विगुणं तत्त्रिगुणमुत्तरे मनुष्यधर्मे रिद्धिप्रातिहार्यं विदर्शयिष्यामः। उपार्धं मार्गं श्रमणो गौतम आगच्छतु, वयमप्युपार्धं मार्गं गमिष्यामः। तत्रास्माकं भवतु श्रमणेन गौतमेन सार्धमुत्तरे मनुष्यधर्मे रिद्धिप्रातिहार्यम्। एवमुक्ते राजा प्रसेनजित् कौशलस्तीर्थ्या- 20 निदमवोचत्—आगमयन्तु तावद्भवन्तो यावदहं भगवन्तमवलोकयामि। अथ राजा प्रसेनजित् कौशलोऽन्यतमं पुरुषमामन्त्रयते—गच्छ त्वं भोः पुरुष। क्षिप्रं भद्रं यानं योजय। अहमभिरुह्य अद्यैव भगवन्तं दर्शनायोपसंक्रमिष्यामि पर्युपासनायै। एवं देवेति स पुरुषो राज्ञः प्रसेनजितः कौशलस्य प्रतिश्रुत्य क्षिप्रं भद्रं यानं योजयित्वा येन राजा प्रसेनजित् कौशलस्तेनोपसंक्रान्तः। उपसंक्रम्य राजानं प्रसेनजितं कौशलमिदमवोचत्—युक्तं देवस्य 25 भद्रं यानं यस्येदानीं देवः कालं मन्यते। अथ राजा प्रसेनजित् कौशलो भद्रं यानमभिरुह्य श्रावस्त्या निर्याति भगवतोऽन्तिकं भगवन्तं दर्शनाय उपसंक्रमितुं पर्युपासनाय। तस्य यावती यानस्य भूमिस्तावद्यानेन गत्वा यानादवतार्य पादाभ्यामेव आरामं प्रविश्य येन भगवांस्तेनोपसंक्रान्तः। उपसंक्रम्य भगवतः पादौ शिरसा वन्दित्वा एकान्ते निषण्णः। एकान्ते निषण्णो राजा प्रसेनजित् कौशलो भगवन्तमिदमवोचत्—इमे भदन्त तीर्थ्या भग- 30 वन्तमुत्तरे मनुष्यधर्मे रिद्धिप्रातिहार्येणाह्वयन्ते। विदर्शयतु भगवानुत्तरे मनुष्यधर्मे रिद्धिप्रातिहार्यं हिताय प्राणिनाम्। निर्भर्त्सयतु भगवांस्तीर्थ्यान्। नन्दयतु देवमनुष्यान्। तोषयतु सज्जनहृदयमनांसि। एवमुक्ते भगवान् राजानं प्रसेनजितं कौशलमिदमवोचत्—नाहं महाराज

C 149 C 150

एवं श्रावकाणां धर्मं देशयामि एवं यूयं भिक्षव आगतागतानां ब्राह्मणगृहपतीनामुत्तरे मनुष्यधर्मे रिद्धिप्रातिहार्यं विदर्शयतेति। अपि तु अहमेवं श्रावकाणां धर्मं देशयामि—प्रतिच्छन्नकल्याणा भिक्षवो विहरत विवृतपापा इति। द्विरपि त्रिरपि राजा प्रसेनजित् कौशलो भगवन्तमिदमवोचत्—विदर्शयतु भगवानुत्तरे मनुष्यधर्मे रिद्धिप्रातिहार्यं हिताय प्राणिनाम्। निर्भर्त्सयतु तीर्थ्यान्। नन्दयतु भगवान् देवमनुष्यान्। तोषयतु सज्जनहृदयमनांसि। धर्मता 5 खलु बुद्धानां भगवतां जीवतां तिष्ठतां ध्रियमाणानां यापयतां यदुत दशावश्यकरणीयानि भवन्ति। न तावद्बुद्धा भगवन्तः परिनिर्वान्ति यावन्न बुद्धो बुद्धं व्याकरोति, यावन्न द्वितीयेन सत्त्वेनापरिवर्त्यमनुत्तरायां सम्यक्संबोधौ चित्तमुत्पादितं भवति, सर्वबुद्धवैनेया विनीता भवन्ति, त्रिभाग आयुष उत्सृष्टो भवति, सीमाबन्धः कृतो भवति, श्रावकयुगमग्रतायां निर्दिष्टं भवति, सांकाश्ये नगरे देवतावतरणं विदर्शितं भवति, अनवतप्ते महासरसि श्रावकैः सार्धं 10 पूर्विका कर्मप्लोतिर्व्याकृता भवति, मातापितरौ सत्येषु प्रतिष्ठापितौ भवतः, श्रावस्त्यां महाप्रातिहार्यं विदर्शितं भवति। अथ भगवत एतदभवत्—अवश्यकरणीयमेतत्तथागतेनेति विदित्वा राजानं प्रसेनजितं कौशलमामन्त्रयते—गच्छ त्वं महाराज। इतः सप्तमे दिवसे तथागतो महाजनप्रत्यक्षमुत्तरे मनुष्यधर्मे रिद्धिप्रातिहार्यं विदर्शयिष्यति हिताय प्राणिनाम्। अथ राजा प्रसेनजित् कौशलो भगवन्तमिदमवोचत्—यदि भगवाननुजानीयात्, अहं भगवतः 15 C 151 प्रातिहार्यमण्डपं कारयेयम्। अथ भगवत एतदभवत्—कतरस्मिन् प्रदेशे पूर्वकैः सम्यक्संबुद्धैर्महाप्रातिहार्यं विदर्शितं हिताय प्राणिनामिति? देवता भगवत आरोचयन्ति—अन्तरा भदन्त श्रावस्तीमन्तरा च जेतवनमत्रान्तरात् पूर्वकैः सम्यक्संबुद्धैर्महाप्रातिहार्यं विदर्शितं हिताय प्राणिनाम्। भगवतोऽपि ज्ञानदर्शनं प्रवर्तते—अन्तरा च श्रावस्तीमन्तरा च जेतवनमत्रान्तरात् पूर्वकैः सम्यक्संबुद्धैर्महाप्रातिहार्यं विदर्शितं हिताय प्राणिनाम्। अधिवासयति 20 भगवान् राज्ञः प्रसेनजितः कौशलस्य तूष्णीभावेन। अथ राजा प्रसेनजित् कौशलो भगवतस्तूष्णीभावेनाधिवासनां विदित्वा भगवन्तमिदमवोचत्—कतमस्मिन् भदन्त प्रदेशे प्रातिहार्यमण्डपं कारयामि? अन्तरा च महाराज श्रावस्तीमन्तरा च जेतवनम्। अथ राजा प्रसेनजित् कौशलो भगवतो भाषितमभिनन्द्यानुमोद्य भगवतः पादौ शिरसा वन्दित्वा भगवतोऽन्तिकात् प्रक्रान्तः॥ 25

अथ राजा प्रसेनजित् कौशलस्तीर्थ्यानिदमवोचत्—यत्खलु भवन्तो जानीरन्—इतः सप्तमे दिवसे भगवानुत्तरे मनुष्यधर्मे रिद्धिप्रातिहार्यं विदर्शयिष्यति। अथ तीर्थ्यानामेतदभवत्—किं पुनः श्रमणो गौतमः सप्तभिर्दिवसैरनधिगतमधिगमिष्यति, अथ वा निष्पलायिष्यति, अथ वा पक्षपर्येषणं कर्तुकामः? तेषामेतदभवत्—न ह्येव श्रमणो गौतमो निष्पलायिष्यति, नाप्यनधिगतमधिगमिष्यति। नूनं श्रमणो गौतमः पक्षपर्येषणं कर्तुकामः। 30 वयमपि तावत् पक्षपर्येषणं करिष्यामः। इति विदित्वा रक्ताक्षो नाम परिव्राजक इन्द्रजालाभिज्ञः स आहूतः। रक्ताक्षस्य परिव्राजकस्यैतत् प्रकरणं विस्तरेणारोचयन्ति, एवं चाहुः—

C 152 यत्खलु रक्ताक्ष जानीयाः—श्रमणो गौतमोऽस्माभिरिद्ध्या आहूतः। स कथयति—इतः सप्तमे दिवस उत्तरे मनुष्यधर्मे रिद्धिप्रातिहार्यं विदर्शयिष्यामीति। नूनं श्रमणो गौतमः पक्षपर्येषणं कर्तुकामः। त्वमपि तावत् सब्रह्मचारिणां पक्षपर्येषणं कुरुष्व। तेन तथेति प्रतिज्ञातम्। अथ रक्ताक्षः परिव्राजको येन नानातीर्थिकश्रमणब्राह्मणचरकपरिव्राजकास्तेनोपसंक्रान्तः। उप-
5 संक्रम्य नानातीर्थिकश्रमणब्राह्मणचरकपरिव्राजकानामेतत्प्रकरणं विस्तरेणारोचयति, एवं चाह—यत्खलु भवन्तो जानीरन्—श्रमणो गौतमोऽस्माभिरिद्ध्या आहूतः। स कथयति—इतः सप्तमे दिवस उत्तरे मनुष्यधर्मे रिद्धिप्रातिहार्यं विदर्शयिष्यामीति। नूनं श्रमणो गौतमः पक्षपर्येषणं कर्तुकामः। भवद्भिरपि ब्रह्मचारिणां साहाय्यं करणीयम्। सप्तमे दिवसे युष्माभिर्बहिः श्रावस्त्या निर्गन्तव्यम्। तैस्तथेति प्रतिज्ञातम्। अथान्यतमस्मिन् पर्वते पञ्च-
10 मात्राणि ऋषिशतानि प्रतिवसन्ति। अथ रक्ताक्षः परिव्राजको येन ते ऋषयस्तेनोपसंक्रान्तः। उपसंक्रम्य तेषामेतत्प्रकरणं विस्तरेणारोचयति, एवं चाह—यत्खलु भवन्तो जानीरन्—श्रमणो गौतम ऋद्ध्या आहूतः। स कथयति—इतः सप्तमे दिवसे उत्तरे मनुष्यधर्मे रिद्धिप्रातिहार्यं विदर्शयिष्यामीति। नूनं श्रमणो गौतमः पक्षपर्येषणं कर्तुकामः। भवद्भिरपि सब्रह्मचारिणां साहाय्यं करणीयम्। सप्तमे दिवसे युष्माभिः श्रावस्तीमागन्तव्यम्। तैस्तथेति प्रतिज्ञातम्।
15 तेन खलु समयेन सुभद्रो नाम परिव्राजकः पञ्चाभिज्ञः। तस्य कुशिनगर्यामावसथोऽनवतप्ते महासरसि दिवा विहारः। अथ रक्ताक्षः परिव्राजको येन सुभद्रः परिव्राजकस्तेनोपसंक्रान्तः। उपसंक्रम्य एतत्प्रकरणं विस्तरेणारोचयति, एवं चाह—यत्खलु सुभद्र जानीयाः—श्रमणो गौतमोऽस्माभिः ऋद्ध्या आहूतः। स कथयति—इतः सप्तमे दिवसे उत्तरे मनुष्यधर्मे रिद्धिप्रातिहार्यं विदर्शयिष्यामीति। नूनं श्रमणो गौतमः पक्षपर्येषणं कर्तुकामः। त्वया
C 153 20 सब्रह्मचारिणां साहाय्यं करणीयम्। सप्तमे दिवसे त्वया श्रावस्तीमागन्तव्यम्। सुभद्रेणाभिहितम्—न शोभनं भवद्भिः कृतं यद्युष्माभिः श्रमणो गौतमो रिद्ध्या आहूतः। तत्कस्य हेतोः? मम तावत् कुशिनगर्यामावासोऽनवतप्ते महासरसि दिवा विहारः। श्रमणस्य गौतमस्य शारिपुत्रो नाम शिष्यस्तस्य चुन्दो नाम श्रामणेरकस्तस्यापि तत्रैवानवतप्ते महासरसि दिवा विहारः। न तथानवतप्तकायिका देवता अपि कारान् कर्तव्यान् मन्यन्ते यथा तस्य।
25 एकोऽयं समयः। इहाहं कुशिनगरीं पिण्डाय चरित्वा पिण्डपातमादाय अनवतप्तं महासरसं गच्छामि। तस्य ममानवतप्तकायिका देवता अनवतप्तान्महासरसः पानीयमुद्धृत्य एकान्ते न प्रयच्छति। चुन्दः श्रमणोद्देशः पांशुकूलान्यादायानवतप्तं महासरो गच्छति। तस्यानवतप्तकायिका देवता पांशुकूलानि धावयित्वा तेन पानीयेनात्मानं सिञ्चति। यस्य तावद्वयं शिष्यप्रतिशिष्यकयापि न तुल्याः, स युष्माभिरुत्तरे मनुष्यधर्मे रिद्धिप्रातिहार्येणाहूतः। न
30 शोभनं भवद्भिः कृतं यच्छ्रमणो गौतमो रिद्धिप्रातिहार्येणाहूतः। एवमहं जाने यथा महर्द्धिकः श्रमणो गौतमो महानुभाव इति। रक्ताक्षेणाभिहितम्—त्वं तावच्छ्रमणस्य गौतमस्य पक्षं वदसि। त्वया तावन्न गन्तव्यम्। सुभद्रेणाभिहितम्—नैव गमिष्यामीति॥

अथ राज्ञः प्रसेनजितः कौशलस्य कालो नाम्ना भ्राता अभिरूपो दर्शनीयः प्रासादिकः श्राद्धो भद्रः कल्याणाशयः। स राज्ञः प्रसेनजितः कौशलस्य निवेशनद्वारेणाभिनिष्क्रामति। अन्यतमया चावरुद्धिकया प्रासादतलगतया राजकुमारं दृष्ट्वा स्रग्दामं क्षिप्तम्। तत् तस्योपरि निपतितम्। मित्रारिमध्यमो लोकः। तै राज्ञे निवेदितम्—यत्खलु देव जानीथाः—कालेन देवस्यान्तःपुरं प्रार्थितम्। राजा प्रसेनजित् कौशलश्चण्डो रभसः कर्कशः। 5 तेनापरीक्ष्य पौरुषेयाणामाज्ञा दत्ता—गच्छन्तु भवन्तः। शीघ्रं कालस्य हस्तपादान् छिन्दन्तु। एवं देवेति पौरुषेयै राज्ञः प्रसेनजितः कौशलस्य प्रतिश्रुत्य कालस्य वीथीमध्ये हस्तपादाश्छिन्नाः। स आर्तस्वरं क्रन्दते, दुःखां तीव्रां खरां कटुकाममनापां वेदनां वेदयते। कालं राजकुमारं दृष्ट्वा महाजनकायो विक्रोष्टुमारब्धः। पूरणादयश्च निर्ग्रन्थास्तं प्रदेशमनुप्राप्ताः। कालस्य ज्ञातिभिरभिहितम्—एतमार्याः कालं राजकुमारं सत्याभियाचनया यथापौराणं कुरुध्व- 10 मिति। पूरणेनाभिहितम्—एष श्रमणस्य गौतमस्य श्रावकः। श्रमणधर्मेण गौतमो यथापौराणं करिष्यति। अथ कालस्य राजकुमारस्यैतदभवत्—कृच्छ्रसंकटसंबाधप्राप्तं मां भगवान् न समन्वाहरतीति विदित्वा गाथां भाषते—

इमामवस्थां मम लोकनाथो
न वेत्ति संबाधगतस्य कस्मात्। 15
नमोऽस्तु तस्मै विगतज्वराय
सर्वेषु भूतेष्वनुकम्पकाय॥ १॥

असंमोषधर्माणो बुद्धा भगवन्तः। तत्र भगवानायुष्मन्तमानन्दमामन्त्रयते स्म—गच्छ त्वमानन्द संघाटिमादाय अन्यतमेन भिक्षुणा पश्चाच्छ्रमणेन येन कालो राजभ्राता तेनोपसंक्राम। उपसंक्रम्य कालस्य राजकुमारस्य हस्तपादान् यथास्थाने स्थापयित्वा एवं 20 वद—ये केचित् सत्त्वा अपदा वा द्विपदा वा बहुपदा वा अरूपिणो वा रूपिणो वा संज्ञिनो वा असंज्ञिनो वा नैवसंज्ञिनो वा नासंज्ञिनः, तथागतोऽर्हन् सम्यक्संबुद्धस्तेषां सत्त्वानामग्र आख्यायते। ये केचिद् धर्मा असंस्कृता वा संस्कृता वा, विरागो धर्मस्तेषामग्र आख्यातः। ये केचित् संघा वा गणा वा पूगा वा पर्षदो वा, तथागतश्रावकसंघस्तेषामग्र आख्यातः। अनेन सत्येन सत्यवाक्येन तव शरीरं यथापौराणं स्यात्। एवं भदन्तेत्यायुष्मा- 25 नानन्दो भगवतः प्रतिश्रुत्य संघाटीमादायान्यतमेन भिक्षुणा पश्चाच्छ्रमणेन येन राजभ्राता कालस्तेनोपसंक्रान्तः। उपसंक्रम्य कालस्य राजकुमारस्य हस्तपादान् यथास्थाने स्थापयित्वा एवमाह—ये केचित् सत्त्वा अपदा वा द्विपदा वा चतुष्पदा वा बहुपदा वा यावन्नैवसंज्ञिनो नासंज्ञिनः, तथागतोऽर्हन् सम्यक्संबुद्धस्तेषां सत्त्वानामग्र आख्यातः। ये केचिद्धर्माः संस्कृता वा असंस्कृता वा, विरागो धर्मस्तेषामग्र आख्यातः। ये केचित् संघा वा गणा वा पूगा वा 30 पर्षदो वा, तथागतश्रावकसंघस्तेषामग्र आख्यातः। अनेन सत्येन सत्यवाक्येन तव शरीरं यथापौराणं भवतु। सहाभिधानात् कालस्य राजकुमारस्य शरीरं यथापौराणं संवृत्तम्,

C 154 C 155

यथापि तत्र बुद्धस्य बुद्धानुभावेन देवतानां च देवतानुभावेन । कालेन कुमारेण तेनैव संवेगेन अनागामिफलं साक्षात्कृतं ऋद्धिश्चापि निर्ह्वता । तेन भगवत आरामो निर्यातितः । स भगवत उपस्थानं कर्तुमारब्धः । यत्रास्य शरीरं गण्डगण्डं कृतं तस्य गण्डक आरामिक इति संज्ञा संवृत्ता । अथ राज्ञा प्रसेनजिता कौशलेन सर्वोपकरणैः स प्रवारितः । कालेनाभिहितम्—
5 न मम त्वया प्रयोजनम् । भगवत एवोपस्थानं करिष्यामीति ॥

राज्ञा प्रसेनजिता कौशलेन अन्तरा च श्रावस्तीमन्तरा च जेतवनमत्रान्तराद्भगवतः प्रातिहार्यमण्डपः कारितः शतसहस्रहस्तः....चतुर्णां मण्डपो विततः । भगवतः सिंहासनं प्रज्ञप्तम् । अन्यतीर्थिकश्रावकैरपि पूर्णादीनां निर्ग्रन्थानां प्रत्येकप्रत्येकमण्डपः कारितः । राज्ञा प्रसेनजिता कौशलेन सप्तमे दिवसे यावज्जेतवनं यावच्च भगवतः प्रातिहार्यमण्डपोऽन्त-
10 रात् सर्वोऽसौ प्रदेशोऽपगतपाषाणशर्करकठल्यो व्यवस्थितः । धूपचूर्णान्धकारः कृतः । छत्रध्वजपताकागन्धोदकपरिषिक्तो नानापुष्पाभिकीर्णो रमणीयः । अन्तरान्तरा च पुष्पमण्डपाः सज्जीकृताः ॥

C 156 अथ भगवान् सप्तमे दिवसे पूर्वाह्णे निवास्य पात्रचीवरमादाय श्रावस्तीं पिण्डाय प्राविक्षत् । श्रावस्तीं पिण्डाय चरित्वा कृतभक्तकृत्यः पश्चाद्भक्तपिण्डपातप्रतिक्रान्तः पात्र-
15 चीवरं प्रतिशाम्य बहिर्विहारस्य पादौ प्रक्षाल्य विहारं प्रविष्टः प्रतिसंलयनाय । अथ राजा प्रसेनजित् कौशलोऽनेकशतपरिवारोऽनेकसहस्रपरिवारोऽनेकशतसहस्रपरिवारो येन भगवतः प्रातिहार्यमण्डपस्तेनोपसंक्रान्तः । उपसंक्रम्य प्रज्ञप्त एवासने निषण्णः । तीर्थ्या अपि महाजनकायपरिवृता येन मण्डपस्तेनोपसंक्रान्ताः । उपसंक्रम्य प्रत्येकप्रत्येकस्मिन्नासने निषण्णाः । निषद्य राजानं प्रसनेजितं कौशलमिदमवोचन्—यत्खलु देव जानीयाः—एते वय-
20 मागताः । कुत्र एतर्हि श्रमणो गौतमः ? तेन भवन्तो मुहूर्तमागमयत । एष इदानीं भगवानधिगमिष्यति । अथ राजा प्रसेनजित् कौशल उत्तरं माणवमामन्त्रयते—एहि त्वमुत्तर, येन भगवांस्तेनोपसंक्राम । उपसंक्रम्यास्माकं वचनेन भगवतः पादौ शिरसा वन्दित्वा अल्पाबाधतां च पृच्छ, अल्पातङ्कतां च लघूत्थानतां च यात्रां च बलं च सुखं च अनवद्यतां च स्पर्शविहारतां च । एवं च वद—राजा भदन्त प्रसेनजित् कौशल एवमाह—इमे भदन्त तीर्थ्या
25 आगता यस्येदानीं कालं मन्यते । एवं देवेत्युत्तरो माणवो राज्ञः प्रसेनजितः कौशलस्य प्रतिश्रुत्य येन भगवांस्तेनोपसंक्रान्तः । उपसंक्रम्य भगवता सार्धं संमुखं संमोदनीं संरञ्जनीं विविधां कथां व्यतिसार्य एकान्ते निषण्णः । एकान्तनिषण्ण उत्तरो माणवो भगवन्तमिदमवोचत्—राजा भदन्त प्रसेनजित् कौशलो भगवतः पादौ शिरसा वन्दते, अल्पाबाधतां च पृच्छति अल्पातङ्कतां च लघूत्थानतां च यात्रां च बलं च सुखं च अनवद्यतां च स्पर्शविहारतां च ।
30 सुखी भवतु माणव राजा प्रसेनजित् कौशलस्त्वं च । राजा भदन्त प्रसेनजित् कौशल एवमाह—इमे भदन्त तीर्थ्या आगता यस्येदानीं भगवान् कालं मन्यते । एवमुक्ते भगवानुत्तरं माणवमिदमवोचत्—माणव एषोऽहमद्यागच्छामि । भगवता तथाधिष्ठितो यथोत्तरो

माणवस्तत एवोपरिविहायसा प्रक्रान्तः, येन राजा प्रसेनजित् कौशलस्तेनोपसंक्रान्तः। C 157
अद्राक्षीद्राजा प्रसेनजित् कौशल उत्तरं माणवकमुपरि विहायसा आगच्छन्तम्। दृष्ट्वा च पुन-
स्तीर्थ्यानिदमवोचत्—विदर्शितं भगवतोत्तरे मनुष्यधर्मे रिद्धिप्रातिहार्यम्। यूयमपि विदर्शयत।
तीर्थ्याः कथयन्ति—महाजनकायोऽत्र महाराज संनिपतितः। किं त्वं ज्ञास्यसि केनैतद्
विदर्शितमस्माभिर्वा श्रमणेन गौतमेन ? अथ भगवांस्तद्रूपं समाधिं समापन्नो यथा समाहिते 5
चित्तेऽर्गडच्छिद्रेणार्चिषो निर्गत्य भगवतः प्रातिहार्यमण्डपे निपतिताः, सर्वश्च प्रातिहार्य-
मण्डपः प्रज्वलितः। अद्राक्षुस्तीर्थ्या भगवतः प्रातिहार्यमण्डपं प्रज्वलितम्, दृष्ट्वा च पुनः
प्रसेनजितं कौशलमिदमवोचन्—एष इदानीं महाराज श्रमणस्य गौतमस्य प्रातिहार्यमण्डपः
प्रज्वलितः। गच्छ इदानीं निर्वापय। अथ सोऽग्निरस्पृष्ट एव वारिणा सर्वप्रातिहार्यमण्डप-
मदग्ध्वा स्वयमेव निर्वृतो यथापि तद्बुद्धस्य बुद्धानुभावेन देवतानां च देवतानुभावेन। अथ 10
राजा प्रसेनजित् कौशलस्तीर्थ्यानिदमवोचत्—विदर्शितं भगवतोत्तरे मनुष्यधर्मे रिद्धिप्राति-
हार्यम्। यूयमपि विदर्शयत। तीर्थ्याः कथयन्ति—महाजनकायोऽत्र महाराज संनिपतितः।
किं त्वं ज्ञास्यसि केन एतद्विदर्शितमस्माभिर्वा श्रमणेन गौतमेन ? भगवता कनकमरीचिका-
वभासा उत्सृष्टाः, येन सर्वलोक उदारेणावभासेन स्फुटोऽभूत्। अद्राक्षीद्राजा प्रसेनजित्
कौशलः सर्वलोकमुदारेणावभासेन स्फुटम्। दृष्ट्वा च पुनस्तीर्थ्यानामन्त्रयते—विदर्शितं 15
भगवतोत्तरे मनुष्यधर्मे रिद्धिप्रातिहार्यम्। यूयमपि विदर्शयत। तीर्थ्याः कथयन्ति—महाजन-
कायोऽत्र महाराज संनिपतितः। किं त्वं ज्ञास्यसि केन एतद्विदर्शितमस्माभिर्वा श्रमणेन
गौतमेन ? भगवता कनकमरीचिकावभासा उत्सृष्टा येन सर्वलोक उदारेणावभासेन
स्फुटोऽभूत्। अद्राक्षीद्राजा प्रसेनजित् कौशलः सर्वलोकमुदारेणावभासेन स्फुटम्। दृष्ट्वा
च पुनस्तीर्थ्यानामन्त्रयते—विदर्शितं भगवतोत्तरे मनुष्यधर्मे रिद्धिप्रातिहार्यम्। यूयमपि 20
विदर्शयत। तीर्थ्याः कथयन्ति—महाजनकायोऽत्र महाराज संनिपतितः। किं त्वं ज्ञास्यसि
केन एतद्विदर्शितमस्माभिर्वा श्रमणेन वा गौतमेन ? गण्डकेनारामिकेणोत्तरकौरवाद् द्वीपात्
कर्णिकारवृक्षमादाय भगवतः प्रातिहार्यमण्डपस्याग्रतः स्थापितः। रत्नकेनाप्यारामिकेन
गन्धमादनादशोकवृक्षमानीय भगवतः प्रातिहार्यमण्डपस्य पृष्ठतः स्थापितः। अथ राजा C 158
प्रसेनजित् कौशलस्तीर्थ्यानिदमवोचत्—विदर्शितं भगवतोत्तरे मनुष्यधर्मे रिद्धिप्रातिहार्यम्। 25
यूयमपि विदर्शयत। तीर्थ्याः कथयन्ति—महाजनकायोऽत्र संनिपतितः। किं त्वं ज्ञास्यसि
केन एतद्विदर्शितमस्माभिर्वा श्रमणेन वा गौतमेन ? भगवता साभिसंस्कारेण पृथिव्यां पादौ
न्यस्तौ। महापृथिवीचालः संवृत्तः। अयं त्रिसाहस्रमहासाहस्रो लोकधातुरियं महापृथिवी
षड्विकारं कम्पति प्रकम्पति संप्रकम्पति। चलति संचलति संप्रचलति। व्यथति
संव्यथति संप्रव्यथति। पूर्वावनमति पश्चिमोन्नमति। [पूर्वोन्नमति पश्चिमावनमति।] 30
दक्षिणोन्नमति उत्तरावनमति। उत्तरोन्नमति दक्षिणावनमति। मध्ये उन्नमति अन्तेऽव-
नमति। मध्येऽवनमति अन्ते उन्नमति। इमौ सूर्यचन्द्रमसौ भासतस्तपतो विरोचतः।

विचित्राणि च आश्चर्याद्भुतानि प्रादुर्भूतानि। गगनतलस्था देवता भगवत उपरिष्टा-
द्दिव्यान्युत्पलानि क्षिपन्ति पद्मानि कुमुदानि पुण्डरीकाण्यगरुचूर्णानि चन्दनचूर्णानि तगर-
चूर्णानि तमालपत्राणि, दिव्यानि मान्दारकाणि पुष्पाणि क्षिपन्ति, दिव्यानि च वादित्राणि
संप्रवादयन्ति, चैलविक्षेपं चाकार्षुः॥

5 अथ तेषां ऋषीणामेतदभवत्—किमर्थं महापृथिवीचालः संवृत्त इति। तेषामेत-
दभवत्—नूनमस्माकं सब्रह्मचारिभिः श्रमणो गौतमो रिद्ध्या आहूतो भविष्यतीति विदित्वा
पञ्च ऋषिशतानि श्रावस्तीं संप्रस्थितानि। तेषामागच्छतां भगवता एकायनो मार्गोऽधिष्ठितः।
अद्राक्षुस्ते ऋषयो भगवन्तं दूरादेव द्वात्रिंशता महापुरुषलक्षणैः समलंकृतं मूर्तिमन्तमिव
धर्मं हव्यावसिक्तमिव हुतवहं काञ्चनभाजनस्थमिव प्रदीपं जङ्गममिव सुवर्णपर्वतं नानारत्न-
10 विचित्रमिव सुवर्णरूपं स्फुटपटुमहाविमलविशुद्धबुद्धिं बुद्धं भगवन्तम्। दृष्ट्वा च पुनर्न
तथा द्वादशवर्षेऽभ्यस्तशमथो योगाचारस्य चित्तस्य कल्यतां जनयति, अपुत्रस्य वा पुत्रः
C 159 प्रतिलम्भो दरिद्रस्य वा निधिदर्शनं राज्याभिनन्दिनो वा राज्याभिषेको यथा तत्प्रथमत-
पूर्वबुद्धारोपितकुशलमूलानां तत्प्रथमतो बुद्धदर्शनम्। अथ ते ऋषयो येन भगवांस्तेनोप-
संक्रान्ताः। उपसंक्रम्य भगवतः पादौ शिरसा वन्दित्वा एकान्ते स्थिताः। एकान्तस्थितास्ते
15 ऋषयो भगवन्तमिदमवोचन्—लभेमहि वयं भदन्त स्वाख्याते धर्मविनये प्रव्रज्यामुपसंपदं
भिक्षुभावम्। चरेम वयं भगवतोऽन्तिके प्रव्रज्य ब्रह्मचर्यम्। ते भगवता ब्राह्मेण स्वरेणा-
हूताः—एत भिक्षवश्चरत ब्रह्मचर्यम्। सहाभिधानान्मुण्डाः संवृत्ताः संघाटीप्रावृताः पात्रकर-
व्यग्रहस्ताः सप्ताहावरोपितकेशश्मश्रवो वर्षशतोपसंपन्नस्य भिक्षोरीर्यापथेनावस्थिताः।

एहीति चोक्ताश्च तथागतेन
20 मुण्डाश्च संघाटिपरीतदेहाः।
सद्य(द्यः) प्रशान्तेन्द्रिया एव तस्थु-
रेवं स्थिता बुद्धमनोरथेन॥ २॥

अथ भगवान् दिव्यमानुष्येण पूजासत्कारेण सत्कृतो गुरुकृतो मानितः पूजितोऽर्ह-
न्नर्हत्परिवारो सप्तभिश्च निकायैः संपुरस्कृतो महता च जनौघेन येन प्रातिहार्यमण्डपस्तेनोप-
25 संक्रान्तः। उपसंक्रम्य पुरस्ताद्भिक्षुसंघस्य प्रज्ञप्त एवासने निषण्णः। भगवतः कायाद्रश्मयो
निर्गत्य सर्वं प्रातिहार्यमण्डपं सुवर्णवर्णावभासं कृतवन्तः। अथ रुद्रसुदत्तो गृहपतिरुत्थाया-
सनादेकांसमुत्तरासङ्गं कृत्वा दक्षिणं जानुमण्डलं पृथिव्यां प्रतिष्ठाप्य येन भगवांस्तेनाञ्जलिं
प्रणम्य भगवन्तमिदमवोचत्—अल्पोत्सुको भगवान् भवतु। अहं तीर्थ्यैः सार्धमुत्तरे मनुष्य-
धर्मे रिद्धिप्रातिहार्यं विदर्शयिष्यामि। निर्भर्त्सयिष्यामि तीर्थ्यान्। सह धर्मेण नन्दयिष्यामि
30 देवमनुष्यान्। तोषयिष्यामि सज्जनहृदयमनांसि। न त्वं गृहपते एभिः ऋद्ध्या आहूतः,
अपि त्वहं तीर्थ्यैः रिद्ध्या आहूतः। अहमुत्तरे मनुष्यधर्मे रिद्धिप्रातिहार्यं विदर्शयिष्यामि।
C 160 स्थानमेतद्विद्यते यत्तीर्थ्या एवं वदेयुः—नास्ति श्रमणस्य गौतमस्योत्तरे मनुष्यधर्मे रिद्धिप्राति-

हार्यम्। श्रावकस्यैषा गृहिणोऽवदातवसनस्य ऋद्धिरिति। निषीद त्वं गृहपते यथास्वके आसने। निषण्णो लूहसुदत्तो गृहपतिर्यथास्वके आसने। यथा लूहसुदत्तो गृहपतिरेवं कालो राजभ्राता, रम्भक आरामिकः, ऋद्धिलमाता उपासिका श्रमणोद्देशिका, चुन्दः श्रमणोद्देशः, उत्पलवर्णा भिक्षुणी। अथायुष्मान् महामौद्गल्यायन उत्थायासनादेकांसमुत्तरासङ्गं कृत्वा येन भगवांस्तेनाञ्जलिं प्रणम्य भगवन्तमिदमवोचत्—अल्पोत्सुको भगवान् भवतु। अहं तीर्थ्यैः 5 सार्धमुत्तरे मनुष्यधर्मे रिद्धिप्रातिहार्यं विदर्शयिष्यामि। तीर्थ्यान् निगृह्णिष्यामि। सह धर्मेण नन्दयिष्यामि देवमनुष्यान्। तोषयिष्यामि सज्जनहृदयमनांसि। प्रतिबलस्त्वं मौद्गल्यायन तीर्थ्यान् सहधर्मेण निगृहीतुम्। अपि तु न त्वं तीर्थ्यै रिद्ध्या आहूतः। अहमेषामुत्तरे मनुष्यधर्मे रिद्धिप्रातिहार्यं विदर्शयिष्यामि हिताय प्राणिनाम्। निर्भर्त्सयिष्यामि तीर्थ्यान्। नन्दयिष्यामि देवमनुष्यान्। तोषयिष्यामि सज्जनहृदयमनांसि। निषीद त्वं मौद्गल्यायन यथास्वके 10 आसने। निषण्ण आयुष्मान् महामौद्गल्यायनो यथास्वके आसने। तत्र भगवान् राजानं प्रसेनजितं कौशलमामन्त्रयते—को महाराज तथागतमध्येषते उत्तरे मनुष्यधर्मे रिद्धिप्रातिहार्यं हिताय प्राणिनाम्? अथ राजा प्रसेनजित् कौशल उत्थायासनादेकांसमुत्तरासङ्गं कृत्वा दक्षिणं जानुमण्डलं पृथिव्यां प्रतिष्ठाप्य येन भगवांस्तेनाञ्जलिं प्रणम्य भगवन्तमेतदवोचत्—अहं भदन्त भगवन्तमध्येषे उत्तरे मनुष्यधर्मे रिद्धिप्रातिहार्यं विदर्शयितुम्। भगवानुत्तरे 15 मनुष्यधर्मे रिद्धिप्रातिहार्यं [ विदर्शयतु ] हिताय प्राणिनाम्। निर्भर्त्सयतु तीर्थ्यान्। नन्दयतु देवमनुष्यान्। तोषयतु सज्जनहृदयमनांसि। अथ भगवांस्तद्रूपं समाधिं समापन्नो यथा समाहिते चित्ते स्वस्मिन्नासनेऽन्तर्हितः पूर्वस्यां दिशि उपरिविहायसमभ्युद्गम्य चतुर्विधमीर्यापथं कल्पयति तद्यथा—चंक्रम्यते तिष्ठति निषीदति शय्यां कल्पयति। तेजोधातुमपि संपद्यते। तेजोधातुसमापन्नस्य बुद्धस्य भगवतो विविधान्यर्चींषि काया- 20 न्निश्चरन्ति तद्यथा नीलपीतानि लोहितान्यवदातानि मञ्जिष्ठानि स्फटिकवर्णानि। अनेकान्यपि प्रातिहार्याणि विदर्शयति। अधःकायं प्रज्वालयति, उपरिमात् कायाच्छीतला वारिधाराः स्यन्दन्ते। यथा पूर्वस्यां दिशि एवं दक्षिणस्यां दिशीति चतुर्दिशं चतुर्विधं ऋद्धिप्रातिहार्यं विदर्श्य तान् ऋद्ध्यभिसंस्कारान् प्रतिप्रस्रभ्य प्रज्ञप्त एवासने निषण्णः। निषद्य भगवान् राजानं प्रसेनजितं कौशलमिदमवोचत्—इयं महाराज तथागतस्य सर्वश्रावकसाधारणा 25 ऋद्धिः। तत्र भगवान् द्विरपि राजानं प्रसेनजितं कौशलमामन्त्रयते—को महाराज तथागतमध्येषतेऽसाधारणायां ऋद्ध्यामुत्तरे मनुष्यधर्मे रिद्धिप्रातिहार्यं हिताय प्राणिनाम्? अथ राजा प्रसेनजित् कौशल उत्थायासनादेकांसमुत्तरासङ्गं कृत्वा दक्षिणं जानुमण्डलं पृथिव्यां प्रतिष्ठाप्य येन भगवांस्तेनाञ्जलिं प्रणम्य भगवन्तमिदमवोचत्—अहं भदन्त भगवन्तमध्येषेऽसाधारणायां ऋद्ध्यामुत्तरे मनुष्यधर्मे ऋद्धिप्रातिहार्यं हिताय प्राणिनाम्। निर्भर्त्सयतु 30 तीर्थ्यान्। नन्दयतु देवमनुष्यान्। तोषयतु सज्जनहृदयमनांसि॥

C 161

भगवता लौकिकं चित्तमुत्पादितम्। धर्मता खलु बुद्धानां भगवतां यदि लौकिकं चित्तमुत्पादयन्ति, अन्तशः कुन्तपिपीलिकोऽपि प्राणी भगवतः चेतसि चित्तमाजानन्ति।

अथ लोकोत्तरचित्तमुत्पादयन्ति, तत्रागतिर्भवति प्रत्येकबुद्धानामपि, कः पुनर्वादः श्रावकाणाम्? अथ शक्रब्रह्मादीनां देवानामेतदभवत्—किमर्थं भगवता लौकिकं चित्तमुत्पा-
C 162 दितम्? तेषामेतदभवत्—श्रावस्त्यां महाप्रातिहार्यं विदर्शयितुकामो हिताय प्राणिनाम्। अथ शक्रब्रह्मादयो देवा अनेकानि च देवताशतसहस्राणि भगवतश्चेतसा चित्तमाज्ञाय तद्यथा
5 बलवान् पुरुषः संकुञ्चितं वा बाहुं प्रसारयेत्, प्रसारितं वा संकुञ्चयेत्, एवमेव शक्रब्रह्मादयो देवा अनेकानि च देवताशतसहस्राणि च देवलोकेऽन्तर्हितानि, भगवतः पुरतस्तस्थुः। अथ ब्रह्मादयो देवा भगवन्तं त्रिः प्रदक्षिणीकृत्य भगवतः पादौ शिरसा वन्दित्वा दक्षिणं पार्श्वं निश्रित्य निषण्णाः। शक्रादयो देवा भगवन्तं त्रिः प्रदक्षिणीकृत्य भगवतः पादौ शिरसा वन्दित्वा वामं पार्श्वं निश्रित्य निषण्णाः। नन्दोपनन्दाभ्यां नागराजाभ्यां भगवत उपनामितं
10 निर्मितं सहस्रपत्रं शकटचक्रमात्रं सर्वसौवर्णं रत्नदण्डं पद्मम्। भगवांश्च पद्मकर्णिकायां निषण्णः पर्यङ्कमाभुज्य ऋजुं कायं प्रणिधाय प्रतिमुखं स्मृतिमुपस्थाप्य। पद्मस्योपरि पद्मं निर्मितम्। तत्रापि भगवान् पर्यङ्कनिषण्णः। एवमग्रतः पृष्ठतः पार्श्वतः। एवं भगवता बुद्धपिण्डी निर्मिता यावदकनिष्ठभवनमुपादाय बुद्धा भगवन्तो पर्षन्निर्मितम् (?)। केचिद्बुद्ध-निर्माणाश्चंक्रम्यन्ते, केचित् तिष्ठन्ति, केचिन्निषीदन्ति, केचिच्छायां कल्पयन्ति, तेजोधातु-
15 मपि समापद्यन्ते, ज्वलनतपनवर्षणविद्योतनप्रातिहार्याणि कुर्वन्ति। अन्ये प्रश्नान् पृच्छन्ति, अन्ये विसर्जयन्ति। गाथाद्वयं भाषन्ते—

आरभध्वं निष्क्रामत युज्यध्वं बुद्धशासने।
धुनीत मृत्युनः सैन्यं नडागारमिव कुञ्जरः॥ ३॥
यो ह्यस्मिन् धर्मविनये अप्रमत्तश्चरिष्यति।
20 प्रहाय जातिसंसारं दुःखस्यान्तं करिष्यति॥ ४॥

भगवता तथा अधिष्ठितं यथा सर्वलोकोऽनावृतमद्राक्षीद्बुद्धावतंसकं यावदकनिष्ठ-भवनमुपादाय अन्ततो बालदारका अपि, यथापि तद्बुद्धस्य बुद्धानुभावेन देवतानां च देवतानुभावेन॥

C 163 तत्र भगवान् भिक्षूनामन्त्रयते स्म—तावत् प्रतिगृह्णीत भिक्षवोऽनुपूर्वे स्थिताया
25 बुद्धपिण्ड्या निमित्तम्। एकपदेऽन्तर्धास्यन्ति। यावदेकपदेऽन्तर्हिता। अथ भगवांस्तं ऋद्ध्यभिसंस्कारं प्रतिप्रस्रभ्य प्रज्ञप्त एवासने निषण्णः। निषद्य भगवांस्तस्यां वेलायां गाथां भाषते—

तावदवभासते कृमिर्यावन्नोदयते दिवाकरः।
विरोचन उद्गते तु वैरव्यार्तो (?) भवति न चावभासते॥ ५॥
30 तावदवभासितमास तार्किकैर्यावन्नोदितवांस्तथागतः।
संबुद्धावभासिते तु लोके न तार्किको भासते न चास्य श्रावकः॥ ६॥

अथ राजा प्रसेनजित् कौशलस्तीर्थ्यानिदमवोचत्—विदर्शितं भगवता उत्तरे मनुष्य-धर्मे रिद्धिप्रातिहार्यम्। यूयमपि विदर्शयध्वम्। एवमुक्ते तीर्थ्यास्तूष्णींभूता यावत्

प्रयाणपरमाः स्थिताः । द्विरपि राजा प्रसेनजित् कौशलस्तीर्थ्यानिदमवोचत्—विदर्शितं भगवता उत्तरे मनुष्यधर्मे रिद्धिप्रातिहार्यम् । यूयमपि विदर्शयध्वम् । एवमुक्त तीर्थ्या अन्योन्यं विघट्टयन्त एवाहुः—त्वमुत्तिष्ठ त्वमुत्तिष्ठेति । न कश्चिदप्युत्तिष्ठति ॥

तेन खलु पुनः समयेन पाञ्चिको महासेनापतिस्तस्यामेव पर्षदि संनिपतितोऽभूत् संनिपतितः । अथ पाञ्चिकस्य यक्षसेनापतेरेतदभवत्—चिरमपि ते इमे मोहपुरुषा भगवन्तं 5 विहेठयिष्यन्ति भिक्षुसंघं चेति विदित्वा तुमुलं वातवर्षं संजनय्य महान्तमुत्सृष्टवान् । तुमुलेन वातवर्षेण तीर्थ्याणां मण्डपा अदर्शनपथे क्षिप्ताः । तीर्थ्या ह्यशनिवर्षेण बाध्यमाना दिशो दिग्भ्यो विचलन्ति । अनेकानि प्राणिशतसहस्राण्यतिवर्षेण बाध्यमानानि येन भगवांस्तेनोपसंक्रान्ताः । उपसंक्रम्य भगवतः पादौ शिरसा वन्दित्वा एकान्ते निषण्णानि । भगवता तथा अधिष्ठितं यथा तस्यां पर्षद्येकवारिबिन्दुर्न पतितः । एकान्तनिषण्णान्यनेकानि 10 प्राणिशतसहस्राण्युदानमुदानयन्ति—अहो बुद्धः, अहो धर्मः, अहो संघः । अहो धर्मस्य स्वाख्याततता । पाञ्चिकेन यक्षसेनापतिना तीर्थ्या अभिहिताः—एते यूयं मोहपुरुषा भगवन्तं शरणं गच्छध्वं धर्मं च भिक्षुसंघं च । ते निष्पलायमानाः कथयन्ति—एते वयं पर्वतं शरणं गच्छामः, वृक्षाणां कुड्यानामारामाणां च शरणं गच्छामः ॥

O 164

अथ भगवांस्तस्यां वेलायां गाथां भाषते— 15

बहवः शरणं यान्ति पर्वतांश्च वनानि च ।
आरामांश्चैत्यवृक्षांश्च मनुष्या भयतर्जिताः ॥ ६ ॥

न ह्येतच्छरणं श्रेष्ठं नैतच्छरणमुत्तमम् ।
नैतच्छरणमागम्य सर्वदुःखात् प्रमुच्यते ॥ ७ ॥

यस्तु बुद्धं च धर्मं च संघं च शरणं गतः । 20
आर्यसत्यानि चत्वारि पश्यति प्रज्ञया यदा ॥ ८ ॥

दुःखं दुःखसमुत्पन्नं निरोधं समतिक्रमम् ।
आर्यं चाष्टाङ्गिकं मार्गं क्षेमं निर्वाणगामिनाम् ॥ ९ ॥

एत[द्वै] शरणं श्रेष्ठमेतच्छरणमुत्तमम् ।
एतच्छरणमागम्य सर्वदुःखात्प्रमुच्यते ॥ १० ॥ 25

अथ पूरणस्यैतदभवत्—श्रमणो गौतमो मदीयान् श्रावकानन्वावर्तयिष्यति । इति विदित्वा निष्पलायन् कथयति—अहं युष्माकं शासनसर्वस्वं कथयिष्यामि । यावद् दृष्टिगतान् ग्राहयितुमारब्धः । यदुत अन्तवांल्लोकः, अनन्तः, अन्तवांश्चानन्तवांश्च, नैवान्तवान्नानन्तवान्, स जीवस्तच्छरीरमन्यो जीवोऽन्यच्छरीरमिति । ते कलहजाता विहरन्ति भण्डनजाता विगृहीता विवादमापन्नाः । पूरणोऽपि भीतो निष्पलायितुमारब्धः । स निष्पलायन् पण्डकेन प्रतिमार्गे 30 दृष्टः । पण्डको दृष्ट्वा गाथां भाषते—

C 165 कुतस्त्वमागच्छसि मुक्तपाणि
रथकारमेष इव निकृत्तशृङ्गः।
धर्मं ह्यभिज्ञाय जिनप्रशस्त-
माहिण्डसे कोलिकगर्दभो यथा ॥ ११ ॥

5 पूरणः प्राह—
गमनाय मे समयः प्रत्युपस्थितः
कायस्य मे बलवीर्यं [ न ? ] किंचित्।
स्पृष्टाश्च भावाः सुखदुःखते मे
अनावृतं ज्ञानमिहार्हताम् ॥ १२ ॥

10 दूरापगतोऽस्मि....
परतिमिरापनुदश्च तृषं पतति।
आचक्ष्व मे दूषिक एतमर्थं
शीतोदका कुत्र सा पुष्किरिणी ॥ १३ ॥

नपुंसकः प्राह—
15 एषा खलु शीता पुष्किरिणी
नलिनी च विराजति तोयधारा।
श्रमणाधम हीनासत्पुरुष
त्वमिमां ननु पश्यसि पुष्करिणीम् ॥ १४ ॥

पूरणः प्राह—
20 न त्वं नरो नापि च नारिका त्वं
श्मश्रूणि च ते नास्ति न च स्तनौ तव।
भिन्नस्वरोऽसि न च चक्रवाकः
एवं भवान् वातहतो निरुच्यते ॥ १५ ॥

अथ पूरणो निर्ग्रन्थो वालुकाघटं कण्ठे बद्धा शीतिकायां पुष्किरिण्यां पतितः। स
25 तत्रैव कालगतः ॥

अथ ते निर्ग्रन्थाः पूरणं मृगयमाणाः प्रतिमार्गे गणिकां दृष्ट्वा पृच्छन्ति—भद्रे, कंचित् त्वमद्राक्षीर्गच्छन्तमिह पूरणं धर्मशाटप्रतिच्छन्नं कटच्छत्रतभोजनम्? गणिका प्राह—

आपायिको नैरयिको मुक्तहस्तावचारकः।
श्वेताभ्यां पाणिपादाभ्यामेष ध्वंसति पूरणः ॥ १६ ॥

30 भद्रे मैवं वोचस्त्वं नैतत्तव सुभाषितम्।
धर्मशाटप्रतिच्छन्नो धर्मं संचरते ( संश्रयते ? ) मुनिः ॥ १७ ॥

गणिका प्राह—
कथं स बुद्धिमान् भवति पुरुषो व्यञ्जनान्वितः।
लोकस्य पश्यतो योऽयं ग्रामे चरति नग्नकः ॥ १८ ॥

यस्यायमीदृशो धर्मः पुरस्ताल्लम्बते दशा।
तस्य वै श्रवणौ राजा क्षुरप्रेणावकृन्ततु ॥ १९ ॥

अथ ते निर्ग्रन्था येन शीतिका पुष्किरिणी तेनोपसंक्रान्ताः। अद्राक्षुस्ते निर्ग्रन्थाः पूरणं काश्यपं पुष्किरिण्यां मृतम्। कालगतं दृष्ट्वा च पुनः पुष्किरिण्या उद्धृत्य एकान्ते छोरयित्वा प्रक्रान्ताः॥　C 166　5

भगवता बुद्धनिर्माणो निर्मितो द्वात्रिंशता महापुरुषलक्षणैः समन्वागतो मुण्डः संघाटीप्रावृतः। धर्मता खलु बुद्धा भगवन्तो निर्मितेन सार्धं निश्चयं कुर्वन्ति। यं खलु श्रावको निर्मितमभिनिर्मिमीते, यदि श्रावको भाषते, निर्मितोऽपि भाषते। श्रावके तूष्णीभूते निर्मितोऽपि तूष्णीभवति।

एकस्य भाषमाणस्य सर्वे भाषन्ति निर्मिताः।　10
एकस्य तूष्णीभूतस्य सर्वे तूष्णीभवन्ति ते ॥ २० ॥

भगवान् निर्मितं प्रश्नं पृच्छति, भगवान् व्याकरोति। एषा हि धर्मता तथागतानामर्हतां सम्यक्संबुद्धानाम्॥

भगवता तस्य महाजनकायस्य तथा अभिप्रसन्नस्य आशयं चानुशयं च धातुं प्रकृतिं च ज्ञात्वा तादृशी चतुरार्यसत्यसंप्रतिवेधकी धर्मदेशना कृता, यथा अनेकैः प्राणि- 15 शतसहस्रैः शरणगमनशिक्षापदानि कैश्चिदुष्म(?)गतान्यधिगतानि मूर्धानः क्षान्तयो लौकिका अग्रधर्माः। कैश्चित्स्रोतापत्तिफलं साक्षात्कृतं सकृदागामिफलमनागामिफलम्। कैश्चित् प्रव्रज्य सर्वक्लेशप्रहाणादर्हत्त्वं साक्षात्कृतम्। कैश्चिच्छ्रावकमहाबोधौ बीजान्यवरोपितानि। कैश्चित् प्रत्येकायां बोधौ बीजान्यवरोपितानि। यद्भूयसा सा पर्षद् बुद्धनिम्ना धर्मप्रवणा संघप्राग्भारा व्यवस्थिता। अथ भगवांस्तां पर्षदं बुद्धनिम्नां धर्मप्रवणां संघप्राग्भारां व्यवस्थाप्यो- 20 त्थायासनात् प्रक्रान्तः॥

धन्यास्ते पुरुषा लोके ये बुद्धं शरणं गताः।
निर्वृतिं ते गमिष्यन्ति बुद्धकारकृतौ जनाः ॥ २१ ॥
येऽल्पानपि जिने कारान् करिष्यन्ति विनायके।
विचित्रं स्वर्गमागम्य ते लप्स्यन्तेऽमृतं पदम् ॥ २२ ॥　25

इदमवोचद्भगवान्। आत्तमनसस्ते भिक्षवो भगवतो भाषितमभ्यनन्दन्॥

इति श्रीदिव्यावदाने प्रातिहार्यसूत्रं द्वादशमम्॥



## १३ स्वागतावदानम् ।

C 167 बुद्धो भगवान् श्रावस्त्यां विहरति स्म जेतवनेऽनाथपिण्डदस्यारामे । तेन खलु पुनः समयेन शिशुमारगिरौ बोधो नाम गृहपतिः प्रतिवसति आढ्यो महाधनो महाभोगो विस्तीर्णविशालपरिग्रहो वैश्रवणधनसमुदितो वैश्रवणधनप्रतिस्पर्धी । तेन सदृशात् कुलात् कलत्र-
5 मानीतम् । स तया सार्धं क्रीडति रमते परिचारयति । तस्य क्रीडतो रममाणस्य परिचारयतः कालान्तरेण पत्नी आपन्नसत्त्वा संवृत्ता । सा उपरिप्रासादतलगता अयन्त्रितोपचारा धार्यते, कालर्तुकैश्चोपकरणैरनुविधीयते, वैद्यप्रज्ञप्तैश्चाहारैः नातितिक्तैर्नात्यम्लैः नातिलवणैर्नातिमधुरैर्नातिकटुकैर्नातिकषायैस्तिक्ताम्ललवणमधुरकटुककषायविवर्जितैराहारैः । हारार्धहारभूषितगात्रा अप्सरेव नन्दनवनचारिणी मञ्चान्मञ्चं पीठात्पीठमनवतरन्ती अधरिमां भूमिम् ।
10 न चास्याः किंचिदमनोज्ञशब्दश्रवणं यावदेव गर्भस्य परिपाकाय । सा अष्टानां वा नवानां वा मासानामत्ययात् प्रसूता । दारिका जाता अभिरूपा दर्शनीया प्रासादिका सर्वाङ्गप्रत्यङ्गोपेता । तस्यास्त्रीणि सप्तकान्येकविंशतिदिवसान् विस्तरेण जातिमहं कृत्वा वर्णसंस्थानविशेषानुरूपं नामधेयं व्यवस्थापितम् । सा धात्र्यङ्कगता उन्नीयते वर्ध्यते क्षीरेण दध्ना नवनीतेन सर्पिषा सर्पिमण्डेनान्यैश्च चोत्तप्तोत्तप्तैरुपकरणविशेषैः । आशु वर्धते ह्रदस्थमिव पङ्कजम् ।
15 यदा महती संवृत्ता, तदा रूपिणी यौवनानुरूपया आचारविहारचेष्टया देवकन्येव तद्गृहमवभासमाना सुहृत्संबन्धिबान्धवानामन्तर्जनस्य च प्रीतिमुत्पादयति । तस्यास्तादृशीं विभूतिं
C 168 श्रुत्वा नानादेशनिवासिराजपुत्रा अमात्यपुत्रा गृहपतिपुत्रा धनिनः श्रेष्ठिपुत्राः सार्थवाहपुत्राश्च भार्यार्थं याचनकान् प्रेषयन्ति । यथा यथा चासौ प्रार्थ्यते, तथा तथा बोधो गृहपतिः सुतरां प्रीतिमुत्पादयति । संलक्षयति—मया एषा न कस्यचिद्रूपेण देया, न शिल्पेन, नाप्याधिपत्येन,
20 किं तु यो मम कुलशीलेन वा धनेन वा सदृशो भवति, तस्य मया दातव्येति । स चैवं चिन्तयति ॥

अनाथपिण्डदेन गृहपतिना श्रुतं यथा शिशुमारगिरौ बोधो गृहपतिस्तस्य दुहिता एवं रूपयौवनसमुदिता, सा नानादेशनिवासिनां राजामात्यगृहपतिधनिनां श्रेष्ठिसार्थवाहपुत्राणामर्थाय प्रार्थ्यत इति । श्रुत्वा च पुनरस्यैतदभवत्—अहमपि तावत् तां पुत्रस्यार्थाय प्रार्थयामि । कदाचिद् बोधो गृहपतिर्दद्यादिति विदित्वा तस्या याचनकाः प्रेषिताः । बोधेन
25 गृहपतिना अनाथपिण्डदस्य गृहपतेः समुदाचारधनसंपदं च विचार्य दत्ता । अनाथपिण्डदेन गृहपतिना महता श्रीसमुदयेन पुत्रस्य परिणीता । यावत् पुनरपि बोधस्य गृहपतेः पत्न्या सार्धं क्रीडतो रममाणस्य परिचारयतः पत्नी आपन्नसत्त्वा संवृत्ता । यमेव दिवसमापन्नसत्त्वा संवृत्ता, तमेव दिवसं बोधस्य गृहपतेरनेकान्यनर्थशतानि प्रादुर्भूतानि । तेन नैमित्तिका आहूय पृष्टाः—भवन्तः, पश्यत कस्य प्रभावान्ममानर्थशतानि प्रादुर्भूतानि । नैमित्तिका
30 विचार्यैकमतेनाहुः—गृहपते, य एष तव पत्न्याः कुक्षिमवक्रान्तः, अस्यैष प्रभावः । तदस्य परित्यागः क्रियताम् । इति श्रुत्वा बोधो गृहपतिः परं विषादमापन्नः । कथयति—भवन्तः, स्वागतं न परित्यक्ष्यामीति । नैमित्ताः स्वस्तीत्युक्त्वा प्रक्रान्ताः । अथ बोधो गृहपतिर्वियोग-

संजनितदौर्मनस्योऽपि लोकापवादभयादभ्युपेक्ष्यावस्थितः। यथा यथासौ गर्भो वृद्धिं गच्छति, तथा तथा बोधस्य गृहपतेरुत्तरोत्तरातिशयेनानर्थशतान्युत्पद्यन्ते। स संलक्षयति—क एतानि शृणोति? उद्यानं गत्वा तिष्ठामीति विदित्वा तेन पौरुषेया उक्ताः—यदि मे कश्चिन्महाननर्थ उत्पद्यते, स श्रावयितव्यो नान्य इत्युक्त्वा उद्यानं गत्वा अवस्थितो यावदस्यासौ पत्नी प्रसूता। C 169 दारको जातः। अन्यतमः पुरुषस्त्वरितं त्वरितं बोधस्य गृहपतेः सकाशं गतः। तेनासौ दूरत 5 एव दृष्टः। स संलक्षयति—यथायं त्वरितत्वरितमागच्छति, नूनं महाननर्थः प्रादुर्भूतः। इति विदित्वा ससंभ्रमः पृच्छति—भोः पुरुष, किं त्वरितत्वरितमागच्छसीति? स कथयति—गृहपते, दिष्ट्या वर्धसे, पुत्रस्ते जात इति। स कथयति—भोः पुरुष, यद्यपि मे पुत्रोऽनर्थशतान्युत्पाद्य जातः, तथापि स्वागतमस्येति। तदनन्तरमेव द्वितीयपुरुषस्तथैव त्वरितत्वरितमश्रुपर्याकुलेक्षणो बोधस्य गृहपतेः सकाशं गतः। सोऽपि तेनानर्थतया ससंभ्रमेण 10 पृष्टः—भोः पुरुष, किं त्वरितत्वरितमागच्छसीति? स बाष्पोपरुध्यमानगद्गदकण्ठः करुणादीनविलम्बिताक्षरं कथयति—गृहपते, गृहेऽग्निरुत्थितः। सर्वं स्वापतेयं दग्धमिति। स मुहुर्मुहुरनर्थश्रवणदृढीकृतचित्तसंततिः कथयति—भोः पुरुष, प्राप्तव्यमेतत्। अलं विषादेन, तूष्णीं तिष्ठेति। अथ तस्य ज्ञातयो लोकधर्मानुवृत्त्या अवज्ञापूर्वकेन नामधेयं व्यवस्थापयितुमारब्धाः—किं भवतु दारकस्य नामेति। तत्रैके कथयन्ति—यत्कुलसदृशं तत्क्रियतामिति। अपरे कथयन्ति— 15 येन बोधस्य गृहपतेः कुक्षिगतेनैवानेकधनसमुदितं गृहं निधनमुपनीतम्, तस्य कीदृशं कुलसदृशं नाम व्यवस्थाप्यते? अपि तु अयं पित्रा जातमात्रः स्वागतवादेन समुदाचरितः, तस्मादस्य स्वागत इति नाम भवतु इति। तस्य स्वागत इति नामधेयं व्यवस्थापितम्। यथा यथा स्वागतो वृद्धिमुपयाति, तथा तथा बोधस्य गृहपतेर्धनधान्यहिरण्यसुवर्णदासीदासकर्मकरपौरुषेयास्तनुत्वं परिक्षयं पर्यादानं गच्छन्ति। यावदपरेण समयेन बोधो गृहपतिः कालगतः। 20 साप्यस्य पत्नी कालगता। तद्गृहं प्रतिसंस्कृतं पुनरग्निना दग्धम्। यदप्यावारिगतं क्षेत्रगतं च शस्यादिधनजातं तदप्यग्निना दग्धम्। येऽप्यस्य पौरुषेयाः पण्यमादाय देशान्तरगता महासमुद्रं यावत्तीर्णाः, ततः केषांचिद्यानपात्रं विपन्नम्, केषांचित् पण्यमपण्यीजातम्, केचित् C 170 तत्रैवानयेन व्यसनमापन्नाः, केषांचित् कान्तारमध्यगतानां चौरैर्द्रव्यमपहृतम्, केषांचिन्नगरसमीपमनुप्राप्तानां शौल्किकशौल्किकैर्द्रव्यं विचारयद्भिः सारो गृहीतः, केषांचित् 25 पत्तनमनुप्राप्तानां राज्ञा विनियुक्तैर्दोषमुत्पाद्य सर्वस्वमपहृतम्। केचिद्बोधस्य गृहपतेः प्राणवियोगं श्रुत्वा तत्रैव अवस्थिताः। ज्ञातीनामपि केचित् कालगताः, केचिन्निष्पलायिताः, केचित् तत्रैवावस्थिताः स्वागतस्य वाचमपि न प्रयच्छन्ति। दासीदासकर्मकरपौरुषेया अपि केचित् कालगताः, केचिन्निष्पलायिताः, केचिदन्याश्रयेण तत्रैवावस्थिताः सन्तः स्वागतस्य नामापि न गृह्णन्ति। किं तु बोधस्यैका पुराणवृद्धा दासी कृतज्ञतया स्वागतस्योप- 30 स्थानं कुर्वन्ती तिष्ठति। तया स लिप्यक्षराचार्यस्याक्षराणि शिक्षयितुमुपन्यस्तः। सा संलक्षयति—बोधस्य गृहपतेर्गृहमनेकधनसमुदितं विस्तीर्णस्वजनबन्धुवर्गं प्रभूतदासीदासकर्म-

करपौरुषेयं परिक्षयं पर्यादानं गतम् । स्वागतोऽहं चावस्थिताः । तज्जिज्ञास्यामि तावत् कस्यापुण्येनायमुपप्लवः, किं स्वागतस्य आहोस्विन्ममेति । तया स्वागतस्य नाम्ना स्थाल्यां तण्डुलान् प्रक्षिप्य भक्तार्थं योजिता विनष्टाः । तत आत्मनो नाम्ना तथैव योजिताः, शोभनं भक्तं संपन्नम् । सा संलक्षयति—असौ मन्दभाग्यः । एतमागम्य बोधस्य गृहपते-
5 र्गृहमनेकधनसमुदितं विस्तीर्णस्वजनबन्धुवर्गं प्रभूतदासीदासकर्मकरपौरुषेयं परिक्षयं पर्यादानं गतम् । अहं पुनर्न यास्यामीति । कुतः स्थास्यामीति ? अत्र प्राप्तकालं सर्वथा यावत् प्राणवियोगो न भवति तावन्निष्पलायेयम् । इति विदित्वा यत्तत्र किंचित् सारमस्ति, तमादाय निष्पलायिता । तस्मिन् शून्ये गृहे श्वानः प्रविश्य कलहं कर्तुमारब्धाः । यावदन्यतमो धूर्तपुरुषस्तेन प्रदेशेनातिक्रामति । स श्वानकलहं श्रुत्वा संलक्षयति—बोधस्य गृहपते-
C 171 10 र्गृहे श्वानः कलिं कुर्वन्ति । किं तदन्यं भवेत् ? पश्यामि तावदिति । स तत्र प्रविष्टो यावत् पश्यति शून्यम् । सोऽपि तस्माद्यत् किंचिच्छेषावशेषमस्ति, तमादाय प्रक्रान्तः ॥

ततः स्वागतो भोजनवेलां ज्ञात्वा लेखशालायाः स्वगृहमागतो भोक्तुमिति यावत् पश्यति शून्यम् । स भोक्तुकामावर्जितसंततिः (?) क्षुधासंजनितदौर्मनस्यः शब्दापयितुमारब्धः—अम्ब अम्बेति । न कश्चिद्वचनं ददाति । स तद्गृहमितश्चामुतश्च व्यवलोक्य नैराश्यमापन्नो
15 निष्क्रान्तः । तस्य गृहस्य नातिदूरेऽन्यगृहम् । तस्मिन् स्वागतस्य ज्ञातयस्तिष्ठन्ति । स तेषां सकाशं गतो यावत्तत्र कलिः प्रादुर्भूतः । ते कलहं कृत्वा व्युपशान्ताः परस्परं कथयन्ति—भवन्तः, पूर्वमस्माकमन्योन्यं दृष्ट्वा स्नेहो भवति, इदानीं तु द्वेषः । पश्यध्वं कश्चिदन्य आगतः स्यादिति । ते समन्वेषितुमारब्धा यावत् पश्यन्ति स्वागतम् । तत्रैके कथयन्ति—भवन्तः, स्वागतः प्रविष्ट इति । अपरे कथयन्ति—नायं स्वागतः, किं तु
20 दुरागतः, इममागम्यास्माकं कलिः प्रादुर्भूत इति । स तैर्ग्रीवायां गृहीत्वा निष्कासितोऽन्यत्र गतः । तस्मादपि निष्कासितो यावत् क्रोडमल्लानां मध्ये प्रविष्टः । ते यत्र यत्र भैक्षार्थिकाः प्रविशन्ति, तत्र निर्भर्त्स्यन्ते निष्कास्यन्ते च । ते नैराश्यमापन्ना रिक्तहस्तका रिक्तमल्लकाः शून्यदेवकुलमण्डपवृक्षमूलान्यागताः । तेऽन्योन्यं पृच्छन्ति—भवन्तः, वयं पूर्वे यत्र यत्र गच्छामस्ततः पूर्णहस्ताः पूर्णमल्लका आगच्छामः । इदानीं
25 को योगो येन वयं रिक्तहस्तका रिक्तमल्लका नैराश्यमापन्ना इहागता इति ? तत्रैके कथयन्ति—नूनं कोऽपि मन्दभाग्योऽस्माकं मध्ये प्रविष्टो येन वयं रिक्तहस्ता रिक्तमल्लका इहागता इति । अपरे कथयन्ति—गतमेतत् । द्विधा भूत्वा प्रविशाम इति । ते परस्मिन्
C 172 दिवसे द्विधा भूत्वा प्रविष्टाः । तत्र येषां मध्ये स्वागतस्ते तथैव निर्भर्त्सिता निष्कासिताश्च नैराश्यमापन्ना रिक्तहस्ता रिक्तमल्लाश्च यथानिलयमागताः । ते त्वन्ये पूर्णहस्ता पूर्णमल्लका
30 आगताः । ये ते रिक्तहस्तका रिक्तपात्रा आगतास्ते भूयो द्विधा भूत्वा प्रविष्टाः । तत्र तेषामपि येषां मध्ये स्वागतस्ते तथैव रिक्तहस्ता रिक्तमल्लकाश्चागताः । ते भूयो द्विधा भूता एवं यावत् स्वागतक्रोडमल्लकौ प्रविष्टौ रिक्तहस्तौ रिक्तमल्लकौ आगतौ । ते त्वन्ये पूर्णहस्ताः

पूर्णमल्लका आगताः। ततस्ते क्रोडमल्लकाः सर्वे संभूय संकल्पं कर्तुमारब्धाः–भवन्तः, अयं मन्दभाग्योऽस्माकं मध्ये प्रविष्टो येन वयं रिक्तहस्ता रिक्तमल्लकाश्चागताः। निष्कासयाम एनमिति। स तैः प्रभूतान् प्रहारान् दत्त्वा शिरसि च मल्लकं भङ्क्त्वा निष्कासितः॥

अत्रान्तरे यावच्छ्रावस्तेयो वणिजो बोधस्य गृहपतेर्वयस्यः पण्यमादाय शिशुमारगिरिमनुप्राप्तः। तेन स्वागतो मल्लकेन हस्तगतेन पीठीं गतो मुखबिम्बकेन प्रत्यभिज्ञात उक्तश्च–पुत्र 5 त्वं बोधगृहपतेः पुत्र इति? स कथयति–तात, अहं तस्य पुत्रो दुरागत इति। स मुहूर्तं तूष्णीं स्थित्वा अश्रुपर्याकुलेक्षणः कथयति–पुत्र, तौ तव मातापितरौ कालगतौ? ते ज्ञातयः? स आह–तेषामपि केचित् कालगताः केचिदिहैव तिष्ठन्तो वाचमपि न प्रयच्छन्ति। ते दासीदासकर्मकरपौरुषेयाः? तेषामपि केचित् कालगताः, केचिन्निष्पलायिताः, केचिदिहैवान्यान्नाश्रित्यावस्थिता वाचमपि न प्रयच्छन्ति। यदवशिष्टं धनं तदपि किंचिदग्निना दग्धम्। 10 ये वणिक्पौरुषेयाः पण्यं गृहीत्वा धनार्थिनो देशान्तरं महासमुद्रं चावतीर्णाः, तत्रापि केषांचित् पण्यमपण्यीभूतम्, केचित् तत्रैवानयेन व्यसनमापन्नाः, केषांचित् कान्तारमध्यगतानां तस्करैर्द्रव्यमपहृतम्, केषांचिन्नगरसमीपमनुप्राप्तानां शौल्किकशौल्किकैर्द्रव्यं विचारयद्भिः सारो गृहीतः, केषांचित् पत्तनमनुप्राप्तानां राज्ञो विनियुक्तैर्दोषमुत्पाद्य सर्वस्वमपहृतम्। केचित् तस्य प्राणवियोगं श्रुत्वा तत्रैवावस्थिताः। स दीर्घमुष्णं च निश्वस्य कथयति– 15 पुत्र श्रावस्तीं किं न गच्छसि? तात, किं तत्रगतस्य भविष्यति? पुत्र, तत्रानाथपिण्डदो गृहपतिः, तस्य पुत्रेण तव भगिनी परिणीता। सा तव योगोद्वहनं करिष्यतीति। स कथयति–तात, यद्येवं गच्छामीति। तेन तस्य द्वौ कार्षापणौ दत्तौ, उक्तश्च–पुत्र, आभ्यां तावदात्मानं संधारय, यावदहं पण्यं विसर्जयामि। मया सार्धं गमिष्यसि। तेन तौ कार्षापणौ खुस्तवस्त्रान्ते बद्ध्वा स्थापितौ, कर्मविपाकेन विस्मृतौ। तथैवासौ कुतश्चित् 20 किंचिदारागयति किंचिन्नारागयति। क्षुधया पीड्यमानोऽवस्थितः। यावदसौ वणिक् पण्यं विसर्जयित्वा प्रतिपण्यमादाय स्वागतं विस्मृत्य संप्रस्थितः। स्वागतोऽपि तेन सार्धं संप्रस्थितः। यावत् ते सार्थकाः कलिं कर्तुमारब्धाः, बलीवर्दा योद्धुमारब्धाः। सार्थिकाः कथयन्ति–भवन्तः, प्रत्यवेक्षत सार्थम्। मा असौ दुरागतोऽत्रागतः स्यादिति। तैः प्रत्यवेक्षमाणैरसौ दृष्टः। ते तं खट्चपेटादिभिस्ताडयित्वा अर्धचन्द्राकारेण ग्रीवायां गृहीत्वा निष्कासितुमारब्धाः। स निष्का- 25 सितः। निष्क्रम्यमाणो विक्रोष्टुमारब्धः। सार्थवाहस्तं कोलाहलशब्दं श्रुत्वा निरीक्षितुमारब्धः, यावत् पश्यति तं निष्कास्यमानम्। स कथयति–भवन्तः, मा एनं निष्कासयत, ममैष वयस्यपुत्रो भवतीति। ते कथयन्ति–सार्थवाह, यमागम्य बोधस्य गृहपतेरनेकधनसमुदितं ससुहृत्संबन्धिबान्धवं गृहं विनष्टम्, कथं तेन सार्धं गच्छामः? सर्वथा त्वं सार्थस्य स्वामी। यद्येष गच्छति, वयं न गच्छाम इति। सार्थवाहस्तं कथयति–पुत्र, महाजनविरोधोऽत्र भवति। सार्थकाः क्षुभिताः। 30 त्वं पश्चाद्ग्रासोद्धातिक्रया गच्छ, अहं तवार्थे आहारं स्थापयामीति। स मातापितृवियोगप्रतिस्पर्धिना पूर्वकर्मापराधप्रभावेण दुःखदौर्मनस्येन संतापितमनाः साश्रुकण्ठस्तूष्णीमवस्थितः।

C 173

सार्थः संप्रस्थितः। सोऽपि वासोद्घातिकया गन्तुमारब्धः। स सार्थवाहस्तस्याहारं पत्रपुटके
C 174 बद्ध्वा किंचिद्भूमौ पांशुना प्रतिच्छाद्य स्थापयति, किंचिद्वृक्षशाखापत्रैरवच्छाद्य। तत्र यं भूमौ
स्थापयति, स शृगालैरन्यैश्चतुष्पादैर्भक्ष्यते। यं वृक्षशाखासु, स पक्षिभिः शाखामृगैश्च
भक्ष्यते। ततः किंचिदारागयति किंचिन्नारागयति। अस्थानमनवकाशो यच्चरमभविकः
5 सत्त्वोऽसंप्राप्ते विशेषाधिगमे सोऽन्तरा कालं कुर्यात्। स कृच्छ्रेण श्रावस्तीमनुप्राप्तः। बहिः
श्रावस्त्यामुदपानोपकण्ठके विश्रान्तः। यावत् तस्य भगिन्याः सन्तिका प्रेष्यदारिका उद-
कार्थिनी कुम्भमादाय गता। स तया मुखबिम्बकेन प्रत्यभिज्ञातः। सा चिरं निरीक्ष्य हीन-
दीनवदना कथयति—दारक, त्वं बोधस्य गृहपतेः शुशुमारगिरीयकस्य पुत्र इति? स कथयति—
एवं मां भगिनीजनः संजानीत इति। सा अश्रुपर्याकुलेक्षणा बाष्पोपरुध्यमानकण्ठा उरसि
10 प्रहारं दत्त्वा करुणादीनविलम्बिताक्षरं प्रष्टुमारब्धा। तौ तव मातापितरौ कालगतौ? कालगतौ।
ते ज्ञातयः? स कथयति—तेषामपि केचित् कालगताः, केचिन्निष्पलायिताः, केचित् तत्रैव
तिष्ठन्तो वाचमपि न प्रयच्छन्ति। ते दासीदासकर्मकरपौरुषेयाः? तेषामपि केचित् काल-
गताः, केचिन्निष्पलायिताः, केचित् तत्रैवान्यानाश्रित्यावस्थिता वाचमपि न प्रयच्छन्ति।
यदपि धनजातं तदपि किंचिदग्निना दग्धम्, किंचिदन्यपौरुषेया गृहीत्वा धनार्थिनो देशा-
15 न्तरं महासमुद्रं चावतीर्णाः। तत्रापि केषांचिद्यानपात्रं विपन्नम्, केषांचित् पण्यमपण्यीभूतम्,
केचित् तत्रैवानयेन व्यसनमापन्नाः, केषांचित् कान्तारमध्यगतानां तस्करैर्द्रव्यमपहृतम्,
केषांचिन्नगरसमीपमनुप्राप्तानां शौल्किकशौल्किकैर्द्रव्यं विचारयद्भिः सारो गृहीतः, केषांचित्
पत्तनमनुप्राप्तानां राजनियुक्तैर्दोषमुत्पाद्य सर्वस्वमपहृतम्, केचित्तस्य प्राणवियोगं श्रुत्वा तत्रै-
वावस्थिताः। सा दीर्घमुष्णं च निश्वस्य कथयति—इहैव तिष्ठ यावत्ते भगिन्याः कथयामीति।
20 तया गत्वा तस्याः प्रच्छन्नं कथितम्। कीदृशेन पण्येनेति? सा कथयति—कुतोऽस्य पण्यम्?
दण्डमस्य हस्ते मल्लकश्चेति। तया तस्यार्थं महार्हाणि वस्त्राणि दत्तानि। कार्षापणांश्च दत्त्वा
उक्ता च—स वक्तव्यो यदि ते भागिनेयो वा भागिनेयिका वा उपसंक्रामति, तस्यैव कार्षा-
पणान् दद्याः। मा ज्ञातीनां प्रतर्क्यो भविष्यतीति। सा वस्त्राण्यादाय कार्षापणांश्च तस्य
C 175 सकाशं गता कथयति—इमानि ते वस्त्राणि कार्षापणाश्च भगिन्या प्रेषितानि, कथयति च—
25 यदि ते भागिनेयो वा भागिनेयिका वा उपसंक्रामति, तस्यैतत्कार्षापणान् दद्याः। मा
ज्ञातीनां प्रतर्क्यो भविष्यसि। स कथयति—शोभनमेव भवति। इत्युक्त्वा तूष्णीमवस्थितः।
दारिका प्रक्रान्ता। स संलक्षयति—अनाथपिण्डदो गृहपतिर्विस्तीर्णस्वजनपरिवारः। अस्माक-
मपि पिता विस्तीर्णपरिवारः। तेषामेकैकशो वार्तां प्रत्यवेक्षते। भगिन्या चिरमालापो
भविष्यति। स च मार्गपरिश्रमखिन्नेन क्षुधार्तेन न शक्यते कर्तुम्। पुरोभक्षिकां तावत्
30 करोमि। तृप्तः सुखालापं करिष्यामीति। स पानागारं गतः। तेन तत्र प्रवृद्धवेगमदसंजनकं
मद्यं पीतम्। स मत्त उद्यानं गत्वा शयितः। आचरितं श्रावस्त्यामुद्यानमोषकाः पुरुषाः
प्रतिदिनमन्वाहिण्ड्यन्ते। ते यदि सुप्तं पुरुषं पश्यन्ति, पादेन घट्टयन्ति। स यदि प्रति-

विबुध्यते, तमेवं वदन्ति—भोः पुरुष, न त्वया श्रुतं यथा श्रावस्त्यामुद्यानमोषकाः पुरुषाः प्रतिदिनमन्वाहिण्ड्यन्ते ? ते यदि सुप्तं पुरुषं पश्यन्ति, वदन्ति—उत्तिष्ठ गच्छेति। यदि न प्रतिविबुध्यते, मुषित्वा गच्छन्ति। तैः पादेन घट्टितो न प्रतिविबुध्यते। मुषित्वा प्रक्रान्ताः। स विगतमद्यमदः प्रतिबुद्धो यावत् पश्यति तान्येवानन्तकानि (?) प्रावृत्यावस्थितः। ततोऽस्य भगिनी संलक्षयति—अतिचिरयत्यसौ। नूनमत्र कारणेन भवितव्यमिति। तस्यासौ दारिका पुनः 5 प्रेषिता—दारिके गच्छ, चिरयत्यसौ, पश्य किमर्थं नागच्छतीति। सा गता यावत् पश्यति मुषितकं तेनैव वेषेणावस्थितम्। सा त्वरितत्वरितं गता तस्याः कथयति—आर्ये, मुषितस्तेनैव वेषेण तिष्ठतीति। सा संलक्षयति—यमागम्य बोधस्य गृहपतेरनेकधनसमुदितं ससुहृत्संबन्धिबान्धवं गृहं विनष्टम्, यदि तमिह प्रवेशयामि, स्थानमेतद्विद्यते यन्मयापि श्वशुरगृहमनयेन व्यसनमापत्स्यते। नासाविह प्रवेशयितव्यः। इति विदित्वा तयाप्युपेक्षितः॥ 10

तस्यापि पूर्वकर्मापराधाद्विस्मृतम्। स क्रोडमल्लकानां मध्ये प्रविष्टः। ते यत्र यत्र भैक्षार्थिनः प्रविशन्ति, तत्र तत्र निर्भर्त्स्यन्ते च निष्कास्यन्ते च। नैराश्यमापन्ना रिक्तहस्ता रिक्तमल्लकाः शून्यदेवकुलमण्डपवृक्षमूलान्यागताः। तेऽन्योन्यं पृच्छन्ति—भवन्तः, वयं पूर्वं यत्र यत्र गच्छामस्ततः पूर्णहस्ताः पूर्णमल्लका गच्छामः। इदानीं को योगो येन वयं रिक्तहस्ता रिक्तमल्लका नैराश्यमापन्ना इहागता इति ? तत्रैके कथयन्ति—नूनं कोऽपि मन्दभाग्योऽस्माकं मध्ये प्रविष्टो 15 येन वयं रिक्तहस्ता रिक्तमल्लका इहागता इति। अपरे कथयन्ति—द्विधा भूत्वा प्रविशाम इति। तेऽपरस्मिन् दिवसे द्विधा भूत्वा प्रविष्टाः। तत्र येषां मध्ये स्वागतः, ते तथैव निर्भर्त्सिता निष्कासिताश्च नैराश्यमापन्ना रिक्तहस्ता रिक्तमल्लकाश्चागताः। ते त्वन्ये पूर्णहस्ताः पूर्णमल्लका आगता। ये रिक्तहस्ता रिक्तमल्लका आगताः, ते भूयो द्विधा भूत्वा प्रविष्टाः। तेषामपि येषां मध्ये स्वागतः, ते तथैव रिक्तहस्ता रिक्तमल्लकाश्चागताः। ते भूयो 20 द्विधा भूता एवं यावत् स्वागतोऽन्यश्च क्रोडमल्लकः प्रविष्टः। तौ रिक्तहस्तौ रिक्तमल्लकौ आगतौ, ते त्वन्ये पूर्णहस्ताः पूर्णमल्लका आगताः। ते क्रोडमल्लकाः सर्वे संभूय संजल्पं कर्तुमारब्धाः—भवन्तः, अयं मन्दभाग्यसत्त्वोऽस्माकं मध्ये प्रविष्टो येन वयं रिक्तहस्ता रिक्तमल्लकाश्चागताः। निष्कासयाम एनमिति। स तैः प्रभूतान् प्रहारान् दत्त्वा शिरसि च मल्लकं भङ्क्त्वा निष्कासितः॥

अत्रान्तरेऽनाथपिण्डदेन गृहपतिना बुद्धप्रमुखो भिक्षुसंघोऽन्तर्गृहे भक्तेनोपनि- 25 मन्त्रितः। तेन दौवारिकाणामाज्ञा दत्ता—न तावत् कस्यचित् क्रोडमल्लकस्य प्रवेशो दातव्यो यावद्बुद्धप्रमुखेन भिक्षुसंघेन भुक्तम्। पश्चात् तान् भोजयिष्यामीति। क्रोडमल्लका ये तस्य गृहं प्रतिशरणभूतास्ते सर्वे संनिपतिताः प्रवेष्टुमारब्धाः। दौवारिकेण विरोधिताः। कथयन्ति—भोः पुरुष, अस्माकमेव नाम्ना अयं गृहपतिः प्रज्ञायते अनाथपिण्डदो गृहपतिरिति। तत् किमिदमिति कृत्वा अस्मान् विधारयसीति ? स कथयति—गृहपतिना आज्ञा 30 दत्ता—न तावत् कस्यचित् क्रोडमल्लकस्य प्रवेशो दातव्यो यावद्बुद्धप्रमुखेन भिक्षुसंघेन भुक्तम्। पश्चात् तान् भोजयिष्यामीति। ते कथयन्ति—भवन्तः, न कदाचिद्वयं विधार्य-

C 176

C 177

माणाः। तं पश्यत मा अत्रार्या दुरागत आगतो भवेदिति। ते समन्वेष्टितुमारब्धा यावत् पश्यन्त्येकस्मिन् प्रदेशे निलीयावस्थितम्। ततस्तैः कोलाहलशब्दः कृतः—अयं भवन्तः स दुरागतो निलीनस्तिष्ठतीति। स तैः प्रभूतान् प्रहारान् दत्वा निष्कासितस्तीव्रेण च पर्यवस्थानेन शिरसि मल्लकेन प्रहारो दत्तः। तस्य शिरो भग्नम्। स निवर्त्य विप्रलपितु-
5 मारब्धः। ततस्तैर्हस्तपादेषु गृहीत्वा संकारकूटे क्षिप्तः—दुरागत अत्र तिष्ठेति। स रुधिरेण प्रघरता तस्मिन् संकारकूटेऽवस्थितः। यावद्भगवान् पूर्वाह्णे निवास्य पात्रचीवरमादाय भिक्षुगणपरिवृतो भिक्षुसंघपुरस्कृतो येनानाथपिण्डदस्य गृहपतेर्निवेशनं तेनोपसंक्रान्तः। अद्राक्षीद्भगवान् स्वागतं परुषरूक्षाङ्गुलिदीर्घकेशं रजसावचूर्णितगात्रं कृशमल्पस्थामं मलिन-जीर्णवासोनिवसितं शिरसा भग्नेन रुधिरेण प्रघरता अन्यैश्च व्रणैश्चाकीर्णैः, मक्षिकाभिरुपद्रुतैः
10 संकारकूटे निपतितम्। दृष्ट्वा च पुनर्भिक्षूनामन्त्रयते स्म—तृप्यत भिक्षवः सर्वभवोपपत्तिभ्यः। तृप्यत सर्वभवोपपत्त्युपकरणेभ्यः, यत्र नाम चरमभविकस्य सत्त्वस्येयमवस्था। तत्र भगवान् तं स्वागतमामन्त्रयते—आकाङ्क्षसे वत्स पात्रशेषम्? आकाङ्क्षामि भगवन्। तत्र भगवानायुष्मन्तमानन्दमामन्त्रयते—स्वागतस्य ते आनन्द पात्रशेषः स्थापयितव्यमिति। एवं भदन्तेत्यायुष्मानानन्दो भगवतः प्रत्यश्रौषीत्॥

15 अथ भगवान् येनानाथपिण्डदस्य गृहपतेर्भक्ताभिसारस्तेनोपसंक्रान्तः। उपसंक्रम्य पुरस्ताद्भिक्षुसंघस्य प्रज्ञप्त एवासने निषण्णः। अनाथपिण्डदो गृहपतिः सुखोपनिषण्णं बुद्ध-
C 178 प्रमुखं भिक्षुसंघं विदित्वा शुचिना प्रणीतेन खादनीयभोजनीयेन स्वहस्तेन संतर्प्य संप्रवार्य भगवन्तं भुक्तवन्तं विदित्वा धौतहस्तमपनीतपात्रं नीचतरमासनं गृहीत्वा भगवतः पुरस्ता-न्निषण्णो धर्मश्रवणाय। आयुष्मत आनन्दस्य तत्पात्रशेषं स्वागताय विस्मृतम्। असंमोष-
20 धर्माणो बुद्धा भगवन्तः। भगवता उत्थापितम्। आयुष्मानानन्दो भगवतः पात्रं गृहीतु-मारब्धो यावत् पश्यति तत्र पात्रशेषं न संस्थापितम्। दृष्ट्वा च स्मृतिरुत्पन्ना। स धर्मतत्त्वो वचसा (?) अथ रोदितुमारब्धः। भगवानाह—कस्मात् त्वमानन्द रोदिषीति। स कथयति—न मया भदन्त भगवतः कदाचिदाज्ञा प्रत्यूढपूर्वेति। किं कृतम्? स्वागतस्य पात्रशेषं न स्थापितमिति। भगवानाह—न त्वया आनन्द ममाज्ञा प्रतिस्मृता, अपि तु स्वागतस्यैव तानि
25 कर्माणि लब्धसंभाराणि परिणतप्रत्ययान्योघवत्प्रत्युपस्थितान्यवश्यभावीनि येन तव विस्मृतम्। अलं विषादेन। गच्छ, तं शब्दापयेति। स गत्वा शब्दापयितुमारब्धः। अनेकैः प्रतिवचनं दत्तम्। स्वागतस्य तदपि विस्मृतं यद्भगवता प्रतिज्ञातम्—तव पात्रशेषं स्थापयिष्यामीति। स संलक्षयति—कोऽप्ययं पुण्यकर्मा भगवता त्रैलोक्यगुरुणा समन्वाहृतः शब्दत इति। आयु-ष्मता आनन्देन गत्वा भगवत आरोचितम्। भगवन् स्वागत इत्युक्त्वा अनेकैः प्रतिवचनं दत्तम्। न जाने कं शब्दापयामीति। भगवानाह—गच्छ आनन्द, गत्वा कथय—यो बोधस्य
30 गृहपतेः शुशुमारगिरीयस्य पुत्रः स्वागतः, स आगच्छतु इति। आयुष्मता आनन्देन गत्वोच्चैः शब्दैरुक्तः—यो बोधस्य गृहपतेः शुशुमारगिरीयकस्य पुत्रः स्वागतः, स आगच्छतु इति। तेन पितुर्नामश्रवणादात्मनो नाम स्मृतम्। स शनैर्दण्डविष्टम्भनयोगादुत्थाय गाथां भाषते—

भ्रष्टः स्वागतशब्दोऽयं कुतः पुनरिहागतः ।
नूनमश्रेयसो नाशः श्रेयसश्च समुद्भवः ॥ १ ॥                    C 179
तेषां सर्वज्ञ नाथोऽसि ये हि त्वां शरणं गताः ।
तेषां स्वागतमार्याणां ये च ते शासने रताः ॥ २ ॥
अहं तु भाग्यरहितः सर्वबन्धुविवर्जितः ।                    5
शोच्यः कष्टां दशां प्राप्तः शोकशल्यसमर्पितः ॥ ३ ॥ इति ।

अथायुष्मानानन्दस्तमादाय येन भगवांस्तेनोपसंक्रान्तः । उपसंक्रम्य भगवन्तमिदमवोचत्—अयं भदन्त स्वागत इति । स भगवता क्षुधासंजनितदौर्मनस्यः समाश्वासितः, उक्तश्च—पुत्र, इमं पात्रशेषं परिभुङ्क्ष्वेति । स तं दृष्ट्वा संलक्षयति—यद्यप्यहं भगवता त्रैलोक्यगुरुणा दैवात् समन्वाहृतः, तदपि स्तोकः पात्रशेषः स्थापितः । किमत्र भोक्ष्य इति । 10 भगवांस्तस्य चेतसा चित्तमाज्ञाय कथयति—वत्स, यदि त्वं सुमेरुमात्रैः पिण्डैः समुद्रसदृशेन कुक्षिणा परिभोक्ष्यसे, तथाप्यव्ययं तन्न परिक्षयं गमिष्यति, यावत्तृप्तः परिभुङ्क्ष्व यथासुखमिति । तेन तावद् भुक्तं यावत् तृप्त इति । तत्संतर्पितेन्द्रियो भगवतो मुखं व्यवलोकयितुमारब्धः । भगवानाह—वत्स स्वागत, तृप्तोऽसि ? तृप्तोऽस्मि भगवन् । वत्स, यद्येवमपश्चिमं कवलं गृहाण, अन्तर्धास्यत्येष पात्र इति । तेनापश्चिमकवलो गृहीतः, सोऽन्तर्हितः । भगवान् 15 दक्षिणादेशनां कृत्वा प्रक्रान्तः । चरमभविकः स सत्त्वो भगवन्तं पृष्ठतः पृष्ठतः समनुबद्धः । यावद्भगवान् विहारं गत्वा पुरस्ताद्भिक्षुसंघस्य प्रज्ञप्त एवासने निषण्णः । सोऽपि भगवतः पादौ शिरसा वन्दित्वा एकान्ते निषण्णः । भगवान् संलक्षयति—पुष्पाणामेनं प्रेषयामि, कर्मापनयोऽस्य कर्तव्य । इति विदित्वा स्वागतमामन्त्रयते—वत्स स्वागत, सन्ति ते कार्षापणाः ? न सन्ति भगवन् । वत्स स्वागत, वस्त्रान्तं निरीक्षस्व । वस्त्रान्तं निरीक्षितुमारब्धो यावत् 20 पश्यति द्वौ कार्षापणौ । स कथयति—भगवन्, द्वौ कार्षापणौ । वत्स गच्छ, गण्डकस्यारामिकस्य सकाशान्नीलोत्पलानि गृहीत्वा आगच्छेति । स्वागतस्तस्य सकाशं गतः । स तं दूरादेव दृष्ट्वा पर्यवस्थितः । स संलक्षयति—आगतोऽयं दुरागतः । नियतं ममानर्थो भवति । इति विदित्वा सपरुषं कथयति—दुरागत, किमर्थं त्वमिहागच्छसीति । स गाथां भाषते—                    C 180

नीलोत्पलैरस्ति कार्यं मे तथान्यैर्नापि पङ्कजैः ।                    25
मुनीन्द्रस्य तु दूतोऽहं सर्वज्ञस्य यशस्विनः ॥ ४ ॥

इत्युक्त्वा प्रतिनिवर्तितुमारब्धः । सोऽपि गाथां भाषते—

एह्येहि यदि दूतोऽसि तस्य शान्तात्मनो मुनेः ।
पूज्यः स नरदेवानां पूज्यः पूज्यतमैरपि ॥ ५ ॥

इत्युक्त्वा स कथयति—बुद्धदूतस्त्वम् ? बुद्धदूतः । किमर्थमागतः ? पुष्पार्थम् । यदि 30 बुद्धदूतस्त्वम्, गृहाण यथेप्सितम् । नीलोत्पलानां भारमादाय भगवतः सकाशमागतः ।

भगवानाह—वत्स, भिक्षूणां चारय। स भिक्षूणां चारयितुमारब्धः। भिक्षवो न प्रतिगृह्णन्ति। भगवानाह—गृह्णीध्वं भिक्षवः सर्वसौगन्धम्। चक्षुर्भ्यां कर्मापनयोऽस्य कर्तव्य इति। भिक्षुभिर्गृहीतानि। गृहीत्वा पुष्पितानि। तेनापूर्वं नीलकृत्स्नमुत्पादितं पूर्वम्। स वृद्धान्ते स्थित्वा तानि पुष्पाणि दृष्ट्वा सुतरां निरीक्षितुमारब्धः। तस्य तन्नीलकृत्स्नमामुखीभूतम्।
5 ततस्तं भगवानाह—वत्स, किं न प्रव्रजसीति? स कथयति—प्रव्रजामि भगवन्निति। भगवता प्रव्राजित उपसंपादितो मनसिकारश्च दत्तः। तेन युज्यमानेन घटमानेन व्यायच्छमानेन इदमेव पञ्चगण्डकं संसारचक्रं चलाचलं विदित्वा सर्वसंस्कारगतीः शतनपतनविकिरणविध्वंसनधर्मतया पराहत्य सर्वक्लेशप्रहाणादर्हत्त्वं साक्षात्कृतम्। अर्हन् संवृत्तस्त्रैधातुकवीतरागः समलोष्टकाञ्चन आकाशपाणितलसमचित्तो वासीचन्दनकल्पो विद्याविदारिताण्डकोशो
C 181 10 विद्याभिज्ञाप्रतिसंविद्प्राप्तो भवलाभलोभसत्कारपराङ्मुखः। सेन्द्रोपेन्द्राणां पूज्यो मान्योऽभिवाद्यश्च संवृत्तः। सोऽर्हत्त्वं प्राप्तो विमुक्तिसुखप्रतिसंवेदी तस्यां वेलायां गाथां भाषते—

उपायपाशैर्वीरेण बद्ध्वाहं तत्त्वदर्शिना।
कारुण्यादुद्धृतो दुःखाज्जीर्णः पङ्कादिव द्विपः॥ ६॥
स्वागतोऽहमभूवं प्राक्ततः पश्चाद्दुरागतः।
15 आगतोऽस्मि पुरा नाथ श्रुत्वा वाक्यं तवोत्तमम्॥ ७॥
सांप्रतं स्वागतो व्यक्तं [संवृत्तो न दुरागतः]।
सांप्रतं काञ्चनं देहं धारयामि निराश्रवम्॥ ८॥
रत्नानि प्रतिलेभे हि स्वर्गं मोक्षं च काङ्क्षताम्।
श्रेष्ठा कल्याणमित्राणां सदा सेवा हितैषिणाम्॥ ९॥ इति॥

20 यदा आयुष्मान् स्वागतः स्वाख्याते धर्मविनये प्रव्रजितः, तदा सामन्तकेन शब्दो विसृतः—श्रमणेन गौतमेनासौ दुरागतः क्रोडमल्लकः प्रव्रजितः। तीर्थ्यैः श्रुतम्। तेऽवध्यायन्ति क्षिपन्ति विवादयन्ति—श्रमणो भवन्तो गौतम एवमाह—सामन्तप्रासादिकं मे शासनमिति। अत्र किं सामन्तप्रासादिकमित्यस्य यत्रेदानीं दुरागतप्रभृतयोऽपि क्रोडमल्लकाः प्रव्रजन्तीति? अत्रान्तरे नास्ति किंचिद्बुद्धानां भगवतामज्ञातमदृष्टमविदितमविज्ञातम्। भगवान् संलक्षयति—
25 सुमेरुप्रख्ये महाश्रावके महाजनकायः प्रसादं प्रवेदयते। तद्गुणोद्भावनमस्य कर्तव्यम्, कुत्र कर्तव्यम्? यत्रैव पतितः। इति ज्ञात्वा आनन्दमामन्त्रयते स्म—गच्छ आनन्द भिक्षूणामारोचय—तथागतो भिक्षवो भर्गेषु जनपदेषु चारिकां चरिष्यति। यो युष्माकमुत्सहते तथागतेन सार्धं भर्गेषु चारिकां चर्तुम्, स चीवरकाणि गृह्णातु इति। एवं भदन्तेत्यायुष्मानानन्दो भगवतः प्रतिश्रुत्य भिक्षूणामारोचयति—भगवानायुष्मन्तो भर्गेषु जनपदेषु चारिकां चरिष्यति। यो
30 युष्माकमुत्सहते भगवता सार्धं भर्गेषु जनपदेषु चारिकां चरितुम्, स चीवरकाणि गृह्णातु
C 182 इति। अथ भगवान् दान्तो दान्तपरिवारः शान्तः शान्तपरिवारो मुक्तो मुक्तपरिवार आश्वस्त आश्वस्तपरिवारो विनीतो विनीतपरिवारोऽर्हन्नर्हत्परिवारो वीतरागो वीतरागपरिवारः प्रासादिकः

प्रासादिकपरिवारो वृषभ इव गोगणपरिवृतो गज इव कलभपरिवृतः सिंह इव दंष्ट्रगणपरि-
वृतो हंसराज इव हंसगणपरिवृतः सुपर्णीव पक्षिगणपरिवृतो विप्र इव शिष्यगणपरिवृतः
सुवैद्य इवातुरगणपरिवृतः शूर इव योधगणपरिवृतो देशिक इवाध्वगगणपरिवृतः सार्थवाह
इव वणिग्गणपरिवृतः श्रेष्ठीव पौरगणपरिवृतः कोट्टराज इव मन्त्रिगणपरिवृतश्चक्रवर्तीव
पुत्रसहस्रपरिवृतश्चन्द्र इव नक्षत्रगणपरिवृतः सूर्य इव रश्मिसहस्रपरिवृतो धृतराष्ट्र इव गन्धर्व- 5
गणपरिवृतो विरूढक इव कुम्भाण्डगणपरिवृतो विरूपाक्ष इव नागगणपरिवृतो धनद इव
यक्षगणपरिवृतो वेमचित्रीवासुरगणपरिवृतः शक्र इव त्रिदशगणपरिवृतो ब्रह्मेव ब्रह्मकायिक-
गणपरिवृतः स्तिमित इव जलनिधिः सजल इव जलधरो विमद इव गजपतिः सुदान्तेन्द्रियै-
रसंक्षोभितेर्यापथप्रचारो द्वात्रिंशता महापुरुषलक्षणैः समलंकृतोऽशीत्यानुव्यञ्जनैर्विराजितगात्रो
व्यामप्रभालंकृतमूर्तिः सूर्यसहस्रातिरेकप्रभो जङ्गम इव रत्नपर्वतः समन्ततो भद्रको दशभि- 10
र्बलैश्चतुर्भिः वैशारद्यैस्त्रिभिरावेणिकैः स्मृत्युपस्थानैर्महाकरुणया च समन्वागत आज्ञात-
कौण्डिन्यबाष्पमहानामानिरुद्धशारिपुत्रमौद्गल्यायनकाश्यपानन्दरैवतप्रभृतिभिर्महाश्रावकैः परि-
वृतोऽन्येन च महता भिक्षुसंघेन येन शुशुमारगिरिस्तेनोपसंक्रान्तः । अनुपूर्वेण चारिकां
चरन् शुशुमारगिरिमनुप्राप्तः । शुशुमारगिरौ विहरति भीषणिकावने मृगदावे । अश्रौषुः
शुशुमारगिरीयका ब्राह्मणगृहपतयः—भगवान् भर्गेषु जनपदेषु चारिकां चरन् शुशुमारगिरि- 15
मनुप्राप्तः शुशुमारगिरौ विहरति भीषणिकावने मृगदाव इति । श्रुत्वा च पुनः संघात् संघं
पूगात्पूगं संगम्य समागम्य शुशुमारगिरेर्निष्क्रम्य येन भगवांस्तेनोपसंक्रान्ताः । उपसंक्रम्य C 183
भगवतः पादौ शिरसा वन्दित्वा एकान्ते निषण्णाः । शुशुमारगिरीयकान् ब्राह्मणगृहपतीन्
धर्म्यया कथया संदर्शयति समादापयति समुत्तेजयति संप्रहर्षयति । अनेकपर्यायेण धर्म्यया
कथया संदर्श्य समादाप्य समुत्तेज्य संप्रहर्ष्य तूष्णीम् । अथ शुशुमारगिरीयका ब्राह्मणगृह- 20
पतय उत्थायासनादेकांसमुत्तरासङ्गं कृत्वा येन भगवांस्तेनाञ्जलिं प्रणम्य भगवन्तमिदमवो-
चन्—अधिवासयत्वस्माकं भगवान् श्वोऽन्तर्गृहे भक्तेन सार्धं भिक्षुसंघेन । अधिवासयति
भगवान् शुशुमारगिरीयकानां ब्राह्मणगृहपतीनां तूष्णीभावेन । अथ शुशुमारगिरीयका ब्राह्मण-
गृहपतयो भगवतस्तूष्णीभावेनाधिवासनां विदित्वा भगवतो भाषितमभिनन्द्यानुमोद्य भगवतः
पादौ शिरसा वन्दित्वा भगवतोऽन्तिकात् प्रक्रान्ताः । अथ शुशुमारगिरीयका ब्राह्मण- 25
गृहपतयस्तामेव रात्रिं शुचि प्रणीतं खादनीयभोजनीयं समुदानीय काल्यमेवोत्थाय आसनकानि
प्रज्ञप्य उदकमणीन् प्रतिष्ठाप्य भगवतो दूतेन कालमारोचयन्ति—समयो भदन्त, सज्जं भक्तं
यस्येदानीं भगवान् कालं मन्यत इति । अथ भगवान् पूर्वाह्णे निवास्य पात्रचीवरमादाय
भिक्षुगणपरिवृतो भिक्षुसंघपुरस्कृतो येन शुशुमारगिरीयकानां ब्राह्मणगृहपतीनां भक्ताभि-
सारस्तेनोपसंक्रान्तः । उपसंक्रम्य प्रज्ञप्त एवासने निषण्णः । शुशुमारगिरीयका ब्राह्मणगृह- 30
पतयः सुखोपनिषण्णं बुद्धप्रमुखं भिक्षुसंघं विदित्वा शुचिना प्रणीतेन खादनीयभोजनीयेन
स्वहस्तेन संतर्पयन्ति संप्रवारयन्ति । अनेकपर्यायेण शुचिना प्रणीतेन खादनीयेन

भोजनीयेन स्वहस्तं संतर्प्य संप्रवार्य भगवन्तं भुक्तवन्तं विदित्वा धौतहस्तमपनीतपात्रं नीचतरमासनं गृहीत्वा भगवतः पुरस्तान्निषण्णा धर्मश्रवणाय। अथ भगवान् शुशुमारगिरीयकान् ब्राह्मणगृहपतीन् धर्म्यया कथया संदर्शयति समादापयति समुत्तेजयति
C 184 संप्रहर्षयति। अनेकपर्यायेण धर्म्यया कथया संदर्श्य समादाप्य समुत्तेज्य संप्रहर्ष्य तूष्णीम्॥

5 अथ शुशुमारगिरीयका ब्राह्मणगृहपतयो भगवन्तमिदमवोचन्—भगवता भदन्त नानादेशेषु नानाधिष्ठानेषु ते ते दुष्टनागा दुष्टयक्षाश्च विनीताः। अयं भदन्त अश्वतीर्थिको नागोऽस्माकमवैराणां वैरी असपत्नानां सपत्नोऽद्रुग्धानां द्रुग्धः। नित्यमस्माकं जातानि जातानि शस्यानि विनाशयति, स्त्रीपुरुषदारकदारिकागोमहिषानजैडकांश्च। अहो बत भगवांस्तं विनयेदनुकम्पामुपादायेति। अधिवासयति भगवान् शुशुमारगिरीयकानां ब्राह्मणगृहपतीनाम्।
10 तूष्णीभावेनाधिवासयति। अथ भगवान् शुशुमारगिरीयकानां ब्राह्मणगृहपतीनां तूष्णीभावेनाधिवास्य उत्थायासनात् प्रक्रान्तः। अथ भगवान् विहारं गत्वा पुरस्ताद्भिक्षुसंघस्य प्रज्ञप्त एवासने निषण्णः। निषद्य भगवानायुष्मन्तमानन्दमामन्त्रयते—गच्छ आनन्द, भिक्षूणामेवमारोचय, शलाकां चारय—यो युष्माकमुत्सहते अश्वतीर्थिकं नागं विनेतुम्, स शलाकां गृह्णातु इति। एवं भदन्तेत्यायुष्मानानन्दो भगवतः प्रतिश्रुत्य भिक्षुसंघस्यारोचयित्वा बुद्ध-
15 प्रमुखे भिक्षुसंघे शलाकां चारयितुमारब्धः। भगवता शलाका न गृहीता। स्थविरा भिक्षवः समन्वाहर्तुं संवृत्ताः—किमर्थं भगवता शलाका न गृहीता इति? पश्यन्त्यायुष्मतः स्वागतस्य गुणोद्भावनां कर्तुकामः। तैरपि न गृहीता। आयुष्मान् स्वागतः समन्वाहर्तुं प्रवृत्तः—किं कारणं भगवता शलाका न गृहीता स्थविरस्थविरैश्च भिक्षुभिरिति? पश्यति मम गुणोद्भावनां कर्तुकामः। तच्छास्तुर्मनोरथं पूरयामि, गृह्णामि शलाकामिति। तेनार्धासनं
20 मुक्त्वा गजभुजसदृशं बाहुमभिप्रसार्य शलाका गृहीता। जानकाः पृच्छका बुद्धा भगवन्तः।
C 185 पृच्छति बुद्धो भगवानायुष्मन्तमानन्दम्—कतरेणानन्द भिक्षुणा शलाका गृहीतेति? स कथयति—स्वागतेन भदन्तेति। भगवानाह—गच्छ आनन्द, स्वागतं भिक्षुमेवं वद—दुष्टनागोऽसौ, कायेन्द्रियं ते रक्षितव्यमिति। एवं भदन्तेत्यायुष्मानानन्दो भगवतः प्रतिश्रुत्य येनायुष्मान् स्वागतस्तेनोपसंक्रान्तः। उपसंक्रम्यायुष्मन्तं स्वागतमिदमवोचत्—आयुष्मन् स्वागत,
25 भगवानेवमाह—दुष्टनागोऽसौ, कायेन्द्रियं ते रक्षितव्यमिति। स कथयति—आयुष्मन्नानन्द अकोप्या शास्तुराज्ञा। अपि तु यादृशोऽश्वतीर्थिको नागः, ईदृशानां नागानामिक्षुवेणुनडवद्यदि पूर्णो जम्बुद्वीपः स्यात्, तथापि मे ते रोमापि नेञ्जयितुं समर्थाः स्युः, प्रागेवाश्वतीर्थिको नागः कायेन्द्रियस्योपरोधं करिष्यतीति। आयुष्मानानन्द आरोग्यमित्युक्त्वा प्रक्रान्तः॥

अथायुष्मान् स्वागतस्तस्या एव रात्रेरत्ययात्पूर्वाह्णे निवास्य पात्रचीवरमादाय शुशुमार-
30 गिरिं पिण्डाय प्राविक्षत्। शुशुमारगिरिं पिण्डाय चरित्वा येनाश्वतीर्थिकस्य नागस्य भवनं तेनोपसंक्रान्तः। अद्राक्षीदश्वतीर्थिको नाग आयुष्मन्तं स्वागतं दूरादेव। दृष्ट्वा च पुनः संलक्षयति—किमनेन श्रमणकेन मम मृतिप्रवृत्तिः श्रुता येन मे भवनमागच्छतीति? पुनः संलक्षयति—

आगन्तुरयम्, आगच्छतु तावदिति। अथायुष्मान् स्वागतस्तस्य ह्रदं गत्वा पात्रचीवरमेकान्त-
मुपसंक्षिप्य पादौ प्रक्षाल्य हस्तौ निर्माद्य पानीयं परिस्राव्य जीर्णपर्णकानि समुदानीय निषद्य
भक्तकृत्यं कर्तुमारब्धः। अश्वतीर्थिकेन नागेनासावतिथिरिति कृत्वाध्युपेक्षितः। आयुष्मान्
स्वागतः संलक्षयति—नासंक्षोभिता दुष्टनागा दमथमागच्छन्ति। संक्षोभयाम्येनमिति। तेन
पात्रं प्रक्षाल्य तत्पात्रोदकं तस्मिन् ह्रदे प्रक्षिप्तम्। स संक्षुब्धः। स संलक्षयति—अयं मया 5
श्रमण आगच्छन्नध्युपेक्षितः, भुञ्जानोऽप्युपेक्षितः, अनेन मम भवने उच्छिष्टोदकं छोरितम्।
नामावशेषमेनं करोमीति तीव्रेण पर्यवस्थानेन पर्यवस्थितः। उपरिविहायसमभ्युद्गम्य C 186
आयुष्मतः स्वागतस्योपरि चक्रकणपपरशुभिन्दिपालादीनि प्रहरणानि क्षेप्तुमारब्धः। आयु-
ष्मान् स्वागतो मैत्रीसमापन्नः। तान्यस्य दिव्यान्युत्पलपद्मकुमुदपुण्डरीकमन्दारकाणि पुष्पाणि
भूत्वा काये निपतन्ति। अश्वतीर्थिको नागोऽङ्गारवर्षमुत्स्रष्टुमारब्धः। तदपि दिव्यानि 10
पुष्पाणि मान्दारकाणि भूत्वा काये निपतितुमारब्धम्। अश्वतीर्थिको नागः पांसु वर्षितु-
मारब्धः। तदपि दिव्यान्यगुरुचूर्णानि चन्दनचूर्णानि तमालपत्रचूर्णानि भूत्वा निपतितु-
मारब्धम्। अश्वतीर्थिको नागः क्रोधपर्यवस्थानानुभावाद्धूमयितुमारब्धः। आयुष्मानपि
स्वागत ऋद्ध्यनुभावाद्धूमयितुमारब्धः। अश्वतीर्थिको नागः क्रोधपर्यवस्थानानुभावात् प्रज्व-
लितः। आयुष्मानपि स्वागतस्तेजोधातुं समापन्नः। इति तत्राश्वतीर्थिकस्य नागस्य क्रोधस्यानु- 15
भावेनायुष्मतः स्वागतस्य ऋद्ध्यनुभावेन महानवभासः प्रादुर्भूतो यं दृष्ट्वा शुशुमारगिरीयका
ब्राह्मणगृहपतयः संभ्रान्ताः, इतश्चामुतश्च निरीक्षितुमारब्धाः। कथयन्ति—एष भवन्तो भगवा-
नश्वतीर्थिकं नागं विनयति, आगच्छत पश्याम इति। अनेकानि प्राणशतसहस्राणि निर्गतानि।
भिक्षवोऽपि तमुदारावभासं तत्रस्था एव निरीक्षितुमारब्धाः। तत्र भगवान् भिक्षूनामन्त्रयते
स्म—एषोऽग्रो मे भिक्षवो भिक्षूणां मम श्रावकाणामभीक्ष्णं तेजोधातुं समापद्यमानानां यदुत 20
स्वागतो भिक्षुरिति। यदाश्वतीर्थिको नागो विगतमददर्पः क्षीणप्रहरणश्च संवृत्तः, तदा
निष्पलायितुमारब्धः। आयुष्मता स्वागतेन समन्ततोऽग्निर्निर्मितः। अश्वतीर्थको नागो यां
यां दिशं गच्छति, तां तां दिशमादीप्तां प्रदीप्तां संप्रज्वलितामेकज्वालीभूतां पश्यति। स
इतश्चामुतश्च नैर्माणिकेनाग्निना पर्याकुलीकृतोऽत्राणः सर्वमशान्तं पश्यति नान्यत्रायुष्मत
एव स्वागतस्य समीपं शान्तं शीतिभूतम्। स येनायुष्मान् स्वागतस्तेनोपसंक्रान्तः। उपसंक्रम्य 25
आयुष्मन्तं स्वागतमिदमवोचत्—अहं भदन्त स्वागत। किं मां विहेठयसीति? स कथयति— C 187
जराधर्मा नाहं त्वां विहेठयामि, अपि तु त्वमेव मां विहेठयसि। यदि मया एवंविधा गुणगणा नाधि-
गता अभविष्यन्, अद्याहं त्वया नामावशेषः कृतोऽभविष्यमिति। स कथयति—भदन्त स्वागत,
आज्ञापयतु, किं मया करणीयम्? भद्रमुख, भगवतोऽन्तिकं गत्वा शरणगमनशिक्षापदानि
गृहाणेति। स कथयति—भदन्त स्वागत, शोभनम्, एवं करोमीति। अथायुष्मान् स्वागतोऽ- 30
श्वतीर्थनागमादाय येन भगवांस्तेनोपसंक्रान्तः। उपसंक्रम्य भगवतः पादौ शिरसा वन्दित्वा
एकान्ते निषण्णः। एकान्तनिषण्ण आयुष्मान् स्वागतो भगवन्तमिदमवोचत्—अयं सोऽश्व-

तीर्थिको नाग इति। तत्र भगवानश्वतीर्थिकं नागमामन्त्रयते—त्वं तावद्भद्रमुख, पूर्वकेण दुश्चरितेन प्रत्यवरायां तिर्यग्योनौ उपपन्नः। स त्वमेतर्हि हतप्रहतनिविष्टः परप्राणहरः परप्राणोपरोधेन जीविकां कल्पयसि। इतश्च्युतस्य ते का गतिर्भविष्यति, का उपपत्तिः, कोऽभिसंपरायः? इति। स कथयति—भगवन्, आज्ञापय, किं मया करणीयमिति।
5 भगवानाह—ममान्तिकाच्छरणशिक्षापदानि गृहाण, शुशुमारगिरीयकानां च ब्राह्मणगृहपतीनामभयमनुप्रयच्छेति। स कथयति—एषोऽहं भगवन्तं शरणं गच्छामि, शिक्षापदानि च गृह्णामि, अद्याग्रेण च शुशुमारगिरीयकानां च ब्राह्मणगृहपतीनामभयमनुप्रयच्छामीति। अथ शुशुमारगिरीयका ब्राह्मणगृहपतयः प्रभूतमभिसारं गृहीत्वा येन भगवांस्तेनोपसंक्रान्ताः। उपसंक्रम्य भगवतः पादौ शिरसा वन्दित्वा एकान्ते निषण्णाः। एकान्तनिषण्णाः
10 शुशुमारगिरीयका ब्राह्मणगृहपतयो भगवन्तमिदमवोचन्—भगवता भदन्त अश्वतीर्थिको नागो विनीतः? भगवानाह—न मया ब्राह्मणगृहपतयोऽश्वतीर्थको नागो विनीतः, अपि तु स्वागतेन भिक्षुणा। कतमेन भदन्त? इहनिवासिनैव बोधस्य गृहपतेः पुत्रेण। संपत्तिकामो लोको विपत्तिप्रतिकूलः। तत्रैके कथयन्ति—अस्माकमसौ भ्रातुः पुत्रो भवति। अपरे कथयन्ति—अस्माकं भागिनेय इति। अपरे कथयन्ति—अस्माकं वयस्यपुत्र इति। अथ
15 शुशुमारगिरीयका ब्राह्मणगृहपतय उत्थायासनादेकांसमुत्तरासङ्गं कृत्वा येन भगवांस्तेनाञ्जलिं प्रणम्य भगवन्तमिदमवोचन्—अधिवासयत्वस्माकं भगवान् भदन्तस्वागतमागम्य भक्तं सप्ताहेन सार्धं भिक्षुसंघेनेति। अधिवासयति भगवान् शुशुमारगिरीयकानां ब्राह्मणगृहपतीनां तूष्णीभावेन। अथ शुशुमारगिरीयका ब्राह्मणगृहपतयो भगवतस्तूष्णीभावेनाधिवासनां विदित्वा भगवतः पादौ शिरसा वन्दित्वा भगवतोऽन्तिकात् प्रक्रान्ताः॥

C 188

20 शुशुमारगिरौ अन्यतमो ब्राह्मण अहितुण्डिको बोधस्य गृहपतेर्वयस्यः। सोऽश्वतीर्थिकस्य नागस्य भयान्निष्पलाय्य श्रावस्तीं गतः। स राज्ञा प्रसेनजिता कौशलेन हस्तिमध्यस्योपरि विश्वासिकः स्थापितः। स केनचिदेव करणीयेन शुशुमारगिरिमनुप्राप्तः। तेन श्रुतं यथा स्वागतेन भिक्षुणा बोधस्य गृहपतेः पुत्रेणाश्वतीर्थिको नागो विनीत इति। श्रुत्वा च पुनर्येनायुष्मान् स्वागतस्तेनोपसंक्रान्तः। उपसंक्रम्यायुष्मतः स्वागतस्य पादौ शिरसा वन्दित्वा एकान्ते
25 निषण्णः। स ब्राह्मण आयुष्मन्तं स्वागतमिदमवोचत्—अधिवासयतु मे आर्यस्वागत श्वोऽन्तर्गृहे भक्तेनेति। आयुष्मान् स्वागतः कथयति—ब्राह्मण, मामागम्य शुशुमारगिरीयकैर्ब्राह्मणगृहपतिभिर्बुद्धप्रमुखो भिक्षुसंघो भक्तेन सप्ताहेनोपनिमन्त्रितः। नाहमधिवासयामि। ब्राह्मणः कथयति—आर्य, यदि सांप्रतं नाधिवासयसि, यदा श्रावस्तीगतो भवसि, तदा मम गृहे तत्प्रथमतः पिण्डपातः परिभोक्तव्य इति। कथयति—एवमस्तु इति। ब्राह्मणः
30 पादाभिवन्दनं कृत्वा प्रक्रान्तः। अथ भगवान् यथाभिरम्यं शुशुमारगिरौ विहृत्य येन श्रावस्ती तेन चारिकां प्रक्रान्तः। अनुपूर्वेण चारिकां चरन् श्रावस्तीमनुप्राप्तः। श्रावस्त्यां

C 189

विहरति जेतवनेऽनाथपिण्डदस्यारामे। अश्रौषीदनाथपिण्डदो गृहपतिर्भगवान् भर्गेषु जन-

पदचारिकां चरन् श्रावस्तीमनुप्राप्तः, इहैव विहरत्यस्माकमेवाराम इति। श्रुत्वा च पुनः श्रावस्त्या निष्क्रम्य येन भगवांस्तेनोपसंक्रान्तः। उपसंक्रम्य भगवतः पादौ शिरसा वन्दित्वा एकान्ते निषण्णः। एकान्तनिषण्णमनाथपिण्डदं गृहपतिं भगवान् धर्म्यया कथया संदर्शयति समादापयति समुत्तेजयति संप्रहर्षयति। अनेकपर्यायेण धर्म्यया कथया संदर्श्य समादाप्य समुत्तेज्य संप्रहर्ष्य तूष्णीम्। अनाथपिण्डदो गृहपतिरुत्थायासनादेकांसमुत्तरासङ्गं 5 कृत्वा येन भगवांस्तेनाञ्जलिं प्रणम्य भगवन्तमिदमवोचत्—अधिवासयतु मे भगवान् श्वोऽन्तर्गृहे भक्तेन सार्धं भिक्षुसंघेनेति। अधिवासयति भगवाननाथपिण्डदस्य गृहपतेस्तूष्णीभावेन। अथानाथपिण्डदो गृहपतिर्भगवतस्तूष्णीभावेनाधिवासनां विदित्वा भगवतो भाषितमभिनन्द्यानुमोद्य भगवतः पादौ शिरसा वन्दित्वा भगवतोऽन्तिकात् प्रक्रान्तः। अश्रौषीत् स ब्राह्मणो भगवान् भर्गेषु जनपदचारिकां चरन्निहानुप्राप्त इहैव विहरति 10 जेतवनेऽनाथपिण्डदस्याराम इति। श्रुत्वा च पुनर्येनायुष्मान् स्वागतस्तेनोपसंक्रान्तः। उपसंक्रम्यायुष्मन्तं स्वागतमिदमवोचत्—अधिवासयतु मे आर्यः श्वोऽन्तर्गृहे भक्तेनेति। अधिवासयत्यायुष्मान् स्वागतस्तस्य ब्राह्मणस्य तूष्णीभावेन। अथ स ब्राह्मण आयुष्मन्तः स्वागतस्य तूष्णीभावेनाधिवासनां विदित्वा उत्थायासनात् प्रक्रान्तः। अथानाथपिण्डदो गृहपतिस्तामेव रात्रिं शुचि प्रणीतं खादनीयभोजनीयं समुदानीय काल्यमेवोत्थाय आसनानि प्रज्ञप्य उदक- 15 मणीन् प्रतिष्ठाप्य भगवतो दूतेन कालमारोचयति—समयो भदन्त, सज्जं भक्तं यस्येदानीं भगवान् कालं मन्यत इति। अथ भगवान् पूर्वाह्णे निवास्य पात्रचीवरमादाय भिक्षुगणपरिवृतो भिक्षुसंघपुरस्कृतो येनानाथपिण्डदस्य निवेशनं तेनोपसंक्रान्तः। तेनापि ब्राह्मणेनायुष्मतः स्वागतस्य प्रणीत आहारः सज्जीकृतः। आयुष्मानपि स्वागतः पूर्वाह्णे निवास्य पात्रचीवरमादाय येन तस्य ब्राह्मणस्य निवेशनं तेनोपसंक्रान्तः। उपसंक्रम्य प्रज्ञप्त एवासने निषण्णः। 20 C 190 एकान्तनिषण्ण आयुष्मान् स्वागतस्तेन ब्राह्मणेन प्रणीतेनाहारेण संतर्पितः। स ब्राह्मणः संलक्षयति—आर्येण स्वागतेन प्रणीत आहारः परिभुक्तः, नो जरयिष्यति, पानकमस्मै प्रयच्छामि। इति विदित्वा आयुष्मन्तं स्वागतमिदमवोचत्—आर्य, प्रणीतस्ते आहारः परिभुक्तः। पानकं पिब। पानं जरयिष्यतीति। स कथयति—शोभनम्। एवं करोमीति। तेन पानकं सज्जीकृत्य हस्तिमदादङ्गुलिः प्रक्षिप्ता। असमन्वाहृत्यार्हतां ज्ञानदर्शनं न प्रवर्तते। आयुष्मता 25 स्वागतेन तत्पानकं पीतम्। ततो दक्षिणादेशनां कृत्वा प्रक्रान्तः श्रावस्तीवीथीं किलिञ्जच्छन्नाम्। स तामतिक्रान्त आतपेन स्पृष्टो मद्यक्षिप्तः पृथिव्यां निपतितः। असंमोषधर्माणो बुद्धा भगवन्तः। भगवता सुपर्णिका कुटिर्निर्मिता—मैतं कश्चिद् दृष्ट्वा शासनेऽप्रसादं प्रवेदयिष्यतीति। अनाथपिण्डदः सुखोपनिषण्णं बुद्धप्रमुखं भिक्षुसंघं विदित्वा शुचिना प्रणीतेन खादनीयभोजनीयेन स्वहस्तेन संतर्पयति संप्रवारयति। अनेकपर्यायेण स्वहस्तं 30 संतर्प्य संप्रवार्य भगवन्तं भुक्तवन्तं विदित्वा धौतहस्तमपनीतपात्रं नीचतरमासनं गृहीत्वा भगवतः पुरस्तान्निषण्णो धर्मश्रवणाय। अथ भगवाननाथपिण्डदं गृहपतिं धर्म्यया कथया

संदर्श्य समादाप्य समुत्तेज्य संप्रहर्ष्योत्थायासनात् प्रक्रान्तः। अनुपूर्वेण तत्प्रदेशनुप्राप्तः। अथ भगवांस्तान् ऋद्ध्यभिसंस्कारान् प्रतिप्रस्रभ्य भिक्षूनामन्त्रयते स्म—अयं स भिक्षवः स्वागतो भिक्षुर्येनाश्वतीर्थिको नागस्तावच्चण्डो विनीतः। किमिदानीमेष शक्तो दुर्भुक्तस्यापि विषमपनेतुम्? नो भदन्त इति। भिक्षवः, इमे चान्ये चादीनवा मद्यपाने। तस्मान्न भिक्षुणा 5 मद्यं पातव्यं दातव्यं वा। अथ भगवानायुष्मन्तं स्वागतं मद्यवशात् सुप्तमुत्थाप्येदमवोचत्—स्वागत, किमिदम्? असमन्वाहारो भगवन्, असमन्वाहारः सुगत। ततो भगवानायुष्मन्तं स्वागतमादाय विहारं गत्वा पुरस्ताद्भिक्षुसंघस्य प्रज्ञप्त एवासने निषण्णः। निषद्य भिक्षूनामन्त्रयते स्म—मां भो भिक्षवः शास्तारमुद्दिश्य भवद्भिर्मद्यमपेयमदेयमन्ततः कुशाग्रेणापि॥ C 191

भिक्षवः संशयजाताः सर्वसंशयच्छेत्तारं बुद्धं भगवन्तं पप्रच्छुः—किं भदन्त आयु-10 ष्मता स्वागतेन कर्म कृतं येनाढ्ये कुले महाधने महाभोगे जातः? किं कर्म कृतं येन क्रोडमल्लको जातः, दुरागत इति च संज्ञा संवृत्ता? किं कर्म कृतं येन भगवतः शासने प्रव्रज्य सर्वक्लेशप्रहाणादर्हत्त्वं साक्षात्कृतम्, तेजोधातुं समापद्यमानानां चाग्रतायां निर्दिष्टः? भगवानाह—स्वागतेनैव भिक्षवो भिक्षुणा कर्माणि कृतान्युपचितानि लब्धसंभाराणि परिणतप्रत्ययानि ओघवत्प्रत्युपस्थितान्यवश्यभावीनि। स्वागतेन कर्माणि कृतान्युपचितानि। 15 कोऽन्यः प्रत्यनुभविष्यति? न भिक्षवः कर्माणि कृतान्युपचितानि बाह्ये पृथिवीधातौ विपच्यन्ते, नाब्धातौ, न तेजोधातौ, न वायुधातौ, अपि तु उपात्तेष्वेव स्कन्धधात्वायतनेषु कर्माणि कृतान्युपचितानि विपच्यन्ते शुभान्यशुभानि च।

न प्रणश्यन्ति कर्माणि कल्पकोटिशतैरपि।
सामग्रीं प्राप्य कालं च फलन्ति खलु देहिनाम्॥ १०॥

20 भूतपूर्वं भिक्षवोऽन्यतमस्मिन् कर्वटके गृहपतिः प्रतिवसति आढ्यो महाधनो महाभोगो विस्तीर्णविशालपरिग्रहो वैश्रवणधनप्रतिस्पर्धी। सोऽपरेण समयेन सुहृत्संबन्धिबान्धवपरिवृतोऽन्तर्जनपरिवृतश्चोद्यानभूमिं निर्गतः। असति बुद्धानामुत्पादे प्रत्येकबुद्धा लोक उत्पद्यन्ते हीनदीनानुकम्पकाः प्रान्तशयनासनभक्ता एकदक्षिणीया लोकस्य। यावदन्यतमः प्रत्येकबुद्धो जनपदचारिकां चरंस्तं कर्वटकमनुप्राप्तः। सोऽध्वपरिश्रमाद्धातुवैषम्याश्च ग्लानः 25 पिण्डार्थी तदुद्यानं प्रविष्टः। स गृहपतिस्तं दृष्ट्वा पर्यवस्थितः। तेन पौरुषेयाणामाज्ञा दत्ता—भवन्तः, निष्कासयतैनं प्रव्रजितमिति। तेषां न कश्चिदुत्सहते निष्कासयितुम्। तेन गृहपतिना भूयसा पर्यवस्थितेन स महात्मा स्वयमेव ग्रीवायां गृहीत्वा निष्कासितः, उक्तश्च—क्रोडमल्लकानां मध्ये प्रतिवसेति। स दुर्बलप्राणो भूमौ निपतितः। स संलक्षयति—हतोऽयं तपस्वी गृहपतिरुपहतश्च। अभ्युद्धारोऽस्य कर्तव्यः। इति विदित्वा उपरिविहायस-30 मभ्युद्गम्य ज्वलनतपनवर्षणविद्योतनप्रातिहार्याणि कर्तुमारब्धः। आशु पृथग्जनस्य ऋद्धिरावर्जनकरी। स मूलनिकृत्त इव द्रुमः पादयोर्निपत्य कथयति—अवतरावतर महादक्षिणीय, मम दुश्चरितपङ्कनिमग्नस्य हस्तोद्धारमनुप्रयच्छेति। स तस्यानुग्रहार्थमवतीर्णः। तेन तस्य C 192

पूजासत्कारं कृत्वा प्रणिधानं कृतम्—यन्मया एवंविधे सद्भूतदक्षिणीयेऽपकारः कृतः, मा अस्य कर्मणो भागी स्याम्। यत्तूपकारः कृतः, अनेनाहं कुशलमूलेन आढ्ये महाधने महाभोगे कुले जायेयम्, एवंविधानां च धर्माणां लाभी स्याम्, प्रतिविशिष्टतरं चातः शास्तारमारागयेयं मा विरागयेयमिति ॥

भगवानाह—किं मन्यध्वे भिक्षवो योऽसौ गृहपतिरेव, असौ स्वागतो भिक्षुस्तेन 5 कालेन तेन समयेन। यदनेन प्रत्येकबुद्धे काराः कृताः, तेनाढ्ये महाधने महाभोगे कुले जातः। यदपकारः कृतः, तेन पञ्चजन्मशतानि क्रोडमल्लको जातः। यावदेतर्ह्यपि चरम-भविकोऽपि तत्क्रोडमल्लक एव जातः। यत्प्रणिधानं कृतम्, तेन मम शासने प्रव्रज्य सर्वक्लेशप्रहाणादर्हत्त्वं साक्षात्कृतम्। अहमनेन प्रत्येकबुद्धकोटिशतसहस्रेभ्यः प्रतिविशिष्ट-तरः शास्ता आरागितो न विरागितः। भूयोऽपि काश्यपे भगवति सम्यक्संबुद्धे प्रव्रजितो 10 बभूव। यस्य भिक्षोरन्तिके प्रव्रजितः, स भगवता काश्यपेन सम्यक्संबुद्धेनाभीक्ष्णं तेजोधातुं समापद्यमानानामग्रो निर्दिष्टः। तत्रानेन यावदायुर्ब्रह्मचर्यं चरितम्, न च कश्चिद्गुणगणो-ऽधिगतः। स मरणसमये प्रणिधानं कर्तुमारब्धः—यन्मया भगवति काश्यपे सम्यक्संबुद्धेऽनुत्तरे दक्षिणीये यादवायुर्ब्रह्मचर्यं चरितम्, न च कश्चिद्गुणगणोऽधिगतः, अनेनाहं कुशलमूलेन योऽसौ भगवता काश्यपेन सम्यक्संबुद्धेनोत्तरो माणवो व्याकृतः—भविष्यसि त्वं माणव 15 वर्षशतायुषि प्रजायां शाक्यमुनिर्नाम तथागतोऽर्हन् सम्यक्संबुद्ध इति, तस्याहं शासने प्रव्रज्य सर्वक्लेशप्रहाणादर्हत्त्वं साक्षात्कुर्याम्। यथा मम उपाध्यायो भगवता काश्यपेन सम्यक्संबुद्धेनाभीक्ष्णं तेजोधातुं समापद्यमानानामग्रो निर्दिष्टः, एवं मामपि स भगवान् शाक्यमुनिः शाक्याधिराजोऽभीक्ष्णं तेजोधातुं समापद्यमानानामग्रं निर्दिशेदिति। तत्प्रणि-धानवशादेतर्हि तथागतेनाभीक्ष्णं तेजोधातुं समापद्यमानानामग्रो निर्दिष्टः। इति हि भिक्षव 20 एकान्तकृष्णानां कर्मणामेकान्तकृष्णो विपाकः, एकान्तशुक्लानामेकान्तशुक्लः, व्यतिमिश्राणां व्यतिमिश्रः। तस्मात्तर्हि भिक्षव एकान्तकृष्णानि कर्माण्यपास्य व्यतिमिश्राणि च, एकान्त-शुक्लेष्वेव कर्मस्वाभोगः करणीयः। इत्येवं भो भिक्षवः शिक्षितव्यम् ॥

इत्यवोचद्भगवान्। आत्तमनसस्ते भिक्षवो भगवतो भाषितमभ्यनन्दन् ॥

इति श्रीदिव्यावदाने स्वागतावदानं नाम त्रयोदशमम् ॥ 25

C 193



# १४ सूकरिकावदानम् ।

धर्मता खलु च्यवनधर्मणो देवपुत्रस्य पञ्च पूर्वनिमित्तानि प्रादुर्भवन्ति—अक्लिष्टानि वासांसि क्लिश्यन्ति, अम्लानानि माल्यानि म्लायन्ति, दौर्गन्धं कायेन निष्क्रामति, उभाभ्यां कक्षाभ्यां स्वेदः प्रादुर्भवति, च्यवनधर्मा देवपुत्रः स्व आसने धृतिं न लभते । अथान्यतम-
C 194 5 श्च्यवनधर्मा देवपुत्रः पृथिव्यामावर्तते, संपरिवर्त्यैवं चाह—हा मन्दाकिनी, हा पुष्किरिणी, हा वापी, हा चैत्ररथ, हा पारुष्यक, हा नन्दनवन, हा मिश्रकावन, हा पारियात्रक, हा पाण्डुकम्बलशिला, हा देवसभा, हा सुदर्शन, इति करुणकरुणं परिदेवते स्म । अद्राक्षीच्छक्रो देवानामिन्द्रस्तं देवपुत्रमत्यर्थं पृथिव्यामावर्तन्तं परिवर्तन्तम् । दृष्ट्वा पुनर्येन स देवपुत्रस्तेनोपसंक्रान्तः । उपसंक्रम्य तं देवपुत्रमिदमवोचत्—कस्मात् त्वं मार्ष अत्यर्थं पृथिव्यामावर्तसे,
10 संपरिवर्तसे, करुणकरुणं परिदेवसे—हा मन्दाकिनी, हा पुष्किरिणी, हा वापी, हा चैत्ररथ, हा पारुष्यक, हा नन्दनवन, हा मिश्रकावन, हा पारियात्रक, हा पाण्डुकम्बलशिला, हा देवसभा, हा सुदर्शन इति करुणकरुणं परिदेवसे ? एवमुक्ते देवपुत्रः शक्रं देवानामिन्द्रमिदमवोचत्—एषोऽहं कौशिक दिव्यं सुखमनुभूय इतः सप्तमे दिवसे राजगृहे नगरे सूकर्याः कुक्षौ उपपत्स्यामि । तत्र मया बहूनि वर्षाण्युच्चारप्रस्रावः परिभोक्तव्य इति । अथ शक्रो देवाना-
15 मिन्द्रः कारुण्यतया तं देवपुत्रमिदमवोचत्—एहि त्वं मार्ष, बुद्धं शरणं गच्छ द्विपदानामग्र्यम्, धर्मं शरणं गच्छ विरागाणामग्र्यम्, संघं शरणं गच्छ गणानामग्र्यमिति । अथ स देवपुत्रस्तिर्यग्योन्युपपत्तिभयभीतो मरणभयभीतश्च शक्रं देवानामिन्द्रमिदमवोचत्—एषोऽहं कौशिक बुद्धं शरणं गच्छामि द्विपदानामग्र्यम्, धर्मं शरणं गच्छामि विरागाणामग्र्यम्, संघं शरणं गच्छामि गणानामग्र्यम् । अथ स देवपुत्रस्त्रिशरणपरिगृहीतो भूत्वा च्युतः कालगत-
20 स्तुषिते देवनिकाये उपपन्नः ॥

धर्मता खलु अधस्ताद्देवानां ज्ञानदर्शनं प्रवर्तते नोर्ध्वम् । अथ शक्रो देवानामिन्द्रस्तं देवपुत्रमवलोकयति—किमसौ देवपुत्रः सूकरिकायाः कुक्षौ उपपन्नो न वेति । यावत् पश्यति—
C 195 नोपपन्नस्तिर्यक्प्रेतेषु । नरकेषूपपन्न इति पश्यति । नोपपन्नः । मनुष्याणां सभागतायामुपपन्न इति पश्यति । नोपपन्नः । चातुर्महाराजकायिकान् देवांस्त्रायस्त्रिंशांश्चावलोकयितुमारब्धः ।
25 तत्रापि नाद्राक्षीत् । अथ शक्रो देवानामिन्द्रः कुतूहलजातो येन भगवांस्तेनोपसंक्रान्तः । उपसंक्रम्य भगवतः पादौ शिरसा वन्दित्वा एकान्ते निषण्णः । एकान्तनिषण्णः शक्रो देवानामिन्द्रो भगवन्तमिदमवोचत्—इहाहं भदन्त अद्राक्षमन्यतमं देवपुत्रं च्यवनधर्माणं पृथिव्यामावर्तमानं करुणकरुणं च परिदेवमानम्—हा मन्दाकिनि, हा पुष्किरिणि, हा वापि, हा चैत्ररथ, हा पारुष्यक, हा नन्दनवन, हा मिश्रकावन, हा पारियात्रक, हा पाण्डुकम्बलाशिला, हा देवसभा, हा सुदर्शन इति । तमेनमेवं वदामि—कस्मात् त्वं मार्ष अत्यर्थं शोचसि परिदेवसे
30 क्रन्दसि उरसि ताडयसि संमोहमापद्यस इति ? स एवमाह—एषोऽहं कौशिक दिव्यं सुखमपहाय इतः सप्तमे दिवसे राजगृहे नगरे सूकरिकायाः कुक्षौ उपपत्स्यामि । तत्र मया

बहूनि वर्षाणि उच्चारप्रस्नावः परिभोक्तव्यं भविष्यति। तमेनमेवं वदामि—एहि त्वं मार्ष बुद्धं शरणं गच्छ द्विपदानामग्र्यम्, धर्मं शरणं गच्छ विरागाणामग्र्यम्, संघं शरणं गच्छ गणानामग्र्यमिति। स एवमाह—एषोऽहं कौशिक बुद्धं शरणं गच्छामि द्विपदानामग्र्यम्, धर्मं शरणं गच्छामि विरागाणामग्र्यम्, संघं शरणं गच्छामि गणानामग्र्यम्। इत्युक्त्वा स देवपुत्रः कालगतः। कुत्रासौ भदन्त देवपुत्र उपपन्नः? भगवानाह—तुषिता नाम कौशिक देवाः 5 सर्वकामसमृद्धयः। तत्रासौ मोदते देवो गत्वेह शरणत्रयम्। अथ शक्रो देवानामिन्द्र आत्तमनास्तस्यां वेलायामिमां गाथां भाषते—

ये बुद्धं शरणं यान्ति न ते गच्छन्ति दुर्गतिम्।
प्रहाय मानुषान् कायान् दिव्यान् कायानुपासते ॥ १ ॥
ये धर्मं शरणं यान्ति न ते गच्छन्ति दुर्गतिम्। 10
प्रहाय मानुषान् कायान् दिव्यान् कायानुपासते ॥ २ ॥
ये संघं शरणं यान्ति न ते गच्छन्ति दुर्गतिम्। C 196
प्रहाय मानुषान् कायान् दिव्यान् कायानुपासते ॥ ३ ॥

अथ भगवान् शक्रस्य देवानामिन्द्रस्य भाषितमनुसंवर्णयन्नेवमाह—एवमेतत् कौशिक, एवमेतत्। 15

ये बुद्धं शरणं यान्ति न ते गच्छन्ति दुर्गतिम्।
प्रहाय मानुषान् कायान् दिव्यान् कायानुपासते ॥ ४ ॥
ये धर्मं शरणं यान्ति न ते गच्छन्ति दुर्गतिम्।
प्रहाय मानुषान् कायान् दिव्यान् कायानुपासते ॥ ५ ॥
ये संघं शरणं यान्ति न ते गच्छन्ति दुर्गतिम्। 20
प्रहाय मानुषान् कायान् दिव्यान् कायानुपासते ॥ ६ ॥

अथ शक्रो देवानामिन्द्रो भगवतो भाषितमभिनन्द्यानुमोद्य भगवतः पादौ शिरसा वन्दित्वा भगवन्तं त्रिः प्रदक्षिणीकृत्य प्राञ्जलिकृतसंपुटो भगवन्तं नमस्यमानस्तत्रैवान्तर्हितः॥

इदमवोचद्भगवान्। आत्तमनसस्ते भिक्षवोऽभ्यनन्दन्॥

इति श्रीदिव्यावदाने सूकरिकावदानं चतुर्दशमम्॥ 25

# १५ चक्रवर्तिव्याकृतावदानम् ।

बुद्धो भगवान् श्रावस्त्यां विहरति जेतवनेऽनाथपिण्डदस्यारामे । धर्मता खलु बुद्धानां भगवतां जीवतां ध्रियमाणानां यापयतां केशनखस्तूपा भवन्ति । यदा बुद्धा भगवन्तः प्रतिसंलीना भवन्ति, तदा भिक्षवः केशनखस्तूपे पूजां कृत्वा केचित् पिण्डाय 5 प्रविशन्ति, केचिद्ध्यानविमोक्षसमाधिसमापत्तिसुखान्यनुभवन्ति । तेन खलु समयेन बुद्धो भगवान् प्रतिसंलीनोऽभूत् । अथान्यतमो भिक्षुः सायाह्नसमये केशनखस्तूपे सर्वाङ्गैः प्रणिपत्य तथागतमाकारतः समनुस्मरंश्चित्तमभिप्रसादयति–इत्यपि स भगवांस्तथागतोऽर्हन् सम्यक्संबुद्धो विद्याचरणसंपन्नः सुगतो लोकविदनुत्तरः पुरुषदम्यसारथिः शास्ता देवमनुष्याणां C 197 बुद्धो भगवानिति । अथ भगवान् सायाह्ने प्रतिसंलयनाद्व्युत्थाय पुरस्ताद्भिक्षुसंघस्य प्रज्ञप्त 10 एवासने निषण्णः । अद्राक्षीद्भगवांस्तं भिक्षुं केशनखस्तूपे सर्वशरीरेण प्रणिपत्य चित्तमभिप्रसादयन्तम् । दृष्ट्वा च पुनर्भिक्षूनामन्त्रयते स्म–पश्यत यूयं भिक्षव एतं भिक्षुं केशनखस्तूपे सर्वशरीरेण प्रणिपत्य चित्तमभिप्रसादयन्तम् ? एवं भदन्त । अनेन भिक्षुणा यावती भूमिराक्रान्ता अधोऽशीतियोजनसहस्राणि यावत् काञ्चनचक्रमित्यत्रान्तरा यावन्त्यो वालुकास्तावन्त्यनेन भिक्षुणा चक्रवर्तिराज्यसहस्राणि परिभोक्तव्यानि । अथ तेषां भिक्षूणामेत15 दभवत्–पुरुषमात्रायां यावद्गर्तायां न शक्यते वालुका गणयितुम्, कुतः पुनरशीतियोजनसहस्राणि यावत् काञ्चनचक्रमिति । कः शक्यते इयत्कालं संसारे संसरितुमिति । अथ ते भिक्षवो न भूयः केशनखस्तूपे कारां कर्तुमारब्धाः । अथ भगवांस्तेषां भिक्षूणां चेतसा चित्तमाज्ञाय भिक्षूनामन्त्रयते स्म–अनवराग्रो भिक्षवः संसारोऽविद्यानीवरणानां सत्त्वानां तृष्णासंयोजनानां तृष्णार्गलबद्धानां दीर्घमध्वानं संधावतां संसरताम् । पूर्वा कोटिर्न प्रज्ञा20 यते दुःखस्य । आयुष्मानुपाली बुद्धं भगवन्तं पप्रच्छ–यदुक्तं भगवता अस्य भिक्षोरियत्पुण्यस्कन्ध इति, कुत्र भदन्त इयत्पुण्यस्कन्धस्तनुत्वं परिक्षयं पर्यादानं गमिष्यति ? नाहमुपालिन् इतो बहिः समनुपश्याम्येवं क्षतिं चोपहतिं च यथा सब्रह्मचारी सब्रह्मचारिणोऽन्तिके । तत्रोपालिन् इमानि महान्ति कुशलमूलानि तनुत्वं परिक्षयं पर्यादानं गच्छन्ति । तस्मात्तर्हि ते उपालिन् एवं शिक्षितव्यम्, यद्दग्धस्थूणाया अपि चित्तं न प्रदूषयिष्यामः, प्रागेव 25 सविज्ञानके काये ॥

इदमवोचद्भगवान् । आत्तमनसस्ते भिक्षवोऽभ्यनन्दन् ॥

इति श्रीदिव्यावदाने अन्यतमभिक्षुश्चक्रवर्तिव्याकृतः पञ्चदशमम् ॥



## १६ शुकपोतकावदानम् ।

श्रावस्त्यां निदानम् । तेन खलु समयेन अनाथपिण्डदेन गृहपतिना द्वौ शुकशावकौ C 198 प्रतिलब्धौ । तेन निवेशनं नीत्वा आलापितौ पोषितौ संवर्धितौ मानुषालापं च शिक्षापितौ । तयोश्चायुष्मानानन्दोऽभीक्ष्णमागत्य चतुरार्यसत्यसंप्रतिवेधिकीं धर्मदेशनां करोति—यदुत इदं दुःखम्, अयं दुःखसमुदयः, अयं दुःखनिरोधः, इयं दुःखनिरोधगामिनी प्रतिपदिति । स्थविर- 5 स्थविरा अपि भिक्षवोऽनाथपिण्डदस्य गृहपतेर्निवेशनमुपसंक्रामन्ति शारिपुत्रमौद्गल्यायन-काश्यपानन्दरैवतप्रभृतयः । तेषां कालानुकालमुपसंक्रामतां ताभ्यां शुकशावकाभ्यां नामानि परिज्ञातानि । यावदपरेण समयेनायुष्मान् शारिपुत्रोऽनाथपिण्डदस्य गृहपतेर्निवेशनमनुप्राप्तः । अद्राष्टां तौ शुकशावकौ आयुष्मन्तं शारिपुत्रम् । दृष्ट्वा अन्तर्जनमामन्त्रयतः—एष भदन्तः स्थविरः शारिपुत्र आगच्छति, आसनमस्य प्रज्ञापयतेति । एवमायुष्मन्तं महामौद्गल्यायनं 10 काश्यपं रैवतमायुष्मन्तमानन्दं दृष्ट्वा कथयतः—एषोऽस्माकमाचार्यानन्द आगच्छति, आसनमस्य प्रज्ञापयतेति । यावदपरेण समयेन भगवाननाथपिण्डदस्य गृहपतेर्निवेशनमनुप्राप्तः । अद्राष्टां तौ शुकशावकौ भगवन्तं दूरादेवागच्छन्तं प्रासादिकं प्रसादनीयं शान्तेन्द्रियं शान्तमानसं परमेण चित्तमत्युपशमेन समन्वागतं सुवर्णयूपमिव श्रिया ज्वलन्तम् । दृष्ट्वा च पुनस्त्वरित-त्वरितमन्तर्जनमामन्त्रयतः—एष भदन्तो भगवानागच्छति, आसनमस्य प्रज्ञापयतेति हृष्टमधुरस्वरेण 15 निकूजतः । अथ भगवांस्तयोरनुग्रहार्थं प्रविश्य प्रज्ञप्त एवासने निषण्णः । निषद्य भगवता C 199 शुकशावकौ चतुरार्यसत्यसंप्रतिवेधिकया धर्मदेशनया शरणगमनशिक्षापदेषु प्रतिष्ठापितौ । अथ भगवान् शुकशावकौ अन्तर्जनं च धर्म्यया कथया संदर्श्य समादाप्य समुत्तेज्य संप्रहर्ष्योत्थायासनात् प्रक्रान्तः । तौ चान्तर्जनस्य विहरतः प्रमादविहारिणौ बिडालेन प्राणिना गृहीतौ । विह्वलवदनौ छिद्यमानेषु मर्मसु मुच्यमानेषु संधिषु नमो बुद्धाय, नमो 20 धर्माय, नमः संघायेत्युक्त्वा कालगतौ चातुर्महाराजकायिकेषु देवेषूपपन्नौ ॥

अथ भगवानन्यतमस्मिन् प्रदेशे स्मितमकार्षीत् । अद्राक्षीदायुष्मानानन्दो भगवन्तं स्मितं प्राविष्कुर्वन्तम् । दृष्ट्वा च पुनर्भगवन्तमिदमवोचत्—नाहेतुप्रत्ययं भदन्त तथागता अर्हन्तः सम्यक्संबुद्धाः स्मितं प्राविष्कुर्वन्ति । को भदन्त हेतुः कः प्रत्ययः स्मितस्य प्राविष्करणे ? एवमेतदानन्द, एवमेतत् । नाहेतुप्रत्ययं तथागता अर्हन्तः सम्यक्संबुद्धाः स्मितं प्राविष्कुर्वन्ति । 25 दृष्टौ त्वया आनन्द तौ शुकशावकौ ? दृष्टौ भदन्त । तौ आनन्द शुकशावकौ मम समनन्तरप्रक्रान्तस्य बिडालेन प्राणिना जीविताद् व्यपरोपितौ । तौ बुद्धधर्मसंघावलम्बनया स्मृत्या कालगतौ चातुर्महाराजकायिकेषु देवेषूपपन्नौ ॥

अथ संबहुला भिक्षवः पूर्वाह्णे निवास्य पात्रचीवरमादाय श्रावस्तीं पिण्डाय प्राविक्षन् । अश्रौषुः संबहुला भिक्षवः श्रावस्तीं पिण्डाय प्रचरन्तोऽनाथपिण्डदस्य गृहपतेर्निवेशने 30 शुकशावकौ—नमो बुद्धाय, नमो धर्माय, नमः संघायेति कुर्वाणौ बिडालेन प्राणिना व्यप-

रोपितौ इति। श्रुत्वा च पुनः श्रावस्तीं पिण्डाय चरित्वा कृतभक्तकृत्याः पश्चाद्भक्तपिण्डपातप्रतिक्रान्ताः पात्रचीवरं प्रतिसामय्य पादौ प्रक्षाल्य येन भगवांस्तेनोपसंक्रान्ताः। उपसंक्रम्य भगवतः पादौ शिरसा वन्दित्वा एकान्ते निषण्णाः। एकान्तनिषण्णाः संबहुला

C 200 भिक्षवो भगवन्तमिदमवोचन्—इह वयं भदन्त संबहुला भिक्षवः पूर्ववद् यावदनाथपिण्डदस्य

5 गृहपतेर्निवेशने द्वौ शुकशावकौ—नमो बुद्धाय, नमो धर्माय, नमः संघायेति कुर्वाणौ बिडालेन प्राणिना जीविताद्व्यपरोपितौ इति। तयोर्भदन्त का गतिः, कोपपत्तिः, कोऽभिसंपरायः? भगवानाह—तौ भिक्षवः शुकशावकौ तस्य शरणगमनस्य विपाकेन षट्त्रिंशत्कृत्वश्चातुर्महाराजकायिकेषु देवेषूपपत्स्येते, षट्त्रिंशत्कृत्वस्त्रायस्त्रिंशेषु, यामेषु, तुषितेषु, निर्माणरतिषु, परनिर्मितवशवर्तिषु देवेषूपपत्स्येते। ततस्तावत् षट्सु कामावचरेषु देवेषु सत्त्वा

10 व्यपसंसृत्य पश्चिमे भवे पश्चिमे निकेते पश्चिम आत्मभावप्रतिलम्भे मनुष्यप्रतिलाभं लब्ध्वा प्रत्येकां बोधिमभिसंभोत्स्येते, धर्मश्च सुधर्मश्च प्रत्येकबुद्धौ भविष्यतः। एवं हि भिक्षवो महाफलं धर्मश्रवणं महानुशंसकम्, कः पुनर्वादो धर्मदेशना धर्माभिसमयो वा। तस्मात्तर्हि भिक्षव एवं शिक्षितव्यं यन्नो धर्मश्रवणाभिरता भविष्यामः। इत्येवं वो भिक्षवः शिक्षितव्यम्॥

इदमवोचद्भगवान्। आत्तमनसस्ते भिक्षवो भगवतो भाषितमभ्यनन्दन्॥

15 इति श्रीदिव्यावदाने शुकपोतकावदानं षोडशम्॥



## १७ मान्धातावदानम् ।

एवं मया श्रुतम् । एकस्मिन् समये भगवान् वैशाल्यां विहरति मर्कटह्रदतीरे कूटागारशालायाम् । अथ भगवान् पूर्वाह्णे निवास्य पात्रचीवरमादाय वैशालीं पिण्डाय प्राविक्षत् । वैशालीं पिण्डाय चरित्वा कृतभक्तकृत्यः पश्चाद्भक्तपिण्डपातप्रतिक्रान्तः पात्रचीवरं प्रतिसमय्य येन चापालचैत्यं तेनोपसंक्रान्तः । उपसंक्रम्यान्यतमं वृक्षमूलं निश्रित्य निषण्णो 5 दिवाविहाराय । तत्र भगवानायुष्मन्तमानन्दमामन्त्रयते—रमणीया आनन्द वैशाली वृजिभूमिश्चापालचैत्यं सप्ताम्रकं [ बहुपत्रकं ] गौतमन्यग्रोधः शालवनं धुरानिक्षेपनं मल्लानां मकुटबन्धनं चैत्यम् । चित्रो जम्बुद्वीपः, मधुरं जीवितं मनुष्याणाम् । यस्य कस्यचिदानन्द 10 चत्वार ऋद्धिपादा आसेविता भाविता बहुलीकृताः, आकाङ्क्षन् स कल्पं वा तिष्ठेत् कल्पावशेषं वा । तथागतस्य आनन्द चत्वार ऋद्धिपादा आसेविता भाविता बहुलीकृताः । आकाङ्क्षमाणस्तथागतः कल्पं वा तिष्ठेत् कल्पावशेषं वा । एवमुक्ते आयुष्मानानन्दस्तूष्णीम् । द्विरपि त्रिरपि भगवानायुष्मन्तमानन्दमामन्त्रयते—रमणीया आनन्द वैशाली वृजिभूमिश्चापालं चैत्यं सप्ताम्रकं बहुपत्रकं गौतमन्यग्रोधः शालवनं धुरानिक्षेपनं मल्लानां मकुटबन्धनं चैत्यम् । चित्रो जम्बुद्वीपः, मधुरं जीवितं मनुष्याणाम् । यस्य कस्यचिदानन्द चत्वार ऋद्धिपादा आसेविता भाविता बहुलीकृताः, आकाङ्क्षन् स कल्पं वा तिष्ठेत् कल्पावशेषं 15 वा । तथागतस्य आनन्द चत्वार ऋद्धिपादा आसेविता भाविता बहुलीकृताः । आकाङ्क्षमाणस्तथागतः कल्पं वा तिष्ठेत् कल्पावशेषं वा । द्विरपि त्रिरपि आयुष्मानानन्दस्तूष्णीम् । अथ भगवत एतदभवत्—स्फुटोऽभवदानन्दो भिक्षुर्मारेण पापीयसा यत्रेदानीं यावत् त्रिरपि औदारिके अवभासनिमित्ते प्राविष्क्रियमाणे न शक्नोति तन्निमित्तमाज्ञातुं यथापि ततः स्फुटो मारेण पापीयसा । तत्र भगवानायुष्मन्तमानन्दमामन्त्रयते—गच्छ त्वमानन्द, अन्यतरवृक्षमूलं निश्रित्य 20 विहर, मा उभावपि आकीर्णविहारिणौ भविष्यावः । एवं भदन्तेत्यायुष्मानानन्दो भगवतः प्रतिश्रुत्य अन्यतमवृक्षमूलं निश्रित्य निषण्णो दिवाविहाराय । स मारः पापीयान् येन भगवांस्तेनोपसंक्रान्तः । उपसंक्रम्य भगवन्तमिदमवोचत्—परिनिर्वातु भगवान् । परिनिर्वाणकालसमयः सुगतस्य । कस्मात् त्वं पापीयन् एवं वदसि—परिनिर्वातु भगवान्, परिनिर्वाणकालसमयः सुगतस्य ? एकोऽयं भदन्त समयः—भगवानुरुबिल्वायां विहरति नद्या 25 नैरञ्जनायास्तीरे बोधिमूलेऽचिराभिसंबुद्धः । सोऽहं येन भगवांस्तेनोपसंक्रान्तः । उपसंक्रम्य भगवन्तमेवं वदामि—परिनिर्वातु भगवान्, परिनिर्वाणकालसमयः सुगतस्य । भगवानेवमाह—न तावत् पापीयन् परिनिर्वास्यामि, यावन्न मे श्रावकाः पण्डिता भविष्यन्ति व्यक्ता विनीता विशारदाः, अलमुत्पन्नोत्पन्नानां परप्रवादिनां सहधर्मेण निग्रहीतारः, अलं स्वस्य वादस्य पर्यवदापयितारो भिक्षवो भिक्षुण्य उपासका उपासिकाः । वैस्तारिकं च ते ब्रह्मचर्यं 30 चरिष्यन्ति बाहुजन्यं पृथुभूतं यावद्देवमनुष्येभ्यः सम्यक्संप्रकाशितम् । एतर्हि भदन्त भगवतः श्रावकाः पण्डिता व्यक्ता विनीता विशारदा अलमुत्पन्नोत्पन्नानां परप्रवादिनां सहधर्मेण

C 201

C 202

निग्रहीतारः, स्वस्य वादस्य पर्यवदापयितारो भिक्षवो भिक्षुण्य उपासका उपासिकाः। वैस्तारिकं च ते ब्रह्मचर्यं बाहुजन्यं पृथुभूतं यावद्देवमनुष्येभ्यः सम्यक्संप्रकाशितम्। तस्मादहमेवं वदामि—परिनिर्वातु भगवान्, परिनिर्वाणकालसमयः सुगतस्य। अल्पोत्सुकस्त्वं पापीयन् भव। नचिरस्येदानीं तथागतस्य त्रयाणां वार्षिकाणां मासानामत्ययान्निरुपधिशेषे 5 निर्वाणधातौ परिनिर्वाणं भविष्यति। अथ मारस्य पापीयस एतदभवत्—परिनिर्वास्यते बत श्रमणो गौतमः। इति विदित्वा हृष्टस्तुष्टः प्रमुदित उदग्रः प्रीतिसौमनस्यजातस्तत्रैवान्तर्हितः॥

अथ भगवत एतदभवत्—कस्तथागतस्य संमुखं वैनेयः? सुप्रियो गन्धर्वराजा C 203 सुभद्रश्च परिव्राजकः। तयोस्त्रयाणां वार्षिकाणां मासानामत्ययादिन्द्रियपरिपाको भविष्यति सुखाधिष्ठानं वा। शक्यं श्रावकवैनेयस्तथागतेन विनयितुं न तु तथागतवैनेयः श्रावकेण॥

10 अथ भगवत एतदभवत्—यन्न्वहं तद्रूपं समाधिं समापद्येयं यथा समाहिते चित्ते जीवितसंस्कारानधिष्ठाय आयुःसंस्कारानुत्सृजेयम्। अथ भगवांस्तद्रूपं समाधिं समापन्नो यथा समाहिते चित्ते जीवितसंस्कारानधिष्ठाय आयुःसंस्कारानुत्स्रष्टुमारब्धः। समनन्तराधिष्ठितेषु जीवितसंस्कारेषु महापृथिवीचालोऽभूदुल्कापाता दिशोदाहाः। अन्तरिक्षे देवदुन्दुभयोऽभिनदन्ति। समनन्तरोत्सृष्टेष्वायुःसंस्कारेषु कामावचरेषु देवेषु षण्निमित्तानि प्रादुर्भूतानि— 15 पुष्पवृक्षाः शीर्णाः, रत्नवृक्षाः शीर्णाः, आभरणवृक्षाः शीर्णाः, भवनसहस्राणि प्रकम्पितानि, सुमेरुशृङ्गानि विशीर्णानि, दैवतानि वादित्रभाण्डानि पराहतानि। अथ भगवांस्तस्मात् समाधेर्व्युत्थाय तस्यां वेलायां गाथां भाषते—

तुल्यमतुल्यं च संभवं भवसंस्कारमपोत्सृजन्मुनिः।
अध्यात्मरतः समाहितो ह्यभिनत्कोशमिवाण्डसंभवः॥ १॥

20 समनन्तरोत्सृष्टेष्वायुःसंस्कारेषु षट् कामावचरा देवाः क्रियाकारं कृत्वा भगवतोऽन्तिकं प्रक्रान्ता दर्शनाय वन्दनाय। भगवता तादृशी धर्मदेशना कृता यदनेकैर्देवताशतसहस्रैः सत्यानि दृष्टानि, दृष्टसत्याः स्वभवनमनुप्राप्ताः। समनन्तरोत्सृष्टेष्वायुःसंस्कारेष्वनेकानि पर्वतकन्दरगिरिगुहाभ्योऽनेकानि ऋषिशतसहस्राण्यागतानि। ते भगवता 'एत भिक्षवश्चरत ब्रह्मचर्यं' प्रव्रजिताः। तैर्योजयद्भिर्घटद्भिः सर्वक्लेशप्रहाणादर्हत्त्वं साक्षात्कृतम्। समनन्तरोत्सृष्टेष्वायुः- C 204 25 संस्कारेष्वनेका नागयक्षगन्धर्वकिन्नरमहोरगा भगवतः सकाशमुपसंक्रान्ता भगवतो दर्शनाय। भगवता तेषामेवंविधा धर्मदेशना कृता यदनेकैर्नागयक्षगन्धर्वकिन्नरैर्महोरगैः शरणगमनशिक्षापदानि गृहीतानि यावत् स्वभवनमनुप्राप्ताः॥

अथायुष्मानानन्दः सायाह्नेऽभिसंलयनाद्व्युत्थाय येन भगवांस्तेनोपसंक्रान्तः। उपसंक्रम्य भगवतः पादौ शिरसा वन्दित्वा एकान्तेऽस्थाद्। एकान्तस्थित आयुष्मानानन्दो 30 भगवन्तमिदमवोचत्—को भदन्त हेतुः कः प्रत्ययो महतः पृथिवीचालस्य? अष्टौ इमे आनन्द अष्टौ प्रत्यया महतः पृथिवीचालस्य। कतमेऽष्टौ? इयमानन्द महापृथिवी अप्सु प्रतिष्ठिता, आपो वायौ प्रतिष्ठिताः, वायुराकाशे प्रतिष्ठितः। भवत्यानन्द समयो यदाकाशे विषमा

वायवो वान्ति, आपः क्षोभयन्ति, आपः क्षुब्धाः पृथिवीं चालयन्ति। अयमानन्द प्रथमो हेतुः प्रथमः प्रत्ययो महतः पृथिवीचालस्य। पुनरपरमानन्द भिक्षुर्महर्द्धिको भवति महानुभावः। स परित्तां पृथिवीसंज्ञामधितिष्ठति अप्रमाणां चाप्संज्ञाम्। स आकाङ्क्षमाणः पृथिवीं चालयति। देवता महर्द्धिका भवति महानुभावा। सापि परित्तां पृथिवीसंज्ञामधितिष्ठति अप्रमाणां चाप्संज्ञाम्। साप्याकाङ्क्षमाणा पृथिवीं चालयति। अयं द्वितीयो हेतुर्द्वितीयः 5 प्रत्ययो महतः पृथिवीचालस्य। पुनरपरमानन्द। यस्मिन् समये बोधिसत्त्वस्तुषिताद्देवनिकायाच्च्युत्वा मातुः कुक्षिमवक्रामति, अथ तस्मिन् समये महापृथिवीचालो भवति, सर्वश्चायं लोक उदारेणावभासेन स्फुटो भवति। या लोकस्य लोकान्तरिका अन्धास्तमसोऽन्धकारतमिस्रा यत्रामू सूर्याचन्द्रमसौ एवंमहर्द्धिकौ एवंमहानुभावौ आभया आभां न प्रत्यनुभवतः, ता अपि तस्मिन् समये उदारेणावभासेन स्फुटा भवन्ति। तत्र ये सत्त्वा उपपन्नाः, ते 10 तया अन्योन्यं सत्त्वं दृष्ट्वा संजानन्ते—अन्येऽपीह भवन्तः सत्त्वा उपपन्नाः, अन्येऽपीह भवन्तः सत्त्वा उपपन्ना इति। अयमानन्द तृतीयो हेतुस्तृतीयः प्रत्ययो महतः पृथिवीचालस्य। C 205
पुनरपरमानन्द यस्मिन् समये बोधिसत्त्वो मातुः कुक्षेर्निष्क्रामति, अथ तस्मिन् समये महापृथिवीचालो भवति सर्वश्चायं लोक उदारेणावभासेन स्फुटो भवति। या अपि ता लोकस्य लोकान्तरिका अन्धास्तमसोऽन्धकारतमिस्रा यत्रेमौ सूर्याचन्द्रमसौ एवंमहानुभावौ आभया 15 आभां न प्रत्यनुभवतः, ता अपि तस्मिन् समये उदारेणावभासेन स्फुटा भवन्ति। तत्र ये सत्त्वा उपपन्नाः, ते तया आभया अन्योन्यं सत्त्वं दृष्ट्वा संजानन्ति—अन्येऽपीह भवन्तः सत्त्वा उपपन्नाः, अन्येऽपीह भवन्तः सत्त्वा उपपन्ना इति। अयमानन्द चतुर्थो हेतुश्चतुर्थः प्रत्ययो महतः पृथिवीचालस्य। पुनरपरमानन्द यस्मिन् समये बोधिसत्त्वोऽनुत्तरं ज्ञानमधिगच्छति, अथ तस्मिन् समये महापृथिवीचालो भवति, सर्वश्चायं लोक उदारेणावभासेन स्फुटो भवति। या अपि ता लोकस्य 20 लोकान्तरिका अन्धास्तमसोऽन्धकारतमिस्रा यत्रेमौ सूर्याचन्द्रमसौ एवंमहर्द्धिकौ एवंमहानुभावौ आभया आभां न प्रत्यनुभवतः, ता अपि तस्मिन् समये उदारेणावभासेन स्फुटा भवन्ति। तत्र ये सत्त्वा उपपन्नाः, ते तयाभया अन्योन्यं सत्त्वं दृष्ट्वा संजानन्ति—अन्येऽपीह भवन्तः सत्त्वा उपपन्नाः, अन्येऽपीह भवन्तः सत्त्वा उपपन्ना इति। अयमानन्द पञ्चमो हेतुः पञ्चमः प्रत्ययो महतः पृथिवीचालस्य। पुनरपरमानन्द यस्मिन् समये 25 तथागतस्त्रिपरिवर्तद्वादशाकारं धर्मचक्रं परिवर्तयति, अत्यर्थं तस्मिन् समये महापृथिवीचालो भवति, सर्वश्चायं लोक उदारेणावभासेन स्फुटो भवति। या अपि ता लोकस्य लोकान्तरिका अन्धास्तमसोऽन्धकारतमिस्रा यत्रेमौ सूर्याचन्द्रमसौ एवंमहर्द्धिकौ एवंमहानुभावौ आभया आभां न प्रत्यनुभवतः, ता अपि तस्मिन् समये उदारेणावभासेन स्फुटा भवन्ति। तत्र ये सत्त्वा उपपन्नाः, ते तयाभया अन्योन्यं सत्त्वं दृष्ट्वा संजानन्ति—अन्येऽपीह भवन्तः सत्त्वा 30 उपपन्नाः, अन्येऽपीह भवन्तः सत्त्वा उपपन्ना इति। अयमानन्द षष्ठो हेतुः षष्ठः प्रत्ययो महतः पृथिवीचालस्य। पुनरपरमानन्द यस्मिन् समये तथागतो जीवितसंस्कारानधिष्ठाय C 206

आयुःसंस्कारानुत्सृजति, अत्यर्थं तस्मिन् समये महापृथिवीचालो भवति उल्कापाता दिशोदाहाः, अन्तरिक्षे देवदुन्दुभयोऽभिनदन्ति, सर्वश्चायं लोक उदारेणावभासेन स्फुटो भवति। या अपि ता लोकस्य लोकान्तरिका अन्धास्तमसोऽन्धकारतमिस्रा यत्रेमौ सूर्याचन्द्रमसौ एवं-महर्द्धिकौ एवंमहानुभावौ आभया आभां न प्रत्यनुभवतः, ता अपि तस्मिन् समये उदारेणाव-
5 भासेन स्फुटा भवन्ति। तत्र ये सत्त्वा उपपन्नाः, ते तयाभया अन्योन्यं सत्त्वं दृष्ट्वा संजानन्ति—अन्येऽपीह भवन्तः सत्त्वा उपपन्नाः, अन्येऽपीह भवन्तः सत्त्वा उपपन्ना इति। अयमानन्द सप्तमो हेतुः सप्तमः प्रत्ययो महतः पृथिवीचालस्य। पुनरपरमानन्द नचिरस्येदानीं तथागतस्य निरुपधिशेषे निर्वाणधातौ परिनिर्वाणं भविष्यति। अथ तस्मिन् समये महापृथिवीचालो भवति उल्कापाता दिशोदाहाः, अन्तरिक्षे देवदुन्दुभयोऽभिनदन्ति, सर्वश्चायं लोक
10 उदारेणावभासेन स्फुटो भवति। या अपि ता लोकस्य लोकान्तरिका अन्धास्तमसोऽन्धकार-तमिस्रा यत्रेमौ सूर्यचन्द्रमसौ एवंमहर्द्धिकौ एवंमहानुभावौ आभया आभां न प्रत्यनु-भवतः, ता अपि तस्मिन् समये उदारेणावभासेन स्फुटा भवन्ति। तत्र ये सत्त्वा, उपपन्नाः, ते तया आभया अन्योन्यं सत्त्वं दृष्ट्वा संजानन्ति—अन्येऽपीह भवन्तः सत्त्वा उपपन्नाः, अन्येऽपीह भवन्तः सत्त्वा उपपन्ना इति। अयमानन्द अष्टमो हेतुरष्टमः प्रत्ययो महतः पृथिवीचालस्य॥

15 अथायुष्मानानन्दो भगवन्तमिदमवोचत्—यथा खल्वहं भदन्त भगवता भाषितस्यार्थ-माजानामि, इहैव भगवता जीवितसंस्कारानधिष्ठाय आयुःसंस्कारा उत्सृष्टा भविष्यन्ति। भगवानाह—एवमेतदानन्द, एवमेतत्। एतर्हि आनन्द तथागतेन जीवितसंस्कारानधिष्ठाय आयुःसंस्कारा उत्सृष्टाः। संमुखं मे भदन्त भगवतोऽन्तिकाच्छ्रुतं संमुखमुद्गृहीतम्—यस्य कस्यचिच्चत्वार ऋद्धिपादा आसेविता भाविता बहुलीकृताः, आकाङ्क्षमाणस्तथागतः
20 कल्पं वा तिष्ठेत्, कल्पावशेषं वा। भगवता भदन्त चत्वार ऋद्धिपादा आसेविता भाविता बहुलीकृताः। आकाङ्क्षमाणस्तथागतः कल्पं वा तिष्ठेत् कल्पावशेषं वा। तिष्ठतु भगवान् कल्पम्, तिष्ठतु सुगतः कल्पावशेषं वा। तवैवानन्द अपराधस्तवैव दुष्कृतं यस्त्वं तथा-गतस्य यावत् त्रिरप्यौदारे अवभासनिमित्ते प्राविष्कृते न शक्नोषि तन्निमित्तं प्रतिश्रावयितुम्, अपि ततः स्फुटो मारेण पापीयसा। किमन्यस्य आनन्द भाषेत तथागतस्तां वाचं या
25 स्याद् द्विधा? नो भदन्त। साधु साधु आनन्द, अस्थानमेतदानन्द अनवकाशो यत् तथा-गतस्तां वाचं भाषेत या स्याद्द्विधा। गच्छ त्वमानन्द, यावन्तो भिक्षवश्चापालं चैत्यमुपनिश्रित्य विहरन्ति, तान् सर्वानुपस्थानशालायां संनिपातय। एवं भदन्त। आयुष्मानानन्दो भग-वतः प्रतिश्रुत्य यावन्तो भिक्षवश्चापालं चैत्यमुपनिश्रित्य विहरन्ति, तान् सर्वानुपस्थान-शालायां संनिपात्य येन भगवांस्तेनोपसंक्रान्तः। उपसंक्रम्य भगवतः पादौ शिरसा वन्दित्वा
30 एकान्तेऽस्थात्। एकान्तस्थित आयुष्मानानन्दो भगवन्तमिदमवोचत्—यावन्तो भदन्त भिक्षव-श्चापालं चैत्यमुपनिश्रित्य विहरन्ति, सर्वे ते उपस्थानशालायां निषण्णाः संनिपतिताः, यस्येदानीं भगवान् कालं मन्यते। अथ भगवान् येनोपस्थानशाला तेनोपसंक्रान्तः।

C 207

उपसंक्रम्य पुरस्ताद्भिक्षुसंघस्य प्रज्ञप्त एवासने न्यषीदत्। निषद्य भगवान् भिक्षूनामन्त्रयते स्म—अनित्या भिक्षवः सर्वसंस्कारा अध्रुवा अनाश्वासिका विपरिणामधर्माणो यावदलमेव भिक्षवः सर्वसंस्कारान् संस्करितुमलम्। विरमन्तु तस्मात् तर्हि भिक्षवः। एतर्हि वा मेऽल्ययाचे ते धर्मा दृष्टधर्महिताय संवर्तन्ते दृष्टधर्मसुखाय, संपरायहिताय संपरायसुखाय, ते भिक्षुभिरुद्गृह्य पर्यवाप्य तथा तथा धारयितव्या वाचयितव्या ग्राहयितव्या यथैव तत्र ब्रह्मचर्यं 5 C 208 चिरस्थितिकं स्याद्बहुजन्यं पृथुभूतं यावद्देवमनुष्येभ्यः सम्यक्संप्रकाशितम्। एतर्हि भिक्षवो धर्मा दृष्टधर्महिताय संवर्तन्ते दृष्टधर्मसुखाय, संपरायहिताय संपरायसुखाय, ये भिक्षुभिरुद्गृह्य पर्यवाप्य तथा तथा धारयितव्या ग्राहयितव्या वाचयितव्या यथैतद्ब्रह्मचर्यं चिरस्थितिकं स्याद्बहुजन्यं पृथुभूतं यावद्देवमनुष्येभ्यः सम्यक्संप्रकाशितम्। यदुत चत्वारि स्मृत्युपस्थानानि, चत्वारि सम्यक्प्रहाणानि, चत्वार ऋद्धिपादाः, पञ्चेन्द्रियाणि, पञ्च बलानि, सप्त बोध्यङ्गानि, आर्याष्टाङ्गो 10 मार्गः। इमे ते भिक्षवो धर्मा दृष्टधर्महिताय संवर्तन्ते दृष्टधर्मसुखाय, संपरायहिताय संपरायसुखाय, भिक्षुभिरुद्गृह्य पर्यवाप्य तथा तथा धारयितव्या ग्राहयितव्या वाचयितव्या यथैतद्ब्रह्मचर्यं चिरस्थितिकं स्याद्बहुजन्यं पृथुभूतं यावद्देवमनुष्येभ्यः सम्यक्संप्रकाशितम्। आगमय आनन्द येन कुशिग्रामकम्। एवं भदन्तेत्यायुष्मानानन्दो भगवतः प्रत्यश्रौषीत्। भगवान् वैशाली-वनमभिसरन् दक्षिणेन सर्वकायेन नागावलोकितेन व्यवलोकयति। अथायुष्मानानन्दो 15 भगवन्तमिदमवोचत्—नाहेत्वप्रत्ययं भदन्त तथागता अर्हन्तः सम्यक्संबुद्धा दक्षिणेन नागाव-लोकितमवलोकयन्ति। को भदन्त हेतुः, कः प्रत्ययो नागावलोकितस्य? एवमेतदानन्द, एवमेतत्। नाहेत्वप्रत्ययं तथागता अर्हन्तः सम्यक्संबुद्धा दक्षिणेन सर्वकायेन नागावलोकि-तेन व्यवलोकयन्ति। इदमानन्द तथागतस्यापश्चिमं वैशालीदर्शनम्। न भूय आनन्द तथागतो वैशालीमागमिष्यति। परिनिर्वाणाय गमिष्यति मल्लानामुपवर्तनं यमकशालवनम्। 20 अथान्यतरो भिक्षुस्तस्यां वेलायां गाथां भाषते—

इदमपश्चिमकं नाथ वैशाल्यास्तव दर्शनम्। C 209
न भूयः सुगतो बुद्धो वैशालीमागमिष्यति ॥ २ ॥

निर्वाणाय गमिष्यति मल्लानामुपवर्तनं यमकशालवनम्। यदा ह भगवता वाग् भाषिता इदमपश्चिमकं वैशाल्या दर्शनम्, तदा अनेकाभिर्वैशालीवननिवासिनीभिर्देवतैरश्रुपातः 25 कृतः। स्थविरानन्दः कथयति—न भगवन्नमेघेनैव वर्षासु प्रवृष्टः? भगवानाह—वैशालि-वननिवासिनीभिर्देवतैर्मम वियोगादश्रुपातः कृतः। ता अपि देवता (?) वैशाल्यां शब्दो निश्चारितः—भगवान् परिनिर्वाणाय गच्छति, न भूयो भगवान् वैशालीमागमिष्यति। देवतानां शब्दं श्रुत्वा अनेकानि वैशालिकानि प्राणिशतसहस्राणि भगवत्सकाशमुपसंक्रान्तानि। भगवता तेषामाशयानुशयं धातुं प्रकृतिं च ज्ञात्वा एवंविधा धर्मदेशना कृता, यथा अनेकैः 30 प्राणिशतसहस्रैः शरणगमनशिक्षापदानि गृहीतानि। कैश्चिच्छ्रोतापत्तिफलं कैश्चित् सकृदा-गामिफलं कैश्चिदनागामिफलं प्राप्तम्। कैश्चित् प्रव्रजित्वा अर्हत्त्वं प्राप्तम्। कैश्चिच्छ्रावक-

बोधौ चित्तमुत्पादितम्। कैश्चित् प्रत्येकायां बोधौ चित्तमुत्पादितम्। कैश्चिदनुत्तरायां सम्यक्संबोधौ चित्तमुत्पादितम्। कैश्चिच्छरणगमनशिक्षापदानि गृहीतानि। यद्भूयसा सा पर्षद्बुद्धनिम्ना धर्मप्रवणा संघप्राग्भारा व्यवस्थिता। स्थविरानन्दः कृताञ्जलिपुटो भगवन्तमिदमवोचत्—पश्य भदन्त यावत् त्वम्। भगवता परिनिर्वाणाय प्रस्थितेनानेकानि देवता-
5 शतसहस्राणि सत्येषु प्रतिष्ठापितानि। अनेकाभ्यः पर्वतकन्दरगिरिगुहाभ्योऽनेकानि ऋषिशतसहस्राण्यागतानि। भगवता एते भिक्षवः प्रव्रजिताः। तैर्युज्यद्भिर्घटद्भिर्व्यायच्छमानैः सर्वक्लेशप्रहाणादर्हत्त्वं साक्षात्कृतम्। अनेकैर्देवनागयक्षगन्धर्वकिन्नरमहोरगैः शरणगमन-
C 210 शिक्षापदानि गृहीतानि। अनेकानि वैशालकानि प्राणिशतसहस्राणि स्रोतआपत्तिफले प्रतिष्ठापितानि। केचित् सकृदागामिफले, केचिदनागामिफले, केचित् प्रव्राजिताः।
10 प्रव्रजित्वा अर्हत्त्वं प्राप्तम्। केचिच्छरणगमनशिक्षापदेषु प्रतिष्ठापिताः। अत्र आनन्द किमाश्चर्यं मया एतर्हि सर्वज्ञेन सर्वाकारज्ञेनानुत्तरज्ञानज्ञेयवशिप्राप्तेन अस्ततृष्णेन निरुपादानेन सर्वाहंकारममकारास्मिमानाभिनिवेशानुशयप्रहीणेन एवंविधं वैनेयकार्यं कृतम्। यन्मया अतीतेऽप्यध्वनि सरागेण सद्वेषेण समोहेनापरिमुक्तेन जातिजराव्याधिमरणशोकपरिदेवदुःखदौर्मनस्योपायासधर्मेण यन्मया मरणान्तिकया वेदनया स्पृष्टेन एवंविधा परिकर्मकथा कृता,
15 यदनेकानि प्राणिशतसहस्राणि गृहाश्रममपहाय, ऋषयः प्रव्रजित्वा चत्वारो ब्रह्मविहारान् भावयित्वा कल्पवृन्दं प्रहाय तद्बहुलविहारिणो ब्रह्मलोकसभागतायामुपपन्नाः। तच्छृणु—

भूतपूर्वमानन्द उपोषधो नाम राजा बभूव। उपोषधस्य राज्ञो मूर्ध्नि पिट्को जातो मृदुः सुमृदुः, तद्यथा तूलपिचुर्वा कर्पासपिचुर्वा। न कंचिदाबाधं जनयति। पक्वः स्फुटितः। कुमारो जातोऽभिरूपो दर्शनीयः प्रासादिको द्वात्रिंशन्महापुरुषलक्षणैः समन्वागतः। उपोषधस्य
20 राज्ञः षष्टिस्त्रीसहस्राणि। सर्वासां स्तनाः प्रसृताः। एकैका कथयति—मां धय मां धय। मूर्धतो जातो मूर्धात इति संज्ञा संवृत्ता। मां धय मां धय मान्धात इति संज्ञा संवृत्ता। अन्ये कथयन्ति—केचिन्माधात इति संजानीते। मान्धातस्य कुमारस्य कुमारक्रीडायां क्रीडतः षट् चक्राश्च्युताः। यौवराज्ये प्रतिष्ठितस्य षट् चक्राश्च्युताः। मान्धाता जनपदान् गतः। जनपदान् गतस्य पिता ग्लानीभूतः। स मूलपत्रगण्डपुष्पभैषज्यैरुपस्थीयमानो हीयत एव। ततस्तैरमात्यैः संदेशो
25 विसर्जितः—पिता ते ग्लानीभूतः। आगच्छतु। देवराज्यं प्रतीच्छ। तस्यानागच्छतः पिता कालगतः। तैरमात्यैः पुनः संदेशो विसर्जितः—पिता ते कालधर्मणा संयुक्तः। आगच्छ,
C 211 देवराज्यं प्रतीच्छस्व। ततोऽसौ संलक्षयति—यदि मम पिता कालगतः, किं भूयोऽहं गच्छामीति? ततो भूयः संदेशोऽभ्यागतः। आगच्छ, देवराज्यं प्रतीच्छ। स कथयति—यदि मम धर्मेण राज्यं प्राप्स्यते, इहैव राज्याभिषेक आगच्छतु। ततस्ते अमात्याः कथयन्ति—रत्नशिलया
30 देव प्रयोजनं भवति। तस्य च दिवौकसो नाम यक्षः पुरोजवः। तेन रत्नशिला आनीता। यदा रत्नशिला आनीता, ततस्ते अमात्या भूयः कथयन्ति—देव श्रीपर्यङ्केनात्र प्रयोजनं भवति। ततस्तेनैव दिवौकसेन श्रीपर्यङ्क आनीतः। ततस्ते अमात्या भूयः कथयन्ति—

देवाधिष्ठानमध्येऽभिषेकः क्रियते। स कथयति—यदि मम धर्मेण राज्यं प्राप्स्यते, इहैवाधिष्ठानमागच्छतु। ततोऽधिष्ठानं स्वयमेव तत्प्रदेशं गतम्। स्वयमागतं स्वयमागतं साकेतसाकेतमिति संज्ञा संवृत्ता। पश्चात् तेऽमात्या भटबलाग्रनैगमजनपदाश्चाभिषेकं गृहीत्वा आगताः। ते कथयन्ति—अभिषेकं देव प्रतीच्छस्व। स कथयति—मम मनुष्याः पट्टं बन्धिष्यन्ति? यदि धर्मेण राज्यं प्राप्स्यते, अमनुष्याः पट्टं बन्धन्तु। ततोऽमनुष्यैः पट्टो बद्धः। तस्य सप्त रत्नानि 5 प्रादुर्भूतानि, तद्यथा—चक्ररत्नं हस्तिरत्नमश्वरत्नं मणिरत्नं परिणायकरत्नं स्त्रीरत्नं गृहपतिरत्नमेव सप्तमम्। पूर्णं चास्य सहस्रं पुत्राणां शूराणां वीराणां वराङ्गरूपिणां परसैन्यप्रमर्दकानाम्। वैशालीसामन्तकेन रमणीयं वनखण्डम्। तत्र पञ्च ऋषिशतानि पञ्चाभिज्ञानि ध्यायन्ति। तत्र वनखण्डे प्रभूताः पक्षिणो मृगाश्च प्रतिवसन्ति। शब्दकण्टकानि च ध्यानानि। ते च पक्षिणोऽवतीर्यमाणा अवतीर्यमाणाः शब्दं कुर्वन्ति। दुर्मुखो नाम ऋषिः। स कुपितः। 10 तेनोक्तम्—बकानां पक्षाणि शीर्यन्ताम्। यदा तेषां ऋषिकोपेन पक्षाणि शीर्णानि, ततस्ते पादोद्धारकेण प्रस्थिताः। स च राजा जनपदाननुसंसार्य पश्यति पादोद्धारकेण गच्छतः। यतस्तेऽमात्याः पृष्टाः—कस्मात् पादोद्धारकेण गच्छन्ति? पश्चात् तेऽमात्याः कथयन्ति—देव, शब्दकण्टकानि ध्यानानीति एतेषां ऋषिकोपेन पक्षाणि शीर्णानि। ततो राज्ञा अभिहितम्—एवंविधा अपि ऋषयो भवन्ति, येषां सत्त्वानामन्तिके नास्त्यनुकम्पा? ततो राज्ञा 15 अमात्याः संदिष्टाः—गच्छन्तु भवन्तः, ऋषीणामेवं वदन्तु—तत्र गच्छत यत्राहं न वसया-(सा?)मीति। यतस्तैरमात्यैः ऋषयोऽभिहिताः। राजा समादिशति—न मम राज्ये वस्तव्यम्। गच्छन्तु भवन्तो यत्राहं न वसया(सा?)मीति। ततस्ते संलक्षयन्ति—एषोऽयं चतुर्द्वीपेश्वरः। गच्छामो वयं सुमेरुपरिखण्डम्। ते तत्र गत्वा अवस्थिताः॥ C 212

राज्ञो मूर्धातस्यामात्याश्चिन्तकास्तुलका उपपरीक्षकाः। चिन्तयित्वा तुलयित्वो- 20 पपरीक्ष्य पृथक् पृथगुक्ताः शिल्पस्थानकर्मस्थानानि मापयितुम्। चिन्तका इमे तुलका उपपरीक्षका इति मन्त्रजा मन्त्रजा इति संज्ञा। तैरारब्धानि कर्षणकर्माणि कर्तुम्। यतः स राजा पश्यति जनपदाननुसंसार्याकृष्यान् कर्मान्तान् कुर्वतः। यतो राज्ञा अभिहितम्—किमेते मनुष्याः कुर्वन्ति? ततस्तैरमात्यै राजा अभिहितः—एते देव मनुष्याः शस्यादीनि कृषन्ति, ततो ओषधयो भविष्यन्ति। यतश्च स राजा कथयति—मम राज्ये मनुष्याः कृषि- 25 ष्यन्ति? ततस्तेनोक्तम्—सप्तविंशतिबीजजातीनां देवो वर्षतु। सहचित्तोत्पादादेव राज्ञो मूर्धातस्य सप्तविंशतिबीजजातिर्देवो वृष्टः। राज्ञा मूर्धातेन जनपदाः पृष्टाः—कस्यैतानि पुण्यानि? तैरभिहितम्—देवस्य चास्माकं च। यतस्ते मनुष्याः कर्पासवातानारब्धा मापयितुम्, भूयोऽपि च राज्ञा मूर्धातेन जनपदाननुसंसार्य तेन पृष्टाः। ततो राज्ञा अभिहितम्—किमेते मनुष्याः कुर्वन्ति? तैरमात्यैरभिहितम्—देव, मनुष्याः कर्पासवातान् मापयन्ति। पश्चात् 30 राज्ञा अभिहितम्—कस्यार्थे? तैरमात्यैरभिहितम्—देव, वस्त्राणामर्थे। ततो राज्ञा तेनोक्तम्—मम राज्ये मनुष्याः कर्पासवातान् मापयिष्यन्तीति कर्पासमेव देवो वर्षतु। सहचित्तोत्पादा-

C 213 देव राज्ञो मूर्धातस्य कर्पासानेव देवो वृष्टः । स च राजा जनपदान् पृच्छति । कस्यैतानि पुण्यानि ? ते कथयन्ति—देवस्य चास्माकं च । पश्चात् तेन जनेन तत्कर्पासं कर्तितुमारब्धम्। स राजा कथयति—किमेते मनुष्याः कुर्वन्ति ? तैरमात्यैरभिहितम्—देव सूत्रेण प्रयोजनम् । ततो राज्ञा अभिहितम्—मम राज्ये मनुष्याः कर्तिष्यन्ति ? सूत्रमेव देवो वर्षतु । सहचित्तो-
5 त्पादादेव राज्ञो मान्धातस्य सूत्रमेव देवो वृष्टः । स च राजा कथयति—कस्यैतानि पुण्यानि ? यतस्ते कथयन्ति—देवस्य चास्माकं च । यतस्तैरनुपूर्वेण वस्त्राण्यारब्धानि वापयितुम् । स राजा कथयति—किमेते मनुष्याः कुर्वन्ति ? तैरमात्यैरभिहितम्—देव, वस्त्राणि वापयन्ति, वस्त्रैः प्रयोजनम् । यतो राजा संलक्षयति—मम राज्ये मनुष्या वस्त्राणि वापयिष्यन्ते ? वस्त्राण्येव देवो वर्षतु । सहचित्तोत्पादादेव राज्ञो मान्धातस्य वस्त्राण्येव देवो वृष्टः । स राजा कथयति—
10 कस्यैतानि पुण्यानि ? ते कथयन्ति—देवस्य चास्माकं च । यतः स राजा संलक्षयति—मनुष्या मम पुण्यानां प्रभावं न जानन्ति । अथ राज्ञो मान्धातस्यैतदभवत् । अस्ति मे जम्बुद्वीप ऋद्धश्च स्फीतश्च क्षेमश्च सुभिक्षश्च आकीर्णबहुजनमनुष्यश्च । सन्ति मे सप्त रत्नानि, तद्यथा चक्ररत्नं हस्तिरत्नमश्वरत्नं मणिरत्नं गृहपतिरत्नं स्त्रीरत्नं परिणायकरत्नमेव सप्तमम् । पूर्णं च मे सहस्रं पुत्राणां शूराणां वीराणां वराङ्गरूपिणां परसैन्यप्रमर्दकानाम् ।
15 अहो वत मेऽन्तःपुरे सप्ताहं हिरण्यवर्षं पतेत्, एककार्षापणोऽपि बहिर्न निपतेत् । सहचित्तोत्पादादेव राज्ञो मान्धातस्यान्तःपुरे सप्ताहं हिरण्यवर्षं वृष्टम् । एककार्षापणोऽपि बहिर्न निपतितो यथापि तन्महर्द्धिकस्य सत्त्वस्य महानुभावस्य कृतपुण्यस्य कृतकुशलस्य स्वकं पुण्यफलं प्रत्यनुभवतः । यतः स राजा कथयति—कस्यैतानि पुण्यानि ? ते कथयन्ति—देवस्य
C 214 चास्माकं च । यतो राजा मूर्धातः कथयति—क्षुण्णा भवन्तो यदि युष्माभिः पूर्वमेवाभिहित-
20 मभविष्यद्देवस्य पुण्यानीति, मया सकलं जम्बुद्वीपं रत्नैरभिवृष्टमभविष्यत्। अपि तु यो युष्माकं रत्नैरर्थी, स यावदीप्सितानि रत्नानि गृह्णातु ॥

तस्य तत्र मूर्धातस्य राज्ञो महाराज्यं कारयतः षट् चक्राश्च्युताः । राज्ञो मूर्धातस्य दिवौकसो यक्षः पुरोजवः । स राज्ञा मूर्धातेनोक्तः—अस्ति किंचिदन्यद्वीपे नाज्ञापितं यद्वय-माज्ञापयेम ? यतः पश्चाद्दिवौकसेनाभिहितः—अस्ति देव पूर्वविदेहो नाम द्वीपः, ऋद्धश्च
25 स्फीतश्च क्षेमश्च सुभिक्षश्च आकीर्णबहुजनमनुष्यः। स्वयं नु देवो गत्वा तमप्याज्ञापयेत् । अथ राज्ञो मूर्धातस्यैतदभवत्—अस्ति मे जम्बुद्वीप ऋद्धश्च स्फीतश्च क्षेमश्च सुभिक्षश्च आकीर्ण-बहुजनमनुष्यश्च । अस्ति मे सप्त रत्नानि तद्यथा चक्ररत्नं हस्तिरत्नमश्वरत्नं मणिरत्नं स्त्रीरत्नं गृहपतिरत्नं परिणायकरत्नमेव सप्तमम् । पूर्णं च मे सहस्रं पुत्राणां शूराणां वीराणां वराङ्ग-रूपिणां परसैन्यप्रमर्दकानाम् । वृष्टं मे सप्ताहमन्तःपुरे हिरण्यवर्षम् । श्रूयते अथ खलु पूर्वविदेहो
30 नाम द्वीपः । यन्न्वहं तमपि गत्वा समनुशासेयम् । सहचित्तोत्पादादेव राजा मान्धात उपरि-विहायसमभ्युद्गतः सार्धमष्टादशभिर्भटबलाग्रकोटिभिः पुत्रसहस्रपरिवृतः सप्तरत्नपुरोजवः । अगमद्राजा मान्धातः पूर्वविदेहद्वीपम् । प्रत्यष्ठाद्राजा मान्धाता पूर्वविदेहद्वीपे । समनुविष्टवान्

राजा मूर्धातः पूर्वविदेहं द्वीपम्। तस्य तत्र समनुशासतः षट् चक्राश्च्युताः। भूयः स राजा दिवौकसं यक्षमामन्त्रयति—अस्ति दिवौकस किंचिदन्यद्वीपे नाज्ञापितम्? दिवौकस आह—अस्ति देव अपरगोदानीयं नाम द्वीपं ऋद्धं च स्फीतं च क्षेमं च सुभिक्षं च आकीर्णबहुजनमनुष्यं च। यन्नु देवस्तमपि गत्वा समनुशासेत्। अथ राज्ञो मूर्धातस्यैतदभवत्—अस्ति मे जम्बुद्वीप ऋद्धश्च स्फीतश्च क्षेमश्च सुभिक्षश्च आकीर्णबहुजनमनुष्यश्च। सन्ति च मे सप्त रत्नानि। पूर्णं च मे 5 सहस्रं पुत्राणां शूराणां वीराणां वराङ्गरूपिणां परसैन्यप्रमर्दकानाम्। वृष्टं मे सप्ताहमन्तः- O 215 पुरे हिरण्यवर्षं यथापि तन्महर्द्धिकस्य सत्त्वस्य महानुभावस्य कृतकुशलस्य स्वपुण्यफलं प्रत्यनुभवतः। श्रूयते अपरगोदानीयं नाम द्वीपं ऋद्धं च स्फीतं च क्षेमं च सुभिक्षं च आकीर्ण-बहुजनमनुष्यं च। यन्न्वहं तमपि गत्वा समनुशासेयम्। सहचित्तोत्पादादेव राजा मान्धाता उपरिविहायसमभ्युद्गतः सार्धमष्टादशभिर्भटबलाग्रकोटिभिः पुत्रसहस्रपरिवृतः सप्तरत्नपुरोजवः। 10 अगमद्राजा मान्धाता अपरगोदानीयं द्वीपम्। अनुशास्ति राजा मान्धाता अपरगोदानीयम्। तस्य समनुशासतः षट् चक्राश्च्युताः। यतः स राजा मान्धाता दिवौकसं यक्षं पृच्छति—अस्ति कश्चिदन्यद्वीपो दिवौकस नाज्ञापितः? आगतोऽस्मि पूर्वान्। अस्ति देव उत्तरकुरुर्नाम द्वीपः। किं चापि ते मनुष्या अममा अपरिग्रहाः। यन्नु देवो गत्वा स्वकं भटबलाग्रं समनु-शासेत्। अथ राज्ञो मान्धातस्यैतदभवत्—अस्ति मे जम्बुद्वीपं ऋद्धं च स्फीतं च क्षेमं च 15 सुभिक्षं च आकीर्णबहुजनमनुष्यं च। सन्ति मे सप्त रत्नानि। पूर्णं च मे सहस्रं पुत्राणां शूराणां वीराणां वराङ्गरूपिणां परसैन्यप्रमर्दकानाम्। वृष्टमेव सप्ताहमन्तःपुरे हिरण्यवर्षम्। श्रूयते उत्तरकुरुर्नाम द्वीपः। किंचापि ते मनुष्या अममा अपरिग्रहाः। यन्न्वहं तत्रापि गत्वा स्वं भटबलाग्रं समनुशासेयम्। सहचित्तोत्पादादेव राजा मान्धाता सार्धमष्टादशभिर्भटबलाग्र-कोटिभिः पुत्रसहस्रपरिवृतः सप्तरत्नपुरोजव उपरिविहायसेनाभ्युद्गतः। अद्राक्षीद्राजा मान्धातः 20 सुमेरुपार्श्वेनानुयायन् चित्रोपचित्रान् वृक्षानापीडकजातान्। दृष्ट्वा च पुनर्दिवौकसं यक्षमामन्त्रयते स्म—किमेतद्दिवौकस चित्रोपचित्रान् वृक्षानापीडकजातान्। एते देव उत्तर-कौरवाणां मनुष्याणां कल्पदूष्यवृक्षाः, यत उत्तरकौरवा मनुष्याः कल्पदूष्याणि प्रावृण्वन्ति। देवोऽप्यत्रैव गत्वा कल्पदूष्यानि प्रावरीतु। श्रुत्वा च पुना राजा मान्धाता अमात्यानामन्त्रयते—पश्यथ यूयं ग्रामण्यश्चित्रोपचित्रान् वृक्षानापीडकजातान्? एवं 25 O 216 देव। एते ग्रामण्य उत्तरकौरवाणां मानुष्याणां कल्पदूष्यवृक्षा यत उत्तरकौरवा मनुष्याः कल्पदूष्याणि प्रावरन्ति। यूयमप्यत्र गत्वा कल्पदूष्ययुगानि प्रावरध्वम्। अद्राक्षीद्राजा मान्धाता सुमेरुपार्श्वेनानुयायन् श्वेतश्वेतं पृथिवीप्रदेशम्। दृष्ट्वा च पुनर्दिवौकसं यक्षमामन्त्र-यते—किमेतद्दिवौकस श्वेतश्वेतं पृथिवीप्रदेशम्? एतद्देव उत्तरकौरवकाणां मनुष्याणामकृष्टोप्तं तण्डुलफलशालिं यत उत्तरकौरवका मनुष्या अकृष्टोप्तं तण्डुलफलशालिं परिभुञ्जन्ति। देवो- 30 ऽप्यत्र गत्वा अकृष्टोप्तं तण्डुलफलशालिं परिभुञ्जतु। अगमद्राजा मान्धाता उत्तरकुरुद्वीपम्। प्रत्यष्ठाद्राजा मान्धाता उत्तरकुरौ द्वीपे। समनुशास्ति राजा मान्धाता उत्तरकुरौ द्वीपे स्वकं

भटबलाग्रम्। तस्य तत्र स्वकं भटबलाग्रं समनुशासतः षट् चक्राश्च्युताः। अथ राजा मान्धाता दिवौकसं यक्षमामन्त्रयते—अस्ति किंचिदन्यद्द्वीपमनाज्ञापितमिति? नास्ति देव। श्रूयन्ते देवास्त्रायस्त्रिंशा दीर्घायुषो वर्णवन्तः सुखबहुला उच्चेषु विमानेषु चिरस्थितिकाः। यन्नु देवो देवांस्त्रायस्त्रिंशान् दर्शनायोपसंक्रमेत्। अथ राज्ञो मूर्धातस्यैतदभवत्—अस्ति मे जम्बुद्वीपम्,
5 ऋद्धं च स्फीतं च क्षेमं च सुभिक्षं च आकीर्णबहुजनमनुष्यं च। अस्ति मे सप्त रत्नानि। पूर्णं च मे सहस्रं पुत्राणां शूराणां वीराणां वराङ्गरूपिणां परसैन्यप्रमर्दकानाम्। वृष्टं मे सप्ताहमन्तःपुरे हिरण्यवर्षम्। समनुशिष्टो मे पूर्वविदेहो द्वीपः। समनुशिष्टो मे अपरगोदानीयो द्वीपः। समनुशिष्टं मे उत्तरकुरुद्वीपे स्वकं भटबलाग्रम्। श्रूयन्ते देवास्त्रायस्त्रिंशा दीर्घायुषो वर्णवन्तः सुखबहुला उच्चेषु विमानेषु चिरस्थितिकाः। यन्न्वहं देवांस्त्रायस्त्रिंशान् दर्शनायोप-
10 संक्रमेयम्। सहचित्तोत्पादादेव राजा मान्धाता उपरिविहायसमभ्युद्गतः सार्धमष्टादशभिर्भट-
C 217 बलाग्रकोटिभिः सप्तरत्नपुरोजवः पुत्रसहस्रपरिवृतः। सुमेरुः पर्वतराजा सप्तकाञ्चनपर्वतपरिवृतः। अथ राजा निमिंधरे पर्वते प्रत्यष्ठात् काञ्चनमये। तस्य तत्र स्वकं भटबलाग्रं समनुशासतः षट् चक्राश्च्युताः। निमिंधरात् पर्वतात् विनतके पर्वते प्रत्यष्ठात् काञ्चनमये। तस्य तत्र स्वकं भटबलाग्रं समनुशासतः षट् चक्राश्च्युताः। विनतकात् पर्वतादश्वकर्णगिरौ पर्वते प्रत्यष्ठात्
15 काञ्चनमये। तस्य तत्र स्वकं भटबलाग्रं समनुशासतः षट् चक्राश्च्युताः। अश्वकर्णगिरेरपि पर्वतात् सुदर्शने पर्वते प्रत्यष्ठात् काञ्चनमये। तस्य तत्र स्वकं भटबलाग्रं समनुशासतः षट् चक्राश्च्युताः। सुदर्शनात् पर्वतात् खदिरके पर्वते प्रत्यष्ठात् काञ्चनमये। तस्य तत्र स्वकं भटबलाग्रं समनुशासतः षट् चक्राश्च्युताः। खदिरकात् पर्वतादीषाधारे पर्वते प्रत्यष्ठात् काञ्चनमये। तस्य तत्र स्वकं भटबलाग्रं समनुशासतः षट् चक्राश्च्युताः। ईषाधारात् पर्वताद्युगंधरे पर्वते प्रत्यष्ठात्
20 काञ्चनमये। तस्य तत्र स्वकं भटबलाग्रं समनुशासतः षट् चक्राश्च्युताः। युगंधरात् पर्वतादुपरिविहायसमभ्युद्गतः। तत्र सुमेरुपरिषण्डायां पञ्च ऋषिशतानि ध्यापयन्ति। तैः स राजा दृष्ट आगच्छन्। ते कथयन्ति—अयमसौ भवन्तः कलिराजा आगच्छति। तत्र दुर्मुखो नाम ऋषिः। तेन गृह्योदकस्याञ्जलिः क्षिप्तः। विष्कम्भितं भटबलाग्रम्। तस्य चाग्रतः परिणायकरत्नमनुयाति। तेन ऋषयोऽभिहिताः—

25 गच्छथ ब्राह्मण्यकोऽयं नैतत् सर्वत्र सिध्यति।
मूर्धाता नृपतिर्ह्येषो नैते वैशालिका बकाः॥ २॥

अथ राजा तस्मिन् शासनेऽभ्यागतः कथयति—केनैतद्विष्कम्भितं भटबलाग्रम्? तेनोक्तम्—ऋषिभिर्देव तं भटबलाग्रं विष्कम्भितम्। पश्चाद् राज्ञा अभिहितम्—किमेषां ऋषीणां सर्वं प्रियमिति? परिणायकरत्नेनोक्तम्—जटा ऋषीणां सर्वेष्टाः। ततो राज्ञा अभि-
30 हितम्—ऋषीणां जटाः शीर्यन्ताम्, मम च भटबलाग्रं विहायसा गच्छतु। तेषां ऋषीणां
C 218 जटाः शीर्णाः, राज्ञश्च मूर्धातस्य भटबलाग्रं विहायसेन प्रस्थितम्। सुमेरुः पर्वतराजा अशीतियोजनसहस्राण्यधस्तात् काञ्चनमय्यां भूमौ प्रतिष्ठितोऽशीतियोजनसहस्राण्युदका-

दभ्युद्गत ऊर्ध्वमधश्च षष्टियोजनशतसहस्रं पार्श्वं पार्श्वमशीतियोजनसहस्राणि तद्भवति समन्त-परिक्षेपेण विंशत्यधिकानि त्रीणि योजनशतसहस्राणि। अभिरूपो दर्शनीयः प्रासादिकश्चतू-रत्नमयः। तस्य मूर्ध्नि देवानां त्रायस्त्रिंशानां सुदर्शनं नाम नगरम्। देवानां त्रायस्त्रिंशानां पञ्च रक्षाः स्थापिताः—उदकनिश्रिता नागाः, करोटपाणयो देवाः, मालाधारा देवाः, सदामत्ता देवाः, चत्वारश्च महाराजानः। तस्य राज्ञो मूर्धातस्योदकनिश्रितैर्नागैर्बलकायो 5 विष्कम्भितः। राजा च मूर्धातस्तत्स्थानमागतः। तेनोक्तम्—केनैतद्भटबलाग्रं विष्कम्भितम्? ते कथयन्ति—देव, उदकनिश्रितैर्नागैः। राजा कथयति—तिर्यञ्चो मम युध्यन्ति? तेन ह्युदक-निश्रिता एव मे नागाः पुरोजवा भवन्तु। ततस्ते नागा राज्ञो मूर्धातस्याग्रतोऽनुयायिनो जाताः। तेषां नागानामनुसंयायतां करोटपाणयो देवाः संप्राप्ताः। यतो नागैस्तैः करोट-पाणिभिर्देवैः सार्धं मिश्रीभावं गत्वा पुनस्तद्बलाग्रं स्तम्भितम्। राज्ञा मूर्धातेनोक्तम्—केनैतद्भट- 10 बलाग्रं स्तम्भितम्? ते कथयन्ति—देव, एते करोटपाणयो देवाः। एतैर्भटबलाग्रं स्तम्भितम्। राजा मूर्धातः कथयति—एतेऽप्येव मे करोटपाणयो देवाः पुरोजवा भवन्तु। यतस्तेऽग्रतः प्रधाविताः। पश्चात् तेषां नागैः सार्धं धावतां मालाधारा देवाः संप्राप्ताः। मालाधारैर्देवैस्ते पृष्टाः—किं भवन्तो धावतः? ते कथयन्ति—एष मनुष्यराजा आगच्छति। यतस्तैः संभूय नागैर्देवैश्च पुनस्तद्बलाग्रं स्तम्भितम्। राजा च मान्धातस्तत्स्थानमनुप्राप्तः। तेनोक्तम्— 15 किमेतद्भवन्तः? ते कथयन्ति—देव, मालाधारैर्देवैः। राजा कथयति—मालाधारा देवाः पुरोजवा मे भवन्तु। यतो मालाधारा देवास्तैर्नागैर्देवैश्च सार्धं मूर्धातस्याग्रतः प्रधाविताः। तेषां धावतां सदामत्तका देवाः संप्राप्ताः। सदामत्तैर्देवैः पृष्टाः—किं भवन्तो धावतः? तैर्नागैः करोटपाण्यादिभिश्च देवैरभिहिताः—एष मनुष्यराजा आगच्छति। यतो भूयः सदा-मत्तैर्देवैः करोटपाण्यादिभिश्च देवैर्नागैः सार्धं मिश्रीभावं कृत्वा भटबलाग्रं विष्कम्भितम्। राजा 20 च मूर्धातस्तत्स्थानमनुप्राप्तः। तेनोक्तम्—किमेतद्भटबलाग्रं विष्कम्भितम्? ते कथयन्ति—एते देव सदामत्ता देवाः। राज्ञा अभिहितम्—सदामत्ता एव मे देवाः पुरोजवा भवन्तु। यतः सदामत्ता देवास्तैः सार्धं देवैर्नागैश्चाग्रतः प्रधाविताः। तेषां धावतां चातुर्महाराजिका देवाः C 219 संप्राप्ताः। तैरुक्तम्—किमेतद्भवन्तो धावतः? यतो नागादिभिर्देवैरग्रतोऽनुयायिभिरभिहिताः—एष मनुष्यराजा आगच्छति। चत्वारो महाराजानः संलक्षयन्ति। पुण्यमहेशाख्योऽयं सत्त्वः। 25 नास्य शक्यं विरोद्धुमिति। ततस्तैश्चतुर्भिर्महाराजैस्त्रायस्त्रिंशानामारोचितम्—एष भवन्तो मनुष्य-राजा मूर्धात आगच्छति। त्रायस्त्रिंशा देवाः संलक्षयन्ति—पुण्यविपाकमहेशाख्योऽयं सत्त्वः। नास्य विरोद्धव्यम्। अर्घेणास्य प्रत्युद्गच्छामः। ततस्ते त्रायस्त्रिंशा देवा अर्घेण प्रत्युद्गताः। अद्राक्षीद्राजा मूर्धातः सुमेरुमूर्धन्यभिरुहन्नीलनीलां वनराजिं मेघराजिमिवोन्नताम्। दृष्ट्वा च पुनर्दिवौकसं यक्षमामन्त्रयते—किमेतद्दिवौकस नीलनीला वनराजिर्मेघराजिरिवोन्नता? एषा देव देवानां 30 पारिजातको नाम कोविदारो यत्र देवास्त्रायस्त्रिंशाश्चतुरो वार्षिकान् मासान् दिव्यैः पञ्चभिः कामगुणैः समर्पिताः समन्वङ्गीभूताः क्रीडन्ति रमन्ते परिचारयन्ति। देवोऽप्यत्र गत्वा दिव्यैः

पञ्चभिः कामगुणैः समर्पितः समन्वङ्गीभूतः क्रीडतु रमतां परिचारयतु। श्रुत्वा च पुना राजा मूर्धातोऽमात्यानामन्त्रयते—पश्यथ यूयं ग्रामण्यो नीलनीलां वनराजिं मेघराजिमिवोन्नताम्? एवं देव। एष देवानां त्रायस्त्रिंशानां पारिजातकः कोविदारो यत्र देवास्त्रायस्त्रिंशाश्चतुरो
C 220 वार्षिकान् मासान् दिव्यैः पञ्चभिः कामगुणैः समर्पिताः समन्वङ्गीभूताः क्रीडन्ति रमन्ते
5 परिचारयन्ति। यूयमपि ग्रामण्योऽत्र गत्वा दिव्यैः पञ्चभिः कामगुणैः समर्पिताः समन्वङ्गीभूताः क्रीडत रमत परिचारयत। अद्राक्षीद्राजा मूर्धातः सुमेरुमूर्धन्यभिरुहन् श्वेतश्वेतमभ्रकूटमिवोन्नतम्। दृष्ट्वा च पुनर्दिवौकसं यक्षमामन्त्रयते—किमेतद्दिवौकस श्वेतश्वेतमभ्रकूटमिवोन्नतम्? एषा देव देवानां त्रायस्त्रिंशानां सुधर्मा नाम देवसभा, यत्र देवास्त्रायस्त्रिंशाश्चत्वारश्च महाराजानः संनिषण्णाः संनिपतिता देवानां मनुष्याणां चार्थं च धर्मं च चिन्त-
10 यन्ति तुलयन्ति उपपरीक्ष्यन्ति। देवोऽप्यत्र गमिष्यतु। श्रुत्वा च पुनरमात्यानामन्त्रयते—पश्यथ यूयं ग्रामण्यः श्वेतश्वेतमभ्रकूटमिवोन्नतम्? एवं देव। एषा त्रायस्त्रिंशानां सुधर्मा नाम देवसभा यत्र देवास्त्रायस्त्रिंशाश्चत्वारश्च महाराजानः संनिषण्णाः संनिपतिता देवानां मनुष्याणां चार्थं च धर्मं च चिन्तयन्ति तुलयन्ति उपपरीक्ष्यन्ति। यूयमपि ग्रामण्योऽत्र गमिष्यथ। देवानां त्रायस्त्रिंशानां सुदर्शनं नाम नगरमर्धतृतीयानि योजनसहस्राण्यायामेन
15 अर्धतृतीयानि योजनसहस्राणि विस्तरेण समन्ततः परिक्षेपेण दशयोजनसहस्राणि सप्तभिः काञ्चनमयैः प्राकारैः परिक्षिप्तम्। ते प्राकारा अर्धतृतीयानि योजनान्युच्छ्रयेण। तेषु प्राकारेषु चतुर्विधाः षो(खो)डका मापिताः सुवर्णमया रूप्यमया वैडूर्यमयाः स्फटिकमयाः। ऊर्ध्वा एका निबद्धा संक्रमणका। सुदर्शननगरेऽभ्यन्तरे भूमिभागोऽभिरूपो दर्शनीयः प्रासादिकश्चित्रः सुचित्र एकैकचित्रधातुशतेन विचित्रो मृदुः सुमृदुः तद्यथा तुलपिचुर्वा।
20 कर्पासपिचुर्वा। प्रक्षिप्ते पादे अवनमत्युत्क्षिप्ते पादे उन्नमति दिव्यैर्मन्दारवैः पुष्पैर्जानुमात्रेण
C 221 ओघेन संस्तीर्णः। वायुसंयोगाश्च पौराणान्यवकीर्यन्ते, नवानि पुष्पाणि समाकीर्यन्ते। सुदर्शने नगरे एकोनद्वारसहस्रम्। द्वारे द्वारे पञ्चशतानि नीलवाससां यक्षाणां स्थापितानि संनद्धानि सन्ति चित्रकलापानि यावदेव देवानां त्रायस्त्रिंशानामारक्षणार्थमत्यर्थं शोभनार्थम्। सुदर्शनस्य नगरस्य वीथ्यः अर्धतृतीयानि योजनसहस्राण्यायामेन विस्तरेण द्वादश योज-
25 नान्यभिरूपा दर्शनीयाः प्रासादिकाः कनकवालुकास्तीर्णाश्चन्दनवारिपरिषिक्ता हेमजालावनद्धाः। सामन्तकेन विविधाः पुष्किरिण्यो मापिताः। ता पुष्किरिण्यश्चतुर्विधैरिष्टकैश्चिताः सुवर्णमयै रूप्यमयैः स्फटिकमयैर्वैडूर्यमयैः। वेदिकायाः स्फटिकमया सूची आलम्बनमधिष्ठानम्। स्फटिकमय्या वैडूर्यमयी सूची आलम्बनमधिष्ठानम्। ताः पुष्किरिण्यः पूर्णाः शीतलेन वारिणा क्षौद्रकल्पेनाम्बुना उत्पलपद्मकुमुदपुण्डरीकसंछन्ना विविधैर्जलजैः शकुनैर्-
30 वल्गुस्वरैर्मनोज्ञस्वरैः कामरूपिभिर्निकूजिताः। सामन्तके विविधाः पुष्पवृक्षाः फलवृक्षाः सुजाताः सुसंस्थिता आपीडकजाताः, तद्यथा दक्षेण मालाकारेण वा मालाकारान्तेवासिना वा माला वा अग्रस्थितावतंसकानि वा सुरचितानि। विविधैः स्थलजैः शकुनैर्वल्गुस्वरैर्मनोज्ञस्वरैः

कामरूपिभिरभिनिकूजिताः । सुदर्शने नगरे चतुर्विधाः कल्पदूष्यवृक्षा नीलाः पीता लोहिता अवदाताः । कल्पदूष्यवृक्षैश्चतुर्विधानि तुण्डिचेलानि । तैस्तुण्डिचेलैश्चतुर्विधानि कल्पदूष्यानि नीलानि पीतानि लोहितान्यवदातानि । यादृशमाकाङ्क्षति देवो वा देवकन्या वा, सहचित्तोत्पादाद्धस्ते प्रादुर्भवन्ति । चतुर्विधा आभरणवृक्षा हस्तोपगाः पादोपगाः गुह्याः प्रकाशिताः । यादृशमाकाङ्क्षति देवो वा देवकन्या वा, सहचित्तोत्पादाद् हस्ते प्रादुर्भवन्ति । 5
चतुर्विधा वाद्यभाण्डवृक्षा वेणुवल्लरिसुघोषकाः । यादृशमाकाङ्क्षति देवो वा देवकन्या वा, सहचित्तोत्पादाद् हस्ते प्रादुर्भवन्ति । चतुर्विधापि च सुधा, नीला पीता लोहिता अवदाता । यादृशमाकाङ्क्षति देवो वा देवकन्या वा, सहचित्तोत्पादात् हस्ते प्रादुर्भवन्ति । मधु माधवः कादम्बरी पारिपानम् । गृहाः कूटागारा हर्म्याः प्रासादा खासनका अवलोकनका संक्रमणकाः । नारीगणविराजितमप्सरःसहस्रसंघनिषेवितं तूर्यनादाभिनादितमुपेतमन्नपानम् । यत्र 10　　C 222
त्रायस्त्रिंशाः क्रीडन्ति रमन्ते परिचारयन्ति, स्वकं पुण्यफलं प्रत्यनुभवन्ति । देवानां त्रायस्त्रिंशानां सुधर्मा देवसभा त्रीणि योजनशतान्यायामेन त्रीणि योजनशतानि विस्तरेण समन्तपरिक्षेपेण नवयोजनशतानि अभिरूपा दर्शनीया प्रासादिका स्फटिकमयी, अर्धपञ्चमानि योजनानि तस्मान्नगरीतोऽभ्युद्गता । तत्र देवानां त्रायस्त्रिंशानामासनानि प्रज्ञप्तानि, यत्र पृथक् द्वात्रिंशतीनामुपेन्द्राणामासनानि, त्रयस्त्रिंशतिमं शक्रस्य देवानामिन्द्रस्य । तेषामेव देवानां 15
सर्वान्ते मूर्धातस्य राज्ञ आसनं प्रज्ञप्तम् । पश्चाद्देवास्त्रायस्त्रिंशा मूर्धातस्य राज्ञोऽर्घं गृह्य प्रत्युद्गताः । तत्र ये पुण्यमहेशाख्याः सत्त्वा अनुपूर्वेण प्रविष्टाः, अवशिष्टा बहिः स्थिताः । यतः स राजा मूर्धातः संलक्षयति—यान्येतान्यासनानि प्रज्ञप्तकानि, एतेभ्यो यदन्तिममासनम्, एतन्मम भविष्यति । अथ राज्ञो मूर्धातस्यैतदभवत्—अहो बत मे शक्रो देवानामिन्द्रोऽर्धासनेनोपनिमन्त्रयेत् । सहचित्तोत्पादादेव शक्रो देवानामिन्द्रो राज्ञो मान्धातुरर्धासनमदात् । 20
प्रविष्टो राजा मूर्धातः शक्रस्य देवानामिन्द्रस्यार्धासने । न खलु राज्ञो मूर्धातस्य शक्रस्य देवानामिन्द्रस्यैकासने निषण्णयोः कश्चिद्विशेषो वा, अभिप्रायो वा नानाकरणं वा, यदुत आरोहपरिणाहौ वर्णपुष्कलता स्वरगुप्त्या स्वरगुप्तेः, नान्यत्र शक्रस्य देवानामिन्द्रस्यानिमिषतेन । राज्ञो मूर्धातस्य देवेषु त्रायस्त्रिंशेषु तिष्ठतः षट्त्रिंशाश्चक्राश्च्युताः । तत्र च तेषां देवानां देवासुरसंग्रामं भवति । तत्र यद्यसुराः पराजयन्ते, पश्चादसुरपुर्यां द्वाराणि बध्नन्ति । देवाना- 25
मपि पञ्च रक्षाः पराजयन्ते । तेऽपि देवपुर्यां द्वाराणि बध्नन्ति । तेषामेवं देवासुराणां परस्परतः संभ्रम उत्पन्नः । यतो राज्ञा मूर्धातेन त्रायस्त्रिंशानामुक्तम्—किमेतद्भवन्तोऽतीव संभ्रमजाता देवाः ? त्रायस्त्रिंशैरुक्तम्—एतैरसुरैरस्माकं पञ्च रक्षा भग्नाः, यतोऽस्माभिर्द्वाराणि बद्धानि । यतो मूर्धातेन राज्ञा उक्तम्—आत्मपुरुषाः, आनयन्तु भवन्तो धनुः । यतस्तस्य धनुरानीतम् । तेन पश्चाद्धनुर्गृह्य गुणशब्दः कृतः । तस्य च धनुषो गुणशब्दः कृतः । 30　　C 223
असुरैः श्रुतः । तं श्रुत्वा असुरा कथयन्ति—कस्यैष गुणशब्दः ? तैः श्रुतम्—राज्ञो मूर्धातस्यैष गुणशब्दः । ते तं शब्दं श्रुत्वा विस्मयमापन्नाः । पश्चाद्राजा मूर्धातो निर्गतस्तस्माद्देवनगराद्

तेषां देवानामसुरैर्भग्नकानां स्वं च कायं संनह्य। धर्मता च पुनरेषां देवासुराणां युध्यतां रथा वैहायसेन तिष्ठन्ति। तेषामन्योन्यं न कस्यचिदधिको वा हीनो वा। राज्ञो मूर्धातस्य सर्वेषामप्यसुराणां वैहायसमभ्युद्गम्योपरिस्थितः। पश्चात् तेऽसुराः कथयन्ति—क एषोऽस्माकमुपरिविहायसमभ्युद्गतः? यतस्तैः श्रुतम्—मनुष्यराजा एष मूर्धातो नाम। पश्चात् ते
5 संलक्षयन्ति—पुण्यविपाकमहेशाख्योऽयं सत्त्वो यस्यास्माकमुपरिवैहायसं रथो गच्छति। जिता भग्नाः पराजिताः परापृष्ठीकृता आसुरीं पुरीं प्रविष्टाः। पश्चाद्राजा मूर्धातः कथयति—कस्य जयः? यतोऽमात्याः कथयन्ति देवस्य जयः। स राजा संलक्षयति—अहमेव देवानां त्रायस्त्रिंशानां सकाशादभ्यधिकः। तस्य राज्ञो मूर्धातस्यैतदभवत्—एतदस्ति मे जम्बुद्वीपः, अस्ति मे सप्त रत्नानि, अस्ति मे सहस्रं पुत्राणाम्, वृष्टं मेऽन्तःपुरे सप्ताहं हिरण्यवर्षम्, समनुशिष्टं मे
10 पूर्वविदेहम्, समनुशिष्टं मेऽपरगोदानीयं द्वीपम्, समनुशिष्टं मे उत्तरकुरुषु स्वकं भटबलाग्रम्, अधिष्ठितं मेऽस्ति देवांस्त्रायस्त्रिंशान्, प्रविष्टोऽस्मि सुधर्मां देवसभाम्, दत्तं मे शक्रेण देवेन्द्रेणार्धासनम्। अहो बताहं शक्रं देवानामिन्द्रमस्मात् स्थानाच्च्यावयित्वा स्वयमेव देवानां च मनुष्याणां च राज्यैश्वर्याधिपत्यं कारयेयम्। सहचित्तोत्पादाद्राजा मूर्धातस्तस्मात् ऋद्धितः
C 224 परिभ्रष्टो जम्बुद्वीपेषु प्रत्यष्ठात्। खरमाबाधं स्पृष्टवान्। प्रगाढां वेदनां मरणान्तिकीम्। अथ
15 राज्ञो मूर्धातस्यामात्यगणमहामात्या राज्यकर्तारो मन्त्रसहजीविनो येन राजा मूर्धातस्तेनोपसंक्रान्ताः। उपसंक्रम्य राजानं मूर्धातमिदमवोचन्—भविष्यन्ति खलु देवस्यात्ययात् पश्चिमा जनपदाः? परिपृष्टवन्तः—राज्ञा मूर्धातेन मरणसमये किं व्याकृतम्? सचेद् वो श्रामण्यो ममात्ययात् कश्चिदुपसंक्रम्यैवं पृच्छेत्—किं भवन्तो राज्ञा मूर्धातेन मरणसमये व्याकृतम्, तेषामिदं स्याद्वचनीयम्—राजा भवन्तो मूर्धातः सप्तभी रत्नैः समन्वागतोऽभूत्। चतसृभिश्च
20 मानुषिकाभी ऋद्धिभिश्चतुर्षु द्वीपेषु राज्यैश्वर्याधिपत्यं कारयित्वा देवांस्त्रायस्त्रिंशानधिरूढः। अतृप्त एव पञ्चानां कामगुणानां कालगतः।

न कार्षापणवर्षेण तृप्तिः कामेषु विद्यते।
अल्पास्वादान् बहुदुःखान् कामान् विज्ञाय पण्डितः॥ ४॥

अपि दिव्येषु कामेषु रतिं नैवाधिगच्छति।
25 तृष्णाक्षये रतो भवति सम्यक्संबुद्धश्रावकः॥ ५॥

पर्वतोऽपि सुवर्णस्य समो हिमवता भवेत्।
नालमेकस्य तद्वित्तमिति विद्वान् समाचरेत्॥ ६॥

यः प्रेक्षति दुःखमितोनिदानं
कामेषु जातु स कथं रमते।
30 लोके हि शल्यमुपाधिं विदित्वा
तस्यैव धीरो विनयाय शिक्षेत्॥ ७॥

यदा च पुनस्तेन जनकायेन श्रुतं राजा मूर्धातो ग्लानो मरणावस्थित इति, ततस्ते-ऽमात्या जनपदाश्चानेकानि प्राणिशतसहस्राणि राजानं मूर्धातमुपसंक्रम्य दर्शनाय। यतस्तेन राज्ञा तस्य जनस्य तावदेवंविधा धर्मदेशना कृता—कामेष्वादीनवकथा गृहाश्रमपदस्यादीनवो भाषितः, तथा कामो जुगुप्सितो यथा अनेकानि प्राणिशतसहस्राणि ऋषीणामन्तिके प्रव्रज्य गृहाश्रमपदान्यपहाय वनं संश्रिताः, ऋषिभिः प्रव्रजित्वा चत्वारि ब्रह्मविहारान् भावयित्वा 5 कामेषु कामच्छन्दं प्रहाय तद्बहुलविहारिणो ब्रह्मलोकसभागतायामुपपन्नाः। यावच्च आनन्द मूर्धातः कुमारक्रीडायां क्रीडितवान्, यावच्च यौवराज्यं यावच्च महाराज्यं यावच्च जम्बुद्वीपे C 225 यावच्च पूर्वविदेहे द्वीपे यावच्चापरगोदानीये द्वीपे यावच्चोत्तरकुरुषु यावच्च सप्तसु काञ्चनमयेषु पर्वतेषु यावच्च देवांस्त्रायस्त्रिंशानधिरूढः, अत्रान्तरे चतुर्दशोत्तरं शक्रशतं च्युतम्। शक्रस्य भिक्षवो देवानामिन्द्रस्यायुषः प्रमाणं यन्मनुष्याणां वर्षमेकं देवानां त्रायस्त्रिंशानामेकरात्रिं- 10 दिवसम्। तेन रात्रिंदिवसेन त्रिंशद्रात्रकेन मासेन द्वादशमासेन संवत्सरेण दिव्यं वर्ष-सहस्रं देवानां त्रायस्त्रिंशानामायुषः प्रमाणम्। तद्भवति मानुषिकया गणनया तिस्रो वर्षलक्षाः षष्टिश्च वर्षसहस्राणि॥

यस्मिन्नानन्द समये राजा मूर्धातो देवांस्त्रायस्त्रिंशानधिरूढः, एवंविधं चित्तमुत्पा-दितम्—अहो बत मे शक्रो देवानामिन्द्रोऽर्धासनेनोपनिमन्त्रयेत्, काश्यपो भिक्षुस्तेन कालेन 15 तेन समयेन शक्रो देवानामिन्द्रो बभूव। यस्मिन् खल्वानन्द समये राज्ञो मूर्धातस्यैवंविधं चित्तमुत्पन्नम्—यन्न्वहं शक्रं देवानामिन्द्रमस्मात् स्थानाच्च्यावयित्वा स्वयमेव देवानां च मनु-ष्याणां च राज्यैश्वर्याधिपत्यं कारयेयम्, काश्यपः सम्यक्संबुद्धस्तेन कालेन तेन समयेन शक्रो देवानामिन्द्रो बभूव। महेशाख्ये सत्त्वे चित्तं प्रदूषितम्, तस्माद्दद्धेः परिभ्रष्टो जम्बु-द्वीपे प्रत्यष्ठात्, खरमाबाधं स्पृष्टवान्, प्रगाढां वेदनां मरणान्तिकीम्। योऽसौ राजा मूर्धातः, 20 अहमेवानन्द तेन कालेन तेन समयेन। तत्र तावन्मया आनन्द सरागेण सद्वेषेण समोहेन अपरिमुक्तेन जातिजराव्याधिमरणशोकपरिदेवदुःखदौर्मनस्योपायासधर्मेण मरणकालसमये ताव-देवंविधा परिकथा कृता यदनेकानि प्राणिशतसहस्राणि गृहाश्रममपहाय ऋषिभ्यः प्रव्रजित्वा कामेषु कामच्छन्दं व्यपहाय तद्बहुलविहारिणो ब्रह्मलोकमुपपादिताः। इदानीं सर्वज्ञेनानुत्तर-ज्ञानज्ञेयवशिप्राप्तेन निर्वाणाय संप्रस्थितेन तावदेवंविधा धर्मदेशना कृता, यदनेकानि देवता- 25 C 226 शतसहस्राणि सत्येषु प्रतिष्ठापितानि। अनेकानि ऋषिशतसहस्राणि एतभिक्षव इति प्रव्रजि-तानि। तैर्युज्यद्भिर्घटद्भिर्व्यायच्छद्भिः सर्वक्लेशप्रहाणादर्हत्त्वं प्राप्तम्। अनेकदेवनागयक्ष-गन्धर्वासुरगरुडकिन्नरमहोरगाः शरणगमनशिक्षापदेषु व्यवस्थापिताः। अनेकानि वैशालि-कानि प्राणिशतसहस्राणि येषां केचित्स्रोतापत्तिफले व्यवस्थापिताः, केचित् सकृदागामिफले, केचिदनागामिफले, कैश्चित् प्रव्रजित्वाऽर्हत्त्वं प्राप्तम्, कैश्चित् श्रावकबोधौ, कैश्चित् प्रत्येक- 30 बोधौ, कैश्चिदनुत्तरायां सम्यक्संबोधौ चित्तमुत्पादितानि, कैश्चिच्छरणगमनशिक्षापदानि गृहीतानि॥

भिक्षवः संशयजाताः सर्वसंशयच्छेत्तारं बुद्धं भगवन्तं पृच्छन्ति—कानि भदन्त कर्माणि कृतानि राज्ञा मूर्धातेन येषां कर्मणां विपाकेन सहचित्तोत्पादादेव सप्ताहमन्तःपुरे हिरण्यवर्षं वृष्टम् ? भगवानाह—

भूतपूर्वं भिक्षवोऽतीतेऽध्वनि सर्वाभिभूर्नाम तथागतोऽर्हन् लोके उत्पन्नो विद्याचरण-
5 संपन्नः सुगतो लोकविदनुत्तरः पुरुषदम्यसारथिः शास्ता देवमनुष्याणां बुद्धो भगवान्। तेन खलु समयेन अन्यतरः श्रेष्ठिदारकोऽचिरप्रतिष्ठितः। तत्र विषये धर्मता—या अचिरोढा दारिका भर्तरि प्रवहणकेन प्रतिप्रदीयते, सा चतूरत्नमयैः पुष्पैरवकीर्य बद्धका स्वामिने प्रदीयते। सा च भर्तारमादाय स्वगृहं गच्छति। स च श्रेष्ठिदारकश्चतूरत्नमयानि पुष्पाणि प्रतिगृह्य यानमधिरुह्य श्वशुरगृहमनुप्रस्थितः। तस्य गच्छतोऽभिमुखं सर्वाभिभूः सम्य-
10 क्संबुद्धो जनपदेषु चर्यां चरन्ननुपूर्वेणाभ्यागतः। तं दृष्ट्वा द्वात्रिंशल्लक्षणालंकृतमसेचनकदर्शन-मतीव प्रसाद उत्पन्नः। यतोऽसौ प्रसादीकृतचेता यानादवतीर्य तं भगवन्तं तैश्चतूरत्नमयैः
C 227 पुष्पैरवकिरति। तानि सर्वाभिभुवा सम्यक्संबुद्धेनाधिष्ठितानि तथा यथा शकटचक्रमात्रा-ण्यभिनिर्वृत्तानि। तानि वितानं बद्ध्वा गच्छतोऽनुगच्छन्ति, तिष्ठतस्तिष्ठन्ति। स प्रसादजातो गाथां भाषते—

15 अनेन दानेन महद्गतेन
बुद्धो भवेयं सुगतः स्वयंभूः।
तीर्णश्च तारयेयं महाजनौघान्
अतारिता ये पूर्वकैर्जिनेन्द्रैः॥ ८॥

सर्वाभिभूर्मे भगवान् महर्षि-
20 रवकीर्णः पुष्पैः सुमनोरमैश्च।
प्रणिधिश्च मे तत्र कृता उदारा
आकाङ्क्षता वा इदमग्रबोधिम्॥ ९॥

तस्यैव कर्मणो विपाकतो मे
प्राप्ता हि मे बोधिः शिवा अनुत्तरा।
25 वृष्टं च सप्ताहहिरण्यवर्षं
मूर्धातस्य राज्ञो महाबलस्य॥ १०॥

तस्यैव कर्मणो विपाकतो मे नगरमपि सौवर्णकाञ्चनं बभूव महासुदर्शनस्य रमणीया कुशावती नाम पुरी बभूव॥

भिक्षवः संशयजाताः सर्वसंशयच्छेत्तारं बुद्धं भगवन्तं पृच्छन्ति—कीदृशं भदन्त
30 राज्ञा मूर्धातेन कर्म कृतं यस्य कर्मणो विपाकेन चतुर्षु द्वीपेषु राज्यैश्वर्याधिपत्यं कारितम्, देवांस्त्रायस्त्रिंशानधिरूढः ? भगवानाह—

भूतपूर्वं भिक्षवोऽतीतेऽध्वनि विपश्यी नाम तथागतोऽर्हन् सम्यक्संबुद्धः लोके उत्पन्नः । अथ स विपश्यी सम्यक्संबुद्धो जनपदेषु चर्यां चरमाणोऽनुपूर्वेण बन्धुमतीं राजधानीमनुप्राप्तः । अथ विपश्यी सम्यक्संबुद्धः पूर्वाह्णे निवास्य पात्रचीवरमादाय बन्धुमतीं पिण्डाय प्राविशत् । तत्रान्यतरश्चौत्करिको नाम वणिक् । भगवन्तं विपश्यिनमसेचनकदर्शनरूपं दृष्ट्वा अधिकः प्रसाद उत्पन्नः । प्रसादजातेन तस्य मुद्गानां मुष्टिं गृहीत्वा पात्रे 5 प्रक्षिप्ता । ततो मुद्गाश्चत्वारः पात्रे पतिताः, एकः कण्टकमाहत्य भूमौ पतितः । अवशिष्टं नैवं संप्राप्तं पात्रम्, असंप्राप्ता एव भूमौ पतिताः । ततो वणिक् प्रसादजातः प्रणिधिं करोति—

C 223

अनेन दानेन महद्गतेन
　　बुद्धो भवेयं सुगतः स्वयंभूः । 10
तीर्णश्च तारयेयं महाजनौघान्
　　न तारिता ये पूर्वकैर्जिनेन्द्रैः ॥ ११ ॥

भगवानाह—योऽसौ औत्करिको वणिक्, अहमेव तेन कालेन तेन समयेन । यन्मया विपश्यिनः सम्यक्संबुद्धस्य प्रसादजातेन मुद्गानां मुष्टिः पात्रे प्रक्षिप्ता, तस्माच्चत्वारो मुद्गाः पात्रे पतिता अवशिष्टा भूमौ पतिताः, तस्य कर्मणो विपाकेन चतुर्षु द्वीपेषु राज्यैश्वर्याधिपत्यं 15 कारितम् । यश्चासौ मुद्गः पात्रकण्टकमाहत्य भूमौ पतितः, तस्य कर्मणो विपाकेन त्रायस्त्रिंशान् देवानधिरूढः । सचेद्भिक्षवः स मुद्गः पात्रे पतितोऽभविष्यन्न भूमौ, स्थानमेतद्विद्यते यद्देवेषु च मनुष्येषु च राज्यैश्वर्याधिपत्यं कारितमभविष्यत् । योऽसौ औत्करिको वणिक् तेन कालेन तेन समयेन, स एष राजा मूर्धातः । यो मूर्धातो राजा, अहमेव स तेन कालेन तेन समयेन । यस्मादेवं बुद्धे भगवति महाकारुणिके काराः कृता अत्यर्थं महाफला भवन्ति 20 महानुशंसा महाद्युतयो महावैस्तारिका इति, तस्माद्भवबोधिः । किं करणीयम्? बुद्धे धर्मे संघे काराः करणीयाः सम्यक्प्रणिधानानि च करणीयानीति ॥

इदमवोचद्भगवान् । आत्तमनसस्ते भिक्षवो भगवतो भाषितमभ्यनन्दन् ॥

इति श्रीदिव्यावदाने मान्धातावदानं सप्तदशमम् ॥

———

# १८ धर्मरुच्यवदानम् ।

एवं मया श्रुतम् । एकस्मिन् समये भगवान् श्रावस्त्यां विहरति स्म जेतवनेऽनाथ-
पिण्डदस्यारामे । तेन खलु समयेन पञ्चमात्राणि वणिक्शतानि भाण्डं समुदानीय अनुपूर्वेण
5 ग्रामनिगमपल्लीपत्तनराजधानीषु चञ्चूर्यमाणानि महासमुद्रतटमनुप्राप्तानि । तैर्निपुणतः
C 229 सामुद्रं यानपात्रं प्रतिपादितम् । यतो वणिजस्तं महासमुद्रं दृष्ट्वा संभिन्नमनसो न प्रसहन्ते
समवतरितुम् । पश्चात्तैर्वणिग्भिः कर्णधार उक्तः—उद्घोषय नः पुरुष महासमुद्रस्य भूतं
वर्णम् । यतः कर्णधार उद्घोषयितुं प्रवृत्तः—शृण्वन्तु भवन्तो जम्बुद्वीपका मनुष्याः,
सन्त्यस्मिन् महासमुद्रे एवंविधानि रत्नानि, तद्यथा—मणयो मुक्ता वैडूर्यशङ्खशिला प्रवालो
10 रजतं जातरूपमश्मगर्भो मुसारगल्वो लोहितिका दक्षिणावर्ताः । य इच्छति एवंरूपै रत्नैरात्मानं
सम्यक्सुखेन प्रीणयितुं मातापितरौ पुत्रदारं दासीदासकर्मकरपौरुषेयं मित्रामात्यज्ञातिसालो-
हितम्, कालेन च कालं दक्षिणीयेभ्यः श्रमणब्राह्मणेभ्यो दक्षिणां प्रतिष्ठापयितुमूर्ध्वगामिनीं
सौभाग्यकरीं सुखविपाकामायत्यां स्वर्गसंवर्तनीम्, सोऽस्मिन् महासमुद्रे अवतरतु धनहेतोः ।
एवमुक्ते च पुनः सर्व एव सत्त्वाः संपत्तिकामा विपत्तिप्रतिकूलास्तं श्रुत्वा तस्मिन् महासमुद्रे
15 व्यवसिताः समवतरितुम् । यतस्तद्वहनमतिप्रभूतैर्मनुष्यैरतिभारेण च आक्रान्तत्वात् तत्रैवाव-
सीदति । ततः कर्णधारेणोक्तम्—असह्यं वहनम् । यतो वणिजः कथयन्ति—कस्येदानीं वक्ष्यामः
वहनात् प्रत्यवतरस्वेति । तैर्वणिग्भिः कर्णधारस्योक्तम्—महासमुद्रस्य भूतं वर्णमुद्घोषयत ।
ततः स उद्घोषयितुं प्रवृत्तः—शृण्वन्तु भवन्तो जम्बुद्वीपका मनुष्याः, सन्त्यस्मिन् महा-
समुद्रे इमानि एवंरूपाणि महान्ति महाभयानि, तद्यथा तिमिभयं तिमिंगिलभयमूर्मिभयं
20 कूर्मभयं स्थले उत्सीदनभयं जले संसीदनभयमन्तर्जलगतानां पर्वतानामाघट्टनभयं कालिका-
वातभयम् । चौरा अपि आगच्छन्ति नीलवाससो धनहारिणः । येन चात्मनो जीवित-
C 230 परित्यागो व्यवस्थितो मातापितरौ पुत्रदारं दासीदासकर्मकरपौरुषेयं मित्रामात्यज्ञातिसालोहितं
चित्रं च जम्बुद्वीपं परित्यक्तुम्, स महासमुद्रमवतरतु । अल्पाः शूरा बहवः कातराः । तं
श्रुत्वा तथोद्घुष्य तु तस्माद्यानपात्रादवतीर्णा बहवः, केचिदवशिष्टाः । ततस्तैर्वणिग्भिर्वहन-
25 स्यैकं वरत्रं छिन्नम् । पश्चाद् द्वौ त्रयो यावदनुपूर्वेण सर्वे वरत्राश्छिन्नाः । तासु छिन्नासु
तद्वहनं महाकर्णधारसंप्रेरितं गगने महावातसंप्रेरितो मेघ इव बलवद्वायुसंप्रेरितं क्षिप्रमेव
संप्रस्थितम् । यावद्रत्नद्वीपमनुप्राप्तः । स तं प्रदेशमनुप्राप्तानां कर्णधारः कथयति—सन्त्यस्मिन्
रत्नद्वीपे काचमणयो रत्नसदृशाः, ते भवद्भिरुपपरीक्ष्योपपरीक्ष्य गृहीतव्याः । मा वः पश्चा-
ज्जम्बुद्वीपगतानां ताप्यं भविष्यति । तत्रैव च क्रौञ्चकुमारिका नाम स्त्रियो भवन्ति । ताः
पुरुषं लब्ध्वा तथोपलांस्ताडयन्ति, यथा अत्रैवानयेन व्यसनमापद्यते । अत्रैव च मदनी-
30 यानि फलानि भवन्ति । तानि यो भक्षयति, स सप्त रात्रिंदिवसान् सुप्तस्तिष्ठति । अस्मिन्नेव
च रत्नद्वीपे सप्ताहात् परेण अमनुष्या न सहन्ते, तावद्विधान् विपरीतान् वायूनुत्पादयन्ति
यैर्वहनमपह्रियते यथापि तदकृतकार्याणाम् । तानि भवद्भिर्लब्धानि न भक्षयितव्यानि ।

तच्छ्रुत्वा वणिजोऽवहितमनसोऽप्रमादेनावस्थिताः। प्राप्य च तं रत्नद्वीपं प्रयत्नमास्थाय रत्नान्वेषणं कृत्वा अनुपूर्वेणोपपरीक्ष्य रत्नानां तद्वहनं पूरितं तद्यथा यवानां वा यवसस्यानां वा मुद्गानां वा माषाणां वा। वहनं पूरयित्वा तेऽनुकूलं जम्बुद्वीपाभिमुखेन वायुना संप्रस्थिताः। महासमुद्रे च त्रिभिः स्कन्धैः प्राणिनः संमिश्रिताः। प्रथमे योजनशतिका आत्मभावाः, द्वित्रियोजनशतिका आत्मभावाः। द्वितीये स्कन्धेऽष्टयोजनशतिका आत्मभावा नवदशयाव- 5 C 231
च्चतुर्दशयोजनशतिका आत्मभावाः। तृतीये स्कन्धे पञ्चदशयोजनशतिका आत्मभावाः, षोडशयोजनशतिका यावदेकविंशतिका आत्मभावाः। तत्र च महासमुद्रे ता मत्स्यजातयः परस्परान्योन्यभक्षणपराः। ये प्रथमायां भूमौ अवस्थिताः, ते द्वितीयभूमिस्थैर्भक्ष्यन्ते। ये द्वितीयभूमिस्थाः, ते तृतीयभूमिस्थैर्भक्ष्यन्ते। तत्र तिमिंगिलो नाम मत्स्यस्तृतीयादुदकस्कन्धा-
दभ्युद्गम्य उपरिमन्दकस्कन्धमादाय चरति। स यस्यां वेलायां मुखमावृणोति, तस्यां वेलायां 10
महासमुद्रात् पानीयं महता वेगेनाक्षिप्तं मुखद्वारं यतो धावति। तेनैवोदकस्कन्धेनाक्षिप्ता मत्स्यकच्छपवल्लभकशुशुमारमकराद्या मत्स्यजातयो मुखद्वारेणोदरे पतन्ति। तस्यैवं चरत आत्मभावाच्छिर एवं लक्ष्यते दूरत एव, तद्यथा—पर्वतो नभःप्रमाणः। अक्षीणि चास्य दूरत एव संलक्ष्यन्ते नभसीवादित्यौ। यतस्तैर्वणिग्भिर्दूरत एवोपधारितम्। तन्महार्णवरूपमुपधार्य
चिन्तयितुं प्रवृत्ताः—किमेतद्भवन्त आदित्यद्वयस्योदयनम्? तेषामेवं चिन्तयतां तद्वहनं तस्य 15
मुखद्वारं यतो वेगेनोपहर्तुमारब्धम्। तेषां वहनं वेगेनापह्रियमाणं दृष्ट्वा आदित्यद्वयोत्पादनं च संलक्ष्य संवेग उत्पन्नः—किं भवन्तो यत् तच्छ्रूयते सप्तादित्याः कल्पसंवर्तन्यां समुदा-गमिष्यन्तीति, तदेवेदानीं प्रोदिताः स्युः। यतः कर्णधारेण तेषां विमर्शजातानामुक्तम्—यत् तद्भवन्तः श्रूयते तिमितिमिंगिल इति, तिमितिमिंगिलभयमिदम्। तत् पश्यन्तु
भवन्तः। पानीयादभ्युद्गतपर्वतवदालोक्यते एतत्तस्य शिरः। पश्यथ चैषा परा लोहितिका 20
राजिर्यदेतौ तस्योष्ठौ। पश्यथ एतामपरा अवदाता माला चैषा तस्य दन्तमाला। पश्यथ एतौ दूरत एव सूर्यवदवलोक्येते एतौ अक्षितारकौ। पुनरसौ कर्णधारो वणिजां कथयति—शृण्वन्तु भवन्तः, नास्माकमिदानीं जीवितोपायः कश्चिद्येन वयमस्माद्भयात् मुच्येम। सर्वेषामेवास्माकं मरणं प्रत्युपस्थितम्। तदिदानीं भवद्भिः किं करणीयम्?
यस्य वो यस्मिन् देवे भक्तिः स तमायाचतु। यदि तेनापि तावदायाचनेन 25
काचिद्देवता अस्माकमस्मान्महाभयाद्विमोक्षणं कुर्यात्। न चान्योऽस्ति कश्चिदुपायो जीवि-तस्य। यतस्तैर्वणिग्भिर्मरणभयभीतैः शिववरुणकुबेरमहेन्द्रोपेन्द्रादयो देवा जीवितपरित्राणार्थ- C 232
मायाचितुमारब्धाः। नैव च तेषामायाचतां तस्मान्मरणभयात् जीवितपरित्राणविशेषः कश्चित्। तथैव तद्वहनं सलिलवेगात् क्षिप्तं तिमिंगिलमुखद्वारं यतोऽपह्रियते। तत्र चोपा-
सकोऽभिरूढः। तेनोक्तम्—भवन्तः, नास्माकमस्मान्मरणभयान्मोक्षः कश्चित्। सर्वैरेवास्माभि- 30
र्मर्तव्यम्। किं तु सर्व एवैकरवेण नमो बुद्धायेति वदामः। सति मरणे बुद्धावलम्बनया स्मृत्या कालं करिष्यामः। सुगतिगमनं भविष्यति। यतस्तैर्वणिग्भिरेकरवेण नमो बुद्धायेति

प्रणामः कृतः सर्वैरेव। भगवता च जेतवनस्थेन स वादः श्रुतो दिव्येन श्रोत्रेण विशुद्धेन अतिक्रान्तमानुषेण। श्रुत्वा च पुनर्भगवता स नादस्तथा अधिष्ठितो यथा तेन तिमिंगिलेन श्रुतम्। तस्य तं नमो बुद्धायेति रावं श्रुत्वा मनसोऽमर्ष उत्पन्नो विक्लवीभूतश्च—बुद्धो बत लोक उत्पन्नः। न मम प्रतिरूपं स्यात् यदहं बुद्धस्य भगवतो नामोद्घोषं श्रुत्वा आहारमाहरे-
5 यम्। स चिन्तयितुं प्रवृत्तः—यद्यहमिदानीं सहसैव मुखद्वारं पिधास्यामि, सलिलवेग-प्रत्याहतस्य वहनस्य विनाशो भविष्यति, एतेषां चानेकानां जीवितविनाशः। यन्वहं मृदु-नोपक्रमेण स्वैरं स्वैरं मुखद्वारं संपिदध्याम्। ततस्तेन तिमिंगिलेनात्मीयं मुखद्वारं मृदुनोपक्रमेण स्वैरं स्वैरं पिहितम्। पश्चात् तद्वहनं तस्मान्महाग्राहमुखाद्विनिर्मुक्तमनुगुणं वायुमासाद्य तीरमनुप्राप्तम्। अथ ते वणिजस्तीरमासाद्य तद्भाण्डं शकटोष्ट्रगोगर्दभादिभिः पूरयित्वा अनु-
10 पूर्वेण ग्रामनिगमपल्लीपत्तनादिषु चञ्चूर्यमाणाः श्रावस्तीमनुप्राप्ताः। ते तत्र गत्वा संलक्षयन्ति—धर्मतैषा यस्य नाम्ना वहनं संसिद्धयानपात्रमागच्छति, तस्यैव तानि रत्नानि गम्यानि भवन्ति। यन्नु वयमेतानि रत्नानि बुद्धस्य भगवतो दद्यामः। ते तानि रत्नानि संगृह्य भगवतः सकाश-मुपगताः। अनुपूर्वेण भगवतः पादौ शिरसा वन्दित्वा भगवतः कथयन्ति—भगवन्, अस्माकं

C 233

समुद्रे यानपात्रेणावतीर्णानां तिमिंगिलग्राहेण तस्मिन् यानपात्रेऽपह्रियमाणे जीवितविनाशे
15 प्रत्युपस्थिते भगवतः स्मरणपरायणानां नामग्रहणं तस्मात् महाग्राहमुखाद्विनिर्मुक्तम्, ततो वयं भगवन् संसिद्धयानपात्राः क्षेमस्वस्तिना इहागताः। धर्मता चैषा यस्य नाम्ना वहनं संसिद्धयानपात्रा आगच्छन्ति, तस्य तद्गम्यं भवति। तद्वयं भगवतो नामग्रहणेन मरणभया-दुत्तीर्णाः। तदस्माकमेतानि रत्नानि भगवान् गृह्णातु। भगवानाह—येन मयेन्द्राय (?) बलबोध्यङ्ग-रत्नान्यधिगतानि, किं तथागतस्य भूयः प्राकृतरत्नैः करणीयम्? यदि चेच्छत अस्मच्छासने
20 वत्साः प्रव्रजितुम्, आगच्छथ। यतस्ते संलक्षयन्ति वणिजः—यदस्माकं किंचित् जीवितम्, तत्सर्वं बुद्धस्य भगवतस्तेजसा। यद्वयमेतानि रत्नानि त्यक्त्वा भगवतोऽन्तिके प्रव्रजेम इति। पश्चात् ते तानि रत्नानि मातापितृभ्यः पुत्रदारदासीदासकर्मकरमित्रामात्यज्ञातिसालोहितेभ्यो यथान्यायतः संविभज्य प्रव्रजिताः। प्रव्रज्य तैर्युज्यद्भिर्घटद्भिर्व्यायच्छद्भिर्यावदर्हत्त्वं साक्षात्कृतम्॥

यतो भिक्षवः संशयजाताः सर्वसंशयच्छेत्तारं बुद्धं भगवन्तं पृच्छन्ति—कीदृशानि
25 कर्माणि भगवन्, एभिर्वणिग्भिः कृतान्युपचितानि, येषां कर्मणां विपाकेन भगवानारागितो न विरागितः? भगवानाह—

भूतपूर्वं भिक्षवः काश्यपः सम्यक्संबुद्धो लोक उत्पन्नोऽभूत्। तस्य च शासने एत एव च प्रव्रजिता अभूवन्। तत्र प्रव्रज्य च न कश्चित् तद्रूपो गुणगणोऽधिगतो नान्यत्र सब्रह्मचारिणामुद्दिष्टमधीतं स्वाध्यायितं च। मरणकालसमये प्रणिधानं कृतवन्तः—यदस्माभिः
30 काश्यपं सम्यक्संबुद्धमासाद्योद्दिष्टमधीतं स्वाध्यायितं च, न कश्चित् गुणगणोऽधिगतोऽस्ति, अस्य कर्मणो विपाकेन वयं योऽसौ अनागतेऽध्वनि काश्यपेन सम्यक्संबुद्धेन शाक्यमुनिनर्मा सम्यक्संबुद्धो व्याकृतः, तं वयमारागयेमो न विरागयेमः॥

भगवानाह—किं मन्यध्वे भिक्षवो यानि तानि पञ्चभिक्षुशतान्यतीतेऽध्वन्यासन् काश्यपस्य सम्यक्संबुद्धस्य शासने प्रव्रजितानि, एतावन्त्येतानि पञ्चभिक्षुशतानि । तदा चैषामिन्द्रियाणि परिपाचितानि, एतर्हि अर्हत्त्वं साक्षात्कृतम् । यश्चासौ महासमुद्रे तिमितिमिंगिलो नाम मत्स्यो बुद्धशब्दं श्रुत्वा अनाहारतायां व्यवस्थितः, स स्वभावेनैव तीक्ष्णाग्नितया क्षुद्दुःखस्यासहत्वाच्च्युतः कालगतः । तेन श्रावस्त्यां षट्कर्मनिरते ब्राह्मणकुले प्रतिसंधिर्गृहीतः । तस्य तच्छरीरं कलेवरं महासमुद्रे उत्प्लुतम् । नागैश्च तस्य स्वभवनसमीपस्थस्य गन्धमसहद्भिरन्यतो विक्षिप्तम् । यत्र च विक्षिप्तं तत्रापि समीपे नागस्यैव भवनम् । तेनापि गन्धमसहता अन्यतः क्षिप्तम् । एवं क्षिप्तेन पारंपर्येण तत् कलेवरं महासमुद्रतटं समुदानीतम् । यतोऽनन्तरं समुद्रवेलयोत्सार्य स्थले प्रक्षिप्तम् । तच्चानेकैः काकगृध्रश्वशृगालश्वापदाद्यैः पक्षिभिस्तत्समुच्छ्रितैश्च कृमिभिर्भक्ष्यमाणमस्थिकरङ्कजीर्णमांसं श्वेतं श्वेतं व्यवस्थितम् । अस्यां च श्रावस्त्यां तस्य ब्राह्मणस्य यदा पत्नी अन्तर्वर्तिनी संवृत्ता, तदेव तस्या गर्भोत्पादादतीव क्षुद्दुःखेन पीड्यमानया गृहस्वाम्यभिहितः—आर्यपुत्र, क्षुद्दुःखेनातीव बाध्ये । तस्या एवं वदन्त्या गृहस्वामिनोक्तम्—भद्रे, यदस्मद्गृहेऽन्नपानं तत्सर्वमभ्यवहरस्व । तया अभ्यवहर्तुमारब्धम् । सा च तदन्नपानं सर्वमभ्यवहृत्य नैव तृप्तिमुपयाति । पुनरपि गृहस्वामिनं विज्ञापयति—आर्यपुत्र, नैव तृप्तिमुपगच्छामि । यतस्तेन तिरःप्रातिवेश्यसुहृत्स्वजनादिभ्योऽन्तिकदन्नपानमन्विष्य तस्या अनुप्रदत्तम् । सा तमप्यवहृत्य नैव तृप्तिं गच्छति । भूयो गृहस्वामिनः कथयति—आर्यपुत्र, नैव तृप्तिमुपगच्छामि । यतोऽसौ ब्राह्मणः संविग्नमनाः खेदमापन्नः । किमेतद्भवन्तः स्यात्—अस्याः सत्त्वमुदरे उत्पन्नं यस्योत्पादान्नैव तृप्तिमुपयाति ? यतः स ब्राह्मणो नैमित्तकानां दर्शयित्वा संशयनिर्णयनार्थं वैद्यादीन् भूततन्त्रविदश्च—पश्यन्तु भवन्तः, इयं ब्राह्मणी किं महता रोगेणाभिभूता स्यादथ भूतग्रहाविष्टा स्यादन्यद्वा स्याद्रूपं मरणलिङ्गमनेनोपक्रमेण प्रत्युपस्थिता स्यात् । तैः श्रुत्वा तथाविध उपक्रमः कृतः । तस्या ब्राह्मण्यास्ते इन्द्रियाणामन्यथात्वमुपलक्षयन्ति । यदा अस्या इन्द्रियाणामन्यथात्वं नोपलक्षयन्ति, तदा तैर्वैद्यनैमित्तकभूततन्त्रविद्भिश्चिकित्सकैः सा ब्राह्मणी पर्यनुयुक्ता—कस्मात् कालादारभ्य तवैवंविधा दीप्ताग्निता समुत्पन्ना ? तया अभिहितम्—गर्भलम्भसमकालमेव स एवंविध उपक्रमः कृतः । यतो नैमित्तकवैद्यचिकित्सकैरभिहितम्—नास्याः कश्चिदन्यस्तद्रूपो रोगो नापि भूतग्रहावेशो बाधाकर उत्पन्नः । अस्यैवैषा गर्भस्यानुभावेनैवंविधा दीप्ताग्निता । यतोऽसौ ब्राह्मण उपलब्धवृत्तान्तः स्वस्थीभूतः । सापि ब्राह्मणी नैव कदाचिदन्नपानस्य तृप्ता । अनुपूर्वेण समकालमेव पुत्रो जातः । तस्य दारकस्य जातमात्रस्य सा ब्राह्मणी विनीतक्षुद्दुःखा संवृत्ता । स दारको जातमात्र एव अत्यर्थं बुभुक्षयोपपीड्यते । तस्य बुभुक्षया पीड्यमानस्य माता स्तनं दातुं प्रवृत्ता । स च दारकः स्तनं पीत्वापि सर्वं नैव तृप्तिमुपयाति । पश्चात् तेन ब्राह्मणेन तया च ब्राह्मण्या तिरस्कृतप्रातिवेश्यस्वजनयुवत्यश्चाभ्यर्थ्य स्तनं तस्य दारकस्य दापयितुं प्रवृत्ताः ।

स च दारकः सर्वासामपि स्तनं पीत्वा नैव तृप्तिमभ्युपगच्छते। पश्चात् तेन ब्राह्मणेन तस्यार्थे छगलिका कृता। स दारकस्तस्या अपि च्छगलिकायाः क्षीरं पीत्वा जनिकायाश्च स्तनं नैव तृप्यते। तत्र गृहे कालेन कालं भिक्षवो भिक्षुण्यश्च पिण्डपातं प्रविश्य परिकथां कुर्वन्ति। स दारकस्तां परिकथां श्रुत्वा तस्यां वेलायां न रोदिति, अवहितश्रोत्रस्तूष्णीभूत्वा
5 तां धर्मश्रवणकथां शृणोति। प्रत्यवसृतेषु भिक्षुभिक्षुणीषु च पुनः पिपासादुःखं प्रतिसंवेद-
C 236 यमानो रोदितुं प्रवृत्तः। तैः संलक्षितम्—धर्मे वत्साय रुचिरिति। तस्य धर्मरुचीति नाम प्रतिष्ठापितम्। स च दारकोऽनुपूर्वेण मासार्धमासादीनामत्ययाद्भुञ्जानो नैव कदाचिदन्न-पानस्य तृप्यति। यदा च विशिष्टे वयसि स्थितः, तदा तस्य मातापितृभ्यां भैक्षभाजनं दत्तम्। गच्छ वत्स, इदं ते भैक्षभाजनम्। गृहीत्वा श्रावस्त्यां भिक्षां पर्यटित्वा आहार-
10 कृत्यं कुरु। यतः स दारको भैक्षभाजनं गृहीत्वा श्रावस्त्यां भैक्षं पर्यटति। पर्यटन्नेव च भुक्त्वा भुक्त्वा अतृप्यमान एव गृहमागच्छति। यतोऽसौ संलक्षयति—किं मया कर्म कृतं यस्य कर्मणो विपाकेन न कदाचित् वितृप्यमान आहारमारागयामि? स विषण्णचेताश्चिन्त-यितुं प्रवृत्तः—किं तावदग्निप्रवेशं करोमि, उत जलप्रवेशमथ तटप्रपातं करोमि? स एवं चिन्तया स्थितः। उपासकेनोपलक्षितः। तस्य तेनोक्तम्—किं चिन्तापर एवं तिष्ठसि? गच्छ
15 त्वम्। महान्तं बुद्धशासनं महर्द्धिकं महानुभावम्। तत्र प्रव्रज। तत्र च त्वं प्रव्रजितः कुशलानां धर्माणां संचयं करिष्यसि। अकुशलाश्च ते धर्मा येऽस्मिन्नपि जन्मनि संचिता भविष्यन्ति, ते तन्वीभविष्यन्ति। यदि तावद्गुणगणानधिगमिष्यसि, पर्यन्तीकृतस्ते संसारो भविष्यति। अथ स महात्मा उपासकेन चोदितो जेतवनं गतः। जेतवनं गत्वा तत्र भिक्षून् पाठस्वाध्यायमनसिकारोद्युक्तान् दृष्ट्वा अतीव प्रसादजातः। भिक्षुमुपसंक्रम्यैवं वदति—
20 आर्य, प्रव्रजितुमिच्छामि। यतो भिक्षुभिरुक्तः—मातापितृभ्यामनुज्ञातोऽसि? स कथयति—नाहं मातापितृभ्यामनुज्ञातः। तैरुक्तः—गच्छ वत्स, मातापितृभ्यामनुज्ञां मार्गस्व। यतः स मातापितृभ्यां सकाशादनुज्ञां मार्गितुं प्रवृत्तः। स मातापितृभ्यामभिहितः—गच्छ वत्स, यथाभिप्रेतं कुरु। स लब्धानुज्ञो भिक्षुसकाशं गतः। पश्चाद्भिक्षुणा प्रव्राजितः। तत्र च भिक्षूणां कदाचित् पिण्डपातो भवति, कदाचित् निमन्त्रणं भवति। स
25 च यस्मिन् दिवसे पिण्डपातो भवति, तत्रोपाध्यायेनोच्यते—वत्स, किं तृप्तोऽसि उत न?
C 237 स उपाध्यायस्य कथयति—नास्ति तृप्तिः। यत उपाध्यायेनास्य संलक्षितः—तरुणवयसा प्रव्रजितो दीप्ताग्नितया न तृप्तिमुपयाति। स आत्मीयादपि पिण्डपातात् तस्य संविभागं प्रारब्धः कर्तुम्। पुनश्च पृच्छति—वत्स, किमिदानीं तृप्तोऽसि? अथ स तमुपाध्यायं वदति—न तृप्तोऽस्मि। यत उपाध्यायस्तं श्रुत्वा सप्रेमान् भिक्षूनन्यांश्च सार्धविहारिणः प्रारब्धो
30 वक्तुम्। यतः समानोपाध्यायैः समानाचार्यैरन्यैश्च सप्रेमकैर्भिक्षुभिरुपसंहार आरब्धः कर्तुम्। तेषामन्तिकाल्लभमानो नैव तृप्तिमुपयाति। यदा च निमन्त्रणं भवति, तदापि ते तथैव तस्योपसंहारं कुर्वन्ति। दानपतिरपि विदित्वा यद्यदधिकं तत्तदस्मै दत्वा आगच्छति।

अथ पानकं भवति तदपि तथैव यदधिकं भवति तत्तस्यानुप्रदीयते । तस्य च यतः प्रव्रजितस्य न कदाचिदन्नपानेन कुक्षिः पूर्णः। तेन खलु समयेन अन्यतमेन गृहपतिना बुद्धप्रमुखो भिक्षुसंघ उपनिमन्त्रितः। भगवान् भिक्षुसंघेन सार्धमन्तर्गृहं प्रविष्टः पूर्वाह्णे निवास्य पात्रचीवरमादाय। धर्मरुचिर्विहारे उपधिवारिको व्यवस्थापितः॥

तत्र च श्रावस्त्यामन्यतमो गृहपतिः प्रतिवसति। तेन चैवमुपलब्धं योऽसंविदितमेव 5 बुद्धप्रमुखं भिक्षुसंघं भोजयति स सहसैव भोगैरभ्युद्गच्छति। यतस्तेन पञ्चमात्राणां भिक्षुशतानामाहारः समुदानीतः। स तस्याहारस्य शकटं पूरयित्वा प्रणीतप्रणीतस्य शुचिनः सार्धं सर्वरूपैर्मित्रस्वजनसहायो बुद्धप्रमुखं भिक्षुसंघं भोजयिष्यामीति विहारं निर्गतः। स पश्यति तस्मिन् जेतवने भिक्षव एव न सन्ति। तेन तत्रान्वाहिण्डता उपधिवारिको धर्मरुचिर्दृष्टः। तस्य तेन गृहपतिनोक्तम्—आर्य, क्व गता भिक्षवः? स कथयति—अन्तर्गृहे उप- 10 निमन्त्रिताः प्रविष्टाः। स गृहपतिस्तच्छ्रुत्वा दुर्मना व्यवस्थितः—कष्टम्, एवमस्माकं विफलः परिश्रमो जातः। संचिन्त्य च तस्य धर्मरुचेः कथयति—आर्य, भक्ष त्वमपि तावत्। स कथयति—यदि ते महात्मन् परित्यक्तं भवति। ततस्तेन गृहपतिना संलक्षयित्वा येनाहारेणैकस्य भिक्षोः पर्याप्तं भवति, तावदन्नपानं शकटं गृहीत्वा तं धर्मरुचिं परिवेषयितुं प्रवृत्तः। तेन धर्मरुचिना भोक्तुमारब्धं तन्निरवशिष्टम्। नैव तृप्तः। गृहपतिः संलक्षयति—नायं तृप्तः। 15 तेन उच्यते—आर्य, पुनर्भोक्ष्यसे? स कथयति—महात्मन्, यदि ते परित्यक्तम्। ततस्तेन गृहपतिना भूयस्तस्मात् शकटाद्येन भिक्षुद्वयस्याहारेण पर्याप्तं स्यात्, तावदन्नपानं शकटं गृहीत्वा भोजयितुं प्रवृत्तः। यतो धर्मरुचिस्तदपि भुक्त्वा नैव तृप्तः। गृहपतिना भूयः संलक्षितम्—नायं तृप्तः। तेनोक्तम्—आर्य, पुनर्भोक्ष्यसे? स कथयति—महात्मन्, यदि ते परित्यक्तम्। यतस्तस्माच्छकटादन्नपानं गृहीत्वा त्रयाणां भिक्षूणां पर्याप्तं स्यादिति पुनर्भोज- 20 यितुं प्रवृत्तः। स धर्मरुचिस्तदपि भुक्त्वा नैव तृप्तः। पृष्टः—आर्य, पुनर्भोक्ष्यसे? स कथयति—यदि ते परित्यक्तम्। यतः स गृहपतिस्तस्मादन्नपानं गृहीत्वा येन चतुर्णां भिक्षूणां पर्याप्तं स्यादिति पुनर्भोजयितुं प्रवृत्तः। स धर्मरुचिस्तदपि भुक्त्वा नैव तृप्तः। पृष्टः—आर्य, पुनर्भोक्ष्यसे? भूयः स कथयति—यदि ते परित्यक्तम्। यतः पुनस्तस्माच्छकटाद्येन पञ्चभिक्षूणामन्नपानैस्तृप्तिः स्यात्, तावद्गृहीत्वा पुनर्भोजयितुं प्रवृत्तः। तदपि चाभ्यवहृतम्। नैव तृप्तः। 25 विस्तरेण यावद्दशानां भिक्षूणामन्नपानेन पर्याप्तं स्यात्, तावद् भुक्त्वा नैव तृप्यते। यतस्तेन संलक्षितम्—नायं मनुष्यो मनुष्यविकारः। यतः श्रूयते पञ्चभिर्नीलवाससो यक्षशतैर्जेतवनमशून्यमिति तेषां भविष्यत्येव अन्यतमः। इति संचिन्त्य गर्भरूपाणि गृहेऽनुप्रवेशयितुं प्रवृत्तः—गच्छथ यूयं शीघ्रं गृहमेव, अहमेवैको यदि जीवामि म्रिये वेति। स गृहजनं विसर्ज्य मरणभयभीतस्तस्मात् शकटादन्नपानं गृहीत्वा परिवेषयितुमारब्धः। स च स्वैरं भुङ्क्ते। 30 गृहपतिना उक्तम्—आर्य, त्वरितत्वरितं प्रतीच्छस्व। यतस्तेन धर्मरुचिना क्षिप्रं प्रतिगृहीत्वा भोक्तुमारब्धम्। स गृहपतिस्त्वरितत्वरितं परिवेषयित्वा निरवशेषतस्तदन्नपानं शकटं दत्त्वा

C 238

C 239

दक्षिणादेशनामपि भयगृहीतोऽश्रुत्वा त्वरितत्वरितं वन्दाम्यार्येति पृष्ठमनवलोकयमानो नगरं प्रस्थितः। तस्मान्नगरात् पिण्डपातनिर्हारको भिक्षुः तस्यैव पिण्डपातं गृहीत्वा गतः। तेन तदपि भुक्तम्। तस्य धर्मरुचेर्न कदाचिद्यतो जातस्य कुक्षिः पूर्णः। तद्दिवसं चास्य तेनाहारेण तृप्तिर्जाता। तस्य च गृहपतेर्नगरं प्रविशतोऽभिमुखं भगवान् भिक्षुसंघपरिवृतः 5 संप्राप्तः। स गृहपतिर्भगवतः कथयति—भगवन्, अहं बुद्धप्रमुखं भिक्षुसंघमुद्दिश्य पञ्चानां भिक्षुशतानां तृप्तितः शकटमन्नपानस्य पूरयित्वा जेतवनं गतो बुद्धप्रमुखं भिक्षुसंघं भोजयिष्यामीति। न च मे तत्र भिक्षवो लब्धाः। एको मे भिक्षुर्दृष्टः। तेन समाख्यातं बुद्धप्रमुखं भिक्षुसंघमन्तर्गृहं उपनिमन्त्रणं प्रविष्टम्। तस्य ममैवं चित्तमुत्पन्नम्—एषोऽपि तावदेको भुङ्क्तामिति। यतस्तस्य ममानुपूर्वेण सर्वं तदन्नपानं शकटं दत्तम्। तेन सर्वं निपुणतोऽभ्यवहृतम्। 10 किं भगवन् मनुष्योऽथ वा अमनुष्यः? भगवताभिहितम्—गृहपते, भिक्षुः स धर्मरुचिर्नाम्ना। प्रामोद्यमुत्पादय, अद्य स त्वदीयेनान्नपानेन तृप्तोऽर्हत्त्वं साक्षात्करिष्यति॥

अथ भगवान् जेतवनमभ्यागतः। भगवान् संलक्षयति—कोऽसौ दानपतिर्भविष्यति योऽस्य धर्मरुचेरेतावता आहारेण प्रतिदिवसं योगोद्वहनं करिष्यति? यतोऽस्य भगवता अभिहितम्—दृष्टस्त्वया धर्मरुचे महासमुद्रः। स कथयति—नो भगवन्। यतो भगवानाह—गृहाण 15 मदीयं चीवरकर्णिकम्, पश्चात् तेऽहं महासमुद्रं दर्शयामि। यतो धर्मरुचिना भगवतश्चीवरकर्णिकोऽवलम्बितः, पश्चाद्भगवान् विततपक्ष इव हंसराजः सहचित्तोत्पादात् ऋद्ध्या धर्मरुचिं गृहीत्वा समुद्रतटमनुप्राप्तः। यस्मिंश्चास्य स्थाने तिमितिमिंगिलभूतस्यास्थिशकला तिष्ठति, तत्र नीत्वा स्थापितः। उक्तं चास्य—गच्छ वत्स, मनसिकारं चिन्तय। यतोऽसौ धर्मरुचिस्तां समीक्षितुमारब्धः। किमेतत् काष्ठं स्यादथास्थिशकला, अथ फलकिनी स्यात्। 20 स तस्माद् व्यक्तिमलभमानः पर्यन्तमन्वेषितुं प्रवृत्तः। व्यक्तिं चोपलब्धम्। स इतश्चामुतश्च तस्या अनुपार्श्वेन तां पर्येषमाणः श्रममुपगतः। न चास्य पर्यन्तमासादयति। तस्यैतदभवत्—नाहमस्य व्यक्तिं ज्ञास्यामि किमेतदिति, न च पर्यन्तमासादयिष्ये। गच्छामि, अस्मिन्नर्थे भगवन्तमेव पृच्छामि। यतोऽसौ भगवतोऽन्तिकं गत्वा भगवन्तं पृच्छति—किं तद्भगवन्? नाहं तस्य व्यक्तिमुपलभामि। यतोऽस्य भगवानाह—वत्स, अस्थिशकलैषा। 25 स कथयति—भगवन्, एवंविधोऽसौ सत्त्वो यस्येदृशी अस्थिशकला? भगवतोक्तम्—तृप्यस्व धर्मरुचे भवेभ्यः, तृप्यस्व भवोपकरणेभ्यः। तवैषा अस्थिशकला। धर्मरुचिस्तं श्रुत्वा भगवद्वचो व्याकुलितचेताः कथयति—ममैषेदृशी अस्थिशकला? तस्योक्तम्—एषा धर्मरुचे तवास्थिशकला। तथाविधमुपश्रुत्य अतीव संविग्नः। यतोऽस्य भगवता अववादो दत्तः—धर्मरुचे, इदं चेदं मनसिकुरु। इत्युक्त्वा भगवान् विततपक्ष इव राजहंस ऋद्ध्या 30 जेतवनमनुप्राप्तः। अथ धर्मरुचिना चिन्तयता मनसिकारमनुतिष्ठता उष्मगतान्युत्पादितानि मूर्धानः क्षान्तयो लौकिका अग्रधर्मा दर्शनमार्गो भावनामार्गः। स्रोतआपत्तिफलं प्राप्तम्। सकृदागामिफलमनागामिफलमर्हत्त्वं प्राप्तम्। अर्हन् संवृत्तस्त्रैधातुकवीतरागः समलोष्टकाञ्चन

C 240

आकाशपाणितलसमचित्तोऽनुनयप्रतिघप्रहीणो विद्याविदारिताण्डकोशो विद्याभिज्ञाप्रतिसंवित्प्राप्तो भवलाभलोभसत्कारपराङ्मुखो वासीचन्दनकल्पः। सेन्द्रोपेन्द्राणां देवानां पूज्यो मान्योऽभिवाद्यश्च संवृत्तः। समन्वाहर्तुमात्मनः पूर्वजातिं प्रवृत्तः—कुतो ह्यहं च्युतः, कुत्रोपपन्न इति। यतः पश्यति अनेकानि जातिशतानि नरकतिर्यक्प्रेतच्युतश्चोपपन्नश्च। तस्यैतदभवत्—यदहं भगवता न समन्वाहृतोऽभविष्यम्, अनागतास्वपि जातिषु उपसृतोऽभविष्यम्। यतः 5 C 241 संलक्षयति—अनागताप्यात्मनो जातिसंततिर्निरन्तरमनुपरतप्रवन्धेन नरकप्रेतोपपत्तिः। स एवं संलक्ष्य दुष्करकारको बत मे भगवान्। यदि च भगवता ममैवैकस्यार्थेऽनुत्तरा सम्यक्संबोधिरधिगता स्यात्, तन्महद्धि उपकृतं स्यात्, प्रागेवानेकेषां सत्त्वसहस्राणामपायगतिगमनमपनयति। ततोऽसौ धर्मरुचिर्ऋद्ध्या जेतवनमनुप्राप्तो भगवन्तं दर्शनाय। तेन खलु समयेन भगवाननेकशताया भिक्षुपर्षदः पुरस्तान्निषण्णोऽभूत्। धर्मं देशयति। अथासौ 10 धर्मरुचिर्येन भगवांस्तेनोपसंक्रान्तः। उपसंक्रम्य भगवतः पादौ शिरसा वन्दित्वा एकान्ते न्यषीदत्। एकान्तनिषण्णो भगवता अभिहितः—चिरस्य धर्मरुचे? धर्मरुचिराह—चिरस्य भगवन्। भगवानाह—सुचिरस्य धर्मरुचे? धर्मरुचिराह—सुचिरस्य भगवन्। भगवानाह—सुचिरचिरस्य धर्मरुचे? धर्मरुचिराह—सुचिरचिरस्य भगवन्॥

यतो भिक्षवः संशयजाताः सर्वसंशयच्छेत्तारं बुद्धं भगवन्तं पृच्छन्ति—भगवन् धर्म- 15 रुचिरिहैव श्रावस्त्यां जातोऽस्मिन्नेव जेतवने प्रव्रजितो न कुतश्चिदागतो न कुत्रचिद्गतः। इहैव तिष्ठन् भगवता धर्मरुचिरेवमुच्यते—चिरस्य धर्मरुचे, सुचिरस्य धर्मरुचे, सुचिरचिरस्य धर्मरुचे। किं संधाय भगवान् कथयति? एवमुक्ते भगवान् भिक्षूनामन्त्रयते स्म—न भिक्षवः प्रत्युत्पन्नं संधाय कथयामि। अतीतं संधाय कथयामि। अतीतं संधाय मयैवमुक्तम्। इच्छथ भिक्षवोऽस्य धर्मरुचेः पूर्विकां कर्मप्लोतिमारभ्य धर्मिकथां श्रोतुम्? एतस्य भगवन् कालः, 20 एतस्य सुगत समयो यद्भगवान् धर्मरुचिमारभ्य भिक्षूणां धर्मिकथां कुर्यात्। भगवतः श्रुत्वा भिक्षवो धारयिष्यन्ति॥

भूतपूर्वं भिक्षवोऽतीतेऽध्वनि प्रथमेऽसंख्येये क्षेमंकरो नाम तथागतो लोक उत्पन्नो C 242 विद्याचरणसंपन्नः सुगतो लोकविदनुत्तरः पुरुषदम्यसारथिः शास्ता देवमनुष्याणां च बुद्धो भगवान्। स च क्षेमावतीं राजधानीमुपनिश्रित्य विहरति। तस्यां च क्षेमावत्यां क्षेमो नाम 25 राजा राज्यं कारयति। तस्यां च क्षेमावत्यां राजधान्यामन्यतमो वणिक्श्रेष्ठी प्रतिवसति। तेनासौ क्षेमंकरः सम्यक्संबुद्धः षष्टिं त्रैमासान् सार्धं भिक्षुसंघेन सर्वोपकरणैरुपस्थितः। यतोऽसौ श्रेष्ठी संलक्षयति—गच्छामि महासमुद्रम्। भाण्डं समुदानीय तस्माच्च रत्नान्यानीय संघे पञ्चवार्षिकं करिष्यामीति। एवं संचिन्त्य भाण्डं समुदानीय ग्रामनिगमपल्लीपत्तनराजधानीष्वनुपूर्वेण चञ्चूर्यमाणः समुद्रमनुप्राप्तः। घण्टावघोषणं कृत्वा सामुद्रेण यानपात्रेण 30 महासमुद्रमवतीर्णः। अस्य तस्मिन् महासमुद्रेऽवतीर्णस्य क्षेमंकरः सम्यक्संबुद्धः सकलं बुद्धकार्यं कृत्वा निरुपधिशेषे निर्वाणधातौ परिनिर्वृतः। तस्य परिनिर्वृतस्य वशिनो भिक्षवः

परिनिर्वृताः । सप्ताहपरिनिर्वृतस्य शासनमन्तर्हितम् । स च श्रेष्ठी संसिद्धयानपात्रेण देवता-
मानुष्यपरिगृहीतेन तस्मान्महासमुद्रात् तीर्णः । उत्तीर्य च तं भाण्डं शकटैरुष्ट्रैर्गोभिर्गर्दभैश्च
चोत्क्षिप्य अनुपूर्वेण संप्रस्थितः। स च पन्थानं गच्छन् प्रातिपथिकान् पृच्छति—किं भवन्तो
जानीध्वं क्षेमावत्यां राजधान्यां प्रवृत्तिः? तैरुक्तम्—जानीमः । स कथयति—अस्ति कश्चित्
5 क्षेमावत्यां राजधान्यां क्षेमंकरो नाम सम्यक्संबुद्धः? ते कथयन्ति—परिनिर्वृतः स भगवान्
क्षेमंकरः सम्यक्संबुद्धः । स च तच्छ्रुत्वा परं खेदमुपगतः । संमूर्छितश्च भूमौ पतितः ।
तस्माच्च जलाभिषेकेण प्रत्यागतप्राणो जीवित उत्थाय भूयः पृच्छति—किं भवन्तो जानीध्वं
श्रावका अपि तावत्तस्य भगवतस्तिष्ठन्ति? तैरुक्तः—तेऽपि वशिनो भिक्षवः परिनिर्वृताः ।
C 243 सप्ताहपरिनिर्वृतस्य च बुद्धस्य भगवतः क्षेमंकरस्य सम्यक्संबुद्धस्य क्षेमेण राज्ञा चैत्यमल्पे-
10 शाख्यं प्रतिष्ठापितम् । तेन च गत्वा श्रेष्ठिना जनपदाः पृष्टाः । अस्ति भवन्तस्तस्य भगवतो
बुद्धस्य किंचित् स्तूपं प्रतिष्ठापितम् । तैरुक्तम्—अस्ति, क्षेमेण राज्ञा अल्पेशाख्यं चैत्यं
प्रतिष्ठापितम् । तस्य एतदभवत्—एतं मया सुवर्णं क्षेमंकरं सम्यक्संबुद्धं उद्दिश्यानीतम् ।
स च परिनिर्वृतः । यन्न्वहमेतेनैव सुवर्णेन तस्यैव भगवतश्चैत्यं महेशाख्यतरं कारयेयम् ।
एवं विचिन्त्य क्षेमं राजानं विज्ञापयति—महाराज, इदं मया सुवर्णं क्षेमंकरं सम्यक्संबुद्धमुद्दि-
15 श्यानीतम् । स च भगवान् परिनिर्वृतः । इदानीं महाराज यदि त्वमनुजानीयात्, अहमेतेनैव
सुवर्णेनैतत् तस्य भगवतश्चैत्यं महेशाख्यतरं कारयेयम् । स राज्ञा अभिहितः—यथाभिप्रेतं
कुरु । ततो ब्राह्मणा नगरं प्रति निवासिनः संभूय सर्वे तस्य महाश्रेष्ठिनः सकाशं गत्वा
कथयन्ति—भो महाश्रेष्ठिन्, यदा क्षेमंकरो बुद्धो लोकेऽनुत्पन्न आसीत्, तदा वयं लोकस्य
दक्षिणीया आसन् । यदा तूत्पन्नः, तदा दक्षिणीयो जातः । इदानीं तु तस्य परिनिर्वृतस्य
20 वयमेव दक्षिणीयाः । एतत् सुवर्णमस्माकं गम्यम् । स तेषां कथयति—नाहं युष्माकमेतत्
सुवर्णं दास्यामि । ते कथयन्ति—यद्यस्माकं न दास्यसि, न वयं तव कामकारं दास्यामः ।
ते ब्राह्मणा बहवः, श्रेष्ठी चाल्पपरिवारः । तेषां तथा व्युत्पद्यतां न लेभे तच्चैत्यं यथेप्सितं
तेन सुवर्णेन कारयितुम् । अथ स श्रेष्ठी राज्ञः सकाशं गत्वा कथयति—महाराज, तच्चैत्यं न
लभे ब्राह्मणानां सकाशाद्यथाभिप्रेतं कारयितुम् । यतोऽस्य राज्ञा स्वपुरुषो दत्तः सहस्रयोधी ।
25 एवं च राज्ञा स्वपुरुष आज्ञप्तः—यद्यस्य महाश्रेष्ठिनः स्तूपमभिसंस्कुर्वतः कश्चिदपनयं करोति,
स त्वया महता दण्डेन शासयितव्यः । एवं देवेति सहस्रयोधी पुरुषो राज्ञः प्रतिश्रुत्य
C 244 निर्गतः । निर्गम्य च तान् ब्राह्मणानेवं वदति—शृण्वन्तु भवन्तः, अहं राज्ञास्य महा-
श्रेष्ठिनः स्वपुरुषो दत्तः—यद्यस्य स्तूपमभिसंस्कुर्वतः कश्चिद्विघातं कुर्यात्, स त्वया
महता दण्डेन शासयितव्य इति । यदि यूयमत्र किंचिद् विघ्नं करिष्यथ, अहं वो महता
30 दण्डेनानुशासयिष्यामि । ते ब्राह्मणाः सहस्रयोधिनः पुरुषस्यैवं श्रुत्वा भीताः । यतस्तेन
महाश्रेष्ठिना संचिन्त्य यथैतत् सुवर्णं तत्रैव गर्भसंस्थं स्यात् तथा कर्तव्यमिति तस्य स्तूपस्य
सर्वैरेव चतुर्भिः पार्श्वैः प्रतिकण्ठुकया चत्वारि सोपानानि आरब्धानि कारयितुम् । याव-

दनुपूर्वेण प्रथमा मेढी ततोऽनुपूर्वेण द्वितीया ततस्तृतीया मेढी यावदनुपूर्वेणाण्डम्। तथाविधं च स्तूपस्याण्डं कृतं यत्र सा यूपयष्टिरभ्यन्तरे प्रतिपादिता। पश्चात् तस्यातिनवाण्डस्योपरि हर्मिका कृता। अनुपूर्वेण यष्ट्यारोपणं कृतम्। वर्षस्थाले महामणिरत्नानि तान्यारोपितानि। तत्र च क्रियमाणे सहस्रयोधिनः पुरुषस्यैवमुत्पन्नम्—नात्र कश्चिदिदानीं प्रहरिष्यति। विश्वस्तमनाः केनचित्कार्येण जनपदेषु गतः। तेन च महाश्रेष्ठिना तस्य स्तूपस्य चतुर्भिः 5 पार्श्वैश्चत्वारो द्वारकोष्ठका मापिताः, चतुर्भिः पार्श्वैश्चत्वारि महाचैत्यानि कारितानि, तद्यथा जातिरभिसंबोधिर्धर्मचक्रप्रवर्तनं परिनिर्वाणम्। तच्च स्तूपाङ्गणं रत्नशिलाभिश्चितम्। चत्वारश्चोपाङ्गाश्चतुर्दिशं मापिताः। पुष्किरिण्यश्चतुर्दिशमनुपार्श्वेन मापिताः। तत्र च विविधानि जलजानि माल्यानि रोपितानि तद्यथा उत्पलं पद्मं कुमुदं पुण्डरीकं सुगन्धिकं मृदुगन्धिकम्। विविधानि च पुष्किरिणीतीरेषु स्थलजानि माल्यानि 10 रोपितानि, तद्यथा अतिमुक्तकं चम्पकपाटलावार्षिकामल्लिकासुमनायूथिका धातुष्कारी। सर्वर्तुकालिकाः पुष्पफलाः स्तूपपूजार्थम्। स्थावरा वृत्तिः प्रज्ञप्ताः। स्तूपदासा दत्ताः। शङ्खपटहवाद्यानि तूर्याणि दत्तानि। ये तस्मिंश्चैत्ये गन्धैर्धूपैर्माल्यैश्च चूर्णैः काराः कुर्वन्ति। C 245 तस्माच्चाधिष्ठानाद्विषयाच्चागम्य जनपदा गन्धैर्माल्यैर्धूपैश्चूर्णैस्तस्मिंश्चैत्ये कारां कुर्वन्ति। यदि च दक्षिणो वायुर्वाति, दक्षिणेन वायुना सर्वपुष्पजातीनां गन्धेन तच्चैत्यमङ्गणं चास्य 15 स्फुटं भवत्यनुभावितम्। एवं पश्चिमेन वायुना, अनुपूर्वेणापि च वायुना। वायता वायता तच्चैत्याङ्गणं च तेन विविधेन गन्धमाल्येन स्फुटं भवत्यनुभावितम्। तस्मिंश्च स्तूपे सर्वजातकृतनिष्ठिते सहस्रयोधी अभ्यागतः। स तं स्तूपं दृष्ट्वा सर्वजातकृतनिष्ठितं कथयति—अस्मिंश्चैत्ये कारां कृत्वा किमवाप्यते? यतोऽसौ श्रेष्ठी बुद्धोदाहरणं प्रवृत्तः कर्तुम्—एवं त्रिभिरसंख्येयैर्वीर्येण व्यायमता अनुत्तरा बोधिरवाप्यते। स तं श्रुत्वा विषादमापन्नो हीनो- 20 त्साहतया कथयति—नाहं शक्ष्यामि अनुत्तरां सम्यक्संबोधिं समुदानयितुम्। ततोऽसौ श्रेष्ठी प्रत्येकबुद्धोदाहरणं प्रवृत्तः कर्तुम्—एवं सहस्रयोधी तस्यापि वर्णोदाहरणं श्रुत्वा विषण्णचेताः कथयति—एतामप्यहं प्रत्येकबोधिं न शक्तः समुदानयितुम्। ततः स महाश्रेष्ठी श्रावकवर्णोदाहरणं कृत्वा कथयति—अस्मिन्नपि तावत् प्रणिधत्स्व चित्तम्। यतः सहस्रयोध्याह—त्वया पुनर्महाश्रेष्ठिन् कतमस्यां बोधौ प्रणिधानं कृतम्? तेन महाश्रेष्ठिनोक्तम्— 25 अनुत्तरस्यां बोधौ चित्तमुत्पादितम्। सहस्रयोध्याह—यदि त्वया अनुत्तरस्यां बोधौ चित्तमुत्पादितम्, अहं तवैव श्रावकः स्याम्। त्वयाहं समन्वाहर्तव्यः। यतोऽस्य श्रेष्ठी आह—बहुकिल्बिषकारी बत भवान्। किं तु लोके यदा त्वं बुद्धोत्पादशब्दं श्रुत्वा स्मृतिं प्रतिलभेथाः। स च श्रेष्ठी तं चैत्यं कृत्वा निरीक्ष्य पादयोर्निपत्य प्रणिधानं करोति—

अनेन दानेन महद्गतेन 30
बुद्धो भवेयं सुगतः स्वयंभूः।
तीर्णोऽहं तारयेयं जनौघा-
नतारिता ये पौर्वकैर्जिनेन्द्रैः॥ १॥

भगवानाह—योऽसौ अतीतेऽध्वनि श्रेष्ठी अभूत्, अहमेव स तस्मिन् समये बोधिसत्त्वचर्यां वर्तामि । योऽसौ सहस्रयोधी, एष एव धर्मरुचिस्तेन कालेन तेन समयेन । इदं मम प्रथमेऽसंख्येये एतस्य धर्मरुचेर्दर्शनम् । तत्संधाय कथयामि—चिरस्य धर्मरुचे । यतो धर्मरुचिराज्ञायाह—चिरस्य भगवन् ॥

द्वितीये दीपंकरो नाम सम्यक्संबुद्धो लोक उत्पन्नो विद्याचरणसम्यक्संबुद्धः सुगतो लोकविदनुत्तरः पुरुषदम्यसारथिः शास्ता देवानां च मनुष्याणां च बुद्धो भगवान् । अथ दीपंकरः सम्यक्संबुद्धो जनपदेषु चारिकां चरन् द्वीपावतीं राजधानीमनुप्राप्तः । द्वीपावल्यां राजधान्यां द्वीपो नाम राजा राज्यं कारयति ऋद्धं च स्फीतं च क्षेमं च सुभिक्षं च आकीर्णबहुजनमनुष्यं च । तत्र दीपेन राज्ञा दीपंकरः सम्यक्संबुद्धः साभिसंस्कारेण नगरप्रवेशेनोपनिमन्त्रितः । तस्य च दीपस्य राज्ञो वासवो नाम सामन्तराजोऽभूत् । तेन तस्य दूतोऽनुप्रेषितः—आगच्छ, इह मया दीपंकरः सम्यक्संबुद्धः साभिसंस्कारेण नगरप्रवेशेनोपनिमन्त्रितः । तस्य पूजां करिष्याम इति । तदा च वासवेन राज्ञा द्वादशवर्षाणि यज्ञमिष्ट्वा यज्ञावसाने राज्ञा पञ्च महाप्रदानानि व्यवस्थापितानि, तद्यथा—सौवर्णकं दण्डकमण्डलु, सौवर्णा सपात्री, चतूरत्नमयी शय्या, पञ्च कार्षापणशतानि, कन्या च सर्वालंकारविभूषिता । तेन खलु समयेन अन्येषु जनपदेषु द्वौ माणवकौ प्रतिवसतः । ताभ्यां चोपाध्यायसकाशाद्वेदाध्ययनं कृतम् । धर्मता आचार्यस्याचार्यधनमुपाध्यायस्योपाध्यायधनं प्रदेयमिति ज्ञात्वा चिन्तयतः । ताभ्यां च श्रुतं वासवेन राज्ञा पञ्च महाप्रदानानि यज्ञावसाने समुदानीतानि, यो ब्राह्मणः स्वाध्यायसंपन्नो भविष्यति स लप्स्यतीति । तयोरेतदभवत्—गच्छावस्तत्र, तं प्रदानं प्रतिगृह्णीवः । कोऽस्माकं तत्र बहुश्रुततमो वा स्वाध्यायतमो भविष्यतीति संचिन्त्य येन वासवस्य राज्ञो महानगरं तेन संप्रस्थितौ । तस्य च राज्ञो देवतया आरोचितम् । यौ एतौ द्वौ माणवकौ आगच्छतः सुमतिश्च मतिश्च, अनयोर्द्वयोः सुमतेरेतत्प्रदानं दद । यदेवं महाराज त्वया द्वादश वर्षाणि यज्ञ इष्टः, अस्मात् पुण्यफलान्महत्तमपदस्य सुमतेर्माणवकस्य महाप्रदानं दास्यसि । स राजा संलक्षयति—नूनमेतौ महात्मानौ येषामर्थाय देवता अप्यारोचयन्ति । यतोऽसौ राजा पश्यति माणवकौ दूरत एवागच्छन्तौ प्रासादिकौ अभिरूपौ । तौ च गत्वा तत्र यज्ञे ब्राह्मणपङ्क्तिषु प्रज्ञप्तेषु आसनेषु अग्रासनमभिरुह्यावस्थितौ । यतो राजा वासवस्तौ दृष्ट्वा एवं चिन्तयति—योऽसौ सुमतिर्नाम मम देवतैरारोचितः, स एष भविष्यति । स राजा तमग्रासनमुपगम्य सुमतिं माणवं पृच्छति—भवान् सुमतिः ? तेनोक्तम्—अहम् । यतो राजा वासवः सुमतिं माणवमग्रासने भोजयित्वा पञ्च प्रदानानि प्रयच्छति । सुमतिर्माणवश्चत्वारि महाप्रदानानि गृह्णाति दण्डकमण्डलुप्रभृतीनि, एकं कन्याप्रदानं न प्रतिगृह्णाति । स कथयति—अहं ब्रह्मचारी । यतः सा कन्या सुमतिं माणवं प्रासादिकमभिरूपं दृष्ट्वा लुब्धा स्नेहोत्पन्ना, तं सुमतिं माणवमेवमाह—प्रतिगृह्ण मां ब्राह्मण । स कथयति—न शक्यं मया प्रतिगृहीतुम् । यतः सा कन्या राज्ञा प्रदानबुद्ध्या परित्यक्ता

न पुनर्गृहीता, सुमतिनापि माणवेनाप्रतिगृह्यमाणा राज्ञो दीपस्य दीपावतीं नगरीं गता। सा तत्र गत्वा तदात्मीयमलंकारं शरीरादवतार्य मालाकारायानुप्रयच्छति—अस्यालंकारस्य मूल्यं मे प्रतिदिवसं देवस्यार्थे नीलोत्पलानि ददस्व। सा तेनोपक्रमेण तदलंकारिकं सुवर्णं दत्वा देवशुश्रूषिका संवृत्ता। स च माणवकः सुमतिस्तानि चत्वारि महाप्रदानानि गृह्य उपाध्यायसकाशं गतः। गत्वा चोपाध्यायाय तानि चत्वारि महाप्रदानान्यनुप्रयच्छति। 5 तेभ्यश्चोपाध्यायस्त्रीणि प्रतिगृह्णाति, कार्षापणानां तु पञ्च शतानि तस्यैव सुमतेर्ददाति। स च सुमतिस्तस्यामेव रात्रौ दश स्वप्नानद्राक्षीत्—महासमुद्रं पिबामि, वैहायसेन गच्छामि, इमौ चन्द्रादित्यौ एवंमहर्द्धिकौ एवंमहानुभावौ पाणिना आमार्ष्टि परिमार्ष्टि, राज्ञो रथे योजयामि ऋषीन्, श्वेतान् हस्तिनः, हंसान्, सिंहान्, महाशैलं पर्वतानिति। स तान् दृष्ट्वा प्रतिबुद्धः। प्रतिबुद्धस्यैतदभवत्—क एषां स्वप्नानां मम व्याकरणं करिष्यति? तत्र पञ्चाभिज्ञ 10 ऋषिर्नातिदूरे प्रतिवसति। अथ सुमतिर्माणवः संशयनिर्णयनार्थं ऋषेः सकाशं गतः। सुमतिस्तस्य ऋषेः प्रतिसंमोदनं कृत्वा स्वप्नानाख्यायाह—कुरुष्व मे एषां स्वप्नानां निर्णयम्। स ऋषिराह—नाहमेषां स्वप्नानां व्याकरणं करिष्यामि। गच्छ दीपावतीं राजधानीम्। तत्र दीपेन राज्ञा दीपंकरो नाम सम्यक्संबुद्धः साभिसंस्कारेण नगरप्रवेशेनोपनिमन्त्रितः। स एषां स्वप्नानां व्याकरणं करिष्यति। अथ वासवो राजा तस्य दीपस्य राज्ञः प्रतिश्रुत्य 15 अशीत्यमात्यसहस्रपरिवृतो दीपावतीं राजधानीमनुप्राप्तः। तेन च दीपेन राज्ञा सप्तमाद्दिवसाद्दीपंकरस्य सम्यक्संबुद्धस्य साभिसंस्कारेण नगरप्रवेशं करिष्यामीति सर्वविषयाधिष्ठानाच्च सर्वपुष्पाणां संग्रहं कर्तुमारब्धः। तत्र च यस्मिन् दिवसे राज्ञा दीपेन तस्य दीपंकरस्य सम्यक्संबुद्धस्य साभिसंस्कारेण नगरप्रवेश आरब्धः कर्तुम्, तस्मिन्नेव दिवसे सुमतिरपि तत्रैवागतः। तत्र राज्ञा सर्वपुष्पाणां संग्रहः कारितः। सा च देवोप- 20 स्थायिका दारिका मालाकारसकाशं गता—प्रयच्छ मे नीलोत्पलानि, देवार्चनं करिष्यामीति। मालाकार आह—अद्य राज्ञा सर्वपुष्पाणि गृहीतानि दीपंकरनगरप्रवेशस्यार्थे। सा कथयति—गच्छत, पुनरपि तत्र पुष्किरिण्यां यदि मत्पुण्यैर्नीलोत्पलपद्ममनुद्धृतमासाद्येत। तत्र पुष्किरिण्यां सुमतेः पुण्यानुभावात् सप्त नीलपद्मानि प्रादुर्भूतानि। यतः स मालाकारो गतः, स तानि पश्यति। दृष्ट्वा च दारिकया मालाकारस्योक्तम्—उद्धरैतानि पद्मानि। मालाकारः 25 कथयति—नाहमुद्धरिष्यामि। राजकुलान्ममोपालम्भो भविष्यति। यतः सा कथयति—न। त्वया सर्वपुष्पाण्युद्धृत्य राज्ञः पूर्वं दत्तान्येव। मालाकार आह—दत्तानि। यतः सा दारिका कथयति—मदीयैः पुण्यैरेतानि प्रादुर्भूतानि, प्रयच्छोद्धृतानि मम। मालाकारः कथयति—कथमेतानि प्रवेशकानि भविष्यन्त्यसंविदितं राजकुलस्य? दारिका आह—उद्धरतु भवान्। अहमुदककुम्भे प्रक्षिप्तं प्रवेशयिष्यामि। तेन मालाकारेणैवं श्रुत्वा तस्या दारिकायास्तान्युद्धृत्य 30 अनुप्रदत्तानि। सा तानि गृहीत्वा उदककुम्भे प्रक्षिप्य तत्कुम्भमुदकस्य पूरयित्वा अधिष्ठानं गता प्रस्थिता। स च सुमतिस्तत्स्थानमनुसंप्राप्तः। तस्यैतदभवत्—कथमहं बुद्धं भगवन्तं

C 248

C 249

दृष्ट्वा न पूजयामि? स मालाकारगृहाण्यन्वाहिण्डति सर्वपुष्पान्वेषणपरः, न च किंचिदेकपुष्पमासादयति। पश्चाद्बाह्येनाधिष्ठानान्निर्गम्य आरामेणारामं पुष्पाणि पर्येषमाणः पर्यटति, न चैकपुष्पमासादयति। अथ पर्यटमानस्तदुद्यानं संप्राप्तः। सा च दारिका तस्मादुद्यानात् तस्य सुमतेर्माणवस्याभिमुखमागता। यतः पुण्यानुभावेन तानि नीलपद्मानि तस्मा-
5 दुदककुम्भादभ्युद्गतानि। यतस्तानि सुमतिर्दृष्ट्वा तस्या दारिकायाः कथयति—प्रयच्छ ममैतानि पद्मानि। मत्सकाशादेषां निष्क्रयं पञ्चकार्षापणशतं गृहाण। सा दारिका तस्य सुमतेः कथयति—तदा नेच्छसि मां प्रतिगृहीतुम्। इदानीं मां पद्मानि याचसे। नाहं दास्यामि। एवमुक्त्वा तं सुमतिं माणवमुवाच—किमेभिः करिष्यसि? सुमतिराह—बुद्धं भगवन्तमर्चयिष्यामि। पश्चाद्दारिका कथयति—किं मम कार्षापणैः कृत्यम्? एवमहं बुद्धाय दास्ये, यदि
10 त्वमेषां पद्मानां प्रदानफलेन ममापि जात्यां जात्यां पत्नीमिच्छसि, अस्य दानस्य प्रदानकाले यद्येवं प्रणिधानं करोषि—जात्यां जात्यां मम भार्या स्यादिति। सुमतिराह—वयं दानाभिरताः स्वगर्भरूपपरित्यागं स्वमांसपरित्यागं च कुर्मः। ततः सा दारिका सुमतेः कथयति—त्वमेवं
C 250 प्रणिधानं कुरु, पश्चाद्येनाभ्यर्थीयसे, तस्य मामनुप्रयच्छेथाः। एवमुक्ते तया दारिकया तस्य सुमतेः पञ्च पद्मान्यनुप्रदत्तानि, आत्मना द्वे गृहीते। गाथां च भाषते—

15 प्रणिधां यत्र कुर्यास्त्वं बुद्धमासाद्य नायकम्।
तत्र तेऽहं भवेत् पत्नी नित्यं सहधर्मचारिणी॥ २॥

तेन राज्ञा तत्र सर्वमपगतपाषाणशर्करकपालं कारितमुच्छ्रितध्वजपताकातोरणमामुक्तपट्टदामं गन्धोदकचूर्णपरिषिक्तम्। नगरद्वारादारभ्य यावच्च विहारो यावच्च नगरमेतदन्तरमपगतपाषाणशर्करकपालं कारितमुच्छ्रितध्वजपताकतोरणमामुक्तपट्टदाम गन्धोदकचूर्णपरि-
20 षिक्तम्। स च राजा शतशलाकं छत्रं गृहीत्वा दीपंकरस्य सम्यक्संबुद्धस्य प्रत्युद्गतः। एवमेवामात्याः। एवमेव वासवो राजा अमात्यैः सह प्रत्युद्गतः। दीपो राजा भगवतो बुद्धस्य पादयोर्निपत्य विज्ञापयति—भगवन्, अधिष्ठानं प्रविश। यतः स भगवान् भिक्षुसंघपुरस्कृतोऽधिष्ठानप्रवेशाभिमुखः संप्रस्थितः। स च राजा दीपः शतशलाकं छत्रं दीपंकरस्य सम्यक्संबुद्धस्य धारयति। तथैवामात्याः, वासवो राजा अमात्यसहायः। भगवता ऋद्ध्या तथा
25 अधिष्ठितं यथा एकैकः संलक्षयति—अहं भगवतश्छत्रं धारयामीति। अथ भगवांस्तथाविधया शोभया जनमध्यमनुप्राप्तः। तत्र भगवता साभिसंस्कार इन्द्रकीले पादो व्यवस्थापितः। यदैव भगवता इन्द्रकीले पादो व्यवस्थापितः, तदैव समनन्तरकालं पृथिवी षड्विकारं प्रकम्पिता—चलिता प्रचलिता संप्रचलिता, वेधिता प्रवेधिता संप्रवेधिता। धर्मता च बुद्धानां भगवतां यदेन्द्रकीले साभिसंस्कारेण पादौ व्यवस्थापयन्ति, चित्राण्याश्चर्याण्यद्भुत-
30 धर्माः प्रादुर्भवन्ति—उन्मत्ताः स्वचित्तं प्रतिलभन्ते, अन्धाश्चक्षूंषि प्रतिलभन्ते, बधिराः श्रोत्रश्रवणसमर्था भवन्ति, मूकाः प्रव्याहरणसमर्था भवन्ति, पङ्गवो गमनसमर्था भवन्ति, मूढा गर्भिणीनां स्त्रीणां गर्भा अनुलोमीभवन्ति, हडिनिगडबद्धानां च सत्त्वानां बन्धनानि

शिथिलीभवन्ति, जन्मजन्मवैरानुबद्धास्तदनन्तरं मैत्रचित्ततां प्रतिलभन्ते, वत्सा दामानि C 251
च्छित्त्वा मातृभिः संगच्छन्ति, हस्तिनः क्रोशन्ति, अश्वा हेषन्ते, ऋषभा गर्जन्ति, शुकसारि-
काकोकिलजीवंजीवका मधुरं निकूजन्ति, अनेरितानि वादित्रभाण्डानि मधुरशब्दान्
निश्चारयन्ति, पेडाकृता अलंकारा मधुरशब्दान्निश्चरन्ति, उन्नताः पृथिवीप्रदेशा अवनमन्ति,
अवनताश्चोन्नमन्ति, अपगतपाषाणशर्करकपालास्तिष्ठन्ति, अन्तरिक्षाद्देवता दिव्यान्युत्पलानि 5
क्षिपन्ति, पद्मानि कुमुदानि पुण्डरीकान्यगुरुचूर्णानि चन्दनचूर्णानि तगरचूर्णानि तमाल-
पत्राणि दिव्यानि मान्दारवाणि पुष्पाणि क्षिपन्ति, पूर्वो दिग्भाग उन्नमति पश्चिमोऽवनमति,
पश्चिम उन्नमति पूर्वोऽवनमति, दक्षिण उन्नमत्युत्तरोऽवनमति, उत्तर उन्नमति दक्षिणोऽव-
नमति, मध्य उन्नमत्यन्तोऽवनमति, अन्त उन्नमति मध्योऽवनमति । तत्र च दीपावत्यां
राजधान्यामनेकानि प्राणिशतसहस्राणि पुष्पैर्धूपैर्गन्धैश्च कारां कुर्वन्ति । तेऽपि च सुमतिश्च 10
दारिका च येन दीपंकरः सम्यक्संबुद्धस्तेनानुगच्छन्ति पद्मानि गृह्य । ते च तत्र महाजन-
कायेन पूजार्थं संपरिवृतस्य भगवत उपश्लेषं न लभन्ते । भगवान् संलक्षयति—बहुतरं
सुमतिर्माणवोऽस्मान्महाजनकायात् पुण्यप्रसवं करिष्यति इति । मत्वा महतीं तुमुलां वातवृष्टि-
मभिनिर्मिणोति । यतस्तेन जनकायेनावकाशो दत्तः । लब्धावकाशश्च सुमतिर्माणवो
भगवन्तमसेचनकदर्शनं दृष्ट्वा अतीव प्रसादजातः । प्रसादजातेन च तानि पञ्च पद्मानि 15
भगवतः क्षिप्तानि । तानि च भगवता दीपंकरेण सम्यक्संबुद्धेन तथा अधिष्ठितानि, यथा
शकटीचक्रमात्राणि वितानं बद्ध्वा व्यवस्थितानि । गच्छतोऽनुगच्छन्ति, तिष्ठतोऽनुतिष्ठन्ति ।
तथा दृष्ट्वा तया दारिकया प्रसादजातया द्वौ पद्मौ भगवतः क्षिप्तौ । तौ चापि भगवता
तथा अधिष्ठितौ यथा शकटीचक्रमात्रौ कर्णसमीपे वितानं बद्ध्वा व्यवस्थितौ । तत्र च प्रदेशे
तुमुलेन वातवर्षेण कर्दमो जातः । पश्चात् सुमतिर्माणवो बुद्धं भगवन्तं सकर्दमं पृथिवीप्रदेश- 20 C 252
मुपगतः । तस्मिन् सकर्दमे पृथिवीप्रदेशे जातं संतीर्य भगवतः पुरतो गाथां भाषते—

यदि बुद्धो भविष्यामि बोधाय बुधबोधन ।
आक्रमिष्यसि मे पद्भ्यां जटां जन्मजरान्तकाम् ॥ ३ ॥

ततस्तेन दीपंकरेण सम्यक्संबुद्धेन तस्य सुमतेर्माणवस्य जटासु पादौ व्यवस्थापितौ ।
तस्य च सुमतेः पृष्ठतोऽनुबद्ध एव मतिर्माणवस्तिष्ठति । तेन कुपितेनाभिहितं भगवतो दीपं- 25
करस्य—पश्य तावद्भोः, अनेन दीपंकरेण सम्यक्संबुद्धेनास्य सुमतेर्माणवस्य तिरश्चां यथा
पद्भ्यां जटा अवष्टब्धाः । पश्चात् दीपंकरेण सम्यक्संबुद्धेन सुमतिर्माणवो व्याकृतः—

भविष्यसि त्वं नृभवाद्विमुक्तो
मुक्तो विभुर्लोकहिताय शास्ता ।
शाक्यात्मजः शाक्यमुनीति नाम्ना 30
त्रिलोकसारो जगतः प्रदीपः ॥ ४ ॥

यदा च स सुमतिर्माणवो दीपंकरेण सम्यक्संबुद्धेन व्याकृतः, तत्समकालमेव वैहायसं सप्ततालानभ्युद्गतः। ताश्चास्य जटाः शीर्णाः, अन्याः प्रविशिष्टतरा जटाः प्रादुर्भूताः। स वैहायसस्थो महता जनकायेन दृष्टः। दृष्ट्वा च प्रणिधानं कृतम्—यदा अनेनानुत्तरज्ञानमधिगतं भवेत्, तदास्य वयं श्रावका भवेम। सापि च दारिका प्रणिधानं करोति—

5 प्रणिधिं यत्र कुर्यास्त्वं बुद्धमासाद्य नायकम्।
तत्र तेऽहं भवेत्पत्नी नित्यं सहधर्मचारिणी॥ ५॥
यदा भवसि संबुद्धो लोके ज्येष्ठविनायकः।
श्राविका ते भविष्यामि तस्मिन् काल उपस्थिते॥ ६॥
खगस्थं माणवं दृष्ट्वा सहस्राणि शतानि च।
10 श्रावकत्वं प्रार्थयन्ते सर्वे तत्र ह्यनागते॥ ७॥
यदा भवसि संबुद्धो लोके ज्येष्ठविनायकः।
श्रावकास्ते भविष्यामस्तस्मिन् काले ह्युपस्थिते॥ ८॥

C 253 यदा च सुमतिर्माणवो दीपंकरेण सम्यक्संबुद्धेन व्याकृतः, तदास्य दीपेन राज्ञा जटा गृहीताः। वासवो राजा कथयति—ममैता जटा अनुप्रयच्छ। ततस्तस्य दीपेन राज्ञा 15 अनुप्रदत्ताः। तेन गृहीत्वा गणिताः अशीतिर्वालसहस्राणि। तस्य राज्ञोऽमात्याः कथयन्ति—देव, अस्माकमेकैकं वालमनुप्रयच्छ। वयमेषां चैत्यानि करिष्यामः। तेन राज्ञा तेषां भृत्यानामेकैको वालो दत्तः। तैरमात्यैः स्वके विजिते गत्वा चैत्यानि प्रतिष्ठापितानि। यदा सुमतिर्माणवोऽनुत्तरायां सम्यक्संबोधौ व्याकृतः, तदा दीपेन राज्ञा वासवेन च राज्ञा तैरनेकैश्च नैगमजानपदैः सर्वोपकरणैः प्रवारितोऽनागतगुणावेक्षतया। ततः स मतिर्माणव 20 उच्यते—अहमनुत्तरस्यां सम्यक्संबोधौ व्याकृतः—त्वया कुत्र चित्तमुत्पादितम्? स कथयति—क्षतोऽहं सुमते माणव। स कथयति—कथं कृत्वा क्षतोऽसि? ततः स कथयति—यदा तव दीपंकरेण सम्यक्संबुद्धेन पद्भ्यां जटा अवष्टब्धाः, तदा कुपितेन वाग् निश्चारिता—दीपंकरेण सम्यक्संबुद्धेन श्रोत्रियस्य जटा तिरश्चां यथा पद्भ्यामवष्टब्धाः। यतस्तस्य सुमतिः कथयति—आगच्छस्व, बुद्धस्य भगवतोऽन्तिके प्रव्रजावः। ततस्तौ सुमतिर्मतिश्च दीपंकरस्य 25 सम्यक्संबुद्धस्य प्रवचने प्रव्रजितौ। सुमतिना च प्रव्रज्य त्रीणि पिटकान्यधीतानि, धर्मेण पर्षत् संगृहीता। स च सुमतिर्माणवश्च्युतः कालगतस्तुषिते देवनिकाये उपपन्नः। मतिर्माणवश्च्युतः कालगतो नरकेषूपपन्नः॥

भगवानाह—योऽसौ वासवो राजाभूत् तेन कालेन तेन समयेन, स राजा बिम्बिसारः। यानि तान्यशीतिरमात्यसहस्राणि तेन कालेन तेन समयेन, तान्येतर्ह्यशीतिर्देवतासहस्राणि। 30 योऽसौ दीपावतीयको जनकायः, यासौ दारिका, एषैव सा यशोधरा। योऽसौ सुमतिः, अहमेव तस्मिन् समये बोधिसत्त्वचर्यायां वर्तामि। योऽसौ मतिः, एष एव स धर्मरुचिः।

एतद्द्वितीयेऽसंख्येये अस्य च धर्मरुचेर्मम च दर्शनं यदहं संधाय कथयामि–चिरस्य धर्मरुचे, सुचिरस्य धर्मरुचे ॥ C 254

तस्मादप्यर्वाक् तृतीयेऽसंख्येये क्रकुच्छन्दो नाम सम्यक्संबुद्धो लोक उत्पन्नो विद्याचरणसंपन्नः सुगतो लोकविदनुत्तरः पुरुषदम्यसारथिः शास्ता देवमनुष्याणां बुद्धो भगवान्। तस्यां च राजधान्यामन्यतरो महाश्रेष्ठी प्रतिवसति। तेन च सदृशात् कुलात् कलत्रमानीतम्। 5 स च कलत्रसहायः क्रीडति रमते परिचारयति। तस्य क्रीडतो रममाणस्य परिचारयतः पुत्रो जातः। स च गृहपतिः श्राद्धः। तस्य चार्हन् भिक्षुः कुलाववादकोऽस्ति। स च गृहपतिस्तां पत्नीमेवमाह–जातोऽस्माकं ऋणधरो धनहरः। गच्छाम्यहमिदानीं भद्रे वणिग्धर्माणां देशान्तरं भाण्डमादाय। स च वणिग्लोकेनावृतो दूरतरं गतो भाण्डमादाय। यतोऽस्य न भूयश्चिरमप्यागच्छति। स च दारकः कालान्तरेण महान् संवृत्तोऽभिरूपो दर्शनीयः 10 प्रासादिकः। ततोऽसौ मातरं पृच्छति–अम्ब, किमस्माकं कुलार्थागतं कर्म? सा कथयति–वत्स, पिता तव आपणं वाहयन्नासीत्। ततः स दारक आपणमारब्धो वाहयितुम्। सा च माता अस्य क्लेशैर्बाध्यमाना चिन्तयितुं प्रवृत्ता–क उपायः स्यात् यदहं क्लेशान् विनोदयेयम्, न च मे कश्चिज्जानीयात्? तया संचिन्त्यैवमध्यवसितम्–एवमेव पुत्रकामहेतोस्तथा परिचरामि, यथा अनेनैव मे सार्धं रोगविनोदकं भवति, नैव स्वजनस्य शङ्का भविष्यति। 15 ततस्तया वृद्धयुवती आहूय भोजयित्वा द्विः त्रिः पश्चान्नवेन पटेनाच्छादिता। तस्याः सा वृद्धा कथयति–केन कार्येणैव ममानुप्रसादादिना उपक्रमेणानुप्रवृत्तिं करोषि? सा तस्या वृद्धाया विश्वस्ता भूत्वा एवमाह–अम्ब, शृणु विज्ञाप्यम्। क्लेशैरतीव बाध्ये, प्रियतां ममोत्पाद्य मनुष्यान्वेषणं कुरु, योऽभ्यन्तर एव स्यान्न च शङ्कनीयो जनस्य। वृद्धा कथयति–नेह गृहे C 255 तथाविधो मनुष्यः संविद्यते, नापि प्रणयवान् कश्चित् प्रविशति, यो जनस्याशङ्कनीयो 20 भवेत्। कतमः स मनुष्यो भविष्यति यस्याहं वक्ष्यामि? ततः सा वणिक्पत्नी तस्या वृद्धायाः कथयति–यद्यन्यो मनुष्य एवंविधोपक्रमयुक्तो नास्ति, एष एव मे पुत्रो भवति, नैष लोकस्य शङ्कनीयो भविष्यति। तस्यास्तया वृद्धया अभिहितम्–कथं नु पुत्रेण सार्धं रतिक्रीडां गमिष्यसि? युक्तं स्यादन्येन मनुष्येण सार्धं रतिक्रीडामनुभवितुम्। ततः सा वणिक्पत्नी कथयति–यद्यन्योऽभ्यन्तरो मनुष्यो न संविद्यते, भवतु एष एव मे पुत्रः। तया वृद्धया अभिहितम्– 25 यथेप्सितं कुरु। ततः सा वृद्धयुवती तस्य वणिजः पुत्रस्यैवागम्य पृच्छति–वत्स, तरुणोऽसि रूपवांश्च। किं प्रतिष्ठितोऽस्यार्थेन? तेन तस्या अभिहितम्–किमेतत्? ततः सा वृद्धा कथयति–भवानेवमभिरूपश्च युवा च अस्मिन् वयसि तरुणयुवत्या सार्धं शोभेथाः क्रीडन् रमन् परिचारयन्। किमेव कामभोगपरिहीनस्तिष्ठसि? वणिग्दारकस्तां श्रुत्वा लज्जाव्यपत्राप्यसंलीनचेतास्तस्या वृद्धायास्तद्वचनं नाधिवासयति। ततः सा वृद्धा एवं द्विरपि त्रिरपि तस्य 30 दारकस्य कथयति–तरुणयुवतिस्तवार्थे क्लेशैर्बाध्यते। स वणिग्दारको द्विरपि त्रिरप्युच्यमानस्तस्या वृद्धायाः कथयति–अम्ब, किं तस्यास्तरुणयुवत्याः संनिमित्ते किंचिदभिहितम्? ततः

सा वृद्धा कथयति—उक्तं तस्या मया तन्निमित्तम्। तया मम निमित्ते न प्रतिज्ञातम्। सा च दारिका ह्रीव्यपत्राप्यगृहीता न किंचिद्वक्ष्यति। न च शरीरमावृतं करिष्यति। न त्वया तस्या वा अन्वेषणे यत्नः करणीयः। ततस्तेन वणिग्दारकेण तस्या वृद्धाया अभिहितम्—कुत्रास्माकं संगतं भविष्यति? तया अभिहितम्—मदीये गृहे। तेनोक्तम्—कुत्रावकाशे तव
5 गृहम्? ततोऽस्य तया वृद्धया गृहं व्यपदिष्टम्। सा च वृद्धा तस्या वणिक्पत्न्याः सकाशं गत्वा कथयति—इच्छापितः स वोऽयं दारकः। सा कथयति—कुत्रावकाशे संगतं भविष्यति? मदीये गृहे। स च दारकः कार्याणि कृत्वा गृहं गतः। अनुपूर्वेण भुक्त्वा तस्या मातुः कथयति—गच्छाम्यहम्। वयस्यगृहे स्वप्स्ये। ततोऽस्य मात्राप्यनुज्ञातम्—गच्छ। स दारको लब्धानुज्ञस्तस्या वृद्धाया गृहं गतः। तस्य दारकस्य तस्मिन् गृहे गतस्य रतिक्रीडाकालमा-
10 गमयमानस्य तिष्ठतो निशिकालमप्रत्यभिज्ञातम्। रूपे काले सा माता अस्य वणिग्दारकस्य तस्मिन्नेव गृहे रतिक्रीडामनुभवनार्थं तत्रैव गता। गत्वा च तस्मिन् गृहे विकालमव्यक्ति विभाव्यमाने रूपाकृतौ निर्गूढेनोपचारक्रमेण रतिक्रीडां पुत्रेण सार्धमनुभवितुं प्रवृत्ता पापकेनासद्धर्मेण। सा च परिक्षीणायां रात्रौ अनुभूतरतिक्रीडा सतमोन्धकारे कालायामेव रजन्यामविभाव्यमानरूपाकृतौ स्वगृहं गच्छति। स चापि वणिग्दारको रतिक्रीडामनुभूय प्रभा-
15 तायां रजन्यां भाण्डावारिं गत्वा कुटुम्बकार्याणि करोति। एवं द्विरपि त्रिरपि। तत्र वृद्धाया गृहे रतिक्रीडामनुभवंश्च चिरकालमेवं वर्तमानेन रतिक्रीडाक्रमेण तस्य दारकस्य सा माता चिन्तयितुं प्रवृत्ता—कियत्कालमन्यद्गृहमहमेवमविभाव्यमानरूपा रतिक्रीडामनुभविष्यामि? यन्न्वहमस्यैतत् रतिक्रीडाक्रमं तथाविधं क्रमेण संवेदयेयम्, यथा इहैव गृहे रतिक्रीडा भवेत्। इति संचिन्त्य तत्रैव वृद्धागृहे गत्वा रतिक्रीडां पुत्रेण सार्धमनुभूय रजन्याः क्षये
20 सतमोन्धकारकाले तस्य दारकस्योपरिमं प्रावरणं निवस्यात्मनीयां च शिरोत्तरपट्टिकां त्यक्त्वा स्वगृहं गता। स च दारकः प्रभातकाले तां पट्टिकां शिरसि मञ्चस्यावतिष्ठन्तीं संपश्यति। आत्मीयामेवोपरिप्रावरणपोत्रीमलभमानस्तत्रैव तां पट्टिकां संलक्ष्य त्यक्त्वा भाण्डावारीं गत्वा युगलमन्यं प्रावृत्य स्वगृहं गतः। तत्र च गतः संपश्यति तमेवात्मीयं प्रावरणं तस्या मातुः शिरसि प्रावृतम्। दृष्ट्वा च तां मातरं पृच्छति—अम्ब, कुतोऽयं तव शिरसि प्रावरणोऽभ्यागतः?
25 यतस्तया अभिहितम्—अद्याप्यहं तवाम्बा? एवं चिरकालं तव मया सार्धं कामान् परिभुञ्जतोऽद्याप्यहं तव सैवाम्बा? यतः स वणिग्दारकस्तथाविधं मातृवचनमुपश्रुत्य संमूढो विह्वलचेता भूमौ निपतितः। ततस्तया स मात्रा घटजलपरिषेकेणावसिक्तः। स जलपरिषेकावसिक्तो दारकश्चिरेण कालेन प्रत्यागतप्राणस्तया मात्रा समाश्वास्यते—किमेवं खेदमुपागतस्त्वम्? अस्मदीयं वचनमुपश्रुत्य धीरमना भवस्व। न ते विषादः करणीयः। स दारकस्तस्याः कथ-
30 यति—कथमहं खेदं न करिष्यामि संमोहं वा, येन मया एवंविधं पापकं कर्म कृतम्? ततः स तयाभिहितः—न ते मनःशूकमस्मिन्नर्थे उत्पादयितव्यम्। पन्थासमो मातृग्रामः। येनैवं हि यथा पिता गच्छति, पुत्रोऽपि तेनैव गच्छति। न चासौ पन्था पुत्रस्यानुगच्छतो दोषकारको

C 256

C 257

भवति, एवमेव मातृग्रामः। तीर्थसमोऽपि च मातृग्रामः। यत्रैव हि तीर्थे पिता स्नाति, पुत्रोऽपि तस्मिन् स्नाति, न च तीर्थं पुत्रस्य स्नायतो दोषकारकं भवति। एवमेव मातृग्रामः। अपि च प्रत्यन्तेषु जनपदेषु धर्मतैवैषा यस्यामेव पिता असद्धर्मेणाभिगच्छति, तामेव पुत्रोऽप्यधिगच्छति। एवमसौ वणिग्दारको मात्रा बहुविधैरनुनयवचनैर्विनीतशोकस्तया मात्रा तस्मिन् पातकेऽसद्धर्मे पुनः पुनरतीव संजातरागः प्रवृत्तः। तेन च श्रेष्ठिना गृहे लेख्योऽनुप्रेषितः। भद्रे, धीरोर्जित- 5 महोत्साहा भवस्व। अहमपि लेखानुपदमेवागमिष्ये। सा वणिक्पत्नी तथाविधं लेखार्थं श्रुत्वा वैमनस्यजाता चिन्तयितुं प्रवृत्ता—महान्तं कालं मम तस्यागमनमुदीक्षमाणायाः। तदा नागतः। इदानीं मया एवंविधेनोपक्रमेण पुत्रं च परिचरित्वा स चागमिष्यति। क उपायः स्यात् यदहं तमिहासंप्राप्तमेव जीवितात् व्यपरोपयेयम्? इति संचिन्त्य तं पुत्रमाहूय कथयति—पित्रा ते लेख्योऽनुप्रेषितः आगमिष्यतीति। जानसेऽस्माभिरिदानीं किं करणीय- 10 C 258 मिति? गच्छस्व, पितरमसंप्राप्तमेव घातय। स कथयति—कथमहं पितरं घातयिष्ये? यदा असौ न प्रसहते पितृवधं कर्तुम्, तदा तया मात्रा भूयोऽनुवृत्तिवचनैरभिहितः—तस्यानु- वृत्तिवचनैरुच्यमानस्य कामेषु संरक्तस्याध्यवसायो जातः पितृवधं प्रति। कामान् खलु प्रतिसेवतो न हि किंचित् पापकं कर्माकरणीयमिति वदामि। ततस्तेनोक्तम्—केनोपायेन घातयामि? तया अभिहितम्—अहमेवोपायं संविधास्ये। इत्युक्त्वा विषमादाय समितायां 15 मिश्रयित्वा मण्डिलकान् पक्त्वा अन्येऽपि च निर्विषाः पक्ताः। यतस्तं दारकमाहूय कथयति— गच्छस्व। अमी सविषा मण्डिलका निर्विषाश्च। गृह्य पितृसकाशं गत्वा च तस्य विश्वस्तस्यैकत्र भुञ्जत एतान् सविषान् मण्डिलकान् प्रयच्छस्व, आत्मना च निर्विषान् भक्षय। ततः स दारकस्तेन लेखवाहिकमनुष्येण सार्धं तान् मण्डिलकान् गृह्य गतः पितृसकाशम्। आगम्य पिता अस्य अतीव तं पुत्रं दृष्ट्वा अभिरूपप्रासादिकं महेशाख्यं प्रामोद्यं प्राप्तः। सह्यासह्यं 20 पृष्ट्वा तेषां वणिजामाख्याति—अयं भवन्तोऽस्माकं पुत्रः। यदा तेन दारकेण संलक्षितं सर्वत्र अहमनेन पित्रा प्रतिसंवेदित इति, ततस्तं पितरमाह—तात, अम्बया मण्डिलकाः प्रहेणक- मनुप्रेषितम्। तत्तातः परिभुञ्जतु। पश्चात्तेन पित्रा सार्धमेकफलायां भुञ्जता तस्य पितुः सविषा मण्डिलका दत्ताः, आत्मना निर्विषाः प्रभक्षिताः। यतोऽस्य पिता तान् सविषान् मण्डिलकान् भक्षयित्वा मृतः। तस्य च पितुः कालधर्मणा युक्तस्य च दारको 25 न केनचित् पापकं कर्म कुर्वाणोऽभिशङ्कितो वा प्रतिसंवेदितो वा। पश्चात्तैरिष्ट- स्निग्धसुहृद्भिर्वणिग्भिः शोचयित्वा यत्तत्तु किंचित्तस्य वणिजो भाण्डमासीद्धिरण्यसुवर्णं वा, तत्तस्य दारकस्य दत्तम्। स दारकस्तं भाण्डं हिरण्यसुवर्णं पैतृकं गृह्य स्वगृहमनुप्राप्तः। तस्य च गतस्य स्वगृहं सा माता प्रच्छन्नासद्धर्मेण तं पुत्रं परिचरमाणा रतिं नाधिगच्छति, अनभिरतरूपा च तं पुत्रं वदति—कियत्कालं वयमेवं 30 C 259 प्रच्छन्नेन क्रमेण रतिक्रीडामनुभविष्यामः? यन्नु वयमस्माद्देशादन्यदेशान्तरं गत्वा प्रकाश- क्रमेण निःशङ्का भूत्वा जायापतीति विख्यातधर्माणः सुखं प्रतिवसेम। ततस्तौ गृहं त्यक्त्वा

मित्रस्वजनसंबन्धिवर्गानपहाय पुराणदासीदासकर्मकरांस्त्यक्त्वा यावदर्थजातं हिरण्यसुवर्णं च गृह्य अन्यविषयान्तरं गतौ। तत्र गत्वा जनपदेषु विख्यापयमानौ जायापतिकमिति रतिक्रीडामनुभवमानौ व्यवस्थितौ। यावदर्हन् भिक्षुः केनचित् कालान्तरेण जनपदचारिकां चरन् तमधिष्ठानमनुप्राप्तः। तेन तत्र पिण्डपातमन्वाहिण्डता वीथ्यां निषद्य अयं वणिग्धर्मणा 5 संव्यवहारमाणः स दारको दृष्टः। दृष्ट्वा चारोग्ययित्वा चाभिभाष्योक्तः—मातुस्ते कुशलम्? स च दारकस्तमर्हन्तं तथा अभिवदमानमुपश्रुत्य संभिन्नचेताः स्वेन दुश्चरितेन कर्मणा शङ्कितमनाश्चिन्तयितुं प्रवृत्तः। स विचिन्त्य मातृसकाशं गत्वा संवेदयति—यतिरभ्यागतः, योऽसौ अस्मद्गृहमुपसंक्रामति, एष स इहाधिष्ठाने प्रतिसंवेदयिष्यति एषा अस्य दारकस्य मातेति। वयं चेह जायापतिकमिति ख्यातौ। कथमेष शक्यं घातयितुम्? ततस्तयोः 10 संचिन्त्य तं गृहमेनमुपनिमन्त्रयित्वा भुञ्जानं घातयामः। ततस्तयोरेवं संचिन्त्य सोऽर्हन् भिक्षुरन्तर्गृहमुपनिमन्त्रयित्वा भोजयितुमारब्धः। स दारको गूढशस्त्रो भूत्वा अर्हन्तं भोजयितुं मात्रा सह निर्जनं गृहं कृत्वा स चार्हद्भिक्षुर्भुक्त्वा तस्माद्गृहाद्विश्रब्धचारक्रमेण प्रतिनिर्गतः। ततस्तेन दारकेणैनमन्तर्गृहविश्रब्धचारक्रममवेक्ष्य निर्गच्छन्तं परापृष्ठीभूत्वा शरीरेऽस्य शस्त्रं निपात्य जीविताद् व्यपरोपयति। कामाश्च लवणोदकसदृशाः। यथा यथा सेव्यन्ति, 15 तथा तथा तृष्णा वृद्धिमुपयाति। तस्य दारकस्य सा माता तं पुत्रमसद्धर्मेणानुवर्तमाना तस्मिन्नेवाधिष्ठाने श्रेष्ठिपुत्रेण सार्धं प्रच्छन्नकामा असद्धर्मेषु सक्तचित्ता जाता। तस्य दारकस्य तथाविध उपक्रमः प्रतिसंविदितः। ततस्तेन तस्य मातुरुक्तम्—अम्ब निवर्तस्वेदृशाद्दोषात्। सा च तस्मिन् श्रेष्ठिपुत्रे संरक्तचित्ता द्विरपि त्रिरप्युच्यमाना न निवर्तते। ततस्तेन निष्कोषमसिं कृत्वा सा माता जीविताद्व्यपरोपिता। यदा तस्य त्रीण्यानन्तर्याणि 20 परिपूर्णानि, तदा देवताभिर्जनपदेष्वारोचितम्—पाप एष पितृघातकोऽर्हद्घातको मातृघातकश्च। त्रीण्यनेनानन्तर्याणि नरककर्मसंवर्तनीयानि कर्माणि कृतान्युपचितानि। ततस्तेनाधिष्ठानजनेन तच्छ्रुत्वा तदधिष्ठानान्निर्वासितः। स यदा निर्वासितस्तस्मादधिष्ठानात् तदा चिन्तयितुं प्रवृत्तः—अस्ति चास्य बुद्धशासने कश्चिदेवानुनयः? एवं मनसि कृतम्—गच्छामि, इदानीं प्रव्रजामीति। स च विहारं गत्वा भिक्षुसकाशमुपसंक्रम्य 25 एवं कथयति—आर्य, प्रव्रजेयम्। ततस्तेन भिक्षुणा उक्तम्—मा तावत् पितृघातकोऽसि? तेन भिक्षुरभिहितः—अस्ति मया घातितः पिता। ततः पुनः पृष्टः—मा तावन्मातृघातकोऽसि? तेनोक्तम्—आर्य, घातिता मया माता। स भूयः पृष्टः—मा तावदर्हद्वधस्ते कृतः? ततः स कथयति—अर्हन्नपि घातितः। ततस्तेन भिक्षुणा अभिहितः—एकैकेन एषां कर्माणामाचरणान्न प्रव्रज्यार्हो भवसि, प्रागेव समस्तानाम्। गच्छ वत्स, नाहं प्रव्राज- 30 यिष्ये। ततः स पुरुषोऽन्यस्य भिक्षोः सकाशमुपसंक्रम्य कथयति—आर्य प्रव्रजेयम्। ततस्तेनापि भिक्षुणा अनुपूर्वेण पृष्ट्वा प्रत्याख्यातः। ततः पश्चादन्यस्य भिक्षोः सकाशं गतः। तमपि तथैव प्रव्रज्यामायाचते। तेनापि तथा अनुपूर्वक्रमेण पृष्ट्वा प्रत्याख्यातः। स यदा

C 260

द्विरपि त्रिरपि प्रव्रज्यामायाचमानोऽपि भिक्षुभिर्न प्रव्राजितः, तदा अमर्षजातश्चिन्तयितुं प्रवृत्तः—या अपि सर्वसाधारणा प्रव्रज्या, तामहमप्यायाचन्न लभामि । ततस्तेन तस्मिन् विहारे शयितानां भिक्षूणामग्निर्दत्तः। तस्मिन् विहारेऽग्निं दत्वा अन्यत्र विहारं गतः। तत्रापि गत्वा भिक्षूणामुपसंक्रम्य प्रव्रज्यामायाचते । तैरपि तथैवानुपूर्वेण पृष्ट्वा प्रत्याख्यातः। तत्रापि तेन तथैव प्रतिहतचेतसा अग्निर्दत्तः। तत्रापि विहारे बहवो भिक्षवः शैक्षाशैक्षाश्च दग्धाः । एवं तस्यानेकान् विहारान् दहतः सर्वत्र शब्दो विसृतः—एवंविधश्चैवंविधश्च पापकर्मकारी पुरुषो भिक्षुभ्यः प्रव्रज्यामलभन् विहारान् भिक्षूंश्च दहतीति । स च पुरुषोऽन्यविहारं प्रस्थितः। तत्र च विहारे बोधिसत्त्वजातीयो भिक्षुः प्रतिवसति तृपितः। तेन श्रुतं स एवं दुष्करकर्मकारी पुरुष इहागच्छतीति। यतः स भिक्षुस्तस्य पुरुषस्यासंप्राप्तस्यैव तस्मिन् विहारे प्रत्युद्गतः । स तं पुरुषं समेत्य कथयति—भद्रमुख, किमेतत् ? यतोऽस्य पुरुषेणोक्तम्—आर्य, प्रव्रज्यां न लभामि । ततस्तेन भिक्षुणा उक्तम्—आगच्छ वत्स, अहं ते प्रव्राजयामीति । पश्चात् तेन भिक्षुणा तस्य पुरुषस्य शिरो मुण्डापयित्वा काषायाणि वस्त्राणि दत्तानि । पश्चात् स पुरुषः कथयति—आर्य, शिक्षापदानि मेऽनुप्रयच्छ । ततस्तेन भिक्षुणा उक्तः—किं ते शिक्षापदैः प्रयोजनम् ? एवं सर्वकालं वदस्व—नमो बुद्धाय, नमो धर्माय, नमः संघायेति । पश्चात् स भिक्षुस्तस्य पुरुषस्य धर्मदेशनामारब्धः कर्तुम्—त्वमेवंविधश्चैवंविधश्च पापकर्मकारी सत्त्वो यदि कदाचिद्बुद्धशब्दं शृणोषि, स्मृतिं प्रतिलभेथाः। अथासौ त्रिपिटो भिक्षुश्च्युतः कालगतो देवेषूपपन्नः। स चापि पुरुषश्च्युतः कालगतो नरकेषूपपन्नः ॥

यतो भगवानाह—किं मन्यध्वे भिक्षवः ? योऽसौ अतीतेऽध्वनि भिक्षुः त्रिपिट आस, अहमेव स तेन कालेन तेन समयेन । योऽसौ पापकर्मकारी सत्त्वो मातापित्रर्हद्घातकः, एष एव धर्मरुचिः । इदं मम तृतीयेऽसंख्येयेऽस्य धर्मरुचेर्दर्शनम् । तदहं संधाय कथयामि—चिरस्य धर्मरुचे, सुचिरस्य धर्मरुचे, सुचिरचिरस्य धर्मरुचे । यावच्च मया भिक्षवस्त्रिभिरसंख्येयैः षड्भिः पारमिताभिरन्यैश्च दुष्करशतसहस्रैरनुत्तरा सम्यक्संबोधिः समुदानीता, तावदनेन धर्मरुचिना यद्भूयसा नरकतिर्यक्षु क्षपितम् ॥

इदमवोचद्भगवान् । आत्तमनसस्ते भिक्षवो भगवतो भाषितमभ्यनन्दन् ॥

धर्मरुच्यवदानमष्टादशम् ॥

# १९ ज्योतिष्कावदानम् ।

बुद्धो भगवान् राजगृहे विहरति वेणुवने कलन्दकनिवापे । राजगृहे नगरे सुभद्रो नाम गृहपतिः प्रतिवसति आढ्यो महाधनो महाभोगः । सोऽत्यर्थं निर्ग्रन्थेष्वभिप्रसन्नः । तेन सदृशात् कुलात् कलत्रमानीतम् । स तया सार्धं क्रीडति रमते परिचारयति । तस्य क्रीडतो 5 रममाणस्य परिचारयतः कालान्तरेण पत्नी आपन्नसत्त्वा संवृत्ता । भगवान् पूर्वाह्णे निवास्य पात्रचीवरमादाय राजगृहं पिण्डाय प्राविक्षत् । राजगृहं पिण्डाय चरन् येन सुभद्रस्य गृहपतेर्निवेशनं तेनोपसंक्रान्तः । अद्राक्षीत् सुभद्रो गृहपतिर्भगवन्तं दूरादेव । दृष्ट्वा च पुनः पत्नीमादाय येन भगवांस्तेनोपसंक्रान्तः । उपसंक्रम्य भगवन्तमिदमवोचत्—भगवन्, इयं मे पत्नी आपन्नसत्त्वा संवृत्ता । किं जनयिष्यतीति । भगवानाह—गृहपते, पुत्रं जनयिष्यति, 10 कुलमुद्द्योतयिष्यति, दिव्यमानुषीं श्रियं प्रत्यनुभविष्यति, मम शासने प्रव्रज्य सर्वक्लेशप्रहाणादर्हत्त्वं साक्षात्करिष्यति । तेन भगवतः शुचिनः प्रणीतस्य खादनीयभोजनीयस्य पात्रपूरो दत्तः । भगवानारोग्य इत्युक्त्वा पिण्डपातमादाय प्रक्रान्तः । तस्य नातिदूरे भूरिकस्तिष्ठति । स संलक्षयति—यदप्यस्माकमेकं भिक्षाकुलम्, तदपि श्रमणो गौतमोऽन्वावर्तयति । गच्छामि, पश्यामि किं श्रमणेन गौतमेन व्याकृतमिति । स तत्र गत्वा कथयति—गृहपते, श्रमणो 15 गौतम आगत आसीत् ? आगतः । किं तेन व्याकृतम् ? आर्य, मया तस्य पत्नी दर्शिता—किं जनयिष्यति ? स कथयति—पुत्रं जनयिष्यति, कुलमुद्द्योतयिष्यति, दिव्यमानुषीं श्रियं प्रत्यनुभविष्यति, मम शासने प्रव्रज्य सर्वक्लेशप्रहाणादर्हत्त्वं साक्षात्करिष्यतीति । स भूरिको गणित्रे कृतावी श्वेतवर्णां गृहीत्वा गणयितुमारब्धः—पश्यति यथा भगवता व्याकृतं तत्सर्वं तथैव । स संलक्षयति—यदि अनुसंवर्णयिष्याम्यहम्, गृहपतिर्भूयस्या मात्रया श्रमणस्य 20 गौतमस्याभिप्रशंस्यति । तदत्र किंचिद् संवर्णयितव्यं किंचित् विवर्णयितव्यमिति विदित्वा हस्तौ संपरिवर्तयति, मुखं च विभण्डयति । सुभद्रो गृहपतिः कथयति—आर्य, किं हस्तौ संपरिवर्तयसि मुखं च विभण्डयसीति ? स कथयति—गृहपते, अत्र किंचित् सत्यं किंचिन्मृषा । आर्य, किं सत्यं किं वा मृषा ? गृहपते, यदनेनोक्तं पुत्रं जनयिष्यतीति, इदं सत्यं कथयति । कुलमुद्द्योतयिष्यतीतीदमपि सत्यम् । अग्रज्योतिरिति संज्ञा । मन्दभाग्यः स सत्त्वो जातमात्र 25 एवाग्निना कुलं धक्ष्यति । यत् कथयति—दिव्यमानुषीं श्रियं प्रत्यनुभविष्यतीति, इदं मृषा । गृहपते, अस्ति कश्चित् त्वया दृष्टो मनुष्यभूतो दिव्यमानुषीं श्रियं प्रत्यनुभवन् ? यत्कथयति—मम शासने प्रव्रजिष्यतीति, इदं सत्यम् । यदा अस्य न भक्तं न वस्त्रम्, तदा निश्चयेन श्रमणस्य गौतमस्यान्तिके प्रव्रजिष्यति । सर्वक्लेशप्रहाणादर्हत्त्वं साक्षात्करिष्यतीति, इदं मृषा । श्रमणस्यैव तावद्गौतमस्य सर्वक्लेशप्रहाणादर्हत्त्वं नास्ति, प्रागेवास्य भविष्यतीति । सुभद्रो 30 विषादमापन्नः कथयति—आर्य, अत्र मया कथं प्रतिपत्तव्यमिति ? भूरिकः कथयति—गृहपते, वयं प्रव्रजिताः शमानुशिक्षाः । त्वमेव जानीषे । इत्युक्त्वा प्रक्रान्तः । सुभद्रः संलक्षयति—सर्वथा परित्याज्योऽसौ इति विदित्वा स भैषज्यं दातुमारब्धः । चरमभविकोऽसौ

C 263

C 264

सत्त्वः। तदस्य भैषज्यार्थाय स्यादिति। स तस्या वामकुक्षिं मर्दितुमारब्धः। स गर्भो दक्षिणं कुक्षिं गतः। सुभद्रो दक्षिणकुक्षिं मर्दितुमारब्धः। स वामं कुक्षिं गतः। अस्थानमेतदनवकाशो यच्चरमभविकः सत्त्वोऽन्तरादुच्छिद्य कालं करिष्यति अप्राप्ते आश्रवक्षये। सा गृहपतिपत्नी कुक्षिणा मृद्यमानेन विक्रोष्टुमारब्धा। प्रातिवेश्यैः श्रुतम्। ते त्वरितत्वरितं गताः पृच्छन्ति—भवन्तः, किमियं गृहपतिपत्नी विरौति? सुभद्रः कथयति—कुक्षिमत्येषा। 5 नूनमस्याः प्रसवकाल इति। ते प्रक्रान्ताः। सुभद्रः संलक्षयति—न शक्यमस्या अत्रोपसंक्रमं कर्तुम्। अरण्यं नयामीति। सा तेनारण्यं नीत्वा तथोपक्रान्ता यथा कालगता। स तां प्रच्छन्नं गृहमानीय सुहृत्संबन्धिबान्धवानां प्रातिवेशकानां च कथयति—भवन्तः, पत्नी मे कालगतेति। ते विक्रोष्टुमारब्धाः। सा तैर्विक्रोशद्भिर्नीलपीतलोहितावदातैर्वस्त्रैः शिबिकामलंकृत्य शीतवनं श्मशानमभिनिर्हृता। निर्ग्रन्थैः श्रुतम्—ते हृष्टतुष्टप्रमुदिताश्छत्रपताका 10 उच्छ्रयित्वा राजगृहस्य नगरस्य रथ्यावीथीचत्वरशृङ्गाटके उपाहिण्डमाना आरोचयन्ति—शृण्वन्तु भवन्तः। श्रमणेन गौतमेन सुभद्रस्य गृहपतेः पत्नी व्याकृता—पुत्रं जनयिष्यति, कुलमुद्द्योतयिष्यति, दिव्यमानुषीं श्रियं प्रत्यनुभविष्यति, मम शासने प्रव्रज्य सर्वक्लेशप्रहाणादर्हत्त्वं साक्षात्करिष्यति। सा च कालगता शीतवनश्मशानमभिनिर्हृता। यस्य तावद्वृक्षमूलमेव नास्ति, कुतस्तस्य शाखापत्रफलं भविष्यतीति? अत्रान्तरे नास्ति किंचि- 15 द्बुद्धानां भगवतामज्ञातमदृष्टमविदितमविज्ञातम्। धर्मता खलु बुद्धानां भगवतां महाकारुणिकानां लोकानुग्रहप्रवृत्तानामेकारक्षाणां शमथविपश्यनाविहारिणां त्रिदमथवस्तुकुशलानां चतुरोघोत्तीर्णानां [चतु]र्ऋद्धिपादचरणतलसुप्रतिष्ठितानां चतुर्षु संग्रहवस्तुषु दीर्घरात्रकृतपरिचयानां चतुर्वैशारद्यविशारदानां पञ्चाङ्गविप्रहीणानां पञ्चगतिसमतिक्रान्तानां षडङ्गसमन्वागतानां षट्पारमितापरिपूर्णानामसंहतविहारिणां सप्तबोध्यङ्गकुसुमाढ्यानामष्टाङ्ग- 20 मार्गदेशिकानां नवानुपूर्वविहारसमापत्तिकुशलानां दशबलबलिनां दशदिक्समापूर्णयशसां दशशतवशवर्तिप्रतिविशिष्टानां त्री रात्रेः त्रिर्दिवसस्य बुद्धचक्षुषा लोकं व्यवलोक्य ज्ञानदर्शनं प्रवर्तते—को हीयते, को वर्धते, कः कृच्छ्रप्राप्तः, कः संकटप्राप्तः, कः संबाधप्राप्तः, कः कृच्छ्रसंकटसंबाधप्राप्तः, कोऽपायनिम्नः, कोऽपायप्रवणः, कोऽपायप्राग्भारः, कमहमपायादुद्धृत्य स्वर्गे मोक्षे च प्रतिष्ठापयेयम्, कस्यानवरोपितानि कुशलमूलान्यवरोपयेयम्, कस्याव- 25 रोपितानि परिपाचयेयम्, कस्य परिपक्वानि विमोचयेयम्। आह च—

अप्येवातिक्रमेद्वेलां सागरो मकरालयः।
न तु वैनेयवत्सानां बुद्धो वेलामतिक्रमेत्॥ १॥ इति।

अथ भगवानन्यतरस्मिन् प्रदेशे स्मितमकार्षीत्। धर्मता खलु यस्मिन् समये बुद्धा भगवन्तः स्मितं प्राविष्कुर्वन्ति, तस्मिन् समये नीलपीतलोहितावदाता अर्चिषो मुखान्निश्चार्य 30 काश्चिदधस्ताद्गच्छन्ति, काश्चिदुपरिष्टाद्गच्छन्ति। या अधस्ताद्गच्छन्ति, ताः संजीवं कालसूत्रं संघातं रौरवं महारौरवं तपनं प्रतापनमवीचिमर्बुदं निरर्बुदमटटं हहवं हुहवमुत्पलं पद्म

C 265

महापद्मं नरकं गत्वा ये उष्णनरकास्तेषु शीतीभूता निपतन्ति । तेन तेषां सत्त्वानां कारणाविशेषाः प्रतिप्रस्रब्धाः । तेषामेवं भवति—किं नु वयं भवन्त इतश्च्युताः, आहोस्विदन्यत्रोपपन्ना इति । तेषां प्रसादसंजननार्थं भगवान् निर्मितं विसर्जयति । तेषां निर्मितं दृष्ट्वा एवं भवति—न ह्येव वयं भवन्त इतश्च्युताः, नाप्यन्यत्रोपपन्नाः । अपि त्वयमपूर्वदर्शनः 5 सत्त्वः, अस्यानुभावादस्माकं कारणाविशेषाः प्रतिप्रस्रब्धा इति । ते निर्मिते चित्तमभिप्रसाद्य C 266 तन्नरकवेदनीयं कर्म क्षपयित्वा देवमनुष्येषु प्रतिसंधिं गृह्णन्ति यत्र सत्त्वानां भाजनभूता भवन्ति । या उपरिष्टाद्गच्छन्ति, ताश्चातुर्महाराजकायिकान् देवांस्त्रायस्त्रिंशान् यामांस्तुषितान्निर्माणरतीन् परनिर्मितवशवर्तिनो ब्रह्मकायिकान् ब्रह्मपुरोहितान् महाब्रह्मणः परीत्ताभानप्रमाणाभानाभास्वरान् परीत्तशुभानप्रमाणशुभान् शुभकृत्स्नाननभ्रकान् पुण्यप्रसवान् 10 बृहत्फलानतपान् सुदृशान् सुदर्शनानकनिष्ठान् देवान् गत्वा अनित्यं दुःखं शून्यमनात्मेत्युद्घोषयन्ति । गाथाद्वयं च भाषन्ते—

आरभध्वं निष्क्रामत युज्यध्वं बुद्धशासने ।
धुनीत मृत्युनः सैन्यं नडागारमिव कुञ्जरः ॥ २ ॥
यो ह्यस्मिन् धर्मविनये अप्रमत्तश्चरिष्यति ।
15 प्रहाय जातिसंसारं दुःखस्यान्तं करिष्यति ॥ ३ ॥

अथ ता अर्चिषस्त्रिसाहस्रमहासाहस्रं लोकधातुमन्वाहिण्डय भगवन्तमेव पृष्ठतः पृष्ठतः समनुगच्छन्ति । भगवत आस्येऽन्तर्हिताः । अथायुष्मानानन्दः कृतकरपुटो भगवन्तं पप्रच्छ—

नानाविधो रङ्गसहस्रचित्रो
वक्त्रान्तरान्निष्कसितः कलापः ।
20 अवभासिता येन दिशः समन्ता-
द्दिवाकरेणोदयता यथैव ॥ ४ ॥

गाथाश्च भाषते—

विगतोद्भवा दैन्यमदप्रहीणा
25 बुद्धा जगत्युत्तमहेतुभूताः ।
नाकारणं शङ्खमृणालगौरं
स्मितमुपदर्शयन्ति जिना जितारयः ॥ ५ ॥

तत्कालं स्वयमधिगम्य धीर बुद्ध्या
श्रोतॄणां श्रमण जिनेन्द्र काङ्क्षितानाम् ।
30 धीराभिर्मुनिवृष वाग्भिरुत्तमाभि-
रुत्पन्नं व्यपनय संशयं शुभाभिः ॥ ६ ॥

O 267

नाकस्माल्लवणजलाद्रिराजधैर्याः
संबुद्धाः स्मितमुपदर्शयन्ति धीराः ।
यस्यार्थे स्मितमुपदर्शयन्ति नाथा-
स्तं श्रोतुं समभिलषन्ति ते जनौघाः ॥ ७ ॥ इति ॥

भगवानाह—एवमेतदानन्द, एवमेतत् । नाहेतुप्रत्ययमानन्द तथागता अर्हन्तः 5
सम्यक्संबुद्धाः स्मितं प्राविष्कुर्वन्ति । गच्छ आनन्द, भिक्षूणामारोचय—तथागतो भिक्षवः
श्मशानचारिकां गन्तुकामः । यो युष्माकमुत्सहते तथागतेन सार्धं श्मशानचारिकां गन्तुम्,
स चीवरकाणि गृह्णातु । एवं भदन्तेत्यायुष्मानानन्दो भगवतः प्रतिश्रुत्य भिक्षूणामारोचयति—
तथागत आयुष्मन्तः श्मशानचारिकां गन्तुकामः । यो युष्माकमुत्सहते तथागतेन सार्धं
श्मशानचारिकां गन्तुम्, स चीवरकाणि गृह्णातु । एवमायुष्मन्निति ते भिक्षवः सर्वे संश्रुत्य 10
भगवत्सकाशमुपगताः । अथ भगवान् दान्तो दान्तपरिवारः शान्तः शान्तपरिवारो मुक्तो
मुक्तपरिवार आश्वस्त आश्वस्तपरिवारो विनीतो विनीतपरिवारोऽर्हन्नर्हत्परिवारो वीतरागो
वीतरागपरिवारः प्रासादिकः प्रासादिकपरिवारो वृषभ इव गोगणपरिवृतो गजराज इव कलभ-
गणपरिवृतः सिंह इव दंष्ट्रगणपरिवृतो हंसराज इव हंसगणपरिवृतः सुपर्णीव पक्षिगण-
परिवृतो विप्र इव शिष्यगणपरिवृतः सुवैद्य इवातुरगणपरिवृतः शूर इव योधगणपरिवृतो 15

O 268

देशिक इवाध्वगणपरिवृतः सार्थवाह इव वणिग्गणपरिवृतः श्रेष्ठीव पौरजनपरिवृतः कोट्टराज
इव मन्त्रिगणपरिवृतश्चक्रवर्तीव पुत्रसहस्रपरिवृतश्चन्द्र इव नक्षत्रगणपरिवृतः सूर्य इव रश्मि-
सहस्रपरिवृतो धृतराष्ट्र इव गन्धर्वगणपरिवृतो विरूढक इव कुम्भाण्डगणपरिवृतो धनद इव
यक्षगणपरिवृतो वेमचित्रीवासुरगणपरिवृतः शक्र इव त्रिदशगणपरिवृतो ब्रह्मेव ब्रह्मकायिक-
परिवृतः स्तिमित इव जलनिधिः सजल इव जलधरो विमद इव गजपतिः सुदान्तैरिन्द्रियै- 20
रसंक्षोभितेर्यापथप्रचारो द्वात्रिंशता महापुरुषलक्षणैः समलंकृतोऽशीत्या चानुव्यञ्जनैर्विराजित-
गात्रो व्यामप्रभालंकृतमूर्तिः सूर्यसहस्रातिरेकप्रभो जङ्गम इव रत्नपर्वतः समन्ततो भद्रको
दशभिर्बलैश्चतुर्भिर्वैशारद्यैस्त्रिभिरावेणिकैः स्मृत्युपस्थानैर्महाकरुणया च समन्वागत आज्ञात-
कौण्डिन्याश्वजिद्बाष्पमहानामभद्रिकशारिपुत्रमौद्गल्यायनकाश्यपयशःपूर्णप्रभृतिमहाश्रावकैः परि-
वृतोऽन्येन च महता भिक्षुसंघेन अनेकैश्च प्राणिशतसहस्रैः शीतवनं महाश्मशानं संप्र- 25
स्थितः । अष्टादशानुशंसा बुद्धचारिकायामित्यनेकानि देवताशतसहस्राणि भगवतः पृष्ठतः
पृष्ठतोऽनुबद्धानि । शीतवनानुगुणाश्च वायवो वायितुमारब्धाः ॥

राजगृहात् द्वौ बालदारकौ ब्राह्मणदारकः क्षत्रियदारकश्च बहिर्निर्गत्य क्रीडतः ।
तयोः क्षत्रियदारकोऽवगाढश्राद्धो ब्राह्मणदारको न तथा । स ब्राह्मणदारकः क्षत्रियदारकस्य
कथयति—वयस्य, भगवता सुभद्रस्य गृहपतेः पत्नी व्याकृता—पुत्रं जनयिष्यति, कुलमुद्द्योत- 30
यिष्यति, दिव्यमानुषीं श्रियं प्रत्यनुभविष्यति, मम शासने प्रव्रज्य सर्वक्लेशप्रहाणादर्हत्त्वं
साक्षात्करिष्यतीति । सा च मृता कालगता शीतवनं श्मशानं निर्हृता—मा हैव भगवता
भाषितं वितथं स्यादिति । स क्षत्रियदारको गाथां भाषते—

सचन्द्रतारं प्रपतेदिहाम्बरं
महीं सशैला सवना नभो व्रजेत्।
महोदधीनामुदकं क्षयं व्रजे-
न्महर्षयः स्युर्न मृषाभिधायिनः ॥ ८ ॥ इति ।

5 स च ब्राह्मणदारकः कथयति—वयस्य, यद्येवम्, गच्छामः शीतवनं महाश्मशानं पश्यामः? वयस्य, गच्छामः। तौ संप्रस्थितौ। भगवांश्च राजगृहान्निर्गतः। अद्राक्षीत् स क्षत्रियदारको भगवन्तं दूरादेव। दृष्ट्वा च पुनर्गाथां भाषते—

C 269 अनुद्धतो विगतकुतूहलो मुनि-
र्यथा व्रजत्येष जनौघसंवृतः।
10 निःसंशयं परगणवादिमर्दनो
नदस्यते मृगपतिनादमुत्तमम् ॥ ९ ॥

यथा ह्यमी शीतवनोन्मुखोत्सुकाः
प्रवान्ति वाता हिमपङ्कशीतलाः।
प्रयान्ति नूनं बहवो दिवौकसो
15 निरीक्षितुं शाक्यमुनेर्विकुर्वितम् ॥ १० ॥ इति ।

राज्ञा बिम्बिसारेण श्रुतम्—भगवता सुभद्रस्य गृहपतेः पत्नी व्याकृता—पुत्रं जनयिष्यति, कुलमुद्द्योतयिष्यति, दिव्यमानुषीं श्रियं प्रत्यनुभविष्यति, मम शासने प्रव्रज्य सर्वक्लेशप्रहाणादर्हत्त्वं साक्षात्करिष्यति। सा च मृता कालगता शीतवनं श्मशानमभिनिर्ह्वता। भगवांश्च सश्रावकसंघः शीतवनं संप्रस्थित इति। श्रुत्वा च पुनरस्यैतदभवत्—न भगवान् निरर्थकं 20 शीतवनं गच्छति। नूनं भगवान् सुभद्रस्य गृहपतेः पत्नीमागम्य महद्विनेयकार्यं कर्तुकामो भविष्यति। पश्यामीति। सोऽप्यन्तःपुरकुमारामात्यपौरजानपदपरिवृतो राजगृहान्निर्गन्तुमारब्धः। अद्राक्षीत् स क्षत्रियकुमारको राजानं मागधश्रेण्यं बिम्बिसारं दूरादेव। दृष्ट्वा च पुनर्गाथां भाषते—

यथा हि श्रेण्यो मगधाधिपो ह्ययं
25 विनिर्ययौ राजगृहात् सबान्धवः।
प्रवर्तते मे हृदि निश्चिता मति-
र्महाजनस्याभ्युदयो भविष्यति ॥ ११ ॥ इति ।

जनकायेन भगवन्तं दृष्ट्वा विवरमनुप्रदत्तम्। भगवान् स्मितोन्मुखो महाजनमध्यं प्रविष्टः। निर्ग्रन्था भगवन्तं स्मितोन्मुखं दृष्ट्वा संलक्षयन्ति—यथा श्रमणो गौतमः स्मितोन्मुखो C 270 30 महाजनमध्यं प्रविष्टः, नूनमयं बोधिसत्त्वो न कालगतः। तैः सुभद्रो गृहपतिरुक्तः—गृहपते, नन्वयं सत्त्वो मन्दभाग्यो न कालगत इति। स कथयति—आर्य यद्येवम्,

कथमत्र प्रतिपत्तव्यमिति ? ते कथयन्ति—गृहपते, वयं शमात्तशिक्षाः, त्वमेव ज्ञास्यसीति। स तां पत्नीं चितायामारोप्य ध्मापयितुमारब्धः। तस्याः सर्वः कायो दग्धः स्थापयित्वा कुक्षिसामन्तकम्। तथासौ कुक्षिः स्फुटितः, पद्मं प्रादुर्भूतम्। तस्य चोपरिपद्मकर्णिकायां कुमारो निषण्णोऽभिरूपो दर्शनीयः प्रासादिकः। तं दृष्ट्वा अनेकानि प्राणिशतसहस्राणि परं विस्मयमुपगतानि। निर्ग्रन्था निपातमदमाना नच( नष्ट ? )प्रभावाः 5 संवृत्ताः। तत्र भगवान् सुभद्रं गृहपतिमामन्त्रयते—गृहपते, गृहाण कुमारम्। स निर्ग्रन्थानां मुखमवलोकितुमारब्धः। ते कथयन्ति—गृहपते, यदि प्रज्वलितामेतां चितां प्रवेक्ष्यसि, सर्वेण सर्वं न भविष्यसीति। स न प्रतिगृह्णाति। तत्र भगवान् जीवकं कुमारभूतमामन्त्रयते—गृहाण जीवक कुमारकमिति। स संलक्षयति—अस्थानमनवकाशो भगवान् मामस्थाने नियोक्ष्यति। गृह्णामीति। तेन निर्विशङ्केन चितां विगाह्य गृहीतः। 10

विगाहतस्तस्य जिनाज्ञया चितां
प्रतिगृह्णतश्चाग्निगतं कुमारकम्।
जिनप्रभावान्महतो हुताशनः
क्षणेन जातो हिमपङ्कशीतलः॥ १२॥

ततो जीवकं कुमारभूतमिदमवोचत्—जीवक, मासि क्षत उपहतो वेति ? स कथयति— 15 राजकुलेऽहं भदन्त जातो राजकुले वृद्धः। नाभिजानामि गोशीर्षचन्दनस्यापीदृशं शैत्यं यद्भगवता अधिष्ठितायाश्चितायाः। तत्र भगवान् सुभद्रं गृहपतिमामन्त्रयते—गृहाणेदानीं गृहपते कुमारमिति। स मिथ्यादर्शनविहतः। तथापि न संप्रतिपद्यते। निर्ग्रन्थानामेव मुखं व्यवलोकयति। ते कथयन्ति—गृहपते, अयं सत्त्वोऽतीव मन्दभाग्यो यो हि नाम सर्वभक्षेणाप्यग्निना न दग्धः। किं बहुना ? यद्येवं गृहं प्रवेशयसि, नीयताम्। ते गृहमुत्सादयद् 20 भविष्यसि, त्वं च प्राणैर्वियुज्यस इति। नास्ति आत्मसमं प्रेमेति। तेनासौ न प्रतिगृहीतः। C 271 तत्र भगवान् राजानं बिम्बिसारमामन्त्रयते—गृहाण महाराज कुमारमिति। तेनससंभ्रमेण हस्तौ प्रसार्य गृहीतः। ततः समन्ततो निरीक्ष्य कथयति—भगवन्, किं भवतु अस्य दारकस्य नामेति। भगवानाह—महाराज, यस्मादयं दारको ज्योतिर्मध्याल्लब्धः, तस्माद्भवतु दारकस्य ज्योतिष्क इति नामेति। तस्य ज्योतिष्क इति नामधेयं व्यवस्थापितम्। ततो 25 भगवता तस्य जनकायस्याशयानुशयं धातुं प्रकृतिं च ज्ञात्वा तादृशी धर्मदेशना कृता, यां श्रुत्वा बहुभिः सत्त्वशतैर्महान् विशेषोऽधिगतः। कैश्चिच्छ्रोतापत्तिफलं साक्षात्कृतम्, कैश्चित् सकृदागामिफलम्, कैश्चिदनागामिफलम्, कैश्चित् सर्वक्लेशप्रहाणादर्हत्त्वं साक्षात्कृतम्, कैश्चिदुष्मगतानि कुशलमूलान्युत्पादितानि, कैश्चिन्मूर्धानः, कैश्चित् मृदुमध्याः क्षान्तयः, कैश्चिच्छ्रावकबोधौ चित्तान्युत्पादितानि, कैश्चित् प्रत्येकबोधौ, कैश्चिदनुत्तरायां सम्यक्संबोधौ, 30 कैश्चिच्छरणगमनानि, कैश्चिच्छिक्षापदानि। यद्भूयसा सा पर्षद्बुद्धनिम्ना धर्मप्रवणा संघप्राग्भारा व्यवस्थिता। ज्योतिष्को दारको राज्ञा बिम्बिसारेण अष्टाभ्यो धात्रीभ्योऽनुप्रदत्तो

द्वाभ्यामंसधात्रीभ्यां द्वाभ्यां क्षीरधात्रीभ्यां द्वाभ्यां मलधात्रीभ्यां द्वाभ्यां क्रीडनिकाभ्यां धात्रीभ्याम्। सोऽष्टाभिर्धात्रीभिरुन्नीयते वर्धते क्षीरेण दध्ना नवनीतेन सर्पिषा सर्पिमण्डेन अन्यैश्चोत्तप्तोत्तप्तैरुपकरणविशेषैः। आशु वर्धते ह्रदस्थमिव पङ्कजम्॥

तस्य मातुलः पण्यमादाय देशान्तरं गतः। तेन श्रुतं यथा मम भगिनी सत्त्ववती 5 संवृत्ता। सा भगवता व्याकृता—पुत्रं जनयिष्यति, कुलमुद्द्योतयिष्यति, दिव्यमानुषीं श्रियं प्रत्यनुभविष्यति, मम शासने प्रव्रज्य सर्वक्लेशप्रहाणादर्हत्त्वं साक्षात्करिष्यतीति। स पण्यं विसर्जयित्वा प्रतिपण्यमादाय राजगृहमागतः। तेन श्रुतं यथा सा अस्माकं भगिनी कालगतेति। श्रुत्वा च पुनः संलक्षयति—भगवता असौ व्याकृता पुत्रं जनयिष्यति, कुलमुद्द्योतयिष्यति, दिव्यां मानुषीं श्रियं प्रत्यनुभविष्यति, मम शासने प्रव्रज्य सर्वक्लेशप्रहाणादर्हत्त्वं 10 साक्षात्करिष्यतीति। मा हैव तद्भगवतो भाषितं वितथं स्यात्। तेन तिरःप्रातिवेश्याः पृष्टाः—श्रुतं मया अस्माकं भगिनी सत्त्ववती संवृत्ता। सा भगवता व्याकृता पुत्रं जनयिष्यति, कुलमुद्द्योतयिष्यति, दिव्यमानुषीं श्रियं प्रत्यनुभविष्यति, मम शासने प्रव्रज्य सर्वक्लेशप्रहाणादर्हत्त्वं साक्षात्करिष्यतीति। श्रुत्वा वयं परितुष्टाः। सा च श्रूयते मृता कालगतेति। मा हैव भगवतो भाषितं वितथं स्यादिति। ते गाथां भाषन्ते—

15 सचन्द्रतारं प्रपतेदिहाम्बरं
मही सशैला सवना नभो व्रजेत्।
महोदधीनामुदकं क्षयं व्रजे-
न्महर्षयः स्युर्न मृषाभिधायिनः॥ १३॥

न भगवतो भाषितं वितथम्। कथं भगवतो भाषितं वितथं भविष्यति? किं तु तेन 20 स्वामिनापि असौ तथा तथा उपक्रान्ता, यथा कालगता। स दारको महर्द्धिको महानुभावः। अग्निना न दग्धः। अद्यापि राजकुले संवर्धत इति। स सुभद्रस्य गृहपतेः सकाशं गत्वा कथयति—न युक्तं गृहपते त्वया कृतम्। किं कृतम्? अस्माकं सत्त्ववती भगिनी त्वया निर्ग्रन्थविग्राहितेन तथा तथा उपक्रान्ता, यथा कालगता। स दारको महर्द्धिको महानुभावः। अग्निनापि न दग्धः। अद्यापि राजकुले संवर्धते। तद्गतमेतत्। यदि तावत्कुमारमानयसि, इत्येवं 25 कुशलम्। नो चेद्वयं त्वां ज्ञातिमध्यादुत्क्षिपामः। सलोकानां [सालोहितानां?] संकारं पातयामः, रथ्यावीथीचत्वरशृङ्गाटकेषु चावरणं निश्चारयामः—अस्माकं भगिनी सुभद्रेण गृहपतिना प्रघातिता। स्त्रीघातकोऽयम्। न केनचिदाभाषितव्यमिति। राजकुले च तेऽनर्थं कारयाम इति। स श्रुत्वा व्यथितः। यथैष परिभाषते, नूनमेवं करोमीति विदित्वा राज्ञः पादयोर्निपत्य कथयति—देव, मम ज्ञातय एवं परिभाषन्ते—यदि तावत् कुमारमानयसीत्येवं 30 कुशलम्, नो चेदानयसि, वयं त्वां ज्ञातिमध्यादुत्क्षिपामः, संकारं पातयामः, रथ्यावीथीचत्वरशृङ्गाटकेषु चावरणं निश्चारयामः—अस्माकं भगिनी सुभद्रेण गृहपतिना प्रघातिता। स्त्रीघातकोऽयम्। न केनचिदाभाषितव्यमिति। राजकुले च तेऽनर्थं कारयाम इति।

O 272 O 273

तदर्हसि ज्योतिष्कं कुमारं दातुमिति। राजा कथयति—गृहपते, न मया त्वत्सकाशात् ज्योतिष्कः कुमारो गृहीतः, किं तु भगवता मम न्यस्तः। यदि त्वं कुमारेणार्थी, भगवत्सकाशं गच्छेति। स भगवत्सकाशं गतः। पादयोर्निपत्य कथयति—भगवन्, मम ज्ञातय एवं परिभाषन्ते—यदि तावत् कुमारमानयसीत्येवं कुशलम्। नो चेदानयसि, वयं त्वां ज्ञातिमध्यादुत्क्षिपामः, संकारं पातयामः, रथ्यावीथीचत्वरशृङ्गाटकेषु चावरणं निश्चारयामः। अस्माकं भगिनी सुभद्रेण गृह- 5 पतिना प्रघातिता। स्त्रीघातकोऽयम्। न केनचिदाभाषितव्य इति। राजकुले चानर्थं कारयाम इति। तदर्हसि ज्योतिष्कं कुमारं दापयितुमिति। भगवान् संलक्षयति—यदि सुभद्रो ज्योतिष्कं कुमारं न लभते, स्थानमेतद्विद्यते यदुष्णं रुधिरं छर्दयित्वा कालं करिष्यति। इति विदित्वा आयुष्मन्तमानन्दमामन्त्रयते—गच्छ आनन्द, राजानं बिम्बिसारं मद्वचने- नारोग्यय, एवं च वद—अनुप्रयच्छ महाराज सुभद्रस्य गृहपतेर्ज्योतिष्कं कुमारम्। यदि 10 सुभद्रो गृहपतिर्ज्योतिष्कं कुमारं न लभते, स्थानमेतद्विद्यते यदुष्णं शोणितं छर्दयित्वा कालं करिष्यतीति। एवं भदन्तेत्यायुष्मानानन्दो भगवतः प्रतिश्रुत्य येन राजा बिम्बिसारस्तेनोप- संक्रान्तः। उपसंक्रम्य राजानं बिम्बिसारमेतदवोचत्—भगवांस्ते महाराज आरोग्ययति, कथ- यति च—अनुप्रयच्छ महाराज सुभद्रस्य गृहपतेर्ज्योतिष्कं कुमारम्। यदि सुभद्रो गृहपति- र्ज्योतिष्कं कुमारं न लभते, स्थानमेतद्विद्यते यत् सुभद्रो गृहपतिरुष्णं शोणितं छर्दयित्वा 15 कालं करिष्यति। राजा कथयति—वन्दे भदन्तानन्द बुद्धं भगवन्तम्। यथा भगवानाज्ञाप- यति तथा करिष्ये। आरोग्यमित्युक्त्वा आयुष्मानानन्दः प्रक्रान्तः। राजा बिम्बिसारः कथयति— गृहपते, मया अयं कुमारः संवर्धितः। प्रियश्च मे मनापश्च। समयतोऽहं मुञ्चामि, यदि मां दिवसे दिवसे त्रिष्कालं दर्शनायोपसंक्रामतीति। स कथयति—देव उपसंक्रमिष्यति। कोऽन्य उपसंक्रमितव्य इति? स राज्ञा सर्वालंकारविभूषितं कृत्वा हस्तिस्कन्ध आरोप्य 20 विसर्जितः॥

C 274

आचरितमेतल्लोकस्य—न तावत् पुत्रस्य नाम प्रज्ञायते यावत् पिता जीवति। याव- दपरेण समयेन सुभद्रो गृहपतिः कालगतः। ज्योतिष्कः कुमारः स्वगृहे प्रतिष्ठितः। स बुद्धेऽभिप्रसन्नो धर्मे संघेऽभिप्रसन्नः। बुद्धं शरणं गतो धर्मं संघं शरणं गतः। तेन यस्मिन् प्रदेशे तेन सुभद्रेण पत्नी आघातिता, तस्मिन् प्रदेशे विहारं कारयित्वा सर्वोपकरणसंपूर्ण- 25 श्चातुर्दिशार्यभिक्षुसंघाय निर्यातितः। तथा स्थविरैरपि सूत्रान्त उपनिबद्धम्—भगवान् राजगृहे विहरति मृदितकुक्षिके दाव इति॥

सुभद्रस्य गृहपतेः पौरुषेया ये पण्यमादाय देशान्तरं गताः, तैः श्रुतम्—सुभद्रो गृहपतिः कालगतः। ज्योतिष्कः कुमारः स्वगृहे प्रतिष्ठितः। स बुद्धेऽभिप्रसन्नो धर्मे संघेऽभिप्रसन्नो बुद्धं शरणं गतो धर्मं संघं शरणं गत इति। तेषां च गोशीर्षचन्दनमयं 30 पात्रं संपन्नम्। तैस्तद्रत्नानां पूरयित्वा ज्योतिष्कस्य गृहपतेः प्राभृतमनुप्रेषितम्। तेन तद्दीर्घे स्तम्भे आरोप्य स्थापितम्। घण्टावघोषणं कारितम्—नेदं केनचित् विष्टया वा

शीतया वा कर्कटकेन वा गृहीतव्यम्। य एतच्छ्रमणो वा ब्राह्मणो वा महर्द्धिको वा महानुभावः ऋद्ध्या गृह्णाति, तस्येदं यथासुखमिति। तीर्थ्याः कल्यमेवोत्थाय तीर्थ्यस्पर्शनं गच्छन्ति। तैस्तद् दृष्टम्। दृष्ट्वा च पुनर्ज्योतिष्कस्य गृहपतेः कथयन्ति—गृहपते, किमेतदिति? तेन तेषां विस्तरेणारोचितम्। ते कथयन्ति—गृहपते, त्वं श्रमणशाक्यपुत्रेष्वभिप्रसन्नः।
5 ते एवं ग्रहीष्यन्तीत्युक्त्वा प्रक्रान्ताः। यावत् स्थविरस्थविरा भिक्षवो राजगृहं
C 275 पिण्डाय प्रविष्टाः। तैर्दृष्ट्वा तैरपि ज्योतिष्को गृहपतिः पृष्टः—किमेतदिति? तेन तथैव विस्तरेण समाख्यातम्। ते कथयन्ति—गृहपते, किं पात्रमात्रस्यार्थयात्मानं संप्रकाशयामः? उक्तं भगवता—प्रच्छन्नकल्याणैर्वो भिक्षवो विहर्तव्यं धूतपापैरित्युक्त्वा प्रक्रान्ताः। यावदायुष्मान् दशबलः काश्यपस्तमनुप्राप्तः। स पृच्छति—गृहपते, किमेतदिति? तेन यथावृत्त-
10 मारोचितम्। आयुष्मान् दशबलकाश्यपः संलक्षयति—येन मया अनादिकालोपचितं क्लेशगणं वान्तं त्यक्तं छर्दितं प्रतिनिसृष्टम्, तं मां गृहपतिस्तीर्थिकसाधारणया ऋद्ध्या आह्वयति। तदस्य मनोरथं पूरयामीति। तेन गजभुजसदृशं बाहुमभिप्रसार्य तत्पात्रं गृहीतम्। स तद्गृहीत्वा विहारं गतो भिक्षुभिरुच्यते—स्थविर, कुतस्तव गोशीर्षचन्दनमयं पात्रमिति? तेन यथावृत्तमारोचितम्। भिक्षवः कथयन्ति—स्थविर, कल्पते तव पात्रमात्रस्यार्थाय ऋद्धिं विदर्श-
15 यितुमिति? कथयति—आयुष्मन्तः, कल्पतु वा मा वा। कृतमिदानीम्। किं क्रियतामिति? एतत् प्रकरणं भिक्षवो भगवत आरोचयन्ति। भगवानाह—न भिक्षुणा आगारिकस्य पुरस्तात् ऋद्धिर्विदर्शयितव्या। दर्शयति, सातिसारो भवति। अपि तु चत्वारि पात्राणि सुवर्णमयं रूप्यमयं वैडूर्यमयं स्फटिकमयम्। अपराण्यपि चत्वारि पात्राणि रीतिमयं ताम्रमयं कंसमयमभ्रमयं च। तत्र यानि पूर्वकाणि चत्वारि पात्राणि, एतान्यनुपस्थापितानि
20 नोपस्थापयितव्यानि, उपस्थापितानि विसर्जयितव्यानि। यानि पश्चिमानि चत्वारि पात्राणि, एतान्यनुपस्थापितानि नोपस्थापयितव्यानि, उपस्थापितानि तु भैषज्यशरावपरिभोगेन परिभोक्तव्यानि। अपि त्वधीष्टानि ते द्वे पात्रे आयसं मृण्मयम्। यावदपरेण समयेन ज्योतिष्कस्य गृहपतेर्दिव्यमानुषी श्रीः प्रादुर्भूता। अन्तरा च राजगृहमन्तरा च चम्पामत्रान्तरे शुल्कशाला। तस्यां शुल्कशालिकः कालगतः। स व्यालयक्षेषूपपन्नः। तेन
C 276 25 पुत्राणां स्वप्नदर्शनं दत्तम्—पुत्राः, यूयमेतस्मिन् स्थाने यक्षस्थानं कारयत। तत्र च घण्टां बद्ध्वा लम्बयत—यः कश्चित् पण्यमशुल्कयित्वा गमिष्यति, सा घण्टा तावद्विरविष्यति यावदसौ निवर्त्य शुल्कं दापयितव्यमिति (यिष्यतीति?)। तैस्तं स्वप्नं संबन्धिबान्धवानां निवेद्य दिवसतिथिमुहूर्तेन तस्मिन् प्रदेशे यक्षस्थानं कारितम्। तत्र च घण्टा बद्ध्वा लम्बिता॥

30 चम्पायामन्यतमो ब्राह्मणः। तेन सदृशात् कुलात् कलत्रमानीतम्। सा ब्राह्मणी संलक्षयति—अयं ब्राह्मणो यैस्तैरुपायैर्धनोपार्जनं करोति। अहं भक्षयामि। न मम प्रतिरूपं यदहमकर्मिका तिष्ठेयमिति। तया वीथीं गत्वा कर्पासः क्रीतः। तं परिकर्मयित्वा श्लक्ष्णं

सूत्रं कर्तितम्। शोभनेन कुविन्देन कार्षापणसहस्रमूल्या यमली वायिता। तया ब्राह्मण उक्तः—ब्राह्मण, अस्या यमल्याः कार्षापणसहस्रं मूल्यम्। गृहीत्वा वीथीं गच्छ। यदि कश्चित् याचति, कार्षापणसहस्रेण दातव्या, नो चेदपत्तनं घोषयित्वा अन्यत्र गन्तव्यमिति। स तां गृहीत्वा वीथीं गतः। न कश्चित् कार्षापणसहस्रेण गृह्णाति। सोऽपत्तनं घोषयित्वा तां यमलीं छत्रदण्डे प्रक्षिप्य सार्थेन सार्धं राजगृहं संप्रस्थितो यावदनुपूर्वेण शुल्कशालामनु- 5 प्राप्तः। शुल्कशालिकेन सार्थः शुल्कितः। स शुल्कं दत्त्वा संप्रस्थितः। घण्टा रटितुमारब्धा। शौल्किकाः कथयन्ति—भवन्तः, यथेयं घण्टा रणति, नूनं सार्थो न निपुणं शुल्कितः। भूयः शुल्कयाम इति। तैरसौ सार्थः पुनः प्रतिनिवर्त्य शुल्कितः। नास्ति किंचि-दशुल्कितम्। घण्टा रटत्येव। तैरसौ सार्थो भूयः प्रतिनिवर्त्य प्रत्यवेक्षितः। नास्त्येव किंचित्। सार्थिका अवध्यातुमारब्धाः—किं यूयमस्मान् मूषितुकामा येन भूयो भूयः प्रति- 10 निवर्तयध्वमिति? तैरसौ सार्थो द्विधा कृत्वा मुक्तः। येषां मध्ये स ब्राह्मणो नास्ति, तेऽतिक्रान्ताः। अन्येषां गच्छतां सा घण्टा तथैव रटितुमारब्धा। तैस्ते पुनः प्रत्यवेक्षिताः। एवं तावत् द्विधाकृताः, यावत् स चैको ब्राह्मणोऽवस्थित इति। स तैर्गृहीतः। स कथयति—प्रत्यवेक्षत यदि मम किंचिदस्तीति। तैः सर्वतः प्रत्यवेक्ष्य मुक्तः। सा घण्टा रटत्येव। तैरसौ ब्राह्मणः प्रतिनिवर्त्योक्तः—भो ब्राह्मण कथय, नैव शुल्कं 15 दापयामः। किं तु देवस्यैव सान्निध्यं ज्ञातं भवतीति। कथयति—सत्यं न दापयथ? न दापयामः। तेन च्छत्रदण्डादपनीय सा यमली दर्शिता। ते परं विस्मयमापन्नाः—भवन्तः, ईदृशमपि देवस्य सान्निध्यमिति। तैस्तत एकं वस्त्रमुद्घाट्य देवः प्रावृतः। ब्राह्मणः कथयति—यूयं कथयथ शुल्कं न दापयाम इति। इदानीं सर्वस्वमपहरथ इति। ते कथयन्ति—ब्राह्मण, नास्माभिर्गृहीतम्। अपि देवस्यैतत् सान्निध्यमिति कृत्वा अस्माभिः प्रावृतः। गृहीत्वा 20 गच्छेति। स तं पुनर्गृहीत्वा पुनश्छत्रनाडिकायां प्रक्षिप्य प्रक्रान्तः। अनुपूर्वेण राजगृह-मनुप्राप्तः। स वीथ्यां प्रसार्यावस्थितः। तत्रापि तां न कश्चित् कार्षापणसहस्रेण याचते। स राजगृहमप्यपत्तनं घोषयितुमारब्धः। ज्योतिष्कश्च कुमारो राजकुलान्निष्क्रम्य हस्तिस्कन्धा-भिरूढो वीथीमध्येन स्वगृहं गच्छति। तेन श्रुतम्। स कथयति—भवन्तः, किमर्थं ब्राह्मणो-ऽपत्तनं घोषयति? शब्दयतैनम्। पृच्छाम इति। स तैः शब्दितः। ज्योतिष्केणोक्तः—भो 25 ब्राह्मण, किमर्थं त्वं अपत्तनं घोषयसि? गृहपते, अस्या यमल्याः कार्षापणसहस्रं मूल्यम्। न च कश्चिद्याचत इति। स कथयति—आनय, पश्यामः। तेनोपदर्शिता। ज्योतिष्कः कथ-यति—अस्त्येतदेव। किं तु अत्रैकं वस्त्रं परिभुक्तकम्। एकमपरिभुक्तकम्। यदपरिभुक्तम्, अस्य पञ्चकार्षापणशतानि मूल्यम्। यत्तु परिभुक्तकम्, अस्यार्धतृतीयानि। ब्राह्मणः कथयति—किमेतदेवं भविष्यति? ज्योतिष्कः कथयति—ब्राह्मण, तव प्रत्यक्षीकरोमि। पश्येति। तेनासौ 30 अपरिभुक्त उपरिविहायसा क्षिप्तः। वितानं कृत्वा अवस्थितः। परिभुक्तः क्षिप्तः। क्षिप्त-मात्रक एव पतितः। ब्राह्मणो दृष्ट्वा परं विस्मयमापन्नः। कथयति—गृहपते, महर्द्धिकस्त्वं

C 277

C 278 महानुभाव इति। ज्योतिष्कः कथयति—ब्राह्मण, पुनः पश्यैनं योऽसौ अपरिभुक्तक इति, स कण्टकवाटस्योपरिष्टात् क्षिप्तोऽसज्जमानो गतः। सोऽन्यः क्षिप्तः कण्टके लग्नः। स ब्राह्मणो भूयस्या मात्रया अभिप्रसन्नः कथयति—गृहपते, महर्द्धिकस्त्वं महानुभावः। यत् तवाभिप्रेतं तत्प्रयच्छेति। स कथयति—ब्राह्मण, अतिथिस्त्वम्। तवैव पूजा कृता भवति। सहस्रमेव
5 प्रयच्छामीति। तेन तस्य कार्षापणसहस्रं दत्तम्। ब्राह्मणस्तमादाय प्रक्रान्तः। ज्योतिष्केण ततो यः परिभुक्तकः स दारकाय दत्तः, अपरिभुक्तकस्तु स्नानशाटकः कृतः। यावदपरेण समयेन राजा बिम्बिसार उपरिप्रासादतलगतोऽमात्यगणपरिवृतस्तिष्ठति। ज्योतिष्कस्य स स्नानशाटक उपरि गृहस्याभ्यवकाशे शोषितो वायुना ह्रियमाणो राज्ञो बिम्बिसारस्योपरि पतितः। राजा कथयति—भवन्तः, राजार्हमिदं वस्त्रम्। कुत एतदिति?। ते कथयन्ति—
10 देव, श्रूयते राज्ञो मान्धातुः सप्ताहं हिरण्यवर्षं पतितम्। देवस्यापि वस्त्रवर्षः पतितुमारब्धम्। नचिराद्धिरण्यवर्षः पतिष्यतीति। राजा कथयति—भवन्तः, ज्योतिष्को गृहपतिर्भगवता व्याकृतो दिव्यमानुषीं श्रियं प्रत्यनुभविष्यतीति। इदं च दिव्यं वस्त्रमाकाशात् पतितम्। स्थापयत। तस्यैवागतस्य दास्यामीति। ते चैवमालापं कुर्वन्ति, ज्योतिष्कश्चागतः। राजा कथयति—कुमार, त्वं भगवता व्याकृतो दिव्यमानुषीं श्रियं प्रत्यनुभविष्यतीति। मम
15 चेदं दिव्यं वस्त्रमाकाशात् पतितम्। गृहाणेति। तेन हस्तः प्रसारितः। देव आनय, पश्यामीति। स निरीक्षितुमारब्धो यावत् पश्यत्यात्मीयं स्नानशाटकम्। स विस्मृत्य कथयति—देव, मदीयोऽयं स्नानशाटको वायुनोपक्षिप्त इहागत इति। कुमार, तत्र दिव्यमानुष्यकी श्रीः प्रादुर्भूता? देव, प्रादुर्भूता। कुमार, यद्येवम्, किमर्थं मां न निमन्त्रयसि? देव, निमन्त्रितो भव। गच्छ, भक्तं सज्जीकुरु। देव, यस्य दिव्यमानुषी श्रीः प्रादुर्भूता, किं तेन
20 सज्जीकर्तव्यम्? ननु सज्जीकृतमेव, गच्छेति। स ज्योतिष्कस्य गृहं गतः। राजा बाह्यं परिजनं

C 279 दृष्ट्वा इन्द्रियाण्युत्क्षिपति। देव, किमर्थमिन्द्रियाण्युत्क्षिपसि। स कथयति—कुमार, वधूजनोऽयमिति कृत्वा। देव नायं वधूजनः, बाह्योऽयं परिजनः। स परं विस्मयमापन्नः। पुनर्मध्यं जनं दृष्ट्वा इन्द्रियाण्युत्क्षिप्तुमारब्धः। तथैव पृच्छति। राजा अपि तथैव कथयति। ज्योतिष्कः कथयति—देव, अयमपि न वधूजनः, किं तु मध्योऽयं जनः। स भूयस्या मात्रया परं विस्मयमापन्नः। तस्य
25 मध्यमायां द्वारशालायां मणिभूमिरुपरचिता। तस्यां मत्स्या उदकपूर्णायामिव यन्त्रयोगेनोपरि भ्रमन्तो दृश्यन्ते। राजा प्रवेष्टुकामो वापीति कृत्वोपानहौ मोक्तुमारब्धः। ज्योतिष्कः कथयति—देव कस्यार्थे उपानहौ अपनयसीति? स कथयति—कुमार, पानीयमुत्तर्त्तव्यमिति। ज्योतिष्कः कथयति—देव नेदं पानीयम्, मणिभूमिरेषा। स कथयति—कुमार, इमे मत्स्या उपरि भ्रमन्तः पश्यन्ति। देव यन्त्रयोगेनैते परिभ्रमन्ति। स न श्रद्धत्ते। तेनाङ्गुलिमुद्रा क्षिप्ता। सा
30 रणरणाशब्देन भूमौ पतिता। ततो विस्मयमापन्नः प्रविश्य सिंहासने निषण्णः। वधूजनः पादाभिवन्दन उपसंक्रान्तः। तासामश्रुपातो जातः। राजा कथयति—कुमार, कस्मादयं वधूजनो रोदिति? देव नायं रोदिति, किं तु देवस्य काष्ठधूमेन वस्त्राणि धूपितानि, तेन

आसामश्रुपातो जात इति। राजा तत्र दिव्यमानुष्या श्रिया उपचर्यमाणः प्रमत्तो न निष्क्रामति। राजकृत्यानि राजकरणीयानि परिहातुमारब्धानि। अमात्यैरजातशत्रुः कुमारोऽभिभूतः—कुमार, देवो ज्योतिष्कस्य गृहं प्रविश्य प्रमत्तः। गच्छ, निवेदयेति। तेन गत्वा उक्तः—देव, किमत्र प्रविश्यावस्थितः? अमात्याः कथयन्ति—राजकृत्यानि राजकरणीयानि परिहीयन्त इति। स कथयति—कुमार, न शक्नोषि त्वमेकं दिवसं राज्यं कारयितुम्? किं देवो जानीते— 5 ममैको दिवसः प्रविष्टस्य? अद्य देवस्य सप्तमो दिवसो वर्तते। राजा ज्योतिष्कस्य मुखं निरीक्ष्य कथयति—कुमार सत्यम्? देव सत्यम्। सप्तम एव दिवसो वर्तते। कुमार, कथं रात्रिर्ज्ञायते दिवसो वा? देव, पुष्पाणां संकोचविकासान्मणीनां ज्वलनाज्वलनयोगाच्छकुनीनां च कूजनाकूजनात्। सन्ति तानि पुष्पाणि यानि रात्रौ विकसन्ति, दिवा म्लायन्ति? सन्ति C 280 यानि दिवा विकसन्ति रात्रौ म्लायन्ति? सन्ति ते मणयो ये रात्रौ ज्वलन्ति, न दिवा? 10 सन्ति ये दिवा ज्वलन्ति, न रात्रौ? सन्ति ते शकुनयो ये रात्रौ कूजन्ति, न दिवा? सन्ति ये दिवा कूजन्ति, न रात्रौ? राजा विस्मयमापन्नः कथयति—कुमार, अवितथवादी भगवान्। यथा त्वं भगवता व्याकृतस्तथैव नान्यथेत्युक्त्वा ज्योतिष्कगृहात् निष्क्रान्तः। अजातशत्रुकुमारेण ज्योतिष्कसन्तको मणिरपहृत्य दारकस्य हस्ते दत्तः। तेन यत एव गृहीतस्तत्रैव गत्वावस्थितः। अजातशत्रुः कथयति—दारक, आनय तं मणिं पश्यामीति। स मुष्टिं 15 विघाट्य कथयति—कुमार, न जाने कुत्र गत इति। स तं ताडयितुमारब्धः। ज्योतिष्कः कथयति—कुमार, किमर्थमेनं ताडयसि? गृहपते, अहं चौरः, एष महाचौरः। मया त्वदीयो मणिरपहृतः, सोऽप्यनेनापहृत इति। स कथयति—कुमार, न त्वया अपहृतो नाप्यनेन, अपि तु यत एव त्वया गृहीतस्तत्रैव गत्वा अवस्थितः। अपि तु कुमार, स्वकं ते गृहम्। यावद्भिर्मणिभिरन्येन वा प्रयोजनं तावद्गृहाण यथासुखमिति। स प्रतिभिन्नकः 20 संलक्षयते—यदा पितुरत्ययाद्राजा भविष्यामि, तदा ग्रहीष्यामीति। यदा अजातशत्रुणा देवदत्तविग्राहितेन पिता धार्मिको धर्मराजो जीविताद् व्यपरोपितः, स्वयमेव च पट्टं बद्ध्वा प्रतिष्ठितः, तदा तेन ज्योतिष्कोऽभिहितः—गृहपते, त्वं मम भ्राता भवसि। गृहं भाजयाम इति। स संलक्षयति—येन पिता धार्मिको धर्मराजः प्रघातितः, स मां मर्षयतीति कुत एतत्? नूनमयं मद्गृहमागच्छतु, कामं प्रयच्छामीति विदित्वा कथयति—देव, विभक्तमेव, 25 किमत्र विभक्तव्यम्? मदीयं गृहमागच्छ, अहं त्वदीयं गृहमागच्छामीति। अजातशत्रुः कथयति—शोभनम्। एवं कुरु। स तस्य गृहं गतः। ज्योतिष्कोऽप्यजातशत्रोर्गृहं गतः। सा श्रीस्तस्माद्गृहादन्तर्हिता, यत्र ज्योतिष्कस्तत्रैव गता। एवं यावत् सप्तवारानन्तर्हिता प्रादुर्भूता च। अजातशत्रुः संलक्षयते—एवमपि मया न शकितं ज्योतिष्कस्य मणीनपहर्तुम्। अन्यदुपायं करोमि। तेन धूर्तपुरुषाः प्रयुक्ताः—गच्छत, ज्योतिष्कस्य गृहान्मणीनपहरतेति। 30 C 281 ते हि शीटाकर्कटकप्रयोगेनाभिरोढुमारब्धाः। तेऽन्तःपुरिकया उपरिप्रासादतलगतया दृष्टाः। तया धूर्तधूर्तका इति नादो मुक्तः। ज्योतिष्केण श्रुतम्। तेनाशयतो वाग्निश्चारिता—तिष्ठन्तु

धूर्तका इति । तेषां यो यत्राभिरूढः स तत्रैवास्थितो यावत् प्रभाता रजनी संवृत्ता । महाजनकायेन दृष्टाः । ते कथयन्ति—भवन्तः, अनेन कलिराजेन पिता धार्मिको धर्मराजो जीविताद् व्यपरोपितः । इदानीं गृहाण्यपि मोषयति । तत्किं न मे मोषिष्यत इति ? पुरक्षोभो जातः । अजातशत्रुणा ज्योतिष्कस्य दूतोऽनुप्रेषितः—मुञ्चत ममायं खलीकार 5 इति । ज्योतिष्केणाशयतो वाग् निश्चारिता—गच्छन्तु धूर्तका इति । ते गताः । ज्योतिष्कः संलक्षयते—येन नाम पिता जीविताद् व्यपरोपितः, स मां न प्रघातयिष्यतीति कुत एतत् ? सर्वथा अहं भगवता व्याकृतः—मम शासने प्रव्रज्य सर्वक्लेशप्रहाणादर्हत्त्वं साक्षात्करिष्यतीति । गच्छामि, प्रव्रजामीति । तेन सर्वं धनजातं दीनानाथकृपणेभ्यो दत्तम् । अधनाः सधना व्यवस्थापिताः । अथ ज्योतिष्को गृहपतिः सुहृत्संबन्धिबान्धवानवलोक्य येन भगवांस्तेनोप- 10 संक्रान्तः । उपसंक्रम्य भगवतः पादौ शिरसा वन्दित्वा एकान्ते निषण्णः । एकान्तनिषण्णो ज्योतिष्को गृहपतिर्भगवन्तमिदमवोचत्—लभेयाहं भदन्त स्वाख्याते धर्मविनये प्रव्रज्यामुपसंपदं भिक्षुभावम् । चरेयमहं भगवतोऽन्तिके ब्रह्मचर्यमिति । स भगवता एहिभिक्षुकया आभाषितः—एहि भिक्षो, चर ब्रह्मचर्यमिति । भगवतो वाचावसानमेव मुण्डः संवृत्तः । संघाटीप्रावृतः पात्रकरव्यग्रहस्तः सप्ताहावरोपितकेशश्मश्रुर्वर्षशतोपसंपन्नस्य भिक्षोरीर्या- 15 पथेनावस्थितः ।

एहीति चोक्तः स तथागतेन
मुण्डश्च संघाटिपरीतदेहः ।
सद्यः प्रशान्तेन्द्रिय एव तस्था-
वुपस्थितो बुद्धमनोरथेन ॥ १४ ॥

20 तस्य भगवता अववादो दत्तः । तेनोद्यच्छमानेन व्यायच्छमानेन इदमेव पञ्चगण्डकं संसारचक्रं चलाचलं विदित्वा सर्वसंस्कारगतीः शतनपतनविकिरणविध्वंसनधर्मतया पराहत्य सर्वक्लेशप्रहाणादर्हत्त्वं साक्षात्कृतम् । अर्हन् संवृत्तस्त्रैधातुकवीतरागः समलोष्टकाञ्चन आकाशपाणितलसमचित्तो वासीचन्दनकल्पो विद्याविदारिताण्डकोशो विद्याभिज्ञाप्रतिसंवित्प्राप्तो भवलाभलोभसत्कारपराङ्मुखः । सेन्द्रोपेन्द्राणां देवानां पूज्यो मान्योऽभिवाद्यश्च संवृत्तः ॥ C 282

25 भिक्षवः संशयजाताः सर्वसंशयच्छेत्तारं बुद्धं भगवन्तं पप्रच्छुः—किं भदन्त आयुष्मता ज्योतिष्केण कर्म कृतं येन चितामारोपितः, दिव्यमानुषी श्रीः प्रादुर्भूता, भगवतः शासने प्रव्रज्य सर्वक्लेशप्रहाणादर्हत्त्वं साक्षात्कृतमिति ? भगवानाह—ज्योतिष्केणैव भिक्षवः कर्माणि कृतान्युपचितानि लब्धसंभाराणि परिणतप्रत्ययान्योघवत्प्रत्युपस्थितान्यवश्यंभावीनि । ज्योतिष्केण कर्माणि कृतान्युपचितानि । कोऽन्यः प्रत्यनुभविष्यति ? न भिक्षवः कर्माणि कृता- 30 न्युपचितानि पृथिवीधातौ विपच्यन्ते, नाब्धातौ, न तेजोधातौ, न वायुधातौ, अपि तूपात्तेष्वेव स्कन्धधात्वायतनेषु कर्माणि कृतान्युपचितानि विपच्यन्ते शुभान्यशुभानि च ।

न प्रणश्यन्ति कर्माणि कल्पकोटिशतैरपि।
सामग्रीं प्राप्य कालं च फलन्ति खलु देहिनाम्॥ १५॥

भूतपूर्वं भिक्षव एकनवतिकल्पे विपश्यी नाम शास्ता लोक उदपादि तथागतोऽर्हन् सम्यक्संबुद्धो विद्याचरणसंपन्नः सुगतो लोकविदनुत्तरः पुरुषदम्यसारथिः शास्ता देवमनुष्याणां बुद्धो भगवान्। द्वाषष्टिभिक्षुसहस्रपरिवारो जनपदचारिकां चरन् बन्धुमतीं राजधानीमनुप्राप्तो 5 बन्धुमत्यां विहरति स्म बन्धुमतीयके दावे। तेन खलु समयेन बन्धुमत्यां राजधान्यां बन्धुमान् नाम राजा राज्यं कारयति ऋद्धं च स्फीतं च क्षेमं च सुभिक्षं च आकीर्णबहुजनमनुष्यं च प्रशान्तकलिकलहडिम्बडमरं तस्कररोगापगतं शालीक्षुगोमहिषीसंपन्नम्। धार्मिको धर्मराजा धर्मेण राज्यं कारयति। तस्यानङ्गणो नाम गृहपतिराढ्यो महाधनो महाभोगो विस्तीर्णविशालपरिग्रहो वैश्रवणधनसमुदितो वैश्रवणधनप्रतिस्पर्धी। स संलक्षयते—बहुशो मया विपश्यी 10 सम्यक्संबुद्धोऽन्तर्गृहे उपनिमन्त्र्य भोजितः। न तु कदाचित् त्रैमासीं सर्वोपकरणैः प्रवारितः। यन्न्वहं विपश्यिनं सम्यक्संबुद्धं त्रैमासीं सर्वोपकरणैः प्रवारयेयम्। इति विदित्वा येन विपश्यी सम्यक्संबुद्धस्तेनोपसंक्रान्तः। उपसंक्रम्य विपश्यिनः सम्यक्संबुद्धस्य पादौ शिरसा वन्दित्वा एकान्ते निषण्णः। एकान्तनिषण्णमनङ्गणं गृहपतिं विपश्यी सम्यक्संबुद्धो धर्म्यया कथया संदर्शयति समादापयति समुत्तेजयति संप्रहर्षयति। अनेकपर्यायेण धर्म्यया कथया संदर्श्य 15 समादाप्य समुत्तेज्य संप्रहर्ष्य तूष्णीम्। अथानङ्गणो गृहपतिरुत्थायासनादेकांसमुत्तरासङ्गं कृत्वा येन विपश्यी सम्यक्संबुद्धस्तेनाञ्जलिं प्रणम्य विपश्यिनं सम्यक्संबुद्धमिदवोचत्—अधिवासयतु मे भगवान् त्रैमासीं चीवरपिण्डपातशयनासनग्लानप्रत्ययभैषज्यपरिष्कारैः सार्धं भिक्षुसंघेनेति। अधिवासयति विपश्यी सम्यक्संबुद्धोऽनङ्गणस्य गृहपतेस्तूष्णींभावेन। अथानङ्गणो गृहपतिर्भगवतस्तूष्णीभावेनाधिवासनां विदित्वा विपश्यिनः सम्यक्संबुद्धस्य पादौ शिरसा 20 वन्दित्वा उत्थायासनात् प्रक्रान्तः। अश्रौषीद्बन्धुमान् राजा—विपश्यी सम्यक्संबुद्धो द्वाषष्टिभिक्षुसहस्रपरिवारो जनपदचारिकां चरन् बन्धुमतीमनुप्राप्तो बन्धुमत्यां विहरति बन्धुमतीये दावे इति। श्रुत्वा च पुनरस्यैतदभवत्—बहुशो मया भगवानन्तर्गृहे उपनिमन्त्र्य भोजितः। न तु कदाचित् त्रैमासीं सर्वोपकरणैः प्रवारितः। यन्न्वहं विपश्यिनं सम्यक्संबुद्धं सर्वोपकरणैः प्रवारयेयम्। इति विदित्वा येन विपश्यी सम्यक्संबुद्धस्तेनोपसंक्रान्तः। उपसंक्रम्य विपश्यिनः सम्य- 25 क्संबुद्धस्य पादौ शिरसा वन्दित्वा एकान्ते निषण्णः। एकान्तनिषण्णं बन्धुमन्तं राजानं भगवान् धर्म्यया कथया संदर्शयति समादापयति समुत्तेजयति संप्रहर्षयति। अनेकपर्यायेण धर्म्यया कथया संदर्श्य समादाप्य समुत्तेज्य संप्रहर्ष्य तूष्णीम्। अथ बन्धुमान् राजा उत्थायासनादेकांसमुत्तरासङ्गं कृत्वा येन विपश्यी सम्यक्संबुद्धस्तेनाञ्जलिं प्रणम्य विपश्यिनं सम्यक्संबुद्धमिदमवोचत्—अधिवासयतु मे भगवांस्त्रैमासीं चीवरपिण्डपातशयनासनग्लानप्रत्ययभैषज्यपरिष्कारैः 30 सार्धं भिक्षुसंघेन। उपनिमन्त्रितोऽस्मि महाराज त्वत्प्रथमतोऽनङ्गणेन गृहपतिना। अधिवासयतु भगवान्, अहं तथा करिष्ये यथा अनङ्गणो गृहपतिराज्ञास्यति। सचेत् ते महाराज अनङ्गणो

C 283

C 284

गृहपतिरनुजानीते, एवं तेऽहमधिवासयामि। अथ बन्धुमान् राजा विपश्यिनः सम्यक्संबुद्धस्य पादौ शिरसा वन्दित्वा उत्थायासनात् प्रक्रान्तो येन स्वं निवेशनं तेनोपसंक्रान्तः। बन्धुमान् राजा अनङ्गणं गृहपतिं दूतेन प्रक्रोश्येदमवोचत्—यत्खलु गृहपते जानीयात्—अहं त्वत्प्रथमतो विपश्यिनं सम्यक्संबुद्धं भोजयामि, ततः पश्चात तवापि न दुष्करं भविष्यति
5 विपश्यिनं सम्यक्संबुद्धं भोजयितुमिति। स कथयति—देव, मया विपश्यी सम्यक्संबुद्धस्त्वत्प्रथमत उपनिमन्त्रितः। अहमेव भोजयामि। राजा कथयति—गृहपते, यद्यप्येवम्, तथापि त्वं मम विषयनिवासी। नार्हाम्यहं त्वत्प्रथमतो भोजयितुम्? देव, यद्यप्यहं तव विषयनिवासी, तथापि येन पूर्वनिमन्त्रितः स एव भोजयति। नात्र देवस्य निर्बन्धो युक्तः। न ते गृहपते कामकारं ददामि। अपि तु यो भक्तोत्तरिकया जेष्यति, सोऽवशिष्टं कालं भोजयिष्यति।
10 तथा भवतु इत्यनङ्गणो गृहपतिः प्रत्यश्रौषीत्। तथा अनङ्गणो गृहपतिस्तामेव रात्रिं शुचिं प्रणीतं खादनीयं भोजनीयं समुदानीय काल्यमेवोत्थायोदकमणीन् प्रतिष्ठाप्य भगवतो दूतेन कालमारोचयति—समयो भदन्त, सज्जं भक्तं यस्येदानीं भगवान् कालं मन्यते। अथ विपश्यी सम्यक्संबुद्धः पूर्वाह्णे निवास्य पात्रचीवरमादाय भिक्षुगणपरिवृतो येनानङ्गणस्य गृहपतेर्भक्ताभिसारस्तेनोपसंक्रान्तः। उपसंक्रम्य पुरस्ताद्भिक्षुसंघस्य प्रज्ञप्त एवासने निषण्णः।
15 अथानङ्गणो गृहपतिः सुखोपनिषण्णं बुद्धप्रमुखं भिक्षुसंघं विदित्वा शुचिना प्रणीतेन खादनीयभोजनीयेन स्वहस्तं संतर्पयति संप्रवारयति। अनेकपर्यायेण शुचिना प्रणीतेन खादनीयभोजनीयेन स्वहस्तं संतर्प्य संप्रवार्य भगवन्तं भुक्तवन्तं विदित्वा धौतहस्तमपनीतपात्रं नीचतरमासनं गृहीत्वा भगवतः पुरस्तान्निषण्णो धर्मश्रवणाय। अथ विपश्यी सम्यक्संबुद्धोऽनङ्गणं गृहपतिं धर्म्यया कथया संदर्शयति समादापयति समुत्तेजयति संप्र-
20 हर्षयति। अनेकपर्यायेण धर्म्यया कथया संदर्श्य समुत्तेज्य संप्रहर्ष्य प्रक्रान्तः। एवं बन्धुमता राज्ञा भोजितः। एष एव ग्रन्थो विस्तरेण कर्तव्यः। न कचिद्भक्तोत्तरिकया पराजयति। ततो बन्धुमान् राजा करे कपोलं दत्त्वा चिन्तापरो व्यवस्थितः। अमात्याः कथयन्ति—देव, कस्मात् त्वं करे कपोलं दत्त्वा चिन्तापरस्तिष्ठसीति? स कथयति—भवन्तः, कथमहं न चिन्तापरस्तिष्ठामि योऽहं मम विषयनिवासिनं कुटुम्बिनं न शक्नोमि भक्तोत्तरि-
25 कया पराजयितुम्? ते कथयन्ति, देव, तस्य गृहपतेः काष्ठं नास्ति। काष्ठविक्रयो विधार्यतामिति। राज्ञा घण्टावघोषणं कारितम्। भवन्तः, न केनचित् मद्विषयनिवासिना काष्ठं विक्रेतव्यम्। यो विक्रीणीते, तेन मद्विषये न वस्तव्यमिति। अनङ्गणो गृहपतिर्गन्धकाष्ठैर्भक्तं साधयितुमारब्धः। सुगन्धतैलेन च वस्त्राणि तीमयित्वा खाद्यकान्युल्लाडयितुम्। सुरभिणा गन्धेन सर्वा बन्धुमती नगरी स्फुटा संवृत्ता। बन्धुमान् राजा पृच्छति—भवन्तः, कुत एष
30 मनोज्ञगन्ध इति? तैर्विस्तरेण समाख्यातम्। स कथयति—अहमप्येवं करोमि। किं मम विभवो नास्तीति? अमात्याः कथयन्ति—देव, कस्यार्थे एवं क्रियते? अयं गृहपतिरपुत्रो नचिरात् कालं करिष्यति। देवस्यैव सर्वं सन्तस्वापतेयं भविष्यति। काष्ठविक्रयोऽनुज्ञास्यता-

C 285
C 286

मिति । तेन काष्ठविक्रयोऽनुज्ञातः । अनङ्गणेन गृहपतिना श्रुतम्—राज्ञा काष्ठविक्रयोऽनुज्ञात इति । तेन चित्तं प्रदूष्य खरा वाग् निश्चारिता—तावन्मे भक्तकाष्ठमस्ति, येनाहं एनं सहामात्यं चितामारोप्य ध्मापयामीति । राजा करे कपोलं दत्त्वा चिन्तापरो व्यवस्थितः । अमात्याः कथयन्ति—देव, किमर्थं करे कपोलं दत्त्वा चिन्तापरस्तिष्ठसीति ? तेन विस्तरेण समाख्यातम् । ते कथयन्ति—देव, अलं विषादेन । वयं तथा करिष्यामो यथा देवश्चानङ्गणं 5 गृहपतिं पराजयतीति । तैरपरस्मिन् दिवसे बन्धुमती राजधानी अपगतपाषाणशर्करकठल्या व्यवस्थापिता चन्दनवारिपरिषिक्ता सुरभिधूपघटिकोपनिबद्धा आमुक्तपट्टदामकलापा उच्छ्रितध्वजपताका नानापुष्पावकीर्णा नन्दनवनोद्यानसदृशा । तत्प्रतिस्पर्धशोभाविभूषितो मण्डवाटः कारितः । तस्मिन् नानारत्नविभूषितासनवसनसंपन्नशोभासनप्रज्ञप्तिः कारिता । मृदुविशदसुरभिगन्धसंपन्नो विविधभक्तव्यञ्जनसहितो दिव्यसुधामनोज्ञसंकाशस्त्रैलोक्यगुरो- 10 रनुरूप आहार उपसमन्वाहृतः । ततो बन्धुमतो राज्ञो निवेदितम्—देव, ईदृशी नगरशोभा ईदृशश्चाहारः । प्रामोद्यमुत्पादयेति । बन्धुमान् राजा दृष्ट्वा परं विस्मयमापन्नः । ततो विस्मयावर्जितचित्तसंततिर्विपश्यिनः सम्यक्संबुद्धस्य दूतेन कालमारोचयति—समयो भदन्त, सज्जं भक्तं यस्येदानीं भगवान् कालं मन्यत इति । अथ विपश्यी सम्यक्संबुद्धः पूर्वाह्णे निवास्य पात्रचीवरमादाय भिक्षुगणपरिवृतो भिक्षुसंघपुरस्कृतो येन बन्धु- 15 मतो राज्ञो भक्ताभिसारस्तेनोपसंक्रान्तः । उपसंक्रम्य पुरस्ताद्भिक्षुसंघस्य प्रज्ञप्त एवासने निषण्णः । बन्धुमतो राज्ञो मङ्गल्याभिषेको हस्तिनागो विपश्यिनः सम्यक्संबुद्धस्य शतशलाकं छत्रमुपरि मूर्ध्नो धारयति, अवशिष्टा हस्तिनागा भिक्षूणाम् । बन्धुमतो C 287 राज्ञोऽग्रमहिषी विपश्यिनं सम्यक्संबुद्धं सौवर्णेन मणिवालव्यजनेन वीजयति, अवशिष्टा अन्तःपुरिका अवशिष्टानां भिक्षूणाम् । अनङ्गणेन गृहपतिना अवचरकः पुरुषः प्रेषितः— 20 गच्छ भोः पुरुष, पश्य कीदृशेनाहारेण बन्धुमान् राजा बुद्धप्रमुखं भिक्षुसंघं भोजयतीति । स गतस्तां विभूतिं दृष्ट्वा विस्मयावर्जितमनास्तत्रैवावस्थितः । एवं द्वितीयः, तृतीयः प्रेषितः । सोऽपि तत्रैव गत्वा अवस्थितः । ततोऽनङ्गणो गृहपतिः स्वयमेव गतः । सोऽपि तां विभूतिं दृष्ट्वा परं विषादमापन्नः संलक्षयति—शक्यमन्यत् संपादयितुम् । किं तु हस्तिनामन्तःपुरस्य च कुतो मम विभवः ? इति विदित्वा निवेशनं गतो दौवारिकं पुरुषमामन्त्रयते—भोः पुरुष, 25 यदि कश्चिद्याचनक आगच्छति, स यत् प्रार्थयते तद्दातव्यम्, नो तु प्रवेशः । इत्युक्त्वा शोकागारं प्रविश्य अवस्थितः । शक्रस्य देवेन्द्रस्याधस्तात् ज्ञानदर्शनं प्रवर्तते । स संलक्षयति—ये केचिल्लोके दक्षिणीयाः, विपश्यी सम्यक्संबुद्धस्तेषामग्रः, दानपतीनामप्यनङ्गणो गृहपतिः । साहाय्यमस्य कल्पयितव्यम् । इति विदित्वा कौशिको ब्राह्मणवेषमभिनिर्माय येनानङ्गणस्य गृहपतेर्निवेशनं तेनोपसंक्रान्तः । उपसंक्रम्य दौवारिकं पुरुषमामन्त्रयते—गच्छ भोः पुरुष, 30 अनङ्गणस्य गृहपतेः कथय—कौशिकगोत्रो ब्राह्मणो द्वारे तिष्ठति भवन्तं द्रष्टुकाम इति । स कथयति—ब्राह्मण, गृहपतिना अहं स्थापितः—यः कश्चिद् याचनक आगच्छति, स यत् प्रार्थ-

यते, तद्दातव्यं न तु प्रवेश इति। येन ते प्रयोजनं तद्गृहीत्वा गच्छ। किं ते गृहपतिना दृष्टेनेति? स कथयति—भोः पुरुष, न मम केनचित् प्रयोजनम्। अहं गृहपतिमेव द्रष्टुकामः। गच्छेति। तेनानङ्गणस्य गृहपतेर्गत्वा निवेदितम्—आर्य, कौशिकसगोत्रो ब्राह्मणो द्वारे तिष्ठति आर्यं द्रष्टुकाम इति। स कथयति—गच्छ भोः पुरुष, येन तस्य प्रयोजनं तत् प्रयच्छ—किं 5 तेनात्र प्रविष्टेनेति? स कथयति—आर्य, उक्तो मया एवं कथयति—नाहं किंचित् प्रार्थयामि, अपि तु गृहपतिमेव द्रष्टुकाम इति। स कथयति—भोः पुरुष यद्येवम्, प्रवेशय। स तेन प्रवेशितः। ब्राह्मणः कथयति—कस्मात् त्वं गृहपते करे कपोलं दत्त्वा चिन्तापरस्तिष्ठसीति? स गृहपतिर्गाथां भाषते— C 288

न तस्य कथयेच्छोकं यः शोकान्न प्रमोचयेत्।
10 तस्मै तु कथयेच्छोकं यः शोकात्संप्रमोचयेत्॥ १६॥ इति।

शक्रः कथयति—गृहपते, कस्तव शोकः? कथय, अहं ते शोकात्प्रमोचयामीति। तेन विस्तरेण समाख्यातम्। अथ शक्रो देवेन्द्रः कौशिकब्राह्मणरूपमन्तर्धाप्य स्वरूपेण स्थित्वा कथयति—गृहपते, विश्वकर्मा ते देवपुत्रः साहाय्यं कल्पयिष्यतीत्युक्त्वा प्रक्रान्तः। अथ शक्रो देवेन्द्रो देवांस्त्रायस्त्रिंशान् गत्वा विश्वकर्माणं देवपुत्रमामन्त्रयते—गच्छ, विश्वकर्मन्, अनङ्गणस्य गृहपतेः 15 साहाय्यं कल्पय। परं भद्रं तव कौशिकेति विश्वकर्मणा देवपुत्रेण शक्रस्य देवेन्द्रस्य प्रतिश्रुत्य आगतः। प्रतिविशिष्टतरा नगरशोभा निर्मिता, दिव्यो मण्डलवाटो दिव्यासनप्रज्ञप्तिर्दिव्य आहारः समन्वाहृतः। ऐरावणो नागराजो विपश्यिनः सम्यक्संबुद्धस्य शतशलाकं छत्रमुपरि मूर्ध्नो धारयति, अवशिष्टा नागा अवशिष्टानां भिक्षूणाम्। शची देवकन्या विपश्यिनं सम्यक्संबुद्धं सौवर्णेन मणिवालव्यजनेन वीजयति, अवशिष्टा अप्सरसो भिक्षून्। बन्धुमता 20 राज्ञा अवचरकः पुरुषः प्रेषितः—गच्छ भोः पुरुष, कीदृशेनाहारेणानङ्गणो गृहपतिः बुद्धप्रमुखं भिक्षुसंघं तर्पयतीति? स पुरुषस्तत्र गतस्तां विभूतिं दृष्ट्वा तत्रैव अवस्थितः। तेनामात्यः प्रेषितः। सोऽपि तत्रैवावस्थितः। कुमारः प्रेषितः। सोऽपि तत्रैवावस्थितः। ततो बन्धुमान् राजा स्वयमेव तद्द्वारं गत्वा अवस्थितः। विपश्यी सम्यक्संबुद्धः कथयति—गृहपते, बन्धुमान् राजा दृष्टसत्यः। तस्यान्तिके त्वया खरवाक्कर्म निश्चारितम्। स एव द्वारे तिष्ठति। 25 गच्छ क्षमयेति। तेनासौ निर्गत्य क्षमित उक्तश्च—महाराज, प्रविश स्वहस्तेन परिवेषणं कुरु। स प्रविष्टः। पश्यति दिव्यां विभूतिम्। दृष्ट्वा च परं विस्मयमापन्नः कथयति—गृहपते, त्वमेवैकोऽर्हसि दिने दिने बुद्धप्रमुखं भिक्षुसंघं भोजयितुं न वयमिति। अथानङ्गणो गृहपतिर्विपश्यिनं सम्यक्संबुद्धमनया विभूत्या त्रैमास्यं प्रणीतेनाहारेण संतर्प्य पादयोर्निपत्य 30 प्रणिधानं कर्तुमारब्धः—यन्मया एवंविधे सद्भूतदक्षिणीये कारा कृता, अनेनाहं कुशलमूलेन आढ्ये महाधने महाभोगे कुले जायेयम्, दिव्यमानुषीं श्रियं प्रत्यनुभवेयम्, एवंविधानां धर्माणां लाभी स्याम्, एवंविधमेव शास्तारमारागयेयं मा विरागयेयमिति॥ C 289

किं मन्यध्वे भिक्षवो योऽसौ अनङ्गणो नाम गृहपतिः, एष एवासौ ज्योतिष्कः कुलपुत्रस्तेन कालेन तेन समयेन । यदनेन बन्धुमतो राज्ञो दृष्टसत्यस्यान्तिके खरा वाग्निश्चारिता, तस्य कर्मणो विपाकेन पञ्चशतानि समातृकश्चितायामारोप्य ध्मापितः । यावदेतर्हि अपि चितामारोप्य ध्मापितः । यद्विपश्यिनि तथागते कारां कृत्वा प्रणिधानं कृतम्, तस्य कर्मणो विपाकेन आढ्ये महाधने महाभोगे कुले जातः । दिव्यमानुषी श्रीः प्रादुर्भूता । मम 5 शासने प्रव्रज्य सर्वक्लेशप्रहाणादर्हत्त्वं साक्षात्कृतम् । अहमनेन विपश्यिना सम्यक्संबुद्धेन सार्धं समजवः समबलः समधुरः समसामान्यप्राप्तः शास्ता आरागितो न विरागितः । इति हि भिक्षव एकान्तकृष्णानां कर्मणामेकान्तकृष्णो विपाकः, एकान्तशुक्लानामेकान्तशुक्लः, व्यतिमिश्राणां व्यतिमिश्रः । तस्मात् तर्हि भिक्षव एकान्तकृष्णानि कर्माण्यपास्य व्यतिमिश्राणि च, एकान्तशुक्लेष्वेव कर्मस्वाभोगः करणीयः । इत्येवं वो भिक्षवः शिक्षितव्यम् ॥ 10

इदमवोचद्भगवान् । आत्तमनसस्ते भिक्षवो भगवतो भाषितमभ्यनन्दन् ॥

इति दिव्यावदाने ज्योतिष्कावदानमूनविंशतिमम् ।



## २० कनकवर्णावदानम् ।

C 290

एवं मया श्रुतम् । एकस्मिन् समये भगवान् श्रावस्त्यां विहरति स्म जेतवनेऽनाथपिण्डदस्यारामे महता भिक्षुसंघेन सार्धमर्धत्रयोदशभिर्भिक्षुशतैः । सत्कृतो भगवान् गुरुकृतो मानितः पूजितो भिक्षुभिर्भिक्षुणीभिरुपासकैरुपासिकाभी राजभी राजमात्रैर्नानातीर्थिकश्रमण-
5 ब्राह्मणचरकपरिव्राजकैर्देवैर्नागैर्यक्षैरसुरैर्गरुडैर्गन्धर्वैः किन्नरैर्महोरगैः । लाभी भगवान् प्रभूतानां प्रणीतानां चीवरपिण्डपातशयनासनग्लानप्रत्ययभैषज्यपरिष्काराणां दिव्यानां मानुषाणां च । तैश्च भगवाननुपलिप्तः पद्ममिव वारिणा । भगवतश्चायमेवंरूपो दिग्विदिक्षु उदारकल्याणकीर्तिशब्दश्लोकोऽभ्युद्गतः—इत्यपि स भगवांस्तथागतोऽर्हन् सम्यक्संबुद्धो विद्याचरणसंपन्नः सुगतो लोकविदनुत्तरः पुरुषदम्यसारथिः शास्ता देवमनुष्याणां बुद्धो भगवान् । स इमं
10 सदेवकं लोकं समारकं सब्रह्मकं सश्रमणब्राह्मणीं प्रजां सदेवमानुषीं दृष्ट एव धर्मे स्वयमभिज्ञाय साक्षात्कृत्वोपसंपद्य प्रवेदयते । स धर्मं देशयति आदौ कल्याणं मध्ये कल्याणं पर्यवसाने कल्याणम् । स्वर्थं सुव्यञ्जनं केवलं परिपूर्णं परिशुद्धं पर्यवदातं ब्रह्मचर्यं संप्रकाशयति । तत्र भगवान् भिक्षूनामन्त्रयते स्म—सचेद्भिक्षवः सत्त्वा जानीयुर्दानस्य फलं दानसंविभागस्य च फलविपाकं यथाहं जानामि दानस्य फलं दानसंविभागस्य च फलविपाकम्, अपीदानीं
15 योऽसौ अपश्चिमः कवलश्चरम आलोपः, ततोऽप्यदत्वा असंविभज्य न परिभुञ्जीरन्, सचेल्लभेरन् दक्षिणीयं प्रतिग्राहकम् । न चैषामुत्पन्नं मात्सर्यं चित्तं पर्यादाय तिष्ठेत् ।

C 291

यस्मात् तर्हि भिक्षवः सत्त्वा न जानन्ते दानस्य फलं दानसंविभागस्य च फलविपाकं यथाहं जानामि दानस्य फलं दानसंविभागस्य च फलविपाकम्, तस्माद्धेतोरदत्त्वा असंविभज्य परिभुञ्जन्ते आगृहीतेन चेतसा । उत्पन्नं चैषां मात्सर्यं चित्तं पर्यादाय तिष्ठति ।
20 तत्कस्य हेतोः ?

भूतपूर्वं भिक्षवोऽतीतेऽध्वनि राजाभूत् कनकवर्णो नाम अभिरूपो दर्शनीयः प्रासादिकः परमया सुवर्णपुष्कलतया समन्वागतः । राजा भिक्षवः कनकवर्ण आढ्यो महाधनो महाभोगः । प्रभूतसत्त्वस्वापतेयः प्रभूतवित्तोपकरणः प्रभूतधनधान्यहिरण्यसुवर्णमणिमुक्तावैडूर्यशङ्खशिलाप्रवालरजतजातरूपः प्रभूतहस्त्यश्वगवेडकः परिपूर्णकोशकोष्ठागारः । राज्ञः कनक-
25 वर्णस्य खलु भिक्षवः कनकावती नाम राजधानी बभूव पूर्वेण पश्चिमेन च द्वादश योजयान्यायामेन, दक्षिणेनोत्तरेण च सप्त योजनानि च विस्तारेण । ऋद्धा च स्फीता च क्षेमा च सुभिक्षा च आकीर्णबहुजनमनुष्या च रमणीया च । राज्ञः कनकवर्णस्याशीतिर्नगरसहस्राण्यभूवन् । अष्टादश कुलकोटी ऋद्धानि स्फीतानि क्षेमाणि सुभिक्षाण्याकीर्णबहुजनमनुष्याणि । सप्तपञ्चाशद्ग्रामकोट्य ऋद्धाः स्फीताः क्षेमाः सुभिक्षा रमणीया महाजनाकीर्ण-
30 मनुष्याः । षष्टिः कर्वटसहस्राण्यभूवन् ऋद्धानि स्फीतानि क्षेमाणि सुभिक्षाण्याकीर्णबहुजनमनुष्याणि । राज्ञः कनकवर्णस्याष्टादशामात्यसहस्राण्यभूवन् । विंशतिस्त्रीसहस्राण्यन्तःपुरमभूत् । राजा भिक्षवः कनकवर्णो धार्मिको बभूव । धर्मेण राज्यं कारयति ॥

अथापरेण समयेन राज्ञः कनकवर्णस्य एकाकिनो रहोगतस्य प्रतिसंलीनस्य एवं चेतसि चेतःपरिवितर्कमुदपादि—यन्वहं सर्ववणिजोऽशुल्कानगुल्मान् मुञ्चेयम्। सर्वजाम्बुद्वीपकान् मनुष्यानकारानगुल्मान् मुञ्चेयमिति। अथ राजा कनकवर्णो गणकमहामात्रामात्यदौवारिकपारिषद्यानामन्त्रयते—अद्याग्रेण वो ग्रामण्यः सर्ववणिजोऽशुल्कान् मुञ्चामि, सर्वजाम्बुद्वीपकान् मनुष्यानकारानशुल्कान् मुञ्चामि। तस्यानेनोपायेन बहूनि वर्षाणि राज्यं कारयतोऽपरेण समयेन 5 नक्षत्रं विषमीभूतम्, द्वादश वर्षाणि देवो न वर्षति। अथ ब्राह्मणा लक्षणज्ञा नैमित्तिका भूम्यन्तरिक्षमन्त्रकुशला नक्षत्रशुक्रग्रहचरितेषु तत् संलक्षयित्वा येन राजा कनकवर्णः, तेनोपसंक्रान्ताः। उपसंक्रम्य राजानं कनकवर्णमिदमवोचन्—यत्खलु देवो जानीयात्—नक्षत्रं विषमीभूतम्, द्वादश वर्षाणि देवो न वर्षिष्यति। अथ राजा कनकवर्ण इदमेवंरूपं निर्घोषं श्रुत्वा अश्रूणि प्रवर्तयति—अहो बत मे जाम्बुद्वीपका मनुष्याः, अहो बत मे जम्बुद्वीपः 10 ऋद्धः स्फीतः क्षेमः सुभिक्षो रमणीयो बहुजनाकीर्णमनुष्यो नचिरादेव शून्यो भविष्यति रहितमनुष्यः। अथ राज्ञः कनकवर्णस्य मुहूर्तं शोचित्वा एतदभवत्—य इमे आढ्या महाधना महाभोगाः, ते शक्ष्यन्ति यापयितुम्। य इमे दरिद्रा अल्पधना अल्पान्नपानभोगाः, ते कथं यापयिष्यन्ति? तस्यैतदभवत्—यन्न्वहं जम्बुद्वीपादन्नाद्यं संहरेयम्, सर्वजाम्बुद्वीपान् सत्त्वान् गणयेयम्। अथ गणयित्वा मापयेयम्, मापयित्वा सर्वग्रामनगरनिगमकर्वटराजधानीष्वेकं 15 कोष्ठागारं कारयेयम्। एकं कोष्ठागारं कारयित्वा सर्वजाम्बुद्वीपकानां मनुष्याणां समं भक्तं प्रत्यर्पयेयमिति। अथ कनकवर्णो राजा गणकमहामात्रामात्यदौवारिकपारिषद्यानामन्त्रयते-गच्छत यूयं ग्रामण्यः, सर्वजम्बुद्वीपादन्नाद्यं संहृत्य गणयत, गणयित्वा मापयत, मापयित्वा सर्वग्रामनगरनिगमकर्वटराजधानीष्वेकं कोष्ठागारं स्थापयत। परं देवेति गणकमहामात्रामात्यदौवारिकपारिषद्या राज्ञः कनकवर्णस्य प्रतिश्रुत्य सर्वजम्बुद्वीपादन्नाद्यं गणयन्ति, गणयित्वा मापयन्ति, 20 मापयित्वा सर्वग्रामनगरनिगमकर्वटराजधानीष्वेकस्मिन् कोष्ठागारे स्थापयन्ति। एकस्मिन् कोष्ठागारे स्थापयित्वा येन राजा कनकवर्णः, तेनोपसंक्रान्ताः। उपसंक्रम्य राजानं कनकवर्णमिदमवोचन्—यत् खलु देव जानीयाः—सर्वग्रामनगरनिगमकर्वटराजधानीष्वन्नाद्यं संहृतम्, संहृत्य गणितम्, गणयित्वा मापितम्, मापयित्वा सर्वग्रामनगरनिगमराजधानीष्वेकस्मिन् कोष्ठागारे स्थापितं यस्येदानीं देवः कालं मन्यते। अथ राजा कनकवर्णः संख्यागणकलिपिक- 25 पौरुषेयानामन्त्रयित्वा एतदवोचत्—गच्छत यूयं ग्रामण्यः, सर्वजाम्बुद्वीपकान् मनुष्यान् गणयत, गणयित्वा ग्रामण्यः सर्वजाम्बुद्वीपकानां मनुष्याणां समं भक्तं प्रयच्छत। परं देवेति संख्यागणकलिपिकपौरुषेया राज्ञः कनकवर्णस्य प्रतिश्रुत्य सर्वजाम्बुद्वीपकान् मनुष्यान् गणयन्ति, संगण्य राजानं कनकवर्णमादौ कृत्वा सर्वजाम्बुद्वीपकानां मनुष्याणां समं भक्तं प्रज्ञपयन्ति। ते यापयन्त्येकादशवर्षाणि, द्वादशवर्षं न यापयन्ति। निर्गतो द्वादशस्य वर्षस्यैको मासो याव- 30 द्बहवः स्त्रीपुरुषदारकदारिका जिघत्सिताः पिपासिताः कालं कुर्वन्ति। तेन खलु पुनः समयेन सर्वजम्बुद्वीपादन्नाद्यं परिक्षीणमन्यत्र राज्ञः कनकवर्णस्यैका मानिका भक्तस्यावशिष्टा॥

C 292

C 293

तेन खलु समयेन अन्यतमश्चत्वारिंशत्कल्पसंप्रस्थितो बोधिसत्त्व इमां सहालोकधातुमनुप्राप्तो बभूव। अद्राक्षीद् बोधिसत्त्वोऽन्यतरस्मिन् वनषण्डे पुत्रं मात्रा सार्धं विप्रतिपद्यमानम्। दृष्ट्वा च पुनरस्यैतदभवत्—क्लिश्यन्ति बतेमे सत्त्वाः, संक्लिश्यन्ति बतेमे सत्त्वाः, यत्र हि नाम अस्यामेव नव मासान् कुक्षौ उषित्वा, अस्या एव स्तनौ पीत्वा, अत्रैव कालं
5 करिष्यति इति। अलं मे ईदृशैः सत्त्वैरधार्मिकैरधर्मरागरक्तैर्मिथ्यादृष्टिकैर्विषमलोभाभिभूतैरमातृज्ञैरपितृज्ञैरश्रामण्यैरब्राह्मण्यैरकुले ज्येष्ठापचायकैः। क उत्सहत ईदृशानां सत्त्वानामर्थाय बोधिसत्त्वचर्यां चरितुम्? यन्न्वहं स्वके कार्ये प्रतिपद्येयम्। अथ बोधिसत्त्वो येनान्यतरद्वृक्षमूलं

C 294

तेनोपसंक्रान्तः। उपसंक्रम्य तस्मिन् वृक्षमूले निषण्णः। पर्यङ्कमाभुज्य ऋजुकायं प्रणिधाय प्रतिमुखं स्मृतिमुपस्थाप्य पञ्चसूपादानस्कन्धेषूदयव्ययानुदर्शी विहरति यदुतेदं रूपम्, अयं
10 रूपसमुदयः, अयं रूपस्यास्तंगमः, इयं वेदना, इयं संज्ञा, इमे संस्काराः, इदं विज्ञानम्, अयं विज्ञानसमुदयः, अयं विज्ञानस्यास्तंगम इति। स एवं पञ्चसूपादानस्कन्धेषूदयव्ययानुदर्शी विहरन्नचिरादेव यत्किंचित् समुदयधर्मकं तत् सर्वं निरोधधर्मकमिति विदित्वा तत्रैव प्रत्येकां बोधिमधिगतवान्। अथ भगवान् प्रत्येकबुद्धो यथाप्राप्तानवलोक्य तस्यां वेलायां गाथां भाषते—

संसेवमानस्य भवन्ति स्नेहाः
15 स्नेहान्वयं संभवतीह दुःखम्।
आदीनवं स्नेहगतं विदित्वा
एकश्चरेत् खड्गविषाणकल्पः॥ १॥ इति।

अथ तस्य भगवतः प्रत्येकबुद्धस्यैतदभवत्—बहूनां मे सत्त्वानामर्थाय दुष्कराणि चीर्णानि, न च कस्यचित् सत्त्वस्य हितं कृतम्। कमद्याहमनुकम्पेयम्, कस्याहमद्य पिण्ड-
20 पातमाहृत्य परिभुञ्जीय? अथ भगवान् प्रत्येकबुद्धो दिव्येन चक्षुषा विशुद्धेनातिक्रान्तमानुषेण सर्वावन्तमिमं जम्बुद्वीपं समन्तादनुविलोकयन्नद्राक्षीत् स भगवान् प्रत्येकबुद्धः सर्वजम्बुद्वीपादन्नाद्यं परिक्षीणम्, अन्यत्र राज्ञः कनकवर्णस्यैका मानिका भक्तस्यावशिष्टा। तस्यैतदभवत्—यन्न्वहं राजानं कनकवर्णमनुकम्पेयम्। यन्न्वहं राज्ञः कनकवर्णस्य निवेशनात् पिण्डपातमपहृत्य परिभुञ्जीय। अथ भगवान् प्रत्येकबुद्धस्तत एव ऋद्ध्या विहायसमभ्युद्गम्य दृश्यता
25 कायेन शकुनिरिव ऋद्ध्या येन कनकावती राजधानी तेनोपसंक्रान्तः। तेन खलु समयेन राजा कनकवर्ण उपरिप्रासादतलगतोऽभूत् पञ्चमात्रैरमात्यसहस्रैः परिवृतः। अद्राक्षीदन्यतमो

C 295

महामात्रस्तं भगवन्तं प्रत्येकबुद्धं दूरत एवागच्छन्तम्। दृष्ट्वा च पुनर्महामात्रानामन्त्रयते—पश्यत पश्यत ग्रामण्यः। दूरत एव लोहितपक्षः शकुन्त इहागच्छति। द्वितीयो महामात्र एवमाह—नैष ग्रामण्यो लोहितपक्षः शकुन्तः, राक्षस एव ओजोहार इहागच्छति। एषोऽस्माकं
30 भक्षयिष्यति। अथ राजा कनकवर्ण उभाभ्यां पाणिभ्यां मुखं संपरिमार्ज्य महामात्रानामन्त्रयते—नैष ग्रामण्यो लोहितपक्षः शकुन्तः, न च राक्षस ओजोहारः। ऋषिरेषोऽस्माकमनुकम्पयेहागच्छति। अथ स भगवान् प्रत्येकबुद्धो राज्ञः कनकवर्णस्य प्रासादे प्रत्यष्ठात्॥

अथ राजा कनकवर्णस्तं भगवन्तं प्रत्येकबुद्धमुत्थायासनात् प्रत्युद्गम्य पादौ शिरसा वन्दित्वा प्रज्ञप्त एवासने निषीदयति। अथ राजा कनकवर्णस्तं भगवन्तं प्रत्येकबुद्धमिदमवोचत्–किमर्थम् ऋषे इहाभ्यागमनम्? भोजनार्थं महाराज। एवमुक्ते राजा कनकवर्णः प्रारोदीत्। अश्रूणि प्रवर्तयन्नेवमाह–अहो मे दारिद्र्यम्, अहो दारिद्र्यम्, यत्र हि नाम जम्बुद्वीपैश्वर्याधिपत्यं कारयित्वा एकस्यापि ऋषेरसमर्थः पिण्डपातं प्रतिपादयितुम्। अथ या कनकावत्यां 5 राजधान्यामध्युषिता देवता, सा राज्ञः कनकवर्णस्य पुरस्ताद्गाथां भाषते–

किं दुःखं दारिद्र्यं किं दुःखतरं तदेव दारिद्र्यम्।
मरणसमं दारिद्र्यम्॥ २॥

अथ राजा कनकवर्णः कोष्ठागारिकं पुरुषमामन्त्रयते–अस्ति भोः पुरुष, मम निवेशने किंचिद्भक्तम्, यदहमस्य ऋषेः प्रदास्यामि? स एवमाह–यत् खलु देव जानीयाः–सर्वजम्बु- 10 द्वीपादन्नाद्यं परिक्षीणम्, अन्यत्र देवस्यैका मानिका भक्तस्यावशिष्टा। अथ राज्ञः कनकवर्णस्यैतदभवत्–सचेत् परिभुञ्जे, जीविष्ये। अथ न परिभोक्ष्ये, मरिष्ये। तस्यैतदभवत्–यदि परिभोक्ष्ये, यदि वा न परिभोक्ष्ये, अवश्यं मया कालः कर्तव्यः। अलं मे जीवितेन। कथं नामेहेदृश ऋषिः शीलवान् कल्याणधर्मा मम निवेशनेऽद्य यथाधौतेन पात्रेण निर्गमिष्यति? अथ राजा कनकवर्णो गणकमहामात्रामात्यदौवारिकपारिषद्यान् संनिपात्यैवमवोचत्–अनु- 15 मोदत यूयं ग्रामण्यः, अयं राज्ञः कनकवर्णस्यापश्चिम ओदनातिसर्गः। अनेन कुशलमूलेन सर्वजाम्बुद्वीपकानां मनुष्याणां दारिद्र्यसमुच्छेदः स्यात्। अथ राजा कनकवर्णस्तस्य महर्षेस्तत् पात्रं गृहीत्वा एकां मानिकां भक्तस्य पात्रे प्रक्षिप्य उभाभ्यां पाणिभ्यां पात्रं गृहीत्वा जानुभ्यां निपत्य तस्य भगवतः प्रत्येकबुद्धस्य दक्षिणे पाणौ पात्रं प्रतिष्ठापयति। धर्मता पुनर्भगवतां प्रत्येकबुद्धानां कायिकी धर्मदेशना न वाचिकी। अथ भगवान् प्रत्येकबुद्धो 20 राज्ञः कनकवर्णस्यान्तिकात् पिण्डपात्रमादाय तत एव ऋद्ध्या उपरिविहायसा प्रक्रान्तः। अथ राजा कनकवर्णः प्राञ्जलिर्भूत्वा तावदनिमिषं प्रेक्षमाणोऽस्थात्, यावच्चक्षुष्पथादतिक्रान्त इति। अथ राजा कनकवर्णो गणकमहामात्रामात्यदौवारिकपारिषद्यानामन्त्रयते–गच्छत ग्रामण्यः स्वकस्वकानि निवेशनानि। मा इहैव प्रासादे जिघत्सापिपासाभ्यां सर्व एव कालं करिष्यथ। त एवमाहुः–यदा देवस्य श्रीसौभाग्यसंपदासीत्, तदा वयं देवेन सार्धं क्रीडता 25 रमता कथं पुनर्वयमिदानीं देवं पश्चिमे काले पश्चिमे समये परित्यक्ष्याम इति। अथ राजा कनकवर्णः प्रारोदीत्। अश्रूणि प्रवर्तयति। अश्रूणि संपरिमार्ज्य गणकमहामात्रामात्यदौवारिकपारिषद्यानिदमवोचत्–गच्छत ग्रामण्यो यथास्वकस्वकानि निवेशनानि। मा इहैव प्रासादे जिघत्सापिपासाभ्यां सर्व एव कालं करिष्यथ। एवमुक्ता गणकमहामात्रामात्यदौवारिकपारिषद्याः प्ररुदन्तोऽश्रूणि प्रवर्तयन्तोऽश्रूणि संपरिमार्ज्य येन राजा कनकवर्णस्तेनोपसंक्रान्ताः। उप- 30 संक्रम्य राज्ञः कनकवर्णस्य पादौ शिरसा वन्दित्वा अञ्जलिं कृत्वा राज्ञः कनकवर्णस्यैतदूचुः–क्षन्तव्यं ते यदस्माभिः किंचिदपराद्धम्। अद्यास्माकं देवस्यापश्चिमं दर्शनम्॥

C 296

C 297

तद्यथा तेन भगवता प्रत्येकबुद्धेन स पिण्डपात्रः परिभुक्तः, अथ तस्मिन्नेव क्षणे समन्ताच्चतसृषु दिक्षु चत्वार्यभ्रपटलानि व्युत्थितानि, शीतलाश्च वायवो वातुमारब्धाः, ये जम्बूद्वीपादशुचिं व्यपनयन्ति, मेघाश्च प्रवर्षयन्तः पांशून् शमयन्ति । अथ तस्मिन्नेव दिवसे द्वितीयेऽर्धभागे विविधस्य खादनीयभोजनीयस्य वर्षं प्रवर्षति। इदमेवंरूपं भोजनमोदनसक्तवः 5 कुल्माषमत्स्यमांसम्, इदमेवंरूपं खादनीयं मूलखादनीयं स्कन्धखादनीयं पत्रखादनीयं पुष्पखादनीयं फलखादनीयं तिलखादनीयं खण्डशर्करगुडखादनीयं पिष्टखादनीयम् । अथ राजा कनकवर्णो हृष्टतुष्टः उदग्र आत्तमनाः प्रमुदितः प्रीतिसौमनस्यजातो गणकमहामात्रामात्यदौवारिकपार्षद्यानामन्त्रयते—पश्यथ यूयं ग्रामण्यः, अद्यैव तस्यैकपिण्डपातदानस्याङ्कुरः प्रादुर्भूतः। फलमन्यद्भविष्यति ॥

10 अथ द्वितीये दिवसे सप्ताहं धान्यवर्षं प्रवर्षन्ति, तद्यथा—तिलतण्डुला मुद्गमाषा यवा गोधूममसूराः शालयः । सप्ताहं सर्पिवर्षं प्रवर्षन्ति, सप्ताहं कर्पासवर्षं प्रवर्षन्ति, सप्ताहं नानाविधदूष्यवर्षं प्रवर्षन्ति, सप्ताहं सप्तरत्नानां वर्षं प्रवर्षन्ति, सुवर्णस्य रूप्यस्य वैडूर्यस्य स्फटिकस्य लोहितमुक्तेरश्मगर्भस्य मुसारगल्वस्य । सर्वमस्य राज्ञः कनकवर्णस्यानुभावेन जाम्बुद्वीपकानां मनुष्याणां दारिद्र्यसमुच्छेदो बभूव ॥

15 स्यात् खलु भिक्षवो युष्माकं काङ्क्षा विमतिर्वा अन्यः स तेन कालेन तेन समयेन राजा कनकवर्णो बभूव । न खल्वेवं द्रष्टव्यम् । अहं स तेन कालेन तेन समयेन राजा कनकवर्णो बभूव। तदनेन भिक्षवः पर्यायेण वेदितव्यम्। सचेद्भिक्षवः सत्त्वा जानीयुर्दानस्य फलं दानसंविभागस्य च फलविपाकम्—अपीदानीं योऽसौ अपश्चिमकः कवलश्चरम आलोपः, ततोऽप्यदत्त्वा असंविभज्य न परिभुञ्जीरन्, सचेल्लभेरन् दक्षिणीयं प्रतिग्राहकम्। न 20 चैषामुत्पन्नं मात्सर्यं चित्तं पर्यादाय तिष्ठति। यस्मात् तर्हि भिक्षवः सत्त्वा न जानते दानस्य फलं दानसंविभागस्य च फलविपाकम्—यथा अहं जाने दानस्य फलं दानसंविभागस्य च फलविपाकम्, तस्मात्तेऽदत्त्वा असंविभज्य परिभुञ्जते आगृहीतेन चेतसा, उत्पन्नं चैषां मात्सर्यं चित्तं पर्यादाय तिष्ठति ।

C 298

न नश्यते पूर्वकृतं शुभाशुभं
25 न नश्यते सेवनं पण्डितानाम् ।
न नश्यते आर्यजनेषु भाषितं
कृतं कृतज्ञेषु न जातु नश्यति ॥ ३ ॥
सुकृतं शोभनं कर्म दुष्कृतं वाप्यशोभनम् ।
अस्ति चैतस्य विपाको अवश्यं दास्यते फलम् ॥ ४ ॥

इदमवोचद्भगवान् । आत्तमनसस्ते भिक्षवो भिक्षुण्युपासकोपासिकादेवनागयक्ष-30 गन्धर्वासुरगरुडकिन्नरमहोरगादयः सर्वावती च पर्षद्भगवतो भाषितमभ्यनन्दन् ॥

इति श्रीदिव्यावदाने कनकवर्णावदानं विंशतिमम् ।

## २१ सहसोद्गतावदानम् ।

बुद्धो भगवान् राजगृहे विहरति वेणुवने कलन्दकनिवापे । आचरितमायुष्मतो महा-
मौद्गल्यायनस्य कालेन कालं नरकचारिकां चरितुं तिर्यक्चारिकां चरितुं प्रेतचारिकां देव-
चारिकां मनुष्यचारिकां चरितुम् । स यानि तानि नारकाणां सत्त्वानामुत्पाटानुपाटनच्छेदन- C 299
भेदनादीनि दुःखानि, तिरश्चामन्योन्यभक्षणादीनि, प्रेतानां क्षुत्तृषादीनि, देवानां च्यवन- 5
पतनविकिरणविध्वंसनादीनि, मनुष्याणां पर्येष्टिव्यसनादीनि दुःखानि, तानि दृष्ट्वा जम्बुद्वीप-
मागत्य चतसृणां पर्षदामारोचयति । यस्य कस्यचित् सार्धंविहारी अन्तेवासी वा अनभि-
रतो ब्रह्मचर्यं चरति, स तमादाय येनायुष्मान् महामौद्गल्यायनस्तेनोपसंक्रामति, आयुष्मान्
महामौद्गल्यायन एनं सम्यगववदिष्यति, अनुशासिष्यतीति । तमायुष्मान् महामौद्गल्यायनः
सम्यगववदति सम्यगनुशास्ति । एवमपरमपरं ते आयुष्मता महामौद्गल्यायनेन सम्यगव- 10
वादिताः सम्यगनुशिष्टा अभिरता ब्रह्मचर्यं चरन्ति, उत्तरे च विशेषमधिगच्छन्ति । तेन खलु
समयेनायुष्मान् महामौद्गल्यायनश्चतसृभिः पर्षद्भिराकीर्णो विहरति भिक्षुभिर्भिक्षुणीभिरुपासकै-
रुपासिकाभिश्च । जानकाः पृच्छका बुद्धा भगवन्तः । पृच्छति बुद्धो भगवानायुष्मन्तमानन्दम् ।
स कथयति—आचरितं भदन्त आयुष्मतो महामौद्गल्यायनस्य कालेन कालं नरकचारिकां
चरितुं तिर्यक्चारिकां प्रेतचारिकां देवचारिकां मनुष्यचारिकां चरितुम् । स यानि तानि 15
नारकाणां सत्त्वानामुत्पाटानुपाटनच्छेदनभेदनादीनि दुःखानि, तिर्यश्चामन्योन्यभक्षणादीनि,
प्रेतानां क्षुत्तृषादीनि, देवानां च्यवनपतनविकिरणविध्वंसनादीनि, मनुष्याणां पर्येष्टिव्यसना-
दीनि दुःखानि, तानि दृष्ट्वा जम्बुद्वीपमागत्य चतसृणां पर्षदामारोचयति । यस्य कस्यचित्
सार्धंविहारी अन्तेवासी वा अनभिरतो ब्रह्मचर्यं चरति, स तमादाय येनायुष्मान् महामौद्ग-
ल्यायनस्तेनोपसंक्रामति, आयुष्मान् महामौद्गल्यायन एव सम्यगववदिष्यति सम्यगनुशासि- 20
ष्यतीति, तमायुष्मान् महामौद्गल्यायनः सम्यगववदति सम्यगनुशास्ति । एवमपरमपरं ते C 300
आयुष्मता महामौद्गल्यायनेन सम्यगववादिताः सम्यगनुशिष्टा अभिरता ब्रह्मचर्यं चरन्ति,
उत्तरे च विशेषमधिगच्छन्ति । अयं भदन्त हेतुरयं प्रत्ययो येनायुष्मान् महामौद्गल्यायन-
श्चतसृभिः पर्षद्भिराकीर्णो विहरति भिक्षुभिक्षुण्युपासकोपासिकाभिः । न सर्वत्र आनन्द
मौद्गल्यायनो भिक्षुर्भविष्यति मौद्गल्यायनसदृशो वा । तस्माद् द्वारकोष्ठके पञ्चगण्डकं चक्रं 25
कारयितव्यम् । उक्तं भगवता द्वारकोष्ठके पञ्चगण्डकं चक्रं कारयितव्यमिति । भिक्षवो न
जानते कीदृशं कारयितव्यमिति । भगवानाह—पञ्च गतयः कर्तव्या नरकास्तिर्यञ्चः प्रेता
देवा मनुष्याश्च । तत्राधस्तात् नरकाः कर्तव्याः, तिर्यञ्चः प्रेताश्च, उपरिष्टात् देवा मनुष्याश्च ।
चत्वारो द्वीपाः कर्तव्याः पूर्वविदेहोऽपरगोदानीय उत्तरकुरुर्जम्बुद्वीपश्च । मध्ये रागद्वेषमोहाः
कर्तव्याः, रागः पारावताकारेण, द्वेषो भुजङ्गाकारेण, मोहः सूकराकारेण । बुद्धप्रतिमाश्चैत- 30
न्निर्वाणमण्डलमुपदर्शयन्त्यः कर्तव्याः । अनुपपादुकाः सत्त्वा घटीयन्त्रप्रयोगेण च्यवमाना
उपपद्यमानाश्च कर्तव्याः । सामन्तकेन द्वादशाङ्गः प्रतीत्यसमुत्पादोऽनुलोमप्रतिलोमः कर्तव्यः ।
सर्वमनित्यतया ग्रस्तं कर्तव्यम्, गाथाद्वयं च लेखयितव्यम्—

आरभध्वं निष्क्रामत युज्यध्वं बुद्धशासने ।
धुनीत मृत्युनः सैन्यं नडागारमिव कुञ्जरः ॥ १ ॥
यो ह्यस्मिन् धर्मविनये अप्रमत्तश्चरिष्यति ।
प्रहाय जातिसंसारं दुःखस्यान्तं करिष्यति ॥ २ ॥ इति ।

5 उक्तं भगवता द्वारकोष्ठके पञ्चगण्डकं चक्रं कारयितव्यमिति भिक्षुभिः कारितम् । ब्राह्मणगृहपतय आगत्य पृच्छन्ति—आर्य, किमिदं लिखितमिति ? ते कथयन्ति—भद्रमुखाः, वयमपि न जानीम इति । भगवानाह—द्वारकोष्ठके भिक्षुरुद्देष्टव्यो य आगतागतानां ब्राह्मणगृहपतीनां दर्शयति । उक्तं भगवता भिक्षुरुद्देष्टव्य इति । ते अविशेषेणोद्दिशन्ति बालानपि मूढानपि अव्यक्तानपि अकुशलानपि । ते आत्मना न जानते, कुतः पुनरागतानां ब्राह्मणगृहपतीनां 10 दर्शयिष्यन्ति ? भगवानाह—प्रतिबलो भिक्षुरुद्देष्टव्य इति ॥

C 301

राजगृहेऽन्यतमो गृहपतिः प्रतिवसति । तेन सदृशात् कुलात् कलत्रमानीतम् । स तया सार्धं क्रीडति रमते परिचारयति । तस्य क्रीडतो रममाणस्य परिचारयतः पुत्रो जातः । तस्य त्रीणि सप्तकान्येकविंशतिदिवसान् विस्तरेण जातस्य जातिमहं कृत्वा कुलसदृशं नामधेयं व्यवस्थापितम् । स पत्नीमामन्त्रयते—भद्रे, जातोऽस्माकं ऋणहरो धनहरः । तद्गच्छामि, 15 पण्यमादाय महासमुद्रमवतरामीति । सा कथयति—आर्यपुत्र, एवं कुरुष्वेति । स सुहृत्संबन्धिबान्धवानामन्त्रयित्वा अन्तर्जनं च समाश्वास्य महासमुद्रगमनीयं पण्यमादाय दिवसतिथिमुहूर्तेन महासमुद्रमवतीर्णः । तत्रैव च निधनमुपयातः । तस्य पत्न्या स दारको ज्ञातिबलेन हस्तबलेन पालितः पोषितः संवर्धितो लिप्यामुपन्यस्तो लिप्यक्षरेषु च कृतावी संवृत्तः । स वयस्करेण सार्धं वेणुवनं गतो विहारं प्रविष्टः पश्यति द्वारकोष्ठके पञ्चगण्डकं चक्रमभिलिखितम् । स 20 पृच्छति—आर्य, किमिदमभिलिखितमिति ? भिक्षुः कथयति—भद्रमुख, एताः पञ्च गतयो नरकास्तिर्यञ्चः प्रेता देवा मनुष्याश्च । आर्य, किमेभिः कर्म कृतं येनैवंविधानि दुःखानि प्रत्यनुभवन्तीति ? स कथयति—एते प्राणातिपातिका अदत्तादायिकाः काममिथ्याचारिका मृषावादिकाः पैशुनिकाः पारुषिकाः संभिन्नप्रलापिका अभिध्यालवो व्यापन्नचित्ता मिथ्यादृष्टिकाः । तदेभिरेते दशाकुशलाः कर्मपथा अत्यर्थमासेविता भाविता 25 बहुलीकृताः, येन एवंविधानि दुःखान्युत्पाटानुपाटच्छेदनभेदनादीनि प्रत्यनुभवन्ति । आर्य, गतमेतत् । एभिरन्यैः किं कर्म कृतं येन एवंविधानि दुःखानि प्रत्यनुभवन्ति ? भद्रमुख, एभिरपि दशाकुशलाः कर्मपथा आसेविता भाविता बहुलीकृताः, येन एवंविधानि दुःखान्यन्योन्यभक्षणादीनि प्रत्यनुभवन्ति । आर्य, एतदपि गतम् । एभिरन्यैः किं कर्म कृतं येन एवंविधानि दुःखानि प्रत्यनुभवन्ति ? भद्रमुख, एतेऽपि मत्सरिण आसन् कुटुकुञ्चका 30 आगृहीतपरिष्कारः । तत्तेन मात्सर्येणासेवितेन भावितेन बहुलीकृतेन एवंविधानि दुःखानि क्षुत्तृषादीनि दुःखानि प्रत्यनुभवन्ति । आर्य, एतदपि गतम् । एभिरन्यैः किं कर्म कृतं येन एवंविधानि सुखानि प्रत्यनुभवन्ति ? भद्रमुख, एते प्राणातिपातात् प्रतिविरता अदत्तादानात्

C 302

काममिथ्याचारान्मृषावादात् पैशुन्यात् पारुष्यात् संभिन्नप्रलापादनभिध्यालवोऽव्यापन्नचित्ताः सम्यग्दृष्टयः। तदेभिरेते दश कुशलाः कर्मपथा अत्यर्थमासेविता भाविता बहुलीकृताः, येन एवंविधानि दिव्यस्त्रीललितविमानोद्यानसुखानि प्रत्यनुभवन्ति। आर्य, एतदपि गतम्। एभिरन्यैः किं कर्म कृतं येन एवंविधानि सुखानि प्रत्यनुभवन्ति? भद्रमुख, एभिरपि दश कुशलाः कर्मपथास्तनुतरा मृदुतराश्चासेविता भाविता बहुलीकृताः, येन एवंविधानि हस्त्यश्व- 5 रथान्नपानशयनासनस्त्रीललितोद्यानसुखानि प्रत्यनुभवन्ति। आर्य, आसां पञ्चानां गतीनां या एतास्तिस्रो गतयो नरकास्तिर्यञ्चः प्रेताश्च, एता मह्यं न रोचन्ते। ये तु एते देवा मनुष्याश्च एते रोचेते। तत्कथमेते दश कुशलाः कर्मपथाः समादाय वर्तयितव्याः? भद्रमुख, स्वाख्याते धर्मविनये प्रव्रज्य सचेद् दृष्ट एव धर्मे आज्ञामारागयिष्यसि, एष एव तेऽन्तो दुःखस्य। अथ सावशेषसंयोजनः कालं करिष्यसि, देवेषूपपत्स्यसे। उक्तं हि भगवता—पञ्चानुशंसान् 10 समनुपश्यता पण्डितेनालमेव प्रव्रज्याधिमुक्तेन भवितुम्। कतमानि पञ्च? आवेणिका इमे स्वार्था अनुप्राप्तो भविष्यामीति संपश्यता पण्डितेनालमेव प्रव्रज्याधिमुक्तेन भवितुम्। येषामहं दासः प्रेष्यो निर्देश्यो भुजिष्यो नयेन कामंगमः, तेषां पूज्यश्च भविष्यामि प्रशंस्यश्चेति संपश्यता पण्डितेन अलमेव प्रव्रज्याधिमुक्तेन भवितुम्। अनुत्तरं योगक्षेमं निर्वाणमनुप्राप्स्यामीति संपश्यता पण्डि- तेन अलमेव प्रव्रज्याधिमुक्तेन भवितुम्। अनुत्तरं वा योगक्षेमं निर्वाणमनुप्राप्नुवतोऽनापत्तिकस्य 15 C 303 सतो देवेषूपपत्तिर्भविष्यतीति संपश्यता पण्डितेन अलमेव प्रव्रज्याधिमुक्तेन भवितुम्। अनेक- पर्यायेण प्रव्रज्या वर्णिता बुद्धैश्च बुद्धश्रावकैश्च। आर्य, शोभनम्। किं तत्र प्रव्रज्यायां क्रियते? भद्रमुख, यावज्जीवं ब्रह्मचर्यं चर्यते। आर्य, न शक्यमेतत्। अन्योऽस्ति उपायः? भद्रमुख, अस्ति, उपासको भव। आर्य, किं तत्र क्रियते? भद्रमुख, यावज्जीवं प्राणातिपातात् प्रति- विरतिः संरक्ष्या, अदत्तादानात् काममिथ्याचारात् सुरामैरेयमद्यप्रमादस्थानात् प्रतिविरतिः 20 संरक्ष्या। आर्य, एतदपि न शक्यते। अन्यमुपायं कथयेति। भद्रमुख, बुद्धप्रमुखं भिक्षुसंघं भोजय। आर्य, कियद्भिः कार्षापणैर्बुद्धप्रमुखो भिक्षुसंघो भोज्यते? भद्रमुख, पञ्चभिः कार्षापणशतैः। आर्य, शक्यमेतत्। स तस्य पादाभिवन्दनं कृत्वा प्रक्रान्तः। येन स्वं निवेशनं तेनोपसंक्रान्तः। उपसंक्रम्य मातरमिदमवोचत्—अम्ब, अद्याहं वेणुवनं गतः। तत्र मया द्वारकोष्ठके पञ्चगण्डकं चक्रमभिलिखितं दृष्टम्। तत्र पञ्च गतयो नरकास्तिर्यञ्चः प्रेता 25 देवा मनुष्याश्च। तत्र नारका उत्पाटानुपाटनच्छेदनभेदनादीनि दुःखानि प्रत्यनुभवन्ति। तिर्यञ्चश्चान्योन्यभक्षणादीनि। प्रेताः क्षुत्तृषादीनि। देवा दिव्यस्त्रीललितोद्यानविमानसुखानि प्रत्यनुभवन्ति। मनुष्या हस्त्यश्वरथान्नपानशयनासनस्त्रीललितोद्यानानि प्रत्यनुभवन्ति। आसां मम तिस्रो गतयो नाभिप्रेताः, द्वे अभिप्रेते। तत्किमिच्छसि त्वं मां देवेषूपपद्यमानम्? पुत्र, सर्वसत्त्वानिच्छामि देवेषूपपद्यमानान् प्रागेव त्वाम्। अम्ब, यद्येवम्, प्रयच्छ पञ्च 30 कार्षापणशतानि। बुद्धप्रमुखं भिक्षुसंघं भोजयामि। पुत्र, मया त्वं ज्ञातिबलेन हस्तबलेन चाप्यायितः पोषितः संवर्धितः। कुतो मे पञ्चानां कार्षापणशतानां विभवः? अम्ब, यदि

C 304 नास्ति, भृतिकया कर्म करोमि। पुत्र, त्वं सुकुमारः। न शक्यसि भृतिकया कर्म कर्तुम्। अम्ब गच्छामि, शक्ष्यामि। पुत्र, यदि शक्तोऽसि, गच्छ। स तया अनुज्ञातो भृतकवीथीं गत्वा अवस्थितः। ब्राह्मणगृहपतयोऽन्यान् भृतकपुरुषान् गृह्णन्ति, तं न कश्चित् पृच्छति। स तत्र दिवसमतिनाम्य विकाले गृहं गतः। स मात्रा पृष्टः—पुत्र, कृतं ते भृतिकया कर्म? 5 अम्ब, किं करोमि? न मां कश्चित् पृच्छति। पुत्र, न एवंविधा भृतकपुरुषा भवन्ति। पुत्र, स्फटितपरुषा रूक्षकेशा मलिनवस्त्रनिवसनाः। यद्यवश्यं त्वया भृतिकया कर्म कर्तव्यम्, ईदृशं वेषमास्थाय भृतकवीथीं गत्वा तिष्ठ। अम्ब, शोभनम्। एवं करोमि। सोऽपरस्मिन् दिवसे तादृशं वेषमास्थाय भृतकवीथीं गत्वा अवस्थितः। यावदन्यतरस्य गृहपतेर्गृहमुत्तिष्ठते। स भृतकानामर्थे वीथीं गतः। तेन तं प्रत्याख्याय अन्ये भृतकपुरुषा गृहीताः। 10 स कथयति—गृहपते, अहमपि भृतिकया कर्म करोमीति। गृहपतिः कथयति—पुत्र, त्वं सुकुमारः, न शक्ष्यसि भृतिकया कर्म कर्तुम्। तात, किं त्वं पूर्वं भृतिं ददासि, आहोस्वित् पश्चात्? पुत्र पश्चात्। तात, अद्य तावत् कर्म करोमि। यदि तोषयिष्यामि, दास्यसि भृतिमिति। स संलक्षयति—शोभनमेष कथयति। अद्य तावत् जिज्ञास्यामि यदि शक्ष्यति कर्म कर्तुम्, दास्यामि। न शक्ष्यति, न दास्यामीति विदित्वा कथयति—पुत्र आगच्छ, 15 गच्छाम इति। स तेन गृहं नीतः। तेऽन्यभृतकाः शाठ्येन कर्म कुर्वन्ति। स त्वरितत्वरितं कर्म करोति। तांश्च भृतकान् समनुशास्ति। वयं तावत् पूर्वकेण दुश्चरितेन दरिद्रगृहेषूपपन्नाः। तद्यदि शाठ्येन कर्म करिष्यामः, इतश्च्युतानां का गतिर्भविष्यति? ते कथयन्ति—भागिनेय, त्वं नवदान्तः। स्थानमेतद्विद्यते यदस्माकं पृष्ठतो गमिष्यसि। आगच्छ पश्यामः। स लोकाख्यायिकायां कुशलः। तेन तेषां तादृशी लोकाख्यानकथा प्रस्तुता, यां श्रुत्वा ते 20 भृतकपुरुषा आक्षिप्ताः। तस्यातिस्वरेण गच्छतोऽनुपदं गच्छन्ति, मा लोकाख्यायिकां न C 305 श्रोष्याम इति। तस्मिन् दिवसे तैर्भृतकपुरुषैस्तद्द्विगुणं कर्म कृतम्। गृहपतिः कर्मान्तान् प्रत्यवेक्षमाणस्तं प्रदेशमागतो यावद्द्विगुणं कर्म कृतम्। सोऽधिष्ठायकपुरुषं पृच्छति—भोः पुरुष, किं त्वया अपरे भृतका गृहीताः? आर्य, न गृहीताः। अथ कस्मादद्य द्विगुणं कर्म कृतम्? तेन यथावृत्तमारोचितम्। श्रुत्वा गृहपतिस्तस्य दारकस्य द्विगुणां 25 भृतिं दातुमारब्धः। स कथयति—तात, किं द्विदैवसिकां भृतिं ददासीति? स कथयति—पुत्र, न द्विदैवसिकां ददामि, अपि तु प्रसन्नोऽहं प्रसन्नाधिकारं करोमीति। स कथयति—तात, यदि त्वं ममाभिप्रसन्नः, यावत् तव गृहे कर्म कर्तव्यं तावत् तवैव हस्ते तिष्ठतु। पुत्र एवं भवतु। यदा तस्य गृहपतेस्तद्गृहं परिसमाप्तम्, तदा असौ दारको भृतिं गणयितुमारब्धो यावत् पञ्च कार्षापणशतानि न परिपूर्यन्ते। स रोदितुमारब्धः। स गृह-30 पतिः कथयति—पुत्र, किं रोदिषि? मासि मया किंचित् व्यंसितः। तात, महात्मा त्वम्, किं मां व्यंसयिष्यसि? अपि तु अहमेव मन्दभाग्यः। मया पञ्चानां कार्षापणशतानामर्थाय भृतिकया कर्म प्रारब्धं बुद्धप्रमुखं भिक्षुसंघं भोजयिष्यामि, ततो देवेषूपपत्स्यामीति। तानि

न परिपूर्णानि। पुनरपि मया अन्यत्र भृतिकया कर्म कर्तव्यमिति। स गृहपतिर्भूयसा मात्रया अतिप्रसन्नः। स कथयति–पुत्र, यद्येवम्, अहं पूरयामि। तात, मा देवेषूपपत्स्ये। पुत्र, अभिश्रद्दधासि त्वं भगवतः? तात अभिश्रद्दधे। पुत्र गच्छ, भगवन्तं पृच्छ। येन भगवांस्तेनोपसंक्रान्तः। उपसंक्रम्य भगवतः पादौ शिरसा वन्दित्वा एकान्ते निषण्णः। स गृहपतिपुत्रो भगवन्तमिदमवोचत्–भगवन्, मया पञ्चानां कार्षापणशतानामर्थाय भगवन्तं 5 सश्रावकसंघं भोजयिष्यामीत्यमुकस्य गृहपतेर्भृतिकया कर्म कृतम्। तानि मम न परिपूर्णानि। स गृहपतिः परिपूरयति। भगवन् किम्? आह–वत्स गृहाण, श्राद्धः स गृहपतिः। भगवन्, मा देवेषु नोपपत्स्ये? वत्स उपपत्स्यसे, गृहाण। स परितुष्टो भगवतः पादौ शिरसा वन्दित्वा भगवतोऽन्तिकात् प्रक्रान्तो येन स गृहपतिस्तेनोपसंक्रान्तः। उपसंक्रम्य गृहपतेरन्तिकात् पञ्च कार्षापणशतानि गृहीत्वा मातुः सकाशं गतः। कथयति–अम्ब, एतानि पञ्च 10 कार्षापणशतानि। भक्तं सज्जीकुरु। बुद्धप्रमुखं भिक्षुसंघं भोजयिष्यामीति। सा कथयति–पुत्र, न मम भाण्डोपस्करो न शयनासनम्। स एव गृहपतिर्विस्तीर्णभाण्डोपस्करः श्राद्धश्च। तमेव गत्वा प्रार्थय। शक्नोत्यसौ संपादयितुमिति। स तस्य सकाशं गतः शिरःप्रणामं कृत्वा कथयति–त्वयैव एतानि पञ्च कार्षापणशतानि दत्तानि। अस्माकं गृहे न भाण्डोपस्करो नापि शयनासनम्। तदर्हसि ममानुकम्पया भक्तं सज्जीकर्तुम्। अहमागत्य स्वहस्तेन बुद्ध- 15 प्रमुखं भिक्षुसंघं भोजयिष्यामीति। गृहपतिः संलक्षयति–ममेदं गृहमचिरोत्थितं बुद्धप्रमुखेन भिक्षुसंघेन परिभुक्तं भविष्यति, प्रतिजागर्मि। इति विदित्वा कथयति–पुत्र, शोभनम्। स्थापयित्वा कार्षापणान् गच्छ, श्वो बुद्धप्रमुखं भिक्षुसंघमुपनिमन्त्रय। अहमाहारं सज्जीकरोमीति। स संजातसौमनस्यः शिरःप्रणामं कृत्वा प्रक्रान्तो येन भगवांस्तेनोपसंक्रान्तः। उपसंक्रम्य वृद्धान्ते स्थित्वा कथयति–सोऽहं बुद्धप्रमुखं भिक्षुसंघमुप- 20 निमन्त्रयामीति। अधिवासयति भगवांस्तस्य गृहपतिपुत्रस्य तूष्णीभावेन। अथ स गृहपतिपुत्रो भगवतस्तूष्णीभावेनाधिवासनां विदित्वा भगवतोऽन्तिकात् प्रक्रान्तः॥

तेनापि गृहपतिना तामेव रात्रिं शुचिं प्रणीतं खादनीयं भोजनीयं समुदानीय काल्यमेवोत्थाय गृहं संमार्जितम्। सुकुमारी गोमयकार्षी दत्ता, आसनप्रज्ञप्तिः कारिता, उदकमणयः प्रतिष्ठापिताः। तेनापि गृहपतिपुत्रेण गत्वा भगवत आरोचितम्–समयो भदन्त, सज्जं 25 भक्तं यस्येदानीं भगवान् कालं मन्यते इति। अथ भगवान् पूर्वाह्णे निवास्य पात्रचीवरमादाय भिक्षुगणपरिवृतो भिक्षुसंघपुरस्कृतो येन तस्य गृहपतेर्निवेशनं तेनोपसंक्रान्तः। षड्वर्गीयाः पृच्छन्ति–केनायं बुद्धप्रमुखो भिक्षुसंघ उपनिमन्त्रित इति? अपरे कथयन्ति–अमुकेन गृहपतिपुत्रेणेति। ते परस्परं संजल्पं कुर्वन्ति–नन्दोपनन्द, भृतकपुरुषः सः। किमसौ दास्यति? गच्छाम कुलोपकगृहेषु गत्वा पुरोभक्तकां कुर्म इति। ते कुलोपकगृहाण्युपसंक्रान्ताः। तैरुक्ताः– 30 आर्य, पुरोभक्तकां कुरुतेति। ते कथयन्ति–एवं कुर्म इति। तैः पुरोभक्तका कृता। भगवांस्तस्य गृहपतेर्निवेशने पुरस्ताद्भिक्षुसंघस्य प्रज्ञप्त एवासने निषण्णः। षड्वर्गीया अपि पुरोभक्तकां कृत्वा

C 306

C 307

संघमध्ये निषण्णाः। अथ स गृहपतिपुत्रः सुखोपनिषण्णं बुद्धप्रमुखं भिक्षुसंघं विदित्वा शुचिना प्रणीतेन खादनीयभोजनीयेन स्वहस्तं संतर्पयति संप्रवारयति । सततपरिवेषणं कुर्वाणः पश्यति षड्वर्गीयान् न सत्कृत्य परिभुञ्जानान्। दृष्ट्वा च पुनर्भगवन्तं विदित्वा धौतहस्तमपनीतपात्रं भगवतः पुरस्तात् स्थित्वा कथयति—भगवन्, कैश्चिदत्रार्यकैर्न सत्कृत्य परिभुक्त-
5 माहारम्। देवेषु नोपपत्स्ये इति? भगवानाह—वत्स, शयनासनपरिभोगेन तावत् त्वं देवेषूपपद्येथाः प्रागेवान्नपानपरिभोगेनेति। अथ भगवांस्तं गृहपतिपुत्रं च धर्म्यया कथया संदर्श्य समादाप्य समुत्तेज्य संप्रहर्ष्योत्थायासनात् प्रक्रान्तः॥

अत्रान्तरे पञ्चमात्राणि वणिक्शतानि महासमुद्रात् संसिद्धयानपात्राणि राजगृहमनुप्राप्तानि। राजगृहे च पर्व प्रत्युपस्थितमिति न किंचित् क्रयेणापि लभ्यते। तत्रैको वणि-
10 ग्भिक्षुगोचरिकः। स कथयति—भवन्तः, आगमयत कस्याद्य गृहे बुद्धप्रमुखेन भिक्षुसंघेन भक्तम्, तत्रावश्यं किंचिदुत्सदनधर्मकं भवतीति । ते श्रवणपरंपरया चान्वेषमाणास्तस्य गृहपतेः सकाशमुपसंक्रान्ताः। कथयन्ति—गृहपते, तवाद्य बुद्धप्रमुखेन भिक्षुसंघेन भुक्ते इह पर्व प्रत्युपस्थितमिति न किंचित् क्रयेणापि लभ्यते। यदि किंचिदुत्सदनधर्मकमस्ति, मूल्येन दीयतामिति। न ममैतद्भक्तम्, अपि तु तस्यैतद्गृहपतिपुत्रस्य भक्तम्। एनं याचध्वमिति। ते तस्य सकाश-
15 मुपसंक्रम्य कथयन्ति—गृहपतिपुत्र, दीयतामस्माकं भुक्तशेषं यदस्ति। मूल्यं प्रयच्छाम इति। स कथयति—नाहं मूल्येनानुप्रयच्छामि । अपि तु एवमेव प्रयच्छामीति । ते तेनान्नपानेन संतर्पिता गृहपतेर्गत्वा कथयन्ति—तस्य ते गृहपते लाभाः सुलब्धा यस्य ते निवेशने बुद्धप्रमुखो भिक्षुसंघोऽन्नपानेन संतर्पितः, इमानि च पञ्च वणिक्शतानीति। स कथयति—अनेन गृहपतिपुत्रेण लाभाः सुलब्धाः। अनेन बुद्धप्रमुखो भिक्षुसंघोऽन्नपानेन संतर्पितो न मयेति।
20 ते पृच्छन्ति—कतरस्यायं गृहपतेः पुत्रः? अमुकस्य सार्थवाहस्य। सार्थवाहः कथयति—भवन्तः, ममैष वयस्यपुत्रो भवति। तस्य पिता महासमुद्रमवतीर्णोऽनयेन व्यसनमापन्नः। शक्यं बहुभिरेकः समुद्धर्तुम्, न त्वेव एकेन बहवः। तदयं पटकः प्रज्ञप्तो येन वो यत् परित्यक्तम्, सोऽस्मिन् पटकेऽनुप्रयच्छत्विति । ते पूर्वमेवाभिप्रसन्नाः सार्थवाहेन च प्रोत्साहिता इति तैर्यथासंभाव्येन मणिमुक्तादीनि रत्नानि दत्तानि। महान् राशिः संपन्नः। सार्थवाहः कथयति—पुत्र,
25 गृहाणेति । स कथयति—तात, न मया मूल्येन दत्तमिति। सार्थवाहः कथयति—पुत्र, न वयं तव मूल्यं प्रयच्छामः । यदि च मूल्यं गण्यते, एकेन रत्नेनेदृशानां भक्तानामनेकानि शतानि संविद्यन्ते। किं तु वयं तवाभिप्रसन्नाः प्रसन्नाधिकारं कुर्मः, गृहाणेति । स कथयति—तात, मया बुद्धप्रमुखो भिक्षुसंघो भोजितो देवेषूपपत्स्ये इति। तस्मादवशिष्टं युष्मभ्यं दत्तम्। यदि ग्रहीष्यामि, स्थानमेतद्विद्यते यद्देवेषु नोपपत्स्ये? सार्थवाहः कथयति—पुत्र, अभिश्रद्द-
30 धासि त्वं भगवतः? तात, अभिश्रद्दधे। गच्छ, भगवन्तं पृच्छ। स येन भगवांस्तेनोपसंक्रान्तः। उपसंक्रम्य भगवतः पादौ शिरसा वन्दित्वा एकान्ते निषण्णः। स गृहपतिपुत्रो भगवन्तमिदमवोचत्—भगवन्, मया बुद्धप्रमुखं भिक्षुसंघं भोजयित्वा यदन्नपानमवशिष्टं

C 308

तद्वणिजां दत्तम्। ते मम प्रसन्नाः प्रसन्नाधिकारं कुर्वन्ति। किं कल्पते तन्मम ग्रहीतु-
माहोस्विन्न कल्पत इति? भगवानाह—यदि प्रसन्नाः प्रसन्नाधिकारं कुर्वन्ति, गृहाण। भगवन्, C 309
मा देवेषु नोपपत्स्ये? भगवानाह—वत्स, पुष्पमेतत्, फलमन्यद्भविष्यति। तेन भगवद्वचना-
भिसंप्रत्ययात् परितुष्टेन गत्वा रत्नानि गृहीतानि॥

अत्रान्तरे राजगृहेऽपुत्रः श्रेष्ठी कालगतः। ततो राजगृहनिवासिनः पौराः संनिपत्य 5
संजल्पं कुर्वन्ति—भवन्तः, श्रेष्ठी कालगतः। कं श्रेष्ठिनमभिषिञ्चाम इति? तत्रैके कथयन्ति—यः
पुण्यमहेशाख्य इति। अपरे कथयन्ति—कथमस्माभिर्ज्ञातव्यमिति? ते कथयन्ति—नानावर्णानि
बीजानि पक्वकुम्भे प्रक्षिपामः, य एकवर्णान्युद्धरिष्यति, तं श्रेष्ठिनमभिषिञ्चाम इति।
तैर्नानावर्णानि बीजानि पक्वकुम्भे प्रक्षिप्तानि। आरोचितं च—भवन्तः, य एकवर्णानि
बीजानि एतस्मात् कुम्भादुद्धरेत्, स श्रेष्ठ्यभिषिच्यते। यस्य वः श्रेष्ठित्वमभिप्रेतं च, उद्धरतु 10
इति। त उद्धर्तुमारब्धाः। सर्वैर्नानावर्णान्युद्धृतानि। तेन तु गृहपतिपुत्रेणैकवर्णान्युद्धृतानि।
पौरजानपदाः कथयन्ति—भवन्तः, अयं पुण्यमहेशाख्यः। सर्व एनं श्रेष्ठिनमभिषिञ्चामः।
तत्रैके कथयन्ति—भवन्तः, अयं भृतकपुरुषः। कथमेनं श्रेष्ठिनमभिषिञ्चाम इति? अपरे
कथयन्ति—पुनरपि तावत् जिज्ञासामः। तेन यावत् त्रिरप्येकवर्णान्युद्धृतानि। ते कथयन्ति—
भवन्तः, मनुष्यका अप्यस्य साक्षेपमनुप्रयच्छन्ति। आगच्छत, एनमेवाभिषिञ्चाम इति। 15
स तैः श्रेष्ठी अभिषिक्तः। स गृहपतिः संलक्षयति—यदप्यनेन मम भृतिकया कर्म कृतम्,
तथाप्ययं पुण्यमहेशाख्यः सत्त्वः। संग्रहोऽस्य कर्तव्य इति। तेन तस्य सर्वालंकारविभूषिता
दुहिता भार्यार्थं दत्ता। तच्च गृहम्, प्रभूतं स्वापतेयम्। सहसैवं भोगैरभ्युद्गत इति तस्य
सहसोद्गतो गृहपतिः सहसोद्गतो गृहपतिरिति संज्ञा संवृत्ता॥

स संलक्षयति—या काचिदस्माकं श्रीसौभाग्यसंपत्, सर्वासौ बुद्धं भगवन्तमागम्य। 20
यन्न्वहं पुनरपि बुद्धप्रमुखं भिक्षुसंघमन्तर्गृहे उपनिमन्त्र्य भोजयेयम्। इति विदित्वा येन भगवां- C 310
स्तेनोपसंक्रान्तः। उपसंक्रम्य भगवतः पादौ शिरसा वन्दित्वा एकान्ते निषण्णः। एकान्त-
निषण्णं सहसोद्गतं गृहपतिं भगवान् धर्म्यया कथया संदर्शयति समादापयति समुत्तेजयति
संप्रहर्षयति। अनेकपर्यायेण धर्म्यया कथया संदर्श्य समादाप्य समुत्तेज्य संप्रहर्ष्य तूष्णीम्।
अथ सहसोद्गतो गृहपतिरुत्थायासनादेकांसमुत्तरासङ्गं कृत्वा येन भगवांस्तेनाञ्जलिं प्रणम्य भग- 25
वन्तमिदमवोचत्—अधिवासयतु भगवान् श्वोऽन्तर्गृहे भक्तेन सार्धं भिक्षुसंघेनेति। अधिवास-
यति भगवान् सहसोद्गतस्य गृहपतेस्तूष्णीभावेन। अथ सहसोद्गतो गृहपतिर्भगवतस्तूष्णीभावे-
नाधिवासनां विदित्वा भगवतः पादौ शिरसा वन्दित्वा भगवतोऽन्तिकात् प्रक्रान्तः। अथ
सहसोद्गतो गृहपतिस्तामेव रात्रिं शुचिं प्रणीतं खादनीयं भोजनीयं समुदानीय काल्यमेवोत्थाय
आसनानि प्रज्ञप्योदकमणीन् प्रतिष्ठाप्य भगवतो दूतेन कालमारोचयति—समयो भदन्त, सज्जं 30
भक्तं यस्येदानीं भगवान् कालं मन्यत इति। अथ भगवान् पूर्वाह्णे निवास्य पात्रचीवरमादाय
भिक्षुगणपरिवृतो येन सहसोद्गतस्य गृहपतेर्निवेशनं तेनोपसंक्रान्तः। उपसंक्रम्य पुरस्ताद्भिक्षु-

संघस्य प्रज्ञप्त एवासने निषण्णः। अथ सहसोद्गतो गृहपतिः सुखोपनिषण्णं बुद्धप्रमुखं भिक्षुसंघं विदित्वा शुचिना प्रणीतेन खादनीयेन भोजनीयेन स्वहस्तं संतर्पयति संप्रवारयति। अनेकपर्यायेण शुचिना प्रणीतेन खादनीयेन भोजनीयेन स्वहस्तं संतर्प्य संप्रवार्य भगवन्तं भुक्तवन्तं विदित्वा धौतहस्तमपनीतपात्रं नीचतरमासनं गृहीत्वा भगवतः पुरस्तात् निषण्णो धर्म-
5 श्रवणाय। तस्य भगवता आशयानुशयं धातुं प्रकृतिं च ज्ञात्वा तादृशी चतुरार्यसत्यसंप्रतिवेधिकी धर्मदेशना कृता, यां श्रुत्वा सहसोद्गतेन गृहपतिना विंशतिशिखरसमुद्गतं सत्कायदृष्टिशैलं ज्ञानवज्रेण भित्त्वा स्रोतआपत्तिफलं साक्षात्कृतम्। स दृष्टसत्यस्त्रिरुदानमुदानयति—
C 311 इदमस्माकं भदन्त न मात्रा कृतं न पित्रा नेष्टेन न स्वजनबन्धुवर्गेण न राज्ञा न देवताभिर्न पूर्वप्रेतैर्न श्रमणब्राह्मणैर्यद्भगवता अस्माकं कृतम्। उच्छोषिता रुधिराश्रुसमुद्राः, लङ्घिता
10 अस्थिपर्वताः, पिहितान्यपायद्वाराणि, विवृतानि स्वर्गमोक्षद्वाराणि, प्रतिष्ठापिताः स्मो देवमनुष्येषु। अभिक्रान्तोऽहं भदन्त अभिक्रान्तः। एषोऽहं बुद्धं भगवन्तं शरणं गच्छामि धर्मं च भिक्षुसंघं च। उपासकं च मां धारय अद्याग्रेण यावज्जीवं प्राणोपेतमभिप्रसन्नमिति। अथ भगवान् सहसोद्गतं गृहपतिं धर्म्यया कथया संदर्श्य समादाप्य समुत्तेज्य संप्रहर्ष्योत्थायासनात् प्रक्रान्तः॥

15 भिक्षवः संशयजाताः सर्वसंशयच्छेत्तारं बुद्धं भगवन्तं पप्रच्छुः—किं भदन्त सहसोद्गतेन गृहपतिना कर्म कृतं येन भृतिकया कर्म कृतम्, येन सहसा भोगैरभिवृद्धः, सत्यदर्शनं च कृतमिति? भगवानाह—सहसोद्गतेनैव भिक्षवो गृहपतिना कर्माणि कृतान्युपचितानि लब्धसंभाराणि परिणतप्रत्ययानि ओघवत्प्रत्युपस्थितान्यवश्यभावीनि। सहसोद्गतेन गृहपतिना कर्माणि कृतान्युपचितानि। कोऽन्यः प्रत्यनुभविष्यति? न भिक्षवः कर्माणि
20 कृतान्युपचितानि बाह्ये पृथिवीधातौ विपच्यन्ते, नाब्धातौ, न तेजोधातौ, न वायुधातौ, अपि तु उपात्तेष्वेव स्कन्धधात्वायतनेषु कर्माणि कृतान्युपचितानि विपच्यन्ते शुभान्यशुभानि च।

न प्रणश्यन्ति कर्माणि कल्पकोटिशतैरपि।
सामग्रीं प्राप्य कालं च फलन्ति खलु देहिनाम्॥ ३॥

25 भूतपूर्वं भिक्षवोऽन्यतरस्मिन् कर्वटके गृहपतिः प्रतिवसति आढ्यो महाधनो महाभोगो विस्तीर्णविशालपरिग्रहो वैश्रवणधनसमुदितो वैश्रवणधनप्रतिस्पर्धी। तेन सदृशात् कुलात् कलत्रमानीतम्। स तया सार्धं क्रीडति रमते परिचारयति। तस्य क्रीडतो रममाणस्य परिचारयतः पत्नी आपन्नसत्त्वा संवृत्ता। सा अष्टानां वा नवानां वा मासानामत्ययात् प्रसूता। दारको जातः। तस्य त्रीणि सप्तकान्येकविंशतिदिवसानि विस्तरेण जातस्य
C 312 30 जातिमहं कृत्वा कुलसदृशं नामधेयं व्यवस्थापितम्। स उन्नीतो वर्धितो महान् संवृत्तः। यावदपरेण समयेन स गृहपतिः संप्राप्ते वसन्तकालसमये संपुष्पितेषु पादपेषु हंसक्रौञ्चमयूर-

शुकशारिकाकोकिलजीवंजीवकोन्नादितं वनखण्डमन्तर्जनसहाय उद्यानभूमिं निर्गतः। असति बुद्धानामुत्पादे प्रत्येकबुद्धा लोक उत्पद्यन्ते हीनदीनानुकम्पकाः प्रान्तशयनासनभक्ता एकदक्षिणीया लोकस्य। यावदन्यतमः प्रत्येकबुद्धो जनपदचारिकां चरंस्तं कर्वटकमनुप्राप्तः। प्रान्तशयनासनसेविनस्ते न। सोऽप्रविश्यैव कर्वटकं येन तदुद्यानं तेनोपसंक्रान्तः। अद्राक्षीत् स गृहपतिस्तं प्रत्येकबुद्धं कायप्रासादिकं च शान्तेनेर्यापथेनोद्यानं प्रविशन्तम्। दृष्ट्वा 5 च पुनः प्रीतिप्रामोद्यजातस्त्वरितत्वरितं प्रत्युद्गतः। प्रत्येकबुद्धः संलक्षयति—आकीर्णमिदमुद्यानम्। अन्यत्र गच्छे। इति विदित्वा प्रतिनिवर्तितुमारब्धः। स गृहपतिः पादयोर्निपत्य कथयति—आर्य, किं निवर्तसे त्वम्? पिण्डकेनार्थी। अहमपि पुण्येन। अस्मिन्नेवोद्याने विहर, पिण्डकेनाविघातं करोमीति। परानुग्रहप्रवृत्तास्ते महात्मानः। स तस्यानुकम्पाचित्तमुपस्थाप्य तस्मिन्नेवोद्याने विहर्तुमारब्धः। सोऽपि तस्य पिण्डकेन योगोद्वहनं कर्तुं प्रवृत्तः। 10 यावदपरेण समयेन तस्य गृहपतेरन्यतरकर्वटके किंचित् करणीयमुत्पन्नम्। स पत्नीमामन्त्रयते—भद्रे, ममामुष्मिन् कर्वटके किंचित् करणीयमुत्पन्नम्। तत्राहं गच्छामि। त्वया तस्य महात्मनः प्रव्रजितस्यान्नपानेनाविघातः कर्तव्यः। इत्युक्त्वा प्रक्रान्तः। अपरस्मिन् दिवसे सा गृहपत्नी काल्यमेवोत्थाय तदर्थमन्नपानं साधयितुमारब्धा। सा पुत्रेणोच्यते—अम्ब, कस्यार्थेऽन्नपानं साध्यत इति? सा कथयति—पुत्र, योऽसौ उद्याने शान्तात्मा 15 प्रव्रजितस्तिष्ठति, तस्यार्थे साध्यत इति। स रुषितः कथयति—अम्ब, किमर्थं भृतिकया कर्म कृत्वा न भुङ्क्ते इति? सा कथयति—पुत्र, मा एवं वोचः। अनिष्टोऽस्य कर्मणो विपाक इति। स निवार्यमाणोऽपि नावतिष्ठते। यावदसौ गृहपतिरागतः। पत्नीमामन्त्रयते—भद्रे, C 313 कृतस्ते तस्य पिण्डकेनाविघातः? आर्यपुत्र कृतः। किं तु अनेन दारकेण तस्यान्तिके खरा वाग्निश्चारिता। स कथयति—भद्रे, किं कथयति? तया विस्तरेण समाख्यातम्। स संलक्ष- 20 यति—क्षमोऽयं तपस्वी। गच्छामि, तं महात्मानं क्षमापयामि—मा अत्यन्तमेव क्षतो भविष्यति। इति विदित्वा तं दारकमादाय येन प्रत्येकबुद्धस्तेनोपसंक्रान्तः। अद्राक्षीत् स प्रत्येकबुद्धस्तं गृहपतिमात्मना द्वितीयमागच्छन्तम्। स संलक्षयति—न कदाचिदयं गृहपतिरात्मना द्वितीयमागच्छति। तत् किमत्र कारणमिति? असमन्वाहृत्य श्रावकप्रत्येकबुद्धानां ज्ञानदर्शनं न प्रवर्तते। स समन्वाहर्तुं प्रवृत्तः। तेन समन्वाहृत्य विज्ञातम्। कायिकी तेषां महात्मनां 25 धर्मदेशना न वाचिकी। स तस्यानुकम्पार्थं विततपक्ष इव हंसराज उपरिविहायसमभ्युद्गम्य ज्वलनतपनवर्षणविद्योतनप्रातिहार्याणि कर्तुमारब्धः। आशु पृथग्जनस्य ऋद्धिरावर्जनकरी। स मूलनिकृत्त इव द्रुमः सपुत्रः पादयोर्निपतितः। ततः स दारक आहृष्टरोमकूपः कथयति—अवतर अवतर सद्भूतदक्षिणीय, मम कामपङ्कनिमग्नस्य हस्तोद्धारमनुप्रयच्छेति। स तस्यानुकम्पार्थमवतीर्णः। स गृहपतिपुत्रस्तीव्रेणाशयेन पादयोर्निपत्य 30 प्रणिधानं कर्तुमारब्धः—यन्मया एवंविधे सद्भूतदक्षिणीये खरा वाग्निश्चारिता, मा तस्य कर्मणो भागी स्याम्। यत्तु इदानीं चित्तमभिप्रसादितम्, अनेनाहं कुशलमूलेनाढ्ये महाधने

महाभोगे कुले जायेयम्, एवंविधानां च धर्माणां लाभी स्याम्, प्रतिविशिष्टतरं चातः शास्तारमारागयेयं मा विरागयेयमिति ॥

किं मन्यध्वे भिक्षवः? योऽसौ गृहपतिपुत्रः, एष एवासौ सहसोद्गतो गृहपतिः। यदनेन प्रत्येकबुद्धस्यान्तिके खरा वाग्निश्चारिता, तेन पञ्च जन्मशतानि भृतकपुरुषो जातः। C 314 5 यावदेतर्ह्यपि भृतिकया कर्म कृतम्। यत् पुनस्तस्यैवान्तिके चित्तमभिप्रसाद्य प्रणिधानं कृतम्, तेन सहसैव भोगैरभिवृद्धः। ममान्तिके सत्यदर्शनं कृतम्। अहं चानेन प्रत्येक-बुद्धकोटिशतसहस्रेभ्यः प्रतिविशिष्टतरः शास्ता आरागितो न विरागितः। इति हि भिक्षव एकान्तकृष्णानां कर्मणामेकान्तकृष्णो विपाकः, एकान्तशुक्लानामेकान्तशुक्लः, व्यतिमिश्राणां व्यतिमिश्रः। तस्मात्तर्हि भिक्षव एकान्तकृष्णानि कर्माण्यपास्य व्यतिमिश्राणि च, एकान्त-10 शुक्लेष्वेव कर्मस्वाभोगः करणीयः। इत्येवं वो भिक्षवः शिक्षितव्यम् ॥ (इयं तावदुत्पत्तिर्न तावत् बुद्धो भगवान् श्रावकाणां विनये शिक्षापदम्।?)

इदमवोचद्भगवान्। आत्तमनसस्ते भिक्षवो भगवतो भाषितमभ्यनन्दन् ॥

सहसोद्गत[स्य प्रकरणा]वदानमेकविंशतिमम् ॥



## २२ चन्द्रप्रभबोधिसत्त्वचर्यावदानम् ।

एवं मया श्रुतम् । एकस्मिन् समये भगवान् राजगृहे विहरति स्म गृध्रकूटे पर्वते महता भिक्षुसंघेन सार्धमर्धत्रयोदशभिर्भिक्षुशतैः । तत्र भिक्षवः संशयजाताः सर्वसंशयच्छेत्तारं बुद्धं भगवन्तं पप्रच्छुः—पश्य भदन्त, यावदायुष्मन्तौ शारिपुत्रमौद्गल्यायनौ तत्प्रथमतरं निरुपधिशेषे निर्वाणधातौ परिनिर्वृतौ, न त्वेव पितृमरणमागमितवन्तौ । अत्रेदानीं भिक्षवः 5 किमाश्चर्यं यदेतर्हि शारिपुत्रमौद्गल्यायनौ भिक्षू विगतरागौ विगतद्वेषौ विगतमोहौ परिमुक्तौ जातिजराव्याधिमरणशोकपरिदेवदुःखदौर्मनस्योपायासैः निस्तृष्णौ निरुपादानौ प्रहीण-सर्वाहंकारममकारास्मिमानाभिनिवेशानुशयौ तिष्ठति बुद्धप्रमुखे भिक्षुसंघे तत्प्रथमतरं निरुपधि-शेषे निर्वाणधातौ परिनिर्वृतौ, न त्वेव पितृमरणमागमितवन्तौ । यत्त्वतीतेऽध्वनि शारिपुत्र-मौद्गल्यायनौ सरागौ सद्वेषौ समोहावपरिमुक्तौ जातिजराव्याधिमरणशोकपरिदेवदुःख- 10 C 315 दौर्मनस्योपायासैर्ममान्तिके चित्तमभिप्रसाद्य कालं कृत्वा कामधातुमतिक्रम्य ब्रह्मलोक उपपन्नौ, न त्वेव पितृमरणमागमितवन्तौ, तच्छ्रूयताम् ॥

भूतपूर्वं भिक्षवोऽतीतेऽध्वन्युत्तरापथे भद्रशिला नाम नगरी राजधानी अभूत्, ऋद्धा च स्फीता च क्षेमा च सुभिक्षा च आकीर्णबहुजनमनुष्या च । द्वादशयोजनान्यायामेन द्वादशयोजनानि विस्तरेण चतुरस्रा चतुर्द्वारा सुविभक्ता उच्चैस्तोरणगवाक्षवातायनवेदिका- 15 प्रतिमण्डिता नानारत्नसंपूर्णा सुसमृद्धसर्वद्रव्यवणिग्जननिकेता पार्थिवामात्यगृहपतिश्रेष्ठि-राष्ट्रिकनीति(?)मौलिधराणामावासो वीणावेणुपणवसुघोषकवल्लरीमृदङ्गभेरीपटहशङ्खनिर्नादिता । तस्यां च राजधान्यामगुरुगन्धाश्चन्दनगन्धाश्चूर्णगन्धाः सर्वकालिकाश्च कुसुमगन्धा नाना-वातसमीरिता अतिरमणीया वीथीचत्वरशृङ्गाटकेषु वायवो वायन्ति स्म । हस्त्यश्वरथपत्ति-बलकायसंपन्ना युग्ययानोपशोभिता विस्तीर्णातिरमणीयवीथीमहापथा उच्छ्रितविचित्रध्वज- 20 पताका तोरणगवाक्षार्धचन्द्रावनद्धा अमरालय इव शोभते । उत्पलपद्मकुमुदपुण्डरीकानि सुरभिजलजकुसुमपरिमण्डितानि स्वादुस्वच्छशीतलजलपरिपूर्णपुष्किरिणीतडागोदपानप्रस्रवणो-पशोभिता शालतालतमालसूत्र(?)कर्णिकाराशोकतिलकपुंनागनागकेशरचम्पकबकुलातिमुक्तक-पाटलपुष्पसंछन्ना कलविङ्कशुकशारिकाकोकिलबर्हिगणजीवंजीवकोन्नादितवनषण्डोद्यानपरि-मण्डिता । भद्रशिलायां च राजधान्यामन्यतरं मणिगर्भं नाम राजोद्यानं नानापुष्प- 25 फलवृक्षविटपोपशोभितं सोदपानं हंसक्रौञ्चमयूरशुकशारिकाकोकिलजीवंजीवकशकुनिमनोज्ञ-रवनिर्नादितमतिरमणीयम् । एवं सुरमणीया भद्रशिला राजधानी बभूव । भद्रशिलायां राजधान्यां राजाभूच्चन्द्रप्रभो नाम अभिरूपो दर्शनीयः प्रासादिको दिव्यचक्षुश्चतुर्भागचक्रवर्ती C 316 धार्मिको धर्मराजा जम्बुद्वीपे राज्यैश्वर्याधिपत्यं कारितवान् स्वयंप्रभुः । न खलु राज्ञश्चन्द्र-प्रभस्य गच्छतोऽन्धकारं भवति, न च मणिर्वा प्रदीपो वा उल्का वा पुरस्तात् नीयते, 30 अपि तु स्वकात् कायात् राज्ञश्चन्द्रप्रभस्य प्रभा निश्चरन्ति तद्यथा चन्द्रमण्डलाद्रश्मयः । अनेन कारणेन राज्ञश्चन्द्रप्रभस्य चन्द्रप्रभ इति संज्ञा बभूव ॥

तेन खलु समयेनास्मिन् जम्बुद्वीपेऽष्टषष्टिनगरसहस्राणि बभूवुर्भद्रशिलाराजधानीप्रमुखानि ऋद्धानि स्फीतानि क्षेमाणि सुभिक्षाण्याकीर्णबहुजनमनुष्याणि। अपीदानीं जम्बुद्वीपका अकरा अभूवन् अशुल्का अतरपण्याः। कृषिसंपन्नाः सौम्या जनपदा बभूवुः। कुक्कुटसंपातमात्राश्च ग्रामनिगमराष्ट्रराजधान्यो बभूवुः। तेन खलु समयेन चतुश्चत्वारिंशद्वर्षसहस्राणि जम्बु-
5 द्वीपे मनुष्याणामायुषः प्रमाणमभूत्। राजा चन्द्रप्रभो बोधिसत्त्वोऽभूत् सर्वंददः सर्वपरित्यागी निःसङ्गपरित्यागी च। महति त्यागे वर्तते। तेन भद्रशिलायां राजधान्यां निर्गत्य बहिर्धा नगरस्य चतुर्षु नगरद्वारेषु चत्वारो महायज्ञवाटा मापिताश्छत्रध्वजयूपपताकात्युच्छ्रिताः। ततः सुवर्णभेरीः संताड्य दानानि दीयन्ते, पुण्यानि क्रियन्ते, तद्यथा—अन्नमन्नार्थिभ्यः, पानं पानार्थिभ्यः, खाद्यभोज्यमाल्यविलेपनवस्त्रशयनासनापाश्रयावासप्रदीपच्छत्राणि रथा आभरणान्यलंकाराः, सुवर्ण-
10 पात्र्यो रूप्यचूर्णपरिपूर्णाः, रूप्यपात्र्यः सुवर्णपरिपूर्णाः, सुवर्णशृङ्गाश्च गावः कामदोहिन्यः। कुमाराः कुमारिकाश्च सर्वालंकारविभूषिताः कृत्वा प्रदानानि दीयन्ते। वस्त्राणि नानारङ्गानि नानादेशसमुच्छ्रितानि नानाविचित्राणि, तद्यथा—पट्टांशुकचीनकौशेयधौतपट्टवस्त्राण्यूर्णादुकूलमयशोभनवस्त्राण्यपरान्तकफलकहर्यणिकम्बलरक्तसुवर्णप्रावरकाकाशिकांशुक्षोमकाद्याः। C 317
राज्ञा चन्द्रप्रभेण तावन्तं दानमनुदत्तम्, येन सर्वे जम्बुद्वीपका मनुष्या आढ्या
15 महाधना महाभोगाः संवृत्ताः। राज्ञा चन्द्रप्रभेण तावन्ति हस्त्यश्वरथच्छत्राणि प्रदानमनुप्रदत्तानि, यथा अस्मिन् जम्बुद्वीपे एकमनुष्योऽपि पद्भ्यां न गच्छति। सर्वे जम्बुद्वीपका मनुष्या हस्तिपृष्ठैश्च चतुरश्वयुक्तैश्च रथैरुपरिसुवर्णमयै रूप्यमयैश्चातपत्रैरुद्यानेनोद्यानं ग्रामेण ग्राममनुविचरन्ति स्म। ततो राज्ञश्चन्द्रप्रभस्यैतदभवत्—किं पुनर्मे इत्वरेण दानेन प्रदत्तेन? यन्न्वहं यादृशान्येव मम वस्त्रालंकाराण्याभरणानि, तादृशान्येव दानमनुप्रयच्छेयम्, यत् सर्वे जम्बुद्वीपका
20 मनुष्या राजक्रीडया क्रीडेयुः। अथ राजा चन्द्रप्रभो जम्बुद्वीपकेभ्यो मनुष्येभ्यो मौलिपट्टवस्त्रालंकाराभरणाण्यनुप्रयच्छति, तद्यथा—हर्षकटककेयूराहारार्धहारादीन् प्रदानमनुप्रयच्छति स्म। राज्ञा चन्द्रप्रभेण तावन्ति राजार्हाणि वस्त्राण्यलंकाराणि मौलयः पट्टाश्चानुप्रदत्ताः, येन सर्वे जम्बुद्वीपका मनुष्या मौलिधराः पट्टधराश्च संवृत्ताः। या राज्ञश्चन्द्रप्रभस्याकृतिस्तादृशा एव सर्वे जम्बुद्वीपका मनुष्याः संवृत्ताः। ततो राज्ञा चन्द्रप्रभेणाष्टषष्टिषु नगरसहस्रेषु घण्टावघोषणं
25 कारितम्—सर्वे भवन्तो जम्बुद्वीपका मनुष्या राजक्रीडया क्रीडन्तु, यावदहं जीवामीति। अथ जम्बुद्वीपका मनुष्या राज्ञश्चन्द्रप्रभस्य घण्टावघोषणां श्रुत्वा सर्व एव राजक्रीडया क्रीडितुमारब्धाः। वीणावेणुपणवसुघोषकवल्लरीभेरीपटहमृदङ्गतालशङ्खसहस्रैस्तूर्यशब्दशतैश्च वाद्यमानैः केयूरहारमणिमुक्ताभरणकुण्डलधराः सर्वालंकारविभूषितप्रमदागणपरिवृता राजश्रियमनुभवन्ति स्म। तेन खलु समयेन जम्बुद्वीपकानां मनुष्याणां राजलीलया क्रीडतां यश्च
30 वीणावेणुपणवसुघोषकवल्लरीभेरीमृदङ्गपटहशब्दो यश्चाष्टषष्टिषु नगरसहस्रेषु तालवंशनिर्घोषो C 318 यश्चन्द्रप्रभस्य चतुर्षु महायज्ञवाटेषु सुवर्णभेरीणां ताड्यमानानां वर्णमनोज्ञशब्दो निश्चरति, तेन सर्वो जम्बुद्वीपो मनोज्ञशब्दनादितोऽभूत् तद्यथा देवानां त्रायस्त्रिंशानामभ्यन्तरं देवपुरं

नृत्तगीतवादितशब्देन निर्नादितम्। एवमेव तस्मिन् काले तस्मिन् समये सर्वो जम्बुद्वीपवासिनां जनकायस्तेन गीतवादितशब्देन एकान्तसुखसमर्पितोऽत्यर्थं रमते। तेन खलु समयेन भद्रशिलायां राजधान्यां द्वासप्ततिरयुतकोटीशतानि मनुष्याणां प्रतिवसन्ति स्म। तेषां राजा चन्द्रप्रभ इष्टो बभूव प्रियो मनापश्च। अपीदानीं वर्णाकृतिलिङ्गस्थैर्यमस्य निरीक्षमाणा न तृप्तिमुपयान्ति स्म। यस्मिंश्च समये राजा चन्द्रप्रभो महायज्ञवाटं गच्छति, 5 तस्मिन् समये प्राणिकोटीनियुतशतसहस्राण्यवलोकयन्ति, एवं चाहुः—देवगर्भो बतायं राजा चन्द्रप्रभ इह जम्बुद्वीपे राज्यं कारयति। न खलु मनुष्या ईदृग्वर्णसंस्थाना यादृशा देवस्य चन्द्रप्रभस्येति। राजा चन्द्रप्रभो येन येनावलोकयति, तेन तेन स्त्रीसहस्राण्यवलोकयन्ति—धन्यास्ताः स्त्रियो यासामेष भर्तेति। तच्च शुद्धैर्मनोभिर्नान्यथाभावात्। एवं दर्शनीयो राजा चन्द्रप्रभो बभूव। चन्द्रप्रभस्य राज्ञोऽर्धत्रयोदशामात्यसहस्राणि। तेषां 10 द्वौ अग्रामात्यौ महाचन्द्रो महीधरश्च। व्यक्तौ पण्डितौ मेधाविनौ गुणैश्च सर्वामात्यमण्डलप्रतिविशिष्टौ सर्वाधिकृतौ राजपरिकर्षकौ राजपरिपालकौ। अल्पोत्सुको राजा सर्वकर्मान्तेषु। महाचन्द्रश्चाग्रामात्योऽभीक्ष्णं जम्बुद्वीपकान् मनुष्यान् दशसु कुशलेषु कर्मपथेषु नियोजयति—इमान् भवन्तो जम्बुद्वीपका मनुष्या दश कुशलान् कर्मपथान् समादाय वर्तध्वेति। यादृशी च राज्ञश्चक्रवर्तिनोऽववादानुशासनी, तादृशी महाचन्द्रस्यामात्यस्याववादानुशासनी बभूव। 15 महाचन्द्रस्याग्रामात्यस्य राजा चन्द्रप्रभ इष्टश्चाभूत् प्रियश्च मनापश्च। अपीदानीं वर्णाकृतिलिङ्गसंस्थानमस्य निरीक्षमाणो न तृप्तिमुपयाति॥

यावदपरेण समयेन महाचन्द्रेणाग्रामात्येन स्वप्नो दृष्टः—राज्ञश्चन्द्रप्रभस्य धूम्रवर्णैः पिशाचैर्मौलिरपनीतः। प्रतिविबुद्धस्य चाभूद्भयम्, अभूच्छङ्कितत्वम्, अभूद्रोमहर्षः—मा हैव देवस्य चन्द्रप्रभस्य शिरोयाचनक आगच्छेत्। देवश्च सर्वंददः। सर्वपरित्यागे नास्त्यस्य 20 किंचिदपरित्यक्तं दीनानाथकृपणवनीपकयाचनकेभ्य इति। तस्य बुद्धिरुत्पन्ना—न मया राज्ञश्चन्द्रप्रभस्य स्वप्नो निवेदयितव्यः। अपि तु रत्नमयानि शिरांसि कारयित्वा कोषकोष्ठागारं प्रवेश्य स्थापयितव्यानि। यदि नाम कश्चिद्देवस्य शिरोयाचनक आगच्छेत्, तमेनमेभी रत्नमयैः शिरोभिः प्रलोभयिष्यामि। इति विदित्वा रत्नमयानि शिरांसि कारयित्वा कोषकोष्ठागारेषु प्रक्षिप्य स्थापितवान्। अपरेण समयेन महीधरेणाग्रामात्येन स्वप्नो दृष्टः—सर्वरत्नमयः पोतश्चन्द्र- 25 प्रभस्य कुलस्थः शतशो विशीर्णः। दृष्ट्वा च पुनर्भीतस्त्रस्तः संविग्नः—मा हैव राज्ञश्चन्द्रप्रभस्य राज्यच्युतिर्भविष्यति जीवितस्य चान्तराय इति। तेन ब्राह्मणा ये नैमित्तिका विपश्चिकाश्चाहूय उक्ताः—भवन्तः, मयेदृशः स्वप्नो दृष्टः, निर्दोषं कुरुतेति। ततस्तैर्ब्राह्मणैर्नैमित्तिकैर्विपश्चिकैश्च समाख्यातम्—यादृशोऽयं त्वया स्वप्नो दृष्टः, नचिरादेव राज्ञश्चन्द्रप्रभस्य शिरोयाचनक आगमिष्यति। स चास्यामेव भद्रशिलायां राजधान्यामवतरिष्यतीति। ततो महीधरोऽग्रामात्यः स्वप्ननिर्देशं 30 श्रुत्वा करे कपोलं दत्त्वा चिन्तापरो व्यवस्थितः—अतिक्षिप्रं राज्ञश्चन्द्रप्रभस्य मैत्रात्मकस्य कारुणिकस्य सत्त्ववत्सलस्यानित्यताबलं प्रत्युपस्थितमिति। अथापरेण समयेनार्धत्रयोदशभि-

C 319

रमात्यसहस्रैः स्वप्नो दृष्टः—राज्ञश्चन्द्रप्रभस्य चतुर्षु यज्ञवाटेषु करोटपाणिभिर्यक्षैश्च छत्रध्वजपताकाः पातिताः, सुवर्णभेर्यश्च भिन्नाः। दृष्ट्वा च पुनर्भीतास्त्रस्ताः संविग्नाः—मा हैव राज्ञश्चन्द्रप्रभस्य महापृथिवीपालस्य मैत्रात्मकस्य कारुणिकस्य सत्त्ववत्सलस्यानित्यताबलमागच्छेत्, मा हैव अस्माकं देवेन सार्धं नानाभावो भविष्यति विनाभावो विप्रयोगः, मा हैव अत्राणोऽपरित्राणो

C 320 5 जम्बुद्वीपो भविष्यतीति। राज्ञा चन्द्रप्रभेण श्रुतम्। तेन श्रुत्वा अष्टषष्टिनगरसहस्रेषु घण्टावघोषणं कारितम्—राजलीलया भवन्तः सर्वे जम्बुद्वीपका मानुष्याः क्रीडन्तु यावदहं जीवामि। किं युष्माकं मायोपमैः स्वप्नोपमैश्चिन्तितैः? राज्ञश्चन्द्रप्रभस्य घण्टावघोषणं श्रुत्वा सर्व एव जम्बुद्वीपका मनुष्या राजलीलया क्रीडितुमारब्धाः, वीणावेणुपणवसुघोषकवल्लरीभेरीमृदङ्गतालशङ्खसहस्रैस्तूर्यशब्दशतैश्च वाद्यमानैः केयूरहारमणिमुक्ताभरणकुण्डलधराः

10 सर्वालंकारविभूषितप्रमदागणपरिवृता राजश्रियमनुभवन्ति स्म। तेन खलु समयेन जम्बुद्वीपकानां मनुष्याणां राजक्रीडया क्रीडतां यश्च राज्ञश्चन्द्रप्रभस्य चतुर्षु महायज्ञवाटेषु सुवर्णभेरीणां ताड्यमानानां वल्गुर्मनोज्ञः शब्दो निश्चरति, तेन सर्वो जम्बुद्वीपो मनोज्ञशब्दनिर्नादितोऽभूत्। तद्यथा देवानां त्रायस्त्रिंशानामन्यतरं देवपुरं नृत्तगीतवादितम्, एवमेव तस्मिन् काले तस्मिन् समये सर्वो जम्बुद्वीपनिवासी जनकायस्तेन गीतशब्देनैकान्तसुखसमर्पितो-

15 ऽत्यर्थं रमते॥

तेन खलु समयेन गन्धमादने पर्वते रौद्राक्षो नाम ब्राह्मणः प्रतिवसति स्म इन्द्रजालविधिज्ञः। अश्रौषीद्रौद्राक्षो ब्राह्मणो भद्रशिलायां राजधान्यां चन्द्रप्रभो नाम राजा सर्वंददोऽस्मीत्यात्मानं प्रतिजानीते। यन्न्वहं गत्वा शिरो याचेयमिति। तस्यैतदभवत्—यदि तावत् सर्वंददो भविष्यति, मम शिरो दास्यति। अपि तु दुष्करमेतदस्थानमनवकाशो

20 यदेवमिष्टं कान्तं प्रियं मनापमुत्तमाङ्गं परित्यक्ष्यति यदुत शीर्षम्, नेदं स्थानं विद्यते। इति विदित्वा गन्धमादनात् पर्वतादवतीर्णः। अथ गन्धमादननिवासिनी देवता विक्रोष्टुमारब्धा—हा कष्टं राज्ञश्चन्द्रप्रभस्य मैत्रात्मकस्य महाकारुणिकस्य सत्त्ववत्सलस्यानित्यताबलं

C 321 प्रत्युपस्थितमिति। तेन खलु समयेन सर्वजम्बुद्वीप आकुलाकुलः, धूमान्धकारः, उल्कापाताः, दिशोदाहाः, अन्तरीक्षे देवदुन्दुभयोऽभिनदन्ति। भद्रशिलायां च राजधान्यां नातिदूरे

25 पञ्चाभिज्ञो ऋषिः प्रतिवसति विश्वामित्रो नाम्ना पञ्चशतपरिवारो मैत्रात्मकः कारुणिकः सत्त्ववत्सलः। अथ स ऋषिः सर्वजम्बुद्वीपमाकुलं दृष्ट्वा माणवकानामन्त्रयते—यत्खलु माणवका जानीत सर्वजम्बुद्वीप एतर्ह्याकुलाकुलो धूमान्धकारः। सूर्याचन्द्रमसौ एवंमहानुभावौ न भासतो न तपतो न विरोचतः। नूनं कस्यचिन्महापुरुषस्य निरोधो भविष्यति। तथा हि—

रोदन्ति किन्नरगणा वनदेवताश्च

30 धिक्कारमुत्सृजन्ति देवगणा पि न स्थुः।

चन्द्रो न भाति न विभाति सहस्ररश्मि-

नैंव वाद्यवादितरवोऽपि निशाम्यतेऽत्र॥ १॥

एते हि पादपगणाः फलपुष्पनद्धा
भूमौ पतन्ति पवनैरपि चालितानि।
संश्रूयते ध्वनिरयं च यथातिभीमो
व्यक्तो भविष्यति पुरे व्यसनं महान्तम्॥ २॥

एते भद्रशिलानिवासनिरताः सर्वे सदुःखा जना 5
अत्यन्तप्रतिशोकशल्यविहताः प्रस्पन्दकण्ठाननाः।
एताश्चन्द्रनिभानना युवतयो रोदन्ति वेश्मोत्तमे
सर्वे च प्ररुदन्ति तीव्रकरुणाः सन्तः श्मशाने यथा॥ ३॥

किं कारणं पुरनिवासिजनाः समग्राः
संपिण्डितं मनसि दुःखमिदं वहन्ति। 10
उत्क्रोशतामनिशमर्धकृताग्रहस्तै-
रैश्वर्यमप्रतिसमं निरुणद्धि वाचम्॥ ४॥

एते पयोदा विनदन्त्यतोया
जलाश्रयाः शोकममी व्रजन्ति।
भुवोरिवाम्भसि च बालसमीरणास्ता 15
वाताः प्रवान्ति च खरा रजसा विमिश्राः॥ ५॥

अशिवानि निमित्तानि प्रवराणि हि सांप्रतम्।
क्षेमां दिशमतोऽस्माकमितो गन्तुं क्षमो भवेत्॥ ६॥

अपि तु खलु माणवका राज्ञश्चन्द्रप्रभस्य चतुर्षु महायज्ञवाटेषु सुवर्णभेरीणां ताड्यमानानां न भूयो मनोज्ञः स्वरो निश्चरति। नूनं बत भद्रशिलायां महानुपद्रवो भविष्यतीति॥ 20 C 322

अथ रौद्राक्षो ब्राह्मणो भद्रशिलायां राजधान्यामनुप्राप्तः। ततो नगरनिवासिनी देवता रौद्राक्षं ब्राह्मणं दूरादेव दृष्ट्वा येन राजा चन्द्रप्रभस्तेनोपसंक्रान्ता। उपसंक्रम्य राजानं चन्द्रप्रभमिदमवोचत्—यत्खलु देव जानीयाः—अद्य देवस्य याचनक आगमिष्यति हिंसको विहेठकोऽवतारप्रेक्षी अवतारगवेषी। स देवस्य शिरो याचिष्यतीति। तद्देवेन सत्त्वानामर्थायात्मानं परिपालयितव्यमिति। अथ राजा चन्द्रप्रभः शिरोयाचनकमुपश्रुत्य प्रमुदितमना विस्मयोत्फुल्लदृष्टिर्देवतामुवाच—गच्छ देवते, यद्यागमिष्यति, अहमस्य दीर्घकालाभिलषितं मनोरथं परिपूरयिष्यामीति। अथ सा देवता राज्ञश्चन्द्रप्रभस्य इदमेवंरूपं व्यवसायं विदित्वा दुःखिनी दुर्मनस्का विप्रतिसारिणी तत्रैवान्तर्हिता। अथ राज्ञश्चन्द्रप्रभस्यैतदभवत्—किमत्राश्चर्यं यदहमन्नमन्नार्थिभ्योऽनुप्रयच्छामि, पानं पानार्थिभ्यो वस्त्रहिरण्यसुवर्णमणिमुक्तादीन् तदर्थिभ्यः। यन्न्वहं याचनकेभ्यः स्वशरीरमपि परित्यजेयमिति। ततो रौद्राक्षो ब्राह्मणो दक्षिणेन नगरद्वारेण प्रविशन् देवतया निवारितः—गच्छ पापब्राह्मण, मा प्रविश। कथमिदानीं त्वं 30

मोहपुरुष राज्ञश्चन्द्रप्रभस्य मैत्रात्मकस्य कारुणिकस्य सत्त्ववत्सलस्यानेकगुणसंपन्नस्य जम्बुद्वीपपरिपालकस्यादूषिणोऽनपकारिणः शिरश्छेत्स्यसि ? रौद्रचित्त पापब्राह्मण, मा प्रविशेति । यावदेतत् प्रकरणं राज्ञा चन्द्रप्रभेण श्रुतम्—याचनको मे नगरद्वारे देवतया विधार्यते इति । श्रुत्वा च पुनर्महाचन्द्रमग्रामात्यमामन्त्रयते—यत्खलु महाचन्द्र जानीयाः—याचनको मे नगर-
5 द्वारि देवतया विधार्यते । गच्छ, शीघ्रं मत्सकाशमानयेति । एवं देवेति महाचन्द्रोऽग्रामात्यो राज्ञश्चन्द्रप्रभस्य प्रतिश्रुत्य नगरद्वारं गत्वा तां देवतामुवाच—यत्खलु देवते जानीयाः—प्रविश-
C 323 त्वेष ब्राह्मणः, राजा चन्द्रप्रभ एनमाज्ञापयत इति । ततो नगरनिवासिनी देवता महाचन्द्रमग्रामात्यमिदमवोचत्—यत्खलु महाचन्द्र जानीयाः—एष ब्राह्मणो रौद्रचित्तो निष्कारुणिको राज्ञश्चन्द्रप्रभस्य विनाशार्थं भद्रशिलामनुप्राप्तः । किमनेन दुरात्मना प्रवेशितेन ? एष राजान-
10 मुपसंक्रम्य शिरो याचिष्यतीति । अथ महाचन्द्रोऽग्रामात्यो देवतामाह—अस्ति मया देवते उपायश्चिन्तितो येनायं ब्राह्मणो न प्रभविष्यति देवस्य शिरो ग्रहीतुमिति । अथ महाचन्द्रोऽग्रामात्यो रौद्राक्षं ब्राह्मणमादाय नगरं प्रविश्य रत्नधरानाज्ञापयति—आनीयन्तां भवन्तो रत्नमयानि शिरांसि । अस्मै ब्राह्मणाय दास्यामीति । भाण्डागारिकै रत्नमयानां शीर्षाणां राजद्वारे राशिः कृतः । महाचन्द्रेणाग्रामात्येन रौद्राक्षस्य रत्नमयानि शीर्षाण्युपदर्शितानि—प्रतिगृह्ण त्वं
15 महाब्राह्मण प्रभूतानि रत्नमयानि शीर्षाणि । यावदाप्तं च ते हिरण्यसुवर्णमनुप्रयच्छामि, येन ते पुत्रपौत्राणां जीविका भविष्यति । किं ते देवस्य शीर्षेण मज्जाशिङ्घाणकवसादिपूर्णेनेति ? एवमुक्ते रौद्राक्षो ब्राह्मणो महाचन्द्रमग्रामात्यमिदमवोचत्—न रत्नमयैर्मे शिरोभिः प्रयोजनम् । नापि हिरण्यसुवर्णेन । अपि त्वहमस्य महापृथिवीपालस्य सर्वंददस्य सकाशमागतः शिरसोऽर्थाय । एवमुक्ते महाचन्द्रमहीधरौ अग्रामात्यौ करे कपोलं दत्त्वा चिन्तापरौ व्यवस्थितौ—
20 किमिदानीं प्राप्तकालमिति । अथैतद्वृत्तान्तमुपश्रुत्य राजा चन्द्रप्रभो महाचन्द्रमहीधरौ अग्रामात्यौ दूरेण प्रक्रोश्यैतदवोचत्—आनीयतामेष मत्समीपम् । अहमस्यैवं मनोरथं पूरयिष्यामीति । एवमुक्ते महाचन्द्रमहीधरौ अग्रामात्यौ साश्रुदुर्दिनवदनौ करुणकरुणं परिदेवमानौ अभिरुद्य देवस्य मैत्रात्मकस्य कारुणिकस्य सत्त्ववत्सलस्यानेकगुणसमुदितस्य ज्ञानकुशलस्य दिव्यचक्षुषोऽनित्यताबलं प्रत्युपस्थितम्, अद्यास्माकं देवेन सार्धं नानाभावो भविष्यति विनाभावो
25 विप्रयोगो विसंयोगः । इति विदित्वा राज्ञः पादयोर्निपत्य एकान्ते निषण्णौ । अथ राजा चन्द्रप्रभः परमत्यागप्रतिविशिष्टं त्यागं परित्यक्तुकामो दूरत एव तं ब्राह्मणमामन्त्रयते—एहि त्वं
C 324 ब्राह्मण, यच्छतां यत् प्रार्थयसे तद्गृहाणेति । अथ रौद्राक्षो ब्राह्मणो येन राजा चन्द्रप्रभस्तेनोपसंक्रान्तः । उपसंक्रम्य राजानं चन्द्रप्रभं जयेनायुषा च वर्धयित्वा राजानं चन्द्रप्रभमिदमवोचत्—

धर्मे स्थितोऽसि विमले शुभबुद्धिसत्त्व
30 सर्वज्ञतामभिलषन् हृदयेन साधो ।
मह्यं शिरः सृज महाकरुणाप्रचेता
मह्यं ददस्व मम तोषकरो भवाद्य ॥ ७ ॥

अथ राजा चन्द्रप्रभो ब्राह्मणस्यान्तिकादिदमेवंरूपं वाक्प्रव्याहारं श्रुत्वा प्रमुदितमनाः प्रीतिविस्फारिताक्षो रौद्राक्षं ब्राह्मणमुवाच—हन्तेदं ब्राह्मण शिरोऽविघ्नतः साधु प्रगृह्यतामुत्तमाङ्गमिति। आह च—

> प्रियो यथा यद्यपि चैकपुत्रक-
> स्तथापि मे खर्पमिदं गृहाण। 5
> त्वच्चिन्तितानां फलमस्तु शीघ्रं
> शिरःप्रदानाद्धि लभेय बोधिम् ॥ ८ ॥

इत्युक्त्वा स्वयमेव स्वशिरसो मौलिमपनीतवान्। यदा च राज्ञा चन्द्रप्रभेण शिरसो मौलिरपनीतः, तत्समनन्तरमेव सर्वेषां जम्बुद्वीपकानां मनुष्याणां मौलयः शिरसः पतिताः। भद्रशिलायां च राजधान्यां चतुर्दिशमुल्कापाता दिशोदाहाश्च प्रादुर्भूताः। नगरदेवताभिश्च 10 शब्दो निश्चारितः—अस्य राज्ञश्चन्द्रप्रभस्य पापब्राह्मणो शिरश्छेत्स्यतीति। तच्छ्रुत्वा महाचन्द्रमहीधरौ अग्रामात्यौ राज्ञश्चन्द्रप्रभस्येदमेवंरूपं शरीरपरित्यागं विदित्वा साश्रुदुर्दिवदनौ राज्ञश्चन्द्रप्रभस्य पादौ परिष्वज्याहतुः—धन्यास्ते पुरुषा देव य एवमत्यद्भुतरूपदर्शनं वा द्रक्ष्यन्तीति। तौ अभिमुखमुद्वीक्ष्यमाणौ राजनि चन्द्रप्रभे चित्तमभिप्रसाद्य रौद्राक्षे च ब्राह्मणे मैत्र्यचित्तमुत्पाद्य नावां शक्ष्यामो निरुपमगुणाधारस्य देवस्यानित्यतां द्रष्टुमिति तस्मिन्नेव 15 मुहूर्ते कालगतौ। कामधातुमतिक्रम्य ब्रह्मलोकमुपपन्नौ। राज्ञश्चन्द्रप्रभस्येदमेवंरूपं व्यवसायं बुद्ध्वा तां च नगरनिवासिनीनां देवतानामार्तध्वनिमुपश्रुत्य भौमा यक्षा अन्तरिक्षचराश्च यक्षाः क्रन्दितुमारब्धाः—हा कष्टमिदानीं राज्ञश्चन्द्रप्रभस्य शरीरनिक्षेपो भविष्यतीति ॥

अत्रान्तरे च राजकुलद्वारेऽनेकानि प्राणिशतसहस्राणि संनिपतितान्यभूवन्। ततो C 325 रौद्राक्षो ब्राह्मणस्तं महाजनकायमवेक्ष्य चन्द्रप्रभं राजानमुवाच—यत्खलु देव जानीयाः—नाहं 20 शक्ष्यामि महाजनकायस्य पुरस्ताद्देवस्य शिरो ग्रहीतुम्। यदि च ते शिरः परित्यक्तम्, एकान्तं गच्छाव इति। एवमुक्ते राजा चन्द्रप्रभो रौद्राक्षं ब्राह्मणमवोचत्—एवं महाब्राह्मण क्रियताम्। ऋद्ध्यन्तां तव संकल्पाः, परिपूर्यन्तां मनोरथा इति। अथ राजा चन्द्रप्रभो राजा आसनादुत्थाय तीक्ष्णमसिमादाय येन मणिरत्नगर्भमुद्यानं तेनोपसंक्रान्तः। अथ राज्ञश्चन्द्रप्रभस्य इदमेवंरूपं व्यवसायं दृष्ट्वा भद्रशिलायां राजधान्यामनेकानि प्राणिशतसहस्राणि विक्रोशमानानि पृष्ठतः 25 पृष्ठतः समनुबद्धानि। सोऽद्राक्षीद्राजा चन्द्रप्रभो महाजनसंनिपातं विक्रोशन्तम्। दृष्ट्वा च पुनः समाश्वासयन्नाह—अप्रमादः करणीयः कुशलेषु धर्मेष्विति। संक्षेपेण धर्मदेशनां कृत्वा रौद्राक्षं ब्राह्मणमादाय मणिरत्नगर्भमुद्यानं प्रविष्टः। समनन्तरप्रविष्टस्य राज्ञश्चन्द्रप्रभस्य मणिरत्नगर्भे उद्याने भद्रशिलायां छत्राणि ध्वजपताकाश्च येन मणिरत्नगर्भमुद्यानं तेनावनामिताः। ततो राजा चन्द्रप्रभो मणिरत्नगर्भस्योद्यानस्य द्वारं पिधाय तं रौद्राक्षं ब्राह्मणमामन्त्रयते—प्रतिगृह्यतां 30 ब्राह्मण ममोत्तमाङ्गमिति। एवमुक्ते रौद्राक्षो ब्राह्मणो राजानं चन्द्रप्रभमुवाच—नाहं शक्ष्यामि देवस्य शिरश्छेत्तुमिति। मणिरत्नगर्भस्य चोद्यानस्य मध्ये कुरबकः। तत्र सर्वकालिकश्चम्पक-

वृक्षो जातः। ततो राजा चन्द्रप्रभस्तीक्ष्णमसिं गृहीत्वा येन सर्वकालिकश्चम्पकवृक्षस्तेनोपसंक्रान्तः। अथ या देवतास्तस्मिन्नुद्यानेऽध्यवसिताः, ता राज्ञश्चन्द्रप्रभस्येदमेवंरूपं स्वशरीरपरित्यागं विदित्वा विक्रोष्टुमारब्धाः। एवं चाहुः—कथमिदानीं त्वं पापब्राह्मण राज्ञश्चन्द्रप्रभस्यादूषिणोऽनपकारिणो महाजनवत्सलस्यानेकगुणसंपन्नस्य शिरश्छेत्स्यसीति? 5 ततो राजा चन्द्रप्रभ उद्यानदेवता निवारयति—मा देवता मम शिरोयाचनकस्यान्तरायं C 326 कुरुत। तत्कस्य हेतोः? भूतपूर्वं देवता ममोत्तमाङ्गं याचनकस्य देवतया अन्तरायः कृतः। तया देवतया बहु अपुण्यं प्रसूतम्। तत्कस्य हेतोः? यदि तया देवतया अन्तरायो न कृतोऽभविष्यत्, मया लघु लघ्वेवानुत्तरज्ञानमधिगतमभविष्यत्। अतश्च त्वामहमेवं ब्रवीमि—मा मे त्वमुत्तमाङ्गयाचनकस्यान्तरायं कुरुष्वेति। अस्मिन्नेव ते मणिरत्नगर्भ उद्याने 10 मया सहस्रशः शिरःपरित्यागः कृतः, न च मे केनचिदन्तरायः कृतः। तस्मात् त्वं देवते ममोत्तमाङ्गयाचनकस्यान्तरायं मा कुरु। एष एव देवते स पृष्ठीभूतो मैत्रेयो यो व्याघ्र्या आत्मानं परित्यज्य चत्वारिंशत्कल्पसंप्रस्थितो मैत्रेयो बोधिसत्त्व एकेन शिरःपरित्यागेनात्र-पृष्ठीकृतः। अथ सा देवता राज्ञश्चन्द्रप्रभस्य महर्द्धितामवेत्य तस्मिन् राजनि परं प्रसादं प्रवेदयन्ती तूष्णीमवस्थिता। अथ राजा चन्द्रप्रभः सम्यक्प्रणिधानं कर्तुमारब्धः—शृण्वन्तु 15 भवन्तः, ये दशदिक्षु स्थिता देवतासुरगरुडगन्धर्वकिन्नरा अध्युषिताः, इहाहमुद्याने त्यागं करिष्यामि, अस्मिन् त्यागं स्वशिरःपरित्यागं येन चाहं सत्येन स्वशिरः परित्यजामि, न राज्यार्थाय न स्वर्गार्थाय न भोगार्थाय न शक्रत्वाय न ब्रह्मत्वाय न चक्रवर्तिविजयाय नान्यत्र कथमहमनुत्तरां सम्यक्संबोधिमभिसंबुद्ध्य अदान्तान् सत्त्वान् दमयेयम्, अशान्तान् शमयेयम्, अतीर्णांस्तारयेयम्, अमुक्तान् मोचयेयम्, अनाश्वस्तानाश्वासयेयम्, 20 अपरिनिर्वृतान् परिनिर्वापयेयम्। अनेन सत्येन सत्यवचनेन सफलः परिश्रमः स्यात्, परिनिर्वृतस्य च सर्षपफलप्रमाणधातवो भवेयुः, अस्य च मणिरत्नगर्भस्योद्यानस्य मध्ये महान् स्तूपः स्यात् सर्वस्तूपप्रतिविशिष्टः। ये च सत्त्वाः शान्तकाया महाचैत्यं वन्दितुकामा गच्छेयुः, ते तं सर्वस्तूपप्रतिविशिष्टं धातुपरं दृष्ट्वा विश्रान्ता भवेयुः। परिनिर्वृतस्यापि मम चैत्येषु जनकाया आगत्य कारां कृत्वा स्वर्गमोक्षपरायणा भवेयुरिति। एवं सम्यक् प्रणिधानं कृत्वा C 327 25 तस्मिंश्चम्पकवृक्षे शिखां बद्ध्वा रौद्राक्षं ब्राह्मणमुवाच—आगच्छ महाब्राह्मण, प्रतिगृह्यताम्। मा मे विघ्नं कुरुष्वेति। ततो राजा चन्द्रप्रभ आत्मनः कायस्य स्थाम च बलं च संजन्य तस्मिंश्च ब्राह्मणे करुणासहगतं मैत्रचित्तमुत्पाद्य शिरश्छित्त्वा रौद्राक्षाय ब्राह्मणाय निर्यातितवान्। कालं च कृत्वा अतिक्रम्य ब्रह्मलोकं प्रणीतत्वाच्छुभकृत्स्ने देवनिकाये उपपन्नः। समनन्तरपरित्यक्ते राज्ञा चन्द्रप्रभेण शिरसि अयं त्रिसाहस्रमहासाहस्रो लोकधातुः त्रिः 30 कम्पितः संकम्पितः संप्रकम्पितः, चलितः संचलितः संप्रचलितः, व्यधितः प्रव्यधितः संप्रव्यधितः। गगनतलस्थाश्च देवता दिव्यान्युत्पलानि क्षेप्तुमारब्धाः, पद्मानि कुमुदानि पुण्डरीकाण्यगरुचूर्णानि तगरचूर्णानि चन्दनचूर्णानि तमालपत्राणि दिव्यानि

मान्दारवाणि पुष्पाणि, दिव्यानि च वाद्यानि प्रवादयितुमारब्धाः, चैलविक्षेपांश्च चाकार्षुः। ततो रौद्राक्षो ब्राह्मणः शिरोग्रहायोद्यानान्निर्गतः। अथास्मिन्नन्तरेऽनेकैः प्राणिशतसहस्रैर्नादो मुक्तः—हा कष्टम्। प्रघातितो देवः सर्वजनमनोरथपरिपूरक इति। तत एकत्याः पृथिव्यामावर्तन्ते परिवर्तन्ते, एके बाहुभिः प्रक्रोशन्ति, काश्चित् प्रकीर्णकेश्यो रुदन्ति। अनेकानि च प्राणिशतसहस्राणि संनिपतितानि। तत एकत्यास्तस्मिन्नेव प्रदेशे स्थित्वा ध्यानान्युत्पाद्य 5 तत्रैव कालं कृत्वा शुभकृत्स्ने देवनिकाये उपपन्ना राज्ञश्चन्द्रप्रभस्य सभागतायाम्। अपरे ध्यानान्युत्पाद्य तत्रैव कालं कृत्वा भास्वरे देवनिकाये उपपन्नाः। अपरे प्रथमध्यानमुत्पाद्य कालं कृत्वा ब्रह्मलोकसभागतायामुपपन्नाः। अपरैः संनिपात्य राज्ञश्चन्द्रप्रभस्य शरीरं सर्वगन्धकाष्ठैश्चितां चित्वा, ध्मापितानि च अस्थीनि सौवर्णकुम्भे प्रक्षिप्य, चतुर्महापथे शरीरस्तूपः प्रतिष्ठापितः। छत्रध्वजपताकाश्चारोपिताः। गन्धैर्माल्यैर्धूपैर्दीपैः पुष्पैः पूजां कृत्वा 10 चन्द्रप्रभे राजनि स्वचित्तमभिप्रसाद्य कालगताः षट्सु देवनिकायेषु कामावचरेषु देवेषूपपन्नाः। यैश्च तत्र काराः कृताः, सर्वे ते स्वर्गमोक्षपरायणाः संवृत्ता इति॥

स्यात्खलु युष्माकं भिक्षवः काङ्क्षा वा विमतिर्वा अन्या सा तेन कालेन तेन समयेनोत्तरापथे भद्रशिला नाम राजधान्यभूदिति। न खलु एवं द्रष्टव्यम्। तत्कस्य हेतोः? एषैव सा तक्षशिला तेन कालेन तेन समयेन भद्रशिला नाम राजधानी बभूव। स्यात्खलु युष्माकं 15 भिक्षवः काङ्क्षा वा विमतिर्वा अन्यः स तेन कालेन तेन समयेन चन्द्रप्रभो नाम राजाभूदिति। न खलु एवं द्रष्टव्यम्। तत्कस्य हेतोः? अहमेव तेन कालेन तेन समयेन राजा चन्द्रप्रभो बभूव। स्यात्खलु युष्माकं भिक्षवः काङ्क्षा वा विमतिर्वा—अन्यः स तेन कालेन तेन समयेन रौद्राक्षो नाम ब्राह्मणोऽभूदिति। न खल्वेवं द्रष्टव्यम्। तत्कस्य हेतोः? एष एव स तेन कालेन तेन समयेन देवदत्तो बभूव। स्यात्खलु युष्माकं भिक्षवः काङ्क्षा वा विमतिर्वा—अन्यौ 20 तौ तेन कालेन तेन समयेन महाचन्द्रमहीधरौ अग्रामात्यौ बभूवतुरिति। न खल्वेवं द्रष्टव्यम्। तत्कस्य हेतोः? एतावेव महाचन्द्रमहीधरौ अग्रामात्यौ शारिपुत्रमौद्गल्यायनौ बभूवतुः। तदाप्येतौ तत्प्रथमतः कालगतौ, न त्वेव पितृमरणमारागितवन्तौ इति॥

C 328

इदमवोचद्भगवान्। आत्तमनसस्ते भिक्षवोऽन्ये च देवनागयक्षगन्धर्वासुरगरुडकिन्नरमहोरगादयो भगवतो भाषितमभ्यनन्दन्॥ 25

चन्द्रप्रभबोधिसत्त्वचर्यावदानं नाम द्वाविंशतिमम्।

---

After this, Mss. add:

तथा च चन्द्रप्रभभूपतिर्भूते मणिकनकरजतवैडूर्येन्द्रनीलादिद्रविणवसनयानभोजनालंकारग्रामनगरनिगमविषयराज्यादयो राज्यरथसुतसुतकलत्रमांसरुधिरकरचरणशिरोक्षिग्रीवादिसर्वपरित्यागमन्तरेण दुर्गतिजननमरणजराकरचरणकरणविकलताप्रियसंयोगप्रियवियोगादितरदुःखोपनिपातभयाभिहतजनपरित्राणकरणसमर्थां सकलभुवनाधिपत्याभिषेकमहती गाथाधुनी गुणसमृद्धिर्न शक्यतेऽधिगन्तुमिति कारुण्यादशेषजगद्दुःखोपशमकृतनिश्चयः प्रणतसकलसामन्तचूडामणिमयूखाविच्छुरितपादपीठः तुरगगजरथवस्त्रालंकारादिपरित्यागेन परिपूरितनिरवशेषजाम्बूद्वीपकजनमनोरथः सकलजनमनोनयनहारी शिरः परित्यक्तवान्। कथमित्येवमनुश्रूयते इति॥

# २३ संघरक्षितावदानम् ।

C 329 किं महल्लेनाधिगतम्? एकोत्तरिका । अयं तावत् खुस्तिकया एकोत्तरिकया धर्मं देशयति—अमी भिक्षवो धर्मकथिका युक्तमुक्तप्रतिभानाः । कस्मान्नैतानध्येषयसि? स तैरभिहितः—महल्ल, किं त्वया अधिगतम्? स कथयति—एकोत्तरिका । ते कथयन्ति—त्वं 5 तावन्महल्ल खुस्तिकया एकोत्तरिकया धर्मं देशयसि । अमी भिक्षवस्तृपिता धर्मकथिका युक्तमुक्तप्रतिभानाः । कस्मान्नैतानध्येषयसि? स कथयति—आर्याः, यूयं कस्यार्थे न देशयत? किमहं निवारयामीति? ते कथयन्ति—नन्दोपनन्द, प्रतिवदत्येषोऽस्माकं महल्लः । कुरुत अस्योत्क्षेपणीयं कर्म । स संलक्षयति—यदि मे उत्क्षेपणीयं कर्म करिष्यन्ति, नागभवनेऽप्यहमवकाशं न लप्स्ये । स तेषां शयितकानां तं विहारमन्तर्हापयित्वा महासमुद्रं प्रविष्टः । ते वालुका-10 स्थले शयितकास्तिष्ठन्ति । नन्दोपनन्द, उत्तिष्ठ सिंहासनं प्रज्ञापय, धर्मं देशयामः । ते कथयन्ति—कोऽप्यसौ देवो वा नागो वा यक्षो वा भगवत्यभिप्रसन्नः बुद्धे धर्मे संघे कारान् कुर्वन्, सोऽस्माभिर्विहेठितः । एतत् प्रकरणं भिक्षवो भगवत आरोचयन्ति । भगवानाह—योऽसौ भिक्षवो निर्मितो यदि षड्वर्गिकैर्भिक्षुभिर्न विहेठितोऽभविष्यत्, यावच्छासनकोटिमुद्घाटको बुद्धे धर्मे संघे कारानकरिष्यत् । भगवान् संलक्षयति—यः कश्चिदादीनवो

C 330 15 भिक्षवः, अनधीष्टो धर्मं देशयति, तस्मान्न भिक्षुणाऽनधीष्टेन धर्मो देशयितव्यः । भिक्षुरनधीष्टो धर्मं देशयति, सातिसारो भवति । अनापत्तयस्तन्मुखिकया निर्गता भवन्ति ॥

श्रावस्त्यां बुद्धरक्षितो नाम गृहपतिः प्रतिवसति आढ्यो महाधनो महाभोगः । तेन सदृशात् कुलात् कलत्रमानीतम् । स तया सार्धं क्रीडते रमते परिचारयति । तस्य क्रीडतो रमतः परिचारयतः पत्नी आपन्नसत्त्वा संवृत्ता । आयुष्मान् शारिपुत्रो वैनेयापेक्षया तत्कुल-20 मुपसंक्रान्तः । तेन स गृहपतिः सपत्नीकः शरणगमनशिक्षापदेषु प्रतिष्ठापितः । अपरेण समयेन सा तस्य पत्नी आपन्नसत्त्वा संवृत्ता । आयुष्मान् शारिपुत्रस्तस्य च वैनेयकालं ज्ञात्वा एकाक्यैव तत् कुलमुपसंक्रान्तः । स गृहपतिः कथयति—नास्त्यार्यशारिपुत्रस्य कश्चित् पश्चाच्छ्रमणः? स कथयति—गृहपते, किमस्माकं काशधानाद्वा कुशधानाद्वा पश्चाच्छ्रमणा भवन्ति? अपि तु ये भवद्विधानां सकाशाल्लभ्यन्ते, अस्माकं ते पश्चाच्छ्रमणा भवन्ति । 25 बुद्धरक्षितो गृहपतिः—आर्य, मम पत्नी आपन्नसत्त्वा संवृत्ता । यदि पुत्रं जनयिष्यति, तमहमार्यस्य पश्चाच्छ्रमणं दास्यामि । स कथयति—गृहपते, औपयिकम् ॥

सा अष्टानां वा नवानां वा मासानां [अत्ययात्] प्रसूता । दारको जातोऽभिरूपो दर्शनीयः प्रासादिको गौरः कनकवर्णश्छत्राकारशिराः प्रलम्बबाहुर्विस्तीर्णललाटः संगतभ्रूस्तुङ्गनासः । तस्य ज्ञातयः संगम्य समागम्य त्रीणि सप्तकान्येकविंशतिदिवसानि विस्तरेण जातस्य जाति-30 महं कृत्वा नामधेयं व्यवस्थापयन्ति—किं भवतु दारकस्य नाम? अयं दारको बुद्धरक्षितस्य गृहपतेः पुत्रः । भवतु दारकस्य संघरक्षितो नाम । यस्मिन्नेव दिवसे संघरक्षितो जातः, तस्मिन्नेव दिवसे पञ्चानां वणिक्शतानां पञ्च पुत्रशतानि जातानि । तेषामपि कुलसदृशानि

नामधेयानि व्यवस्थापितानि । संघरक्षितो दारक उन्नीयते वर्ध्यते क्षीरेण दध्ना नवनीतेन सर्पिषा सर्पिर्मण्डेन अन्यैश्चोत्तप्तोत्तप्तैरुपकरणविशेषैः । आशु वर्धते ह्रदस्थमिव पङ्कजम् । यदा महान् संवृत्तः, तदा आयुष्मान् शारिपुत्रस्तस्य वैनेयकालं ज्ञात्वा एकाक्येव तत्कुलमुपसंक्रम्य निमित्तमुपदर्शयितुमारब्धः । बुद्धरक्षितेन गृहपतिना संघरक्षितोऽभिहितः—पुत्र, अजात एव त्वं मया आर्यशारिपुत्रस्य पश्चाच्छ्रमणो दत्त इति । चरमभविकः स आयुष्मता शारिपुत्रेण प्रव्राजित उपसंपादित आगमचतुष्टयं च ग्राहितः ॥

अथापरेण समयेन तानि पञ्च वणिक्शतानि महासमुद्रगमनीयं पण्यं समुदानीय महासमुद्रमवतर्तुकामानि कथयन्ति—किंचिद्वयं भवन्त आर्यकमवतारयाम योऽस्माकं महासमुद्रमध्यगतानां धर्मं देशयिष्यति । ते कथयन्ति—भवन्तः, अयमस्माकमार्यसंघरक्षितो वयस्यकः सहजन्मिकः सहपांशुक्रीडनकः । एतमेवावतारयामः । ते तस्य सकाशमुपसंक्रान्ताः । आर्य संघरक्षित, त्वमस्माकं वयस्यकः सहजन्मिकः सहपांशुक्रीडनकः । वयं च महासमुद्रं संप्रस्थिताः । त्वमप्यस्माभिः सार्धमवतर, समुद्रमध्यगतानां धर्मं देशयिष्यसि । स कथयति—नाहं स्वाधीनः । उपाध्यायमवलोकयत । ते येनायुष्मान् शारिपुत्रस्तेनोपसंक्रान्ताः । उपसंक्रम्य कथयन्ति—आर्य शारिपुत्र, अयमस्माकमार्यसंघरक्षितो वयस्यकः सहजन्मिकः सहपांशुक्रीडनकः । वयं महासमुद्रं संप्रस्थिताः । एषोऽप्यस्माभिः सार्धमवतरतु, अस्माकं महासमुद्रमध्यगतानां धर्मं देशयिष्यति । स कथयति—भगवन्तमवलोकयत । ते भगवतः सकाशमुपसंक्रान्ताः । भगवन्, वयं महासमुद्रं संप्रस्थिताः । अयमस्माकमार्यसंघरक्षितो वयस्यकः सहजन्मिकः सहपांशुक्रीडनकः । एषोऽप्यस्माभिः सार्धं महासमुद्रमवतरतु । अस्माकं महासमुद्रमध्यगतानां धर्मं देशयिष्यति । भगवान् संलक्षयति—अस्त्येषां कानिचित् कुशलमूलानि ? अस्ति । कस्यान्तिके प्रतिबद्धानि ? संघरक्षितस्य भिक्षोः । तत्र भगवान् संघरक्षितमामन्त्रयते—गच्छ संघरक्षित, भयभैरवसहिष्णुना भवितव्यम् । अधिवासयत्यायुष्मान् संघरक्षितो भगवतस्तूष्णीभावेन ॥

अथ तानि पञ्च वणिक्शतानि कृतकौतुकमङ्गलस्वस्त्ययनानि शकटैर्भारैर्मूढैः पिटकैरुष्ट्रैर्गोभिर्गर्दभैः प्रभूतं पण्यमारोप्य महासमुद्रं संप्रस्थितानि । अनुपूर्वेण ग्रामनगरनिगमपल्लीपत्तनेषु चञ्चूर्यमाणानि समुद्रतटमनुप्राप्तानि । ते निपुणतः समुद्रयानपात्रं प्रतिपद्य महासमुद्रमवतीर्णा धनहारकाः । तेषां महासमुद्रमध्यगतानां नागैर्वहनं विधारितम् । ते देवतायाचनं कर्तुमारब्धाः—योऽस्मिन् महासमुद्रे देवो वा नागो वा यक्षो वा प्रतिवसति, स आचक्षतु किं मृगयतीति । महासमुद्राच्छब्दो निश्चरति—आर्यसंघरक्षितमस्माकमनुप्रयच्छथेति । ते कथयन्ति—आर्यसंघरक्षितोऽस्माकं वयस्यकः सहजन्मिकः सहपांशुक्रीडनको भदन्तशारिपुत्रेणानुप्रदत्तको भगवतानुपरीतकः । श्रेयोऽस्माकमनेनैव सार्धं कालक्रिया, न त्वेव वयं संघरक्षितं परित्यक्ष्यामः । ते मन्त्रयन्त आयुष्मता संघरक्षितेन श्रुताः । स कथयति—भवन्तः, किं कथयन्ते ? कथयन्ति—आर्य संघरक्षित महासमुद्राच्छब्दो

निश्चरितः—आर्यसंघरक्षितमस्माकमनुप्रयच्छथेति । स कथयति—कस्मान्नानुप्रयच्छध्वम्? ते कथयन्ति—आर्य, त्वमस्माकं वयस्यकः सहजन्मिकः सहपांशुक्रीडनकः । भदन्तशारिपुत्रेणानुप्रदत्तको भगवतानुप्रदत्तकः । श्रेयोऽस्माकं त्वयैव सार्धं कालक्रिया । न त्वेव वयमार्य संघरक्षित त्वां परित्यक्ष्यामः । आयुष्मान् संघरक्षितः संलक्षयति—यदुक्तं भगवता भयभैरवसहिष्णुना ते भवितव्यमितीदं तत् । स पात्रचीवरं गृहीत्वा आत्मानं महासमुद्रे प्रक्षेप्तुमारब्धः । स तैर्दृष्टः । ते कथयन्ति—आर्यसंघरक्षित किं करोषि, आर्यसंघरक्षित किं करोषीति । स तेषां विक्रोशतां महासमुद्रे प्रपतितः । मुक्तं तद्वहनम् । स नागैर्गृहीत्वा नागभवनं प्रवेशितः ॥

C 333

आर्य संघरक्षित, इयं विपश्यिनः सम्यक्संबुद्धस्य गन्धकुटी । इयं शिखिनो विश्वभुवः क्रकुच्छन्दस्य कनकमुनेः काश्यपस्येयं भगवतो गन्धकुटी । आर्य संघरक्षित, भगवतः सूत्रं मातृका च देवमनुष्येषु प्रतिष्ठितम् । वयं नागा विनिपतितशरीराः । अहो बत आर्यः संघरक्षित इहाप्यागमचतुष्टयं प्रतिष्ठापयेत् । स कथयति—एवं भवतु । तेन त्रयो नागकुमारा उत्साहिताः । एकोऽभिहितः—त्वं तावत् संयुक्तकमधीष्व । द्वितीयोऽभिहितः—त्वमपि मध्यमम् । तृतीयोऽभिहितः—त्वमपि दीर्घागममधीष्व । स कथयति—अहमपि तामेवैकोत्तरिकां विमृष्टरूपां प्रज्वालयामि । तेऽध्येतुमारब्धाः । तत्रैकश्चक्षुषी निमीलयित्वोद्देशं गृह्णाति, द्वितीयः पृष्ठतोमुख उद्देशं गृह्णाति, तृतीयो दूरतः स्थित्वोद्देशं गृह्णाति । स एव तेषामेकः सगौरवः सप्रतीश इति करणीयैश्च सर्वत्र पूर्वंगमः । आर्य उत्तिष्ठ, दन्तकाष्ठं विसर्जय, भगवतो मण्डलकमामार्जय, चैत्याभिवन्दनं कुरु, भुङ्क्ष्व, शय्यां कल्पयेति । सर्वैस्तैरागमान्यधीतानि । स कथयति—आर्य, अधीतान्येभिरागमानि । किं धारयिष्यन्ति आहोस्विन्न धारयिष्यन्ति? स कथयति—स्मृतिमत्तका ह्येते धारयिष्यन्ति, अपि तु दोषोऽस्त्येषाम् । स कथयति—आर्य, को दोषः? सर्वे ह्येतेऽगौरवा अप्रतीशाः । एकस्तावच्चक्षुषी निमीलयित्वोद्देशं गृह्णाति, द्वितीयः पृष्ठतोमुख उद्देशं गृह्णाति, तृतीयो दूरतः स्थित्वोद्देशं गृह्णाति । त्वमेवैकः सगौरवः सप्रतीश इति करणीयैश्च सर्वत्र पूर्वंगमः । स कथयति—आर्य, न ह्येतेऽगौरवा अप्रतीशाः । यस्तावदयं चक्षुषी निमीलयित्वोद्देशं गृह्णाति, अयं दृष्टिविषः । योऽप्ययं पृष्ठतोमुख उद्देशं गृह्णाति, एषोऽपि श्वासविषः । योऽप्येष दूरतः स्थित्वोद्देशं गृह्णाति, एषोऽपि स्पर्शविषः । अहमेको दंष्ट्राविषः । स भीत उत्पाण्डूत्पाण्डुकः कृशालुको दुर्बलको म्लानकोऽप्राप्तकायः संवृत्तः । स कथयति—आर्य, कस्मात् त्वमुत्पाण्डूत्पाण्डुकः कृशालुको दुर्बलको म्लानकोऽप्राप्तकायः संवृत्तः? स कथयति—भद्रमुख, अमित्रमध्येऽहं वासं कल्पयामि । सचेत् युष्माकमन्यतमोऽन्यतमं प्रकुप्येत, मां नामावशेषं कुर्यात् । स कथयति—आर्यस्य वयं न प्रहरामः । अपि तु इच्छसि त्वं जम्बुद्वीपं गन्तुम्? भद्रमुख, इच्छामि । तच्च वहनमागतम् । स तैरुत्क्षिप्तः ॥

C 334

वणिग्भिर्दृष्टः । ते कथयन्ति—स्वागतमार्यसंघरक्षिताय । स कथयति—अनुमोदन्तां भवन्तः । मया नागेष्वागमचतुष्टयं प्रतिष्ठापितम् । ते कथयन्ति—आर्य संघरक्षित, अनुमोद-

यामः। ते तं वहने प्रक्षिप्य संप्रस्थिताः। तेऽनुपूर्वेण समुद्रतीरं गत्वा सर्वे ते वणिजः शयिताः। आयुष्मान् संघरक्षितो महासमुद्रं द्रष्टुमारब्धः। उक्तं भगवता–पञ्चासेचनका दर्शनेन।

हस्तिनागश्च राजा च सागरश्च शिलोच्चयः।
असेचनका दर्शनेन बुद्धश्च भगवतां वरः॥ १॥ इति। 5

चिरं महासमुद्रं पश्यन् जागरितः। सोऽपश्चिमे यामे गाढनिद्रावष्टब्धः शयितः। तेऽपि वणिजः सरात्रमेवोत्थाय स्थोरांश्छर्दयित्वा संप्रस्थिताः। ते कथयन्ति प्रभातायां रजन्याम्–कुत्रायं संघरक्षितः? तत्रैक एवमाहुः–पुरस्ताद्गच्छति। अपर एवमाहुः–पृष्ठत आगच्छति। अपर एवमाहुः–मध्ये गच्छतीति। ते कथयन्ति–आर्यसंघरक्षितोऽस्माभिश्छोरितः। न शोभनमस्माभिः कृतम्। प्रतिनिवर्तयामः। आर्यसंघरक्षितो भवन्तो 10 महर्द्धिको महानुभावो यः समुद्रमध्ये न कालगतः। स इदानीं कालं करिष्यति? स्थानमेतद्विद्यते यदसौ अग्रत एव यास्यति। आगच्छत, गमिष्यामः। ते संप्रस्थिताः॥

आयुष्मानपि संघरक्षितः सूर्यस्याभ्युद्गमनसमये सूर्यांशुभिस्ताडितः प्रतिबुद्धो यावन्न किंचित्पश्यति। प्रक्रान्ता वणिजः। सोऽपि पन्थलिकां गृहीत्वा संप्रस्थितः। यावदन्यतमस्यां C 335 सालाटव्यां विहारं पश्यत्युद्गतं मञ्चपीठवेदिकाजालवातायनगवाक्षपरिमण्डितम्, भिक्षूंश्च 15 संप्रावृतान् संप्रच्छन्नान् शान्तेनेर्यापथेनावस्थितान्। स तेषां सकाशमुपसंक्रान्तः। स तैरुक्तः–स्वागतं भदन्तसंघरक्षिताय। स तैर्विश्रामितः। विश्रामयित्वा विहारं प्रवेशितो यावत् पश्यति शोभनां शयनासनप्रज्ञप्तिं कृतां प्रणीतं चाहारमुपहृतम्। स तैरुक्तः–भदन्त संघरक्षित, मा तृषितोऽसि, मा बुभुक्षितोऽसि? कथयति–आर्याः, तृषितोऽस्मि, बुभुक्षितोऽस्मि। भदन्त संघरक्षित भुङ्क्ष्व। स कथयति–संघमध्ये भोक्ष्यामि। ते कथयन्ति–भदन्त संघरक्षित, भुङ्क्ष्व, 20 आदीनवोऽत्र भविष्यति। तेन भुक्तम्। स भुक्त्वा एकान्तेऽपक्रम्यावस्थितः। यावत् तेषां गण्डिराकोटिता। ते स्वकस्वकानि पात्राण्यादाय यथागत्य निषण्णाः। स च तेषां विहारोऽन्तर्हितः। अयोमुद्गराः प्रादुर्भूताः। तैस्तावदयोमुद्गरैः परस्परमार्तस्वरं क्रन्दद्भिः शिरांसि भग्नानि, यावत् कालादकालीभूतम्। ततः पश्चात् पुनरपि तेषां विहारः प्रादुर्भूतः, ते च भिक्षवः शान्तेनेर्यापथेनावस्थिताः। आयुष्मान् संघरक्षितस्तेषां सकाशमुपसंक्रान्तः। 25 के यूयमायुष्मन्तः, केन वा कर्मणा इहोपपन्नाः? भदन्त संघरक्षित, दुष्कुहका जम्बुद्वीपका मनुष्याः। नाभिश्रद्दधास्यसि। स कथयति–अहं प्रत्यक्षदर्शी, कस्मान्नाभिश्रद्दधास्ये? ते कथयन्ति–भदन्त संघरक्षित, वयं काश्यपस्य सम्यक्संबुद्धस्य श्रावका आसन्। तैरस्माकं भक्ताग्रे रणमुत्पादितम्। ते वयं भक्ताग्रे रणमुत्पादयित्वा इह प्रत्येकनरकेषूपपन्नाः। स्थानमेतद्विद्यते यदस्माभिरितश्च्युतैर्नरकेषूपपत्तव्यं भविष्यति। साधु संघरक्षित, जम्बुद्वीपं 30 गत्वा सब्रह्मचारिणामारोचय–मा आयुष्मन्तः संघमध्ये रणमुत्पादयिष्यथ। मा अस्यैवंरूपस्य C 336 दुःखदौर्मनस्यस्य भागिनो भविष्यथ तद्यथा श्रमणाः काश्यपीयाः॥

स संप्रस्थितः। यावत् पश्यति द्वितीयं विहारमुद्गतं मञ्चपीठवेदिकाजालवातायनपरिक्षिप्तं गवाक्षपरिमण्डितं भिक्षूंश्च सुप्रावृतान् सुप्रतिच्छन्नान् शान्तान् शान्तेर्यापथे व्यवस्थितान्। तेषामुपसंक्रान्तः। स तैरुक्तः—स्वागतं भदन्तसंघरक्षिताय। स तैर्विश्रामितः। विश्रामयित्वा विहारं प्रवेशितो यावत् पश्यति। शोभनां शयनासनप्रज्ञप्तिं कृत्वा प्रणीतं 5 चाहारं समन्वाहृत्य स तैरुक्तः—भदन्त संघरक्षित भुङ्क्ष्व। तेन दृष्टादीनवेन भुक्तम्। भुक्त्वा एकान्तेऽपक्रम्यास्थितः। तेषां गण्ड्याकोटिता। ते स्वकस्वकानि पात्राण्यादाय यथागत्य निषण्णाः। स च विहारोऽन्तर्हितः, तदन्नपानमयोरसं प्रादुर्भूतम्। तैरार्तस्वरं क्रन्दद्भिस्तावदयोरसेन परस्परमात्मा सिक्तो यावत् कालादकालीभूतम्। ततः पश्चात् पुनरपि स तेषां विहारः प्रादुर्भूतः। ते च भिक्षवः पुनरपि शान्ताः शान्तेर्यापथेनावस्थिताः। स तेषां 10 सकाशमुपसंक्रान्तः—के यूयमायुष्मन्तः, केन वा कर्मणा इहोपपन्नाः? दुष्कुहका भदन्त संघरक्षित जम्बुद्वीपका मनुष्याः, नाभिश्रद्दधास्यन्ति। स कथयति— अहं प्रत्यक्षदर्शी, कस्मान्नाभिश्रद्दधास्ये? ते कथयन्ति—भदन्त संघरक्षित, वयं काश्यपस्य सम्यक्संबुद्धस्य श्रावका आसन्। संघस्य च स्नेहलाभे संपन्ने आगन्तुका भिक्षव आगताः। तैरस्माभिरनार्यपरिगृहीतैरेवं चित्तमुत्पादितम्—न तावद्भोजयिष्यामो यावदेते आगन्तुका भिक्षवो न प्रक्रान्ता 15 भविष्यन्तीति। तैरस्माभिस्तत्तथैव कृतम्। सप्ताहिकं चाकालदुर्दिनं प्रादुर्भूतम्। तेन तदन्नपानं क्लेदं गतम्। वयं श्रद्धादेयं विनिपातयित्वा इह प्रत्येकनरकेषूपपन्नाः। स्थानमेतद्विद्यते यदस्माभिरिह च्युतैर्नरकेषूपपत्तव्यं भविष्यति। साधु भदन्त संघरक्षित, जम्बुद्वीपं गत्वा सब्रह्मचारिणामारोचय—मा आयुष्मन्तः श्रद्धादेयं विनिपातयिष्यथ, मा अस्य एवंरूपस्य दुःखदौर्मनस्यस्य भागिनो भविष्यथ, तद्यथा ब्राह्मणाः काश्यपीयाः॥ (C 337)

20 स संप्रस्थितो यावत् पश्यति तृतीयं विहारमुद्गतं मञ्चपीठवेदिकाजालवातायनगवाक्षपरिमण्डितं पूर्ववद्यावदायुष्मान् संघरक्षितो भुक्त्वा एकान्तेऽपक्रम्यावस्थितः। गण्ड्याकोटिता। स तेन विहार आदीप्तः प्रदीप्तः संप्रज्वलित एकज्वालीभूतो ध्मायितुमारब्धः। तेऽपि तस्मिन्नार्तस्वरं क्रन्दतस्तावद्दग्धा यावत् कालादकालीभूतम्। ततः पश्चात् पुनरपि तेषां विहारः प्रादुर्भूतः, ते च भिक्षवः शान्तशान्तेनेर्यापथेनावस्थिताः। स तेषां सकाशमुपसंक्रान्तः— 25 के यूयमायुष्मन्तः, केन वा कर्मणा इहोपपन्नाः? दुष्कुहका भदन्त संघरक्षित जम्बुद्वीपका मनुष्याः, नाभिश्रद्दधास्यसि। स कथयति—अहं प्रत्यक्षदर्शी, कस्मान्नाभिश्रद्दधास्ये? ते कथयन्ति—भदन्त संघरक्षित वयं काश्यपस्य सम्यक्संबुद्धस्य श्रावका आसन्। दुःशीलास्ते वयं शीलवद्भिर्भिक्षुभिर्निष्कासिताः। तैरस्माभिरेकः शून्यविहार आवासितः। यावत् तत्रैकः शीलवान् भिक्षुरागतः। अस्माकं बुद्धिरुत्पन्ना—तिष्ठतु अयं भिक्षुः। अयमप्येकोऽस्माकं 30 दक्षिणां शोधयिष्यति। स तत्रैव स्थितो यावत् तस्यानिसङ्गेन (?) पुनरपि बहवः शीलवन्तो भिक्षव आगताः। ते वयं तत्रापि निर्वासिताः। तैरस्माभिरमर्षजातैः शुष्कानि काष्ठानि शुष्कानि तृणानि शुष्कानि गोमयानि उपसंहृत्य तस्मिन् विहारेऽग्निर्दग्धः। तत्र प्रभूताः

शैक्षाशैक्षाः पुद्गला दग्धाः। ते वयं शैक्षाशैक्षान् पुद्गलान् दग्ध्वा इह प्रत्येकनरकेषूपपन्नाः। स्थानमेतद्विद्यते यदस्माभिरिह च्युतैर्नरकेषूपपत्तव्यं भविष्यति। साधु भदन्त संघरक्षित, जम्बुद्वीपं गत्वा सब्रह्मचारिणामारोचय—मा आयुष्मन्तः सब्रह्मचारिणामन्तिके प्रदुष्टचित्त- मुत्पादयिष्यथ, मा अस्यैवंरूपस्य दुःखदौर्मनस्यस्य भागिनो भविष्यथ तद्यथा श्रमणाः काश्यपीयाः॥　C 338　5

आयुष्मान् संघरक्षितः संप्रस्थितो यावत् सत्त्वानद्राक्षीत् स्तम्भाकारान् कुड्याकारान् वृक्षाकारान् पत्राकारान् पुष्पाकारान् फलाकारान् रज्ज्वाकारान् संमार्जन्याकारानुदूखला- कारान् खट्वाकारान् स्थालिकाकारान्॥

आयुष्मान् संघरक्षितो जनपदान् गतः। अन्यतमस्मिन्नाश्रमपदे पञ्चमात्राणि ऋषिशतानि प्रतिवसन्ति। तैरायुष्मान् संघरक्षितो दूरत एव दृष्टः। ते कथयन्ति—भवन्तः, 10 क्रियाकारं तावत् कुर्मः—बहुबोल्लकाः श्रमणाः शाक्यपुत्रीया भवन्ति। नास्य केनचिद्वचनं दातव्यम्। ते क्रियाकारं कृत्वा अवस्थिताः। आयुष्मांश्च संघरक्षितस्तेषां सकाशमुपसंक्रान्तः। उपसंक्रम्य प्रतिश्रयं याचितुमारब्धः। न कश्चिद्वाचमनुप्रयच्छति। तत्रैक ऋषिः स शुक्लधर्मः। कथयति—किं युष्माकं प्रतिश्रयं न दीयते? अपि तु युष्माकं दोषोऽस्ति। बहुबोल्लका यूयम्। समयेनाहं भवतः प्रतिश्रयं दास्ये, सचेत् किंचिन्न मन्त्रयसि। आयुष्मान् संघरक्षितः 15 कथयति—ऋषे, एवं भवतु। तत्रैक ऋषिर्जनपदचारिकां गतः। तस्य कुटिः शून्यावतिष्ठति। स कथयति—अस्यां कुटिकायां शय्यां कल्पय। आयुष्मता संघरक्षितेन सा कुटिका सिक्ता संमृष्टा संमार्जिता सुकुमारीं गोमयकार्सि चानुप्रदत्ता। तैर्दृष्टः। ते कथयन्ति—भदन्त, शुच्यपि मार्जन्त्येते श्रमणाः शाक्यपुत्रीयाः। आयुष्मान् संघरक्षितो बहिः कुटिकायाः पादौ प्रक्षाल्य कुटिकां प्रविश्य निषण्णः पर्यङ्कमाभुज्य ऋजुकायं प्रणिधाय प्रतिमुखं स्मृतिमुपस्थाप्य। 20　C 339 या तस्मिन्नाश्रमपदे देवता प्रतिवसति, सा रात्र्याः प्रथमे यामे येनायुष्मान् संघरक्षितस्तेनोप- संक्रान्ता। उपसंक्रम्य कथयति—आर्य संघरक्षित, धर्मं देशय। आयुष्मान् संघरक्षितः कथयति—सुखिता त्वम्। न पश्यसि मया क्रियाकारेण प्रतिश्रयं लब्धम्? किं निष्कासाप- यितुमिच्छसि? सा संलक्षयति—श्रान्तकायोऽयम्, स्वपितु। मध्यमे यामे उपसंक्रमिष्यामि। सा मध्यमे याम उपसंक्रान्ता। उपसंक्रम्य कथयति—आर्य संघरक्षित, धर्मं देशय। आयुष्मान् 25 संघरक्षितः कथयति—सुखिता त्वम्। न पश्यसि मया क्रियाकारेण प्रतिश्रयं लब्धम्? किं निष्कासापयितुमिच्छसि? सा संलक्षयति—श्रान्तकायोऽयम्, स्वपितु। पश्चिमे यामे उपसं- क्रमिष्यामि। सा पश्चिमे यामे उपसंक्रान्ता। उपसंक्रम्य कथयति—आर्य संघरक्षित, धर्मं देशय। आयुष्मान् संघरक्षितः कथयति—सुखिता त्वम्। न पश्यसि मया क्रियाकारेण प्रतिश्रयं लब्धम्? किं निष्कासापयितुमिच्छसि? सा कथयति—आर्य संघरक्षित, प्रभातमिदानीम्। 30 सचेन्निष्कासयिष्यन्ति, गमिष्यसि। अपि तु ननूक्तं भगवता भयभैरवसहिष्णुना ते भवितव्य- मिति। आयुष्मान् संघरक्षितः संलक्षयति—शोभनं कथयति—सचेत् स निष्कासयिष्यति,

गमिष्यामि। स संलक्षयति—ब्राह्मणा ह्येते। ब्राह्मणप्रतिसंयुक्तं भाषयामीत्यायुष्मान् संघरक्षितो ब्राह्मणवर्गं स्वाध्यायितुमारब्धः—

न नग्नचर्या न जटा न पङ्को
नानाशनं स्थण्डिलशायिका वा।
5 न रजोमलं नोत्कुटुकप्रहाणं
विशोधयेन्मोहमविशीर्णकाङ्क्षम्॥ २॥

अलंकृतश्चापि चरेत धर्मं
दान्तेन्द्रियः शान्तः संयतो ब्रह्मचारी।
सर्वेषु भूतेषु निधाय दण्डं
10 स ब्राह्मणः स श्रमणः स भिक्षुः॥ ३॥

C 340 तैः श्रुतम्। ते संलक्षयन्ति—ब्राह्मणप्रतिसंयुक्तम्। इत्येक उपसंक्रान्तो द्वितीयस्तृतीयो यावत् सर्वे उपसंक्रान्ताः। तथा तया देवतया अधिष्ठितम्, यथा परस्परं न पश्यन्ति। ततः पश्चादायुष्मता संघरक्षितेन नगरोपमं सूत्रमुपनिक्षिप्तम्। गाथां च भाषते—

यानीह भूतानि समागतानि
15 स्थितानि भूम्यामथवान्तरिक्षे।
कुर्वन्तु मैत्रीं सततं प्रजासु
दिवा च रात्रौ च चरन्तु धर्मम्॥ ४॥ इति।

अस्मिन् खलु धर्मपर्याये भाष्यमाणे सर्वैस्तैः सहसत्याभिसमयादनागामिफलमनुप्राप्तम्। ऋद्धिश्चापि निर्हृता। सर्वैस्तैः सुभाषितं भदन्तसंघरक्षितायेत्येकनादो मुक्तः। तया देवतया 20 ऋद्ध्यभिसंस्काराः प्रतिप्रस्रब्धाः। परस्परं द्रष्टुमारब्धाः। तेऽन्योन्यं कथयन्ति—त्वमप्यागतः? आगतोऽहम्। शोभनम्। ते दृष्टसत्याः कथयन्ति—लभेमो वयं भदन्त संघरक्षित स्वाख्याते धर्मविनये प्रव्रज्यामुपसंपदं भिक्षुभावम्। चरेमो वयं भगवतोऽन्तिके ब्रह्मचर्यम्। आयुष्मान् संघरक्षितः कथयति—किं मत्सकाशे प्रव्रजथ, आहोस्विद्भगवतः? ते कथयन्ति—भगवतः। आयुष्मान् संघरक्षितः कथयति—यद्येवम्, आगच्छथ, भगवतः सकाशं गच्छामः। ते कथयन्ति—25 भदन्त संघरक्षित, किमस्मदीयया ऋद्ध्या गच्छामः, आहोस्वित् त्वदीयया? आयुष्मान् संघरक्षितः संलक्षयति—एभिर्मदीयेनाववादेनैवंविधा गुणगणा अधिगताः, अहं लङ्घनकोपमः संवृत्तः। स कथयति—तिष्ठन्तु तावद्भवन्तो मुहूर्तम्। आयुष्मान् संघरक्षितोऽन्यतमं वृक्षमूलं निश्रित्य निषण्णः पर्यङ्कमाभुज्य ऋजुं कायं प्रणिधाय प्रतिमुखं स्मृतिमुपस्थाप्य। उक्तं भगवता—पञ्चानुशंसा बाहुश्रुत्ये। धातुकुशलो भवति, प्रतीत्यसमुत्पादकुशलो भवति, C 341 30 स्थानास्थानकुशलो भवति, अपरप्रतिबद्धा चास्य भवति अववादानुशासनीति। तेनोद्यच्छता घटता व्यायच्छता सर्वक्लेशप्रहाणादर्हत्त्वं साक्षात्कृतम्। अर्हन् संवृत्तस्त्रैधातुकवीतरागः

पूर्ववद्यावन्मान्यः पूज्यश्चाभिवाद्यश्च संवृत्तः । ते आयुष्मता संघरक्षितेनाभिहिताः–भवन्तः, गृह्णीध्वं मदीयं चीवरकर्णिकम्, यास्यामः। आयुष्मतः संघरक्षितस्य चीवरकर्णिके लग्नाः । अथायुष्मान् संघरक्षितो विततपक्ष इव हंसराजस्तत एव ऋद्ध्या उपरिविहायसा प्रक्रान्तः ॥

यावत् तानि पञ्च वणिक्शतानि भाण्डं प्रतिसामयन्ति । तेषामुपरि छाया निपतिता। स तैर्दृष्टः। ते कथयन्ति–आर्य संघरक्षित, आगतस्त्वम्? आगतोऽहम्। कुत्र गच्छसि? स 5 कथयति–इमानि पञ्च कुलपुत्रशतान्याकाङ्क्षन्ति स्वाख्याते धर्मविनये प्रव्रज्यामुपसंपदं भिक्षुभावम्। ते कथयन्ति–आर्य संघरक्षित, वयमपि प्रव्रजिष्यामः। अवतरस्व यावद्भाण्डं प्रतिसामयाम इति। आयुष्मान् संघरक्षितोऽवतीर्णः । तैर्भाण्डं प्रतिसामितम् । अथायुष्मान् संघरक्षितस्तत् कुलपुत्रसहस्रमादाय येन भगवांस्तेनोपसंक्रान्तः ॥

तेन खलु समयेन भगवाननेकशताया भिक्षुपर्षदः पुरस्तान्निषण्णो धर्मं देशयति । 10 अद्राक्षीद्भगवानायुष्मन्तं संघरक्षितं दूरादेव । दृष्ट्वा च पुनर्भिक्षूनामन्त्रयते स्म–एष भिक्षवः संघरक्षितो भिक्षुः सप्राभृत आगच्छति। नास्ति तथागतस्यैवंविधं प्राभृतं यथा वैनेयप्राभृतम्। आयुष्मान् संघरक्षितो येन भगवांस्तेनोपसंक्रान्तः। उपसंक्रम्य भगवतः पादौ शिरसा वन्दित्वा एकान्ते निषण्णः। एकान्तनिषण्ण आयुष्मान् संघरक्षितो भगवन्तमिदमवोचत्–इदं भदन्त कुलपुत्रसहस्रमाकाङ्क्षति स्वाख्याते धर्मविनये प्रव्रज्यामुपसंपदं भिक्षु- 15 भावम्। तं भगवान् प्रव्राजयति उपसंपादयत्यनुकम्पामुपादाय। ते भगवता एहिभिक्षुकया आभाषिताः–एत भिक्षवश्चरत ब्रह्मचर्यम्। भगवतो वाचावसाने मुण्डाः संवृत्ताः संघाटीप्रावृताः सप्ताहावरोपितकेशश्मश्रवः पात्रकरकव्यग्रहस्ता वर्षशतोपसंपन्नस्य भिक्षोरीर्यापथेनावस्थिताः ॥

एहीति चोक्ता हि तथागतेन 20 C 312
मुण्डाश्च संघाटिपरीतदेहाः।
सद्यः प्रशान्तेन्द्रिया एव तस्थु-
रेवं स्थिता बुद्धमनोरथेन ॥ ५ ॥

भगवता तेषामववादो दत्तः । तैरुद्यच्छमानैर्घटमानैर्व्यायच्छद्भिः सर्वक्लेशप्रहाणादर्हत्त्वं साक्षात्कृतम्। अर्हन्तः संवृत्तास्त्रैधातुकवीतरागाः पूर्ववद्यावत् मान्याश्च पूज्याश्च 25 अभिवाद्याश्च संवृत्ताः ॥

आयुष्मान् संघरक्षितो बुद्धं भगवन्तं पृच्छति–इहाहं भदन्त सत्त्वानद्राक्षं कुड्याकारान् स्तम्भाकारान् वृक्षाकारान् पत्राकारान् पुष्पाकारान् फलाकारान् रज्ज्वाकारान् संमार्जन्याकारान् खट्वाकारानुदूखलाकारान् स्थालिकाकारान्। मध्येऽवच्छिन्नं तन्तुना धार्यमाणं गच्छति। कस्य कर्मणो विपाकेन? भगवानाह–यांस्त्वं संघरक्षित सत्त्वानद्राक्षीः कुड्याकारांस्ते 30 काश्यपस्य सम्यक्संबुद्धस्य श्रावका आसन्। तैः सांघिकं कुड्यं श्लेष्मणा सिंहाणकेन

विनाशितम्। ते तस्य कर्मणो विपाकेन कुड्याकाराः संवृत्ताः। यथा कुड्याकाराः, एवं स्तम्भाकाराः सत्त्वाः । यान् संघरक्षित सत्त्वानद्राक्षीर्वृक्षाकारांस्ते काश्यपस्य सम्यक्संबुद्धस्य श्रावका आसन् । तैः सांघिकाः पुष्पवृक्षाः फलवृक्षाः पौद्गलिकपरिभोगेन भुक्ताः। ते तस्य कर्मणो विपाकेन वृक्षाकाराः संवृत्ताः । यथा वृक्षाकाराः, एवं 5 पत्राकाराः फलाकाराः पुष्पाकाराः । यं त्वं संघरक्षित सत्त्वमद्राक्षी रज्ज्वाकारम्, स काश्यपस्य सम्यक्संबुद्धस्य श्रावक आसीत् । तेन संघिका रज्जुः पौद्गलिकपरिभोगेन परिभुक्ता। स तस्य कर्मणो विपाकेन रज्ज्वाकारः संवृत्तः। यथा रज्ज्वाकारः, एवं संमार्जन्याकारः। यं त्वं संघरक्षित सत्त्वमद्राक्षीस्तप्वाकारं (?) काश्यपस्य सम्यक्संबुद्धस्य श्रावक आसीत् श्रामणेरकः। सोऽपरेण समयेन पानकवारमुद्दिष्टस्तद्वारकं निर्मादयति। C 343 10 आगन्तुकाश्च भिक्षव आगताः। स तैः पृष्टः—श्रामणेरक, किं संघस्य पानकं भविष्यति? स कथयति—नास्तीति। ते निराशीभूताः प्रक्रान्ताः। संघस्य च पानकं संपन्नम्। स तस्य कर्मणो विपाकेन तप्वाकारः संवृत्तः। यं त्वं संघरक्षित सत्त्वमद्राक्षीरुदूखलाकारम्, स काश्यपस्य सम्यक्संबुद्धस्य श्रावक आसीत्। तस्य पात्रकर्म प्रत्युपस्थितम्। तत्रैकः श्रामणेरकोऽर्हन्। स तेनोक्तः—श्रामणेरक, ददस्व मे खलस्तोकं कुट्टयित्वा। स कथयति—स्थविर, 15 तिष्ठ तावन्मुहूर्तम्। व्यग्रोऽहम्। पश्चाद्दास्यामीति। सोऽमर्षजातः कथयति—श्रामणेरक, यदि रोचते, त्वामेवाहमस्मिन् उदूखले प्रक्षिप्य कुट्टये प्रागेव खलस्तोकम्। यत्तदर्हतोऽन्तिके खरं वाक्कर्म निश्चारितम्, स तस्य कर्मणो विपाकेन उदूखलाकारः संवृत्तः। यांस्त्वं संघरक्षित सत्त्वानद्राक्षीः स्थाल्याकारांस्ते काश्यपस्य सम्यक्संबुद्धस्य कल्पिकारका आसन्। ते भिक्षूणां भैषज्यानि क्काथयमानाः स्थालिकां भञ्जते। तेषां भिक्षूणां विघातो भवति। ते तस्य कर्मणो 20 विपाकेन स्थाल्याकाराः संवृत्ताः। यं त्वं संघरक्षित सत्त्वमद्राक्षीर्मध्ये छिन्नस्तन्तुना धार्यमाणो गच्छति, स काश्यपस्य सम्यक्संबुद्धस्य प्रवचने प्रव्रजित आसील्लाभग्राहिकः। तेन यद्वार्षिकं लाभं तत् हैमन्तिकं परिणामितम्, यद्धैमन्तिकं तद्वार्षिकम्। तस्य कर्मणो विपाकेन मध्ये छिन्नस्तन्तुना धार्यमाणो गच्छति ॥

संघरक्षितावदानं त्रयोविंशतिमम् ॥



## २४ नागकुमारावदानम् ।

भिक्षवः संशयजाताः सर्वसंशयच्छेत्तारं बुद्धं भगवन्तं पृच्छन्ति—कुतो भदन्त तेन नागकुमारेण तत्प्रथमतः श्रद्धा प्रतिलब्धा ? भगवानाह—भूतपूर्वं भिक्षवोऽस्मिन्नेव भद्रकल्पे विंशतिवर्षसहस्रायुषि प्रजायां काश्यपो नाम शास्ता लोक उत्पन्नस्तथागतोऽर्हन् सम्यक्संबुद्धो विद्याचरणसंपन्नः सुगतो लोकविदनुत्तरः पुरुषदम्यसारथिः शास्ता देवमनुष्याणां बुद्धो भगवान् । स एवं श्रावकाणां धर्मं देशयति—एतानि भिक्षवोऽरण्यानि शून्यागाराणि पर्वतकन्दरगिरिगुहापलालपुञ्जाभ्यवकाशश्मशानवनप्रस्थानि प्रान्तानि शयनासनानि ध्यायत । भिक्षवो मा प्रमादत । मा पश्चाद्विप्रतिसारिणो भूत । इदमस्माकमनुशासनम् । तत्र केचिद्भिक्षवः सुमेरुपरिषण्डायां गत्वा ध्यायन्ति, केचिन्मन्दाकिन्याः पुष्करिण्यास्तीरे, केचिदनवतप्ते महासरसि, केचित् सप्तसु काञ्चनमयेषु पर्वतेषु, केचित् तासु तासु ग्रामनिगमराजराष्ट्रधानीषु गत्वा ध्यायन्ति ॥

अन्यतमश्च चिरजातको नागकुमारः सुपर्णिना पक्षिराजेन सुमेरुपरिषण्डायामुपरिष्टादपह्रियते । यावत् तेन भिक्षवो ध्यानाध्ययनयोगमनसिकारयुक्ता विहरन्तो दृष्टाः । दृष्ट्वा चास्य चित्तमभिप्रसन्नम् । प्रसादजातः संलक्षयति—मुक्ता ह्येते आर्यका एवंविधाद् दुःखात् । च्युतः कालगतो वाराणस्यां षट्कर्मनिरते ब्राह्मणकुले जातः । उन्नीतो वर्धितो महान् संवृत्तः । सोऽपरेण समयेन काश्यपस्य सम्यक्संबुद्धस्य शासने प्रव्रजितः । तेनोद्यता घटता व्यायच्छता सर्वक्लेशप्रहाणादर्हत्त्वं साक्षात्कृतम् । अर्हन् संवृत्तः पूर्ववद्यावन्मान्यश्च पूज्यश्चाभिवन्द्यश्च संवृत्तः । स संलक्षयति—कुतोऽहं च्युतः ? तिर्यक्षु । कुत्रोपपन्नः ? मनुष्येषु । कुत्र मम मातापितरौ ? यावत् पश्यति नागभवने रुदन्तौ तिष्ठतः । स तत्र गतः । गत्वा पृच्छितुमारब्धः—अम्ब तात कस्यार्थे रुदितः ? तौ कथयतः—आर्य, सुचिरजातकोऽस्माकं नागकुमारः सुपर्णिना पक्षिराजेनापहृतः । स कथयति—अहमेवासौ । आर्य, तादृशः स दुष्टनागो यद्वयं सुगतिगमनमपि न संभावयामः, प्रागेवेदृशानां धर्माणां लाभी भविष्यति । तेन तौ स्मारितौ । पादयोर्निपत्य कथयतः—आर्य, एवंविधास्त्वया गुणगणा अधिगताः । आर्य त्वं पिण्डकेनार्थी, वयं पुण्येनार्थिकाः । इहैव त्वमागम्य दिवसे दिवसे भक्तकृत्यं कृत्वा गच्छ । स नागभवने दिव्यां सुधां परिभुक्त्वा आगच्छति । तस्य श्रामणेरकः सार्धंविहारी । स भिक्षुभिरुक्तः—श्रामणेरक, अयं ते उपाध्यायः कुत्र भुक्त्वा भुक्त्वा आगच्छति ? स कथयति—नाहं जाने । ते कथयन्ति—नागभवने दिव्यां सुधां परिभुज्य परिभुज्यागच्छति । त्वं कस्यार्थे न गच्छसि ? स कथयति—अयं महर्द्धिको महानुभावो येन गच्छति । कथमहं गच्छामि ? ते कथयन्ति—यदा अयं ऋद्ध्या गच्छति, तदा त्वमस्य चीवरकर्णिकं गृहाण । स कथयति—मा पतेयम् । ते कथयन्ति—भद्रमुख, यदि सुमेरुः पर्वतराजा चीवरकर्णिकमवलम्बते, नासौ पतेत्, प्रागेव त्वं पतिष्यसीति । यो यस्मिन् स्थानेऽन्तर्धास्यति, तेन तत्र निमित्तमुद्गृहीतम् । स तत्प्रदेशं पूर्वमेव गत्वा अवस्थितः । स चान्तर्धास्यतीति तेन चीवरकर्णिकं गृहीतम् । तौ उपरि विहायसा

प्रक्रान्तौ यावत् तौ नागैर्दृष्टौ। तयोर्द्वे ते आसनप्रज्ञप्तिकृतौ। द्वौ मण्डलकौ आमार्जितौ। स संलक्षयति—कस्यार्थेऽयमपर आसनः प्रज्ञप्तः? स प्रतिनिवर्त्य पश्यति यावत् श्रामणेरकम्। स कथयति—भद्रमुख, त्वमप्यागतः? उपाध्याय, आगतोऽहम्। शोभनम्। नागाः संलक्षयन्ति—अयमार्यो महर्द्धिको महानुभावः। शक्यते दिव्यां सुधां कारयितुम्। अयमन्यो न शक्यते।
O 246 5 तैस्तस्य दिव्या सुधा दत्ता, तस्यापि प्राकृत आहारः। स तस्य पात्रग्राहकः। तेन तस्य पात्रं गृहीतं यावत् तत्रैका ओदनमिज्य (?) वतिष्ठते। सा तेनास्ये प्रक्षिप्ता यावद्दिव्यमास्वादनम्। स संलक्षयति—ईदृशा अपि मत्सरिणो नागाः। एकध्ये निषण्णयोरस्य दिव्या सुधा दत्ता, ममापि प्राकृत आहारः। स प्रणिधानं कर्तुमारब्धः—यन्मया भगवति काश्यपे सम्यक्संबुद्धेऽनुत्तरे महादक्षिणीये ब्रह्मचर्यं चीर्णम्, अनेनाहं कुशलमूलेनैतं नागमस्माद्भवना-
10 च्च्यावयित्वा अत्रैवोपपद्येयमिति। तस्य दृष्ट एव धर्मे उभाभ्यां पाणिभ्यां जलं स्यन्दितुमारब्धम्। नागस्यापि शिरोर्तिर्बाधितुमारब्धा। स कथयति—आर्य, अनेन श्रामणेरकेनाशोभनचित्तमुत्पादितम्। प्रतिनिवर्तापयतु एनम्। स कथयति—भद्रमुख, अपाया ह्येते, निवर्तय चित्तम्। स गाथां भाषते—

प्रवणीभूतमिदं चित्तं न शक्नोमि निवारयितुम्।
15 इहस्थस्यैव मे भदन्त पाणिभ्यां स्यन्दते जलम्॥ १॥

स तं नागं तस्माद्भवनाच्च्यावयित्वा तत्रैवोपपन्नः। तत्र भिक्षवस्तेन नागकुमारेण तत्प्रथमतः श्रद्धा प्रतिलब्धा॥

इति श्रीदिव्यावदाने नागकुमारावदानम्॥



## २५ संघरक्षितावदानम् (२)।

भिक्षवः संशयजाताः सर्वसंशयच्छेत्तारं बुद्धं भगवन्तं पृच्छन्ति—किं भदन्त आयुष्मता संघरक्षितेन कर्म कृतम्, यस्य कर्मणो विपाकेनाढ्ये महाधने महाभोगे कुले जातो भगवतोऽन्तिके प्रव्रज्य सर्वक्लेशप्रहाणादर्हत्त्वं साक्षात्कृतम्? एवं तं च वैनेयकार्यं कृतम्? भगवानाह—संघरक्षितेनैव भिक्षवः कर्मानि कृतानि उपचितानि पूर्ववत्। भूतपूर्वं भिक्षवोऽस्मिन् एव भद्रके कल्पे विंशतिवर्षसहस्रायुषि प्रजायां काश्यपो नाम शास्ता पूर्ववत्। 5 C 347
तस्यायं शासने प्रव्रजित आसीद्वैयावृत्यकरः। अस्य तत्र पञ्च सार्धंविहारिशतानि। यद्भूयसा एककर्वटनिवासी जनकायः, अस्यैवाभिप्रसन्नः। अनेन तत्र यावदायुःपर्यन्तं ब्रह्मचर्यं चीर्णम्, न कश्चिद्गुणगणोऽधिगतः। अपरेण समयेन ग्लानीभूतः। मूलगण्डपत्रपुष्पफलभैषज्यैरुपस्थीयमानो हीयत एव। मरणसमये प्रणिधानं कर्तुमारब्धः—यन्मया काश्यपे 10
भगवति सम्यक्संबुद्धेऽनुत्तरे महादक्षिणीये यावदायुर्ब्रह्मचर्यं चीर्णम्, न कश्चिद्गुणगणोऽधिगतः, अनेनाहं कुशलमूलेन योऽसौ भगवता काश्यपेन सम्यक्संबुद्धेनोत्तरो नाम माणवो वर्षशतायुषि प्रजायामवश्यभागीयकस्य भाव्यतायां बुद्धो व्याकृतः, तस्य शासने प्रव्रज्य सर्वक्लेशप्रहाणादर्हत्त्वं साक्षात्कुर्याम्। ततः पश्चात् सार्धंविहारिण उपसंक्रान्ताः। ते कथयन्ति—उपाध्याय, अस्ति किंचित् त्वया गुणगणमधिगतम्? स कथयति—नास्ति। किं 15
प्रणिधानं कृतम्? इदं चेदं च। ते कथयन्ति—वयमप्युपाध्यायमेव कल्याणमित्रमागम्य तस्यैव भगवतोऽन्तिके सर्वक्लेशप्रहाणादर्हत्त्वं साक्षात्कुर्युः। कर्वटनिवासिना जनकायेन श्रुतं ग्लान आर्यक इति। तेऽप्युपसंक्रान्ताः। अस्ति किंचिदार्येण गुणगणमधिगतम्? नास्ति। किं प्रणिधानं कृतम्? इदं चेदं च। ते कथयन्ति—वयमप्यार्यमेव कल्याणमित्रमागम्य तस्यैव भगवतोऽन्तिके सर्वक्लेशप्रहाणादर्हत्त्वं साक्षात्कुर्युः॥ 20

किं मन्यध्वे भिक्षवः? योऽसौ वैयावृत्यकरः, एष एवासौ संघरक्षितो भिक्षुः। यानि तानि पञ्च सार्धंविहारिशतानि, एतान्येव तानि पञ्चभिक्षुशतानि। योऽसौ कर्वटनिवासी जनकायः, एतान्येव तानि पञ्च वणिक्शतानि। यदनेन तत्र धर्मवैयावृत्यं कृतम्, तस्य कर्मणो विपाकेनाढ्ये महाधने महाभोगे कुले उपपन्नः। यत् तन्मरणसमये प्रणिधानं C 348
कृतम्, तस्य कर्मणो विपाकेन ममान्तिके प्रव्रज्य सर्वक्लेशप्रहाणादर्हत्त्वं साक्षात्कृतमेवं च 25
वैनेयकार्यं कृतम्॥

इति हि भिक्षव एकान्तकृष्णानां कर्मणामेकान्तकृष्णो विपाकः....पूर्ववत्॥

---

## २६ पांशुप्रदानावदानम् ।

योऽसौ स्वमांसतनुभिर्यजनानि कृत्वा
तावच्चिरं करुणया जगतो हिताय ।
तस्य श्रमस्य सफलीकरणाय सन्तः
5 संमार्जितं शृणुत सांप्रतभाष्यमाणम् ॥ १ ॥

एवं मया श्रुतम् । एकस्मिन् समये भगवान् श्रावस्त्यां विहरतीति सूत्रं वक्तव्यम् । अत्र तावद्भगवत्तथागतवदनाम्भोधरविवरप्रत्युद्गतवचनसरत्सलिलधारासंपातापनीतरागद्वेषमोह-मदमानमायाशाठ्यपङ्कपटलानां शब्दन्यायादितर्कशास्त्रार्थावलोकनोत्पन्नप्रज्ञाप्रदीपप्रोत्सारित-कुशास्त्रदर्शनान्धकाराणां संसारतृष्णाछेदिप्रवरसद्धर्मपयःपानशौण्डानां गुरूणां संनिधौ 10 सर्वाववादकं श्रेष्ठं शक्रब्रह्मेशानयमवरुणकुवेरवासवसोमादित्यादिभिरप्यप्रतिहतशासनं कन्दर्प-दर्पापमर्दनशूरं महात्मानमतिमहर्द्धिकं स्थविरोपगुप्तमारभ्य कांचिदेव विबुद्धजनमनः-प्रसादकरीं धर्म्यां कथां समनुस्मरिष्यामः । तत्र तावद्गुरुभिरवहितश्रोत्रैर्भवितव्यम् ॥

एवमनुश्रूयते—यदा भगवान् परिनिर्वाणकालसमये पलालनागं विनीय कुम्भकारीं चण्डालीं गोपालीं च, तेषां मथुरामनुप्राप्तः, तत्र भगवानायुष्मन्तमानन्दमामन्त्रयते स्म—अस्यामानन्द C 349 15 मथुरायां मम वर्षशतपरिनिर्वृतस्य गुप्तो नाम गान्धिको भविष्यति । तस्य पुत्रो भविष्यत्युप-गुप्तो नाम अलक्षणको बुद्धो यो मम वर्षशतपरिनिर्वृतस्य बुद्धकार्यं भवि(करि)ष्यति । तस्याववादेन बहवो भिक्षवः सर्वक्लेशप्रहाणादर्हत्त्वं साक्षात्करिष्यन्ति । तेऽष्टादशहस्ता-मायामेन द्वादशहस्तां विस्तारेण चतुरङ्गुलमात्राभिः शणकाभिः पूजयिष्यन्ति । एषोऽग्रो मे आनन्द श्रावकाणां भविष्यत्यववादकानां यदुत उपगुप्तो भिक्षुः । पश्यसि त्वमानन्द दूरत 20 एव नीलनीलाम्बरराजिम्? एवं भदन्त । एष आनन्द रुरुमुण्डो नाम पर्वतः । अत्र वर्षशतपरिनिर्वृतस्य तथागतस्य शाणकवासी नाम भिक्षुर्भविष्यति । सोऽत्र रुरुमुण्डपर्वते विहारं प्रतिष्ठापयिष्यति, उपगुप्तं च प्रव्राजयिष्यति । मथुरायामानन्द नटो भटश्च द्वौ भ्रातरौ श्रेष्ठिनौ भविष्यतः । तौ रुरुमुण्डपर्वते विहारं प्रतिष्ठापयिष्यतः । तस्य नटभटिकेति संज्ञा भविष्यति । एतदग्रं मे आनन्द भविष्यति शमथानुकूलानां शय्यासनानां यदिदं 25 नटभटिकारण्यायतनम् । अथायुष्मानानन्दो भगवन्तमिदमवोचत्—आश्चर्यं भदन्त यदीदृश-मायुष्मानुपगुप्तो बहुजनहितं करिष्यति । भगवानाह—न आनन्द एतर्हि, यथा अतीतेऽप्यध्वनि तेन विनिपतितशरीरेणाप्यत्रैव उरुमुण्डपर्वते त्रयः पार्श्वाः । एकत्र प्रदेशे पञ्च प्रत्येकबुद्ध-शतानि प्रतिवसन्ति । द्वितीये पञ्चऋषिशतानि । तृतीये पञ्चमर्कटशतानि । तत्र योऽसौ पञ्चानां मर्कटशतानां यूथपतिः, स तं यूथमपहाय यत्र पार्श्वे पञ्च प्रत्येकबुद्धशतानि प्रति-30 वसन्ति, तत्र गतः । तस्य तान् प्रत्येकबुद्धान् दृष्ट्वा प्रसादो जातः । स तेषां प्रत्येकबुद्धानां शीर्णपर्णानि मूलफलानि चोपनामयति । यदा च ते पर्यङ्केनोपविष्टा भवन्ति, स वृद्धान्ते प्रणामं कृत्वा यावन्नवान्तं गत्वा पर्यङ्केनोपविशति, यावत् ते प्रत्येकबुद्धाः परिनिर्वृताः ।

स तेषां शीर्णपर्णानि मूलफलानि चोपनामयति, ते न प्रतिगृह्णन्ति। स तेषां चीवरकर्णि- C 350
कान्याकर्षयति, पादौ गृह्णाति। यावत् स मर्कटश्चिन्तयति—नियतमेते कालगता भविष्यन्ति।
ततः स मर्कटः शोचित्वा परिदेवित्वा च द्वितीयं पार्श्वं गतो यत्र पञ्च ऋषिशतानि प्रति-
वसन्ति। ते च ऋषयः केचित् कण्टकापाश्रयाः, केचिद्भस्मापाश्रयाः, केचिदूर्ध्वहस्ताः,
केचित् पञ्चातपावस्थिताः। स तेषां तेषामीर्यापथान् विकोपयितुमारब्धः। ये कण्टकापा- 5
श्रयास्तेषां कण्टकानुद्धरति। भस्मापाश्रयाणां भस्म विधुनोति। ऊर्ध्वहस्तानामधो हस्तं
पातयति। पञ्चातपावस्थितानामग्निमवकिरति। यदा च तैरीर्यापथो विकोपितो भवति, तदा
स तेषामग्रतः पर्यङ्कं बध्नाति। यावत् तैर्ऋषिभिराचार्याय निवेदितम्। तेनापि चोक्तम्—
पर्यङ्केन तावन्निषीदथ, यावत् तानि पञ्च ऋषिशतानि पर्यङ्केनोपविष्टानि। तेऽनाचार्यका
अनुपदेशकाः सप्तत्रिंशद्बोधिपक्षान् धर्मानामुखीकृत्य प्रत्येकां बोधिं साक्षात्कृतवन्तः। 10
अथ तेषां प्रत्येकबुद्धानामेतदभवत्—यत् किंचिदस्माभिः श्रेयोऽवाप्तम्, तत्सर्वमिमं मर्कट-
मागम्य। तैर्यावत् स मर्कटः फलमूलैः परिपालितः, कालगतस्य च तच्छरीरं
गन्धकाष्ठैर्ध्मापितम्॥

तत्किं मन्यसे आनन्द? योऽसौ पञ्चानां मर्कटशतानां यूथपतिः, स एष उपगुप्तः।
तदापि तेन विनिपतितशरीरेणाप्यत्रैवोरुमुण्डे पर्वते बहुजनहितं कृतम्। अनागतेऽप्यध्वनि 15
वर्षशतपरिनिर्वृतस्य मम अत्रैवोरुमुण्डे पर्वते बहुजनहितं करिष्यति। तच्च यथैवं तथोपदर्शि-
यिष्यामः—यदा स्थविरेण शाणकवासिना उरुमुण्डे पर्वते विहारः प्रतिष्ठापितः, समन्वाहरति—
किमसौ गान्धिक उत्पन्नः, अथाद्यापि नोत्पद्यते इति? पश्यत्युत्पन्नम्। स यावत् समन्वा-
हरति—योऽसौ तस्य पुत्र उपगुप्तो नाम्ना अलक्षणको बुद्धो निर्दिष्टः, यो मम वर्षशतपरि-
निर्वृतस्य बुद्धकार्यं करिष्यतीति, किमसौ उत्पन्नोऽद्यापि नोत्पद्यते? तेन यावदुपायेन गुप्तो 20 C 351
गन्धिको भगवच्छासनेऽभिप्रसादितः। स यदा अभिप्रसन्नस्तदा स्थविरः संबहुलैर्भिक्षुभिः
सार्धमेकदिवसं तस्य गृहं प्रविष्टः। अपरस्मिन्नहन्यात्मद्वितीयः। अन्यस्मिन्नहन्येकाकी।
यावद्गुप्तो गन्धिकः स्थविरं शाणकवासिनमेकाकिनं दृष्ट्वा कथयति—न खलु आर्यस्य कश्चित्
पश्चाच्छ्रमणः? स्थविर उवाच—जराधर्माणां कुतोऽस्माकं पश्चाच्छ्रमणो भवति? यदि केचित्
श्रद्धापुरोगेन प्रव्रजन्ति, तेऽस्माकं पश्चाच्छ्रमणा भवन्ति। गुप्तो गान्धिक उवाच—आर्य, अहं 25
तावद्गृहवासे परिगृद्धो विषयाभिरतश्च। न मया शक्यं प्रव्रजितुम्। अपि तु योऽस्माकं
पुत्रो भवति, तं वयमार्यस्य पश्चाच्छ्रमणं दास्यामः। स्थविर उवाच—वत्स, एवमस्तु। अपि तु
दृढप्रतिज्ञां स्मरेथास्त्वमिति। यावद्गुप्तस्य गान्धिकस्य पुत्रो जातः। तस्याश्वगुप्त इति नामधेयं
कृतम्। स यदा महान् संवृत्तस्तदा स्थविरः शाणकवासी गुप्तं गान्धिकमधिगम्योवाच—
वत्स, त्वया प्रतिज्ञातम्—योऽस्माकं पुत्रो भविष्यति, तं वयमार्यस्य पश्चाच्छ्रमणं दास्यामः। 30
अनुजानीहि, प्रव्राजयिष्यामीति। गान्धिक उवाच—आर्य, अयमस्माकमेकपुत्रः। मर्षय नः।
योऽस्माकं द्वितीयः पुत्रो भविष्यति, तं वयमार्यस्य पश्चाच्छ्रमणं दास्यामः। यावत् स्थविरः

शाणकवासी समन्वाहरति—किमयं स उपगुप्तः ? पश्यति नेति । तेन स्थविरेणाभिहितः—एवमस्तु इति । तस्य यावद्द्वितीयः पुत्रो जातः । तस्य धनगुप्त इति नाम कृतम् । सोऽपि यदा महान् संवृत्तः, तदा स्थविरः शाणकवासी गुप्तं गान्धिकमुवाच—वत्स, त्वया प्रतिज्ञातम्—योऽस्माकं पुत्रो भविष्यति, तं वयमार्यस्य पश्चाच्छ्रमणं दास्यामः । अयं च ते पुत्रो जातः ।
5 अनुजानीहि, प्रव्राजयिष्यामीति । गान्धिक उवाच—आर्य मर्षय, एकोऽस्माकं बहिर्धा द्रव्यं संशयिष्यति, द्वितीयोऽन्तर्गृहे परिपालनं करिष्यतीति । अपि तु योऽस्माकं तृतीयः पुत्रो भविष्यति, स आर्यस्य दत्तः । यावत् स्थविरः शाणकवासी समन्वाहरति—किमयं स उपगुप्तः ? पश्यति नेति । ततः स्थविर उवाच—एवमस्तु इति । यावद्गुप्तस्य गान्धिकस्य तृतीयः पुत्रो जातोऽभिरूपो दर्शनीयः प्रासादिकोऽतिक्रान्तो मानुषवर्णमसंप्राप्तश्च दिव्यवर्णम् । तस्य
10 विस्तरेण जातौ जातिमहं कृत्वा उपगुप्त इति नाम कृतम् । सोऽपि यदा महान् संवृत्तः, यावत् स्थविरशाणकवासी गुप्तं गान्धिकमभिगम्योवाच—वत्स, त्वया प्रतिज्ञातम्—योऽस्माकं तृतीयः पुत्रो भविष्यति, वयमार्यस्य दास्यामः पश्चाच्छ्रमणार्थे । अयं ते तृतीयः पुत्र उत्पन्नः । अनुजानीहि, प्रव्राजयिष्यामीति । गुप्तो गान्धिक उवाच—आर्य, समयतः । यदा लाभोऽनुच्छेदो भविष्यतीति, तदा अनुज्ञास्यामि । यदा तेन समयः कृतः, तदा मारेण सर्वावती मथुरा
15 गन्धाविष्टा । ते सर्वे उपगुप्तसकाशाद्गन्धान् क्रीणन्ति । स प्रभूतानि दास्यति । यावत् स्थविरशाणकवासी उपगुप्तसकाशं गतः । उपगुप्तश्च गन्धापणे स्थितः । स धर्मेण व्यवहारं करोति, गन्धान् विक्रीणीते । स स्थविरेण शाणकवासिना अभिहितः—वत्स, कीदृशास्ते चित्तचेतसिकाः प्रवर्तन्ते क्लिष्टा वा अक्लिष्टा वेति ? उपगुप्त उवाच—आर्य, नैव जानामि कीदृशाः क्लिष्टाश्चित्तचेतसिकाः, कीदृशा अक्लिष्टा इति । स्थविरः शाणकवासी उवाच—वत्स,
20 यदि केवलं चित्तं परिज्ञातुं न शक्यसि, प्रतिपक्षं मोचयितुम् । तेन तस्य कृष्णिकपट्टिका दत्ता पाण्डुरिका च । यदि क्लिष्टं चित्तमुत्पद्यते, कृष्णिकां पट्टिकां स्थापय । अथाक्लिष्टं चित्तमुत्पद्यते, पाण्डुरां पट्टिकां स्थापय । शुभां मनसि कुरु, बुद्धानुस्मृतिं च भावयस्वेति तेनास्य व्यपदिष्टम् । तस्य यावदारब्धा अक्लिष्टाश्चित्तचेतसिकाः प्रवर्तितुम्, स द्वौ भागौ कृष्णिकानां स्थापयति, एकं पाण्डुरिकाणाम् । यावदर्धं कृष्णिकानां स्थापयति अर्धं पाण्डुरि-
25 काणाम् । यावत् द्वौ भागौ पाण्डुरिकाणां स्थापयति, एकं कृष्णिकानाम् । यावदनुपूर्वेण सर्वाण्येव शुक्लानि चित्तान्युत्पद्यन्ते, स पाण्डुरिकाणामेव पट्टिकां स्थापयति । धर्मेण व्यवहारं करोति ॥

मथुरायां वासवदत्ता नाम गणिका । तस्या दासी उपगुप्तसकाशं गत्वा गन्धान् क्रीणाति । सो वासवदत्तया चोच्यते—दारिके, मुष्यते स गान्धिकस्त्वया । बहून् गन्धानानयसीति ।
30 दारिकोवाच—आर्यदुहिते, उपगुप्तो गान्धिकदारको रूपसंपन्नश्चातुर्यमाधुर्यसंपन्नश्च धर्मेण व्यवहारं करोति । श्रुत्वा च वासवदत्ताया उपगुप्तसकाशे सानुरागं चित्तमुत्पन्नम् । तया यावद्दासी उपगुप्तसकाशं प्रेषिता—त्वत्सकाशमागमिष्यामि । इच्छामि त्वया सार्धं रतिमनुभवितुम् । यावद्दास्या

C 352 C 353

उपगुप्तस्य निवेदितम्। उपगुप्त उवाच अकालस्ते भगिनि मद्दर्शनायेति। वासवदत्ता पञ्चभिः पुराणशतैः परिचारयते। तस्या बुद्धिरुत्पन्ना—नियतं पञ्च पुराणशतानि नोत्सहते दातुम्। तया यावद्दासी उपगुप्तसकाशं प्रेषिता—न ममार्यपुत्रसकाशात् कार्षापणेनापि प्रयोजनम्। केवलमार्यपुत्रेण सह रतिमनुभवेयम्। दास्या तथा निवेदितम्। उपगुप्त उवाच—अकालस्ते भगिनि मद्दर्शनायेति। यावदन्यतरः श्रेष्ठिपुत्रो वासवदत्तायाः सकाशं प्रविष्टः। अन्यतरश्च सार्थवाह 5 उत्तरापथात् पञ्चशतमश्वपण्यं गृहीत्वा मथुरामनुप्राप्तः। तेनाभिहितम्—कतरा वेश्या सर्वप्रधाना? तेन श्रुतम्—वासवदत्तेति। स पञ्च पुराणशतानि गृहीत्वा बहूंश्च प्राभृतान् वासवदत्तायाः सकाशमभिगतः। ततो वासवदत्तया लोभाकृष्टेन तं श्रेष्ठिपुत्रं प्रघातयित्वाऽवस्करे प्रक्षिप्य सार्थवाहेन सह रतिमनुभूता। यावत् स श्रेष्ठिपुत्रो बन्धुभिरवस्कराद्धृत्य(तः)। राज्ञो निवेदितम्। ततो राज्ञा अभिहितम्—गच्छन्तु भवन्तः, वासवदत्तां हस्तपादौ कर्णनासं च 10 छित्त्वा श्मशाने छोरयन्तु। यावत् तैर्वासवदत्ता हस्तपादौ कर्णनासं च छित्त्वा श्मशाने छोरिता। यावदुपगुप्तेन श्रुतम्—वासवदत्ता हस्तपादौ कर्णनासं च छित्त्वा श्मशाने छोरिता। तस्य बुद्धिरुत्पन्ना—पूर्वं तया मम विषयनिमित्तं दर्शनमाकाङ्क्षितम्। इदानीं तु तस्या हस्तपादौ कर्णनासं च विकर्तितौ, इदानीं तु तस्या दर्शनकाल इति। आह च—

यदा प्रशस्ताम्बरसंवृताङ्गी 15
अभूद्विचित्राभरणैर्विभूषिता।
मोक्षार्थिनां जन्मपराङ्मुखानां C 351
श्रेयस्तदास्यास्तु न दर्शनं स्यात्॥ २॥

इदानीं तु तस्याः कालोऽयं द्रष्टुं गतमानरागहर्षायाः।
निशितासिविक्षतायाः स्वभावनियतस्य रूपस्य॥ ३॥ 20

यावदेकेन दारकेनोपस्थायकेन छत्रमादाय प्रशान्तेनेर्यापथेन श्मशानमनुप्राप्तः। तस्याश्च प्रेषिका पूर्वगुणानुरागात् समीपेऽवस्थिता काकादीन् निवारयति। तया च वासवदत्ताया निवेदितम्—आर्यदुहितः, यस्य त्वया अहं सकाशं पुनः पुनरनुप्रेषिता, अयं स उपगुप्तोऽभ्यागतः। नियतमेष कामरागार्त आगतो भविष्यति। श्रुत्वा च वासवदत्ता कथयति— 25

प्रनष्टशोभां दुःखार्तां भूमौ रुधिरपिञ्जराम्।
मां दृष्ट्वा कथमेतस्य कामरागो भविष्यति॥ ४॥

ततः प्रेषिकामुवाच—यौ हस्तपादौ कर्णनासं च मच्छरीराद्विकर्तितौ, तौ श्लेषयेति। तया यावत् श्लेषयित्वा पट्टकेन प्रच्छादिता। उपगुप्तश्चागत्य वासवदत्ताया अग्रतः स्थितः। ततो वासवदत्ता उपगुप्तमग्रतः स्थितं दृष्ट्वा कथयति—आर्यपुत्र, यदा मच्छरीरं स्वस्थभूतं विषयरत्यनुकूलम्, तदा मया आर्यपुत्रस्य पुनः पुनर्दूती विसर्जिता। आर्यपुत्रेणाभिहितम्— 30

अकालस्ते भगिनि मम दर्शनायेति। इदानीं मम हस्तपादौ कर्णनासौ च विकर्तितौ, स्वरुधिरकर्दम एवावस्थिता। इदानीं किमागतोऽसि? आह च—

इदं यदा पङ्कजगर्भकोमलं
महार्हवस्त्राभरणैर्विभूषितम्।
5 बभूव गात्रं मम दर्शनक्षमं
तदा न दृष्टोऽसि मयाल्पभाग्यया॥ ५॥

एतर्हि किं द्रष्टुमिहागतोऽसि
यदा शरीरं मम दर्शनाक्षमम्।
निवृत्तलीलारतिहर्षविस्मयं
10 भयावहं शोणितपङ्कलेपनम्॥ ६॥

उपगुप्त उवाच—

नाहं भगिनि कामार्तः संनिधावागतस्तव।
कामानामशुभानां तु स्वभावं द्रष्टुमागतः॥ ७॥

प्रच्छादिता वस्त्रविभूषणाद्यै-
15 र्बाह्यैर्विचित्रैर्मदनानुकूलैः।
निरीक्ष्यमाणा अपि यत्नवद्भि-
र्नाप्यत्र दृष्टासि भवेद्यथावत्॥ ८॥

इदं तु रूपं तव दृश्यमेतत्
स्थितं स्वभावे रचनाद्वियुक्तम्।
20 तेऽपण्डितास्ते च विगर्हणीया
C 355 ये प्राकृतेऽस्मिन् कुणपे रमन्ते॥ ९॥

त्वचावनद्धे रुधिरावसक्ते
चर्मावृते मांसघनावलिप्ते।
शिरासहस्रैश्च वृते समन्तात्
25 को नाम रज्येत इतः शरीरे॥ १०॥

अपि च भगिनि।

बहिर्भद्राणि रूपाणि दृष्ट्वा बालोऽभिरज्यते।
अभ्यन्तरविदुष्टानि ज्ञात्वा धीरो विरज्यते॥ ११॥
अवकृष्टावकृष्टस्य कुणपस्य ह्यमेध्यता।
30 मेध्याः कामोपसंहाराः कामिनः शुभसंज्ञिनः॥ १२॥

इह हि–

दौर्गन्ध्यं प्रतिवार्यते बहुविधैर्गन्धैरमेध्याकरै-
वैंक्लव्यं बहिराध्रियेत विविधैर्वस्त्रादिभिर्भूषणैः ।
खेदक्लेदमलादयोऽप्यशुचयस्तान्निर्हरत्यम्भसा
येनामेध्यकरङ्कमेतदशुभं कामात्मभिः सेव्यते ॥ १३ ॥ 5

संबुद्धस्य तु ये वचः सुवचसः शृण्वन्ति कुर्वन्त्यपि
ते कामान् श्रमशोकदुःखजननान् सद्भिः सदा गर्हितान् ।
त्यक्त्वा कामनिमित्तमुक्तमनसः शान्ते वने निर्गताः
पारं यान्ति भवार्णवस्य महतः संश्रित्य मार्गप्लवम् ॥ १४ ॥

श्रुत्वा वासवदत्ता संसारादुद्विग्ना । बुद्धगुणानुस्मरणाच्चावर्जितहृदयोवाच– 10

एवमेतत्तथा सर्वं यथा वदसि पण्डित ।
मे त्वां साधुं समासाद्य बुद्धस्य वचनं श्रुतम् ॥ १५ ॥

यावदुपगुप्तेन वासवदत्ताया अनुपूर्विकां कथां कृत्वा सत्यानि संप्रकाशितानि । C 356
उपगुप्तश्च वासवदत्तायाः शरीरस्वभावमवगम्य कामधातुवैराग्यं गतः । तेनात्मीयया धर्म-
देशनया सहसत्याभिसमयादनागामिफलं वासवदत्तया च स्रोतापत्तिफलं प्राप्तम् । ततो 15
वासवदत्ता दृष्टसत्या उपगुप्तं संरागयन्त्युवाच–

तवानुभावात्पिहितः सुघोरो
ह्यपायमार्गो बहुदोषयुक्तः ।
अपावृता स्वर्गगतिः सुपुण्या
निर्वाणमार्गश्च मयोपलब्धः ॥ १६ ॥ 20

अपि च । एषाहं तं भगवन्तं तथागतमर्हन्तं सम्यक्संबुद्धं शरणं गच्छामि धर्मं च
भिक्षुसंघं चेत्याह–

एषा व्रजामि शरणं विबुद्धनवकमलविमलधवलनेत्रम् ।
तममरबुधजनमहितं जिनं विरागं च संघं च ॥ १७ ॥ इति ॥

यावदुपगुप्तो वासवदत्तां धर्म्यया कथया संदर्श्य प्रक्रान्तः । अचिरप्रक्रान्ते चोपगुप्ते 25
वासवदत्ता कालगता देवेषूपपन्ना । देवतैश्च मथुरायामारोचितम्–वासवदत्तया उपगुप्त-
सकाशाद्धर्मदेशनां श्रुत्वा आर्यसत्यानि दृष्टानि, देवेषूपपन्नेति । श्रुत्वा च मथुरावास्तव्येन
जनकायेन वासवदत्तायाः शरीरे पूजा कृता ॥

यावत् स्थविरः शाणकवासी गुप्तं गान्धिकमभिगम्योवाच–अनुजानीहि उपगुप्तं प्रव्राज-
यिष्यामीति । गुप्तो गान्धिक उवाच–आर्य, एष समयः । यदा न लाभो न च्छेदो 30
भविष्यति, तदा अनुज्ञास्यामीति । यावत् स्थविरशाणकवासिना ऋद्धया तथा अधिष्ठितं यथा

न लाभो न च्छेदः। ततो गुप्तो गान्धिको गणयति, तुलयति, मापयति, पश्यति—न लाभो न च्छेदः। ततः स्थविरः शाणकवासी गुप्तं गान्धिकमुवाच—अयं हि भगवता बुद्धेन निर्दिष्टः मम वर्षशतपरिनिर्वृतस्य बुद्धकार्यं करिष्यतीति। अनुजानीहि, प्रव्राजयिष्यामीति। यावद्गुप्तेन गान्धिकेनाभ्यनुज्ञातः। ततः स्थविरेण शाणकवासिना उपगुप्तो नटभटिकारण्यायतनं 5 नीतः, उपसंपादितश्च। ज्ञप्तिचतुर्थं च कर्म व्यवसितम्। उपगुप्तेन च सर्वक्लेशप्रहाणादर्हत्त्वं साक्षात्कृतम्। ततः स्थविरेण शाणकवासिनाभिहितम्—वत्स उपगुप्त, त्वं भगवता निर्दिष्टो वर्षशतपरिनिर्वृतस्य ममोपगुप्तो नाम भिक्षुर्भविष्यत्यलक्षणको बुद्धः, यो मम वर्षशतपरिनिर्वृतस्य बुद्धकार्यं करिष्यतीति। एषोऽग्रो मे आनन्द श्रावकाणामववादकानां यदुत उपगुप्तो भिक्षुः। इदानीं वत्स शासनहितं कुरुष्वेति। उपगुप्त उवाच—एवमस्तु इति। 10 ततः स धर्मश्रवणेऽधीष्टः। मथुरायां च शब्दो विसृतः—उपगुप्तो नामालक्षणको बुद्धोऽद्य धर्मं देशयिष्यतीति। श्रुत्वा चानेकानि प्राणिशतसहस्राणि निर्गतानि। यावत् स्थविरोपगुप्तः समापद्यावलोकयति—कथं तथागतस्य परिषन्निषण्णा? पश्यति चार्धचन्द्राकारेण पर्षदवस्थिता। यावदवलोकयति—कथं तथागतेन धर्मदेशना कृता? पश्यति पूर्वकालकरणीयां कथां कृत्वा सत्यसंप्रकाशना कृता। सोऽपि पूर्वकालकरणीयां कथां कृत्वा सत्य- [C 357] 15 संप्रकाशनां कर्तुमारब्धः। मारेण च तस्यां पर्षदि मुक्ताहारवर्षमुत्सृष्टम्, वैनेयानां मनांसि व्याकुलीकृतानि, एकेनापि सत्यदर्शनं न कृतम्। यावत् स्थविरोपगुप्तो व्यवलोकयति—केनायं व्याक्षेपः कृतः? पश्यति मारेण। यावद्द्वितीये दिवसे बहुतरको जनकायो निर्गतः। उपगुप्तो धर्मं देशयति, मुक्ताहारं च वर्षोपवर्षितमिति। यावत् द्वितीयेऽपि दिवसे स्थविरोपगुप्तेन पूर्वकालकरणीयां कथां कृत्वा सत्यसंप्रकाशनायामारब्धायां मारेण चास्यां पर्षदि सुवर्णवर्ष- 20 मुत्सृष्टम्, वैनेयानां मनांसि संक्षोभितानि, एकेनापि सत्यदर्शनं न कृतम्। यावत् स्थविरोपगुप्तो व्यवलोकयति—केनायं व्याक्षेपः कृतः? पश्यति मारेण पापीयसेति। यावत् तृतीये दिवसे बहुतरको जनकायो निर्गतः। उपगुप्तो धर्मं देशयति, मुक्तावर्षं सुवर्णवर्षं च पततीति। यावत् तृतीयेऽपि दिवसे स्थविरोपगुप्तः पूर्वकालकरणीयां कथां कृत्वा सत्या न्यारब्धः संप्रकाशयितुम्। मारेण च नातिदूरे नाटकमारब्धम्। दिव्यानि च वाद्यानि संप्रवा- 25 दितानि, दिव्याश्चाप्सरसो नाटयितुं प्रवृत्ताः। यावद्वीतरागो जनकायो दिव्यानि रूपाणि दृष्ट्वा दिव्यांश्च शब्दान् श्रुत्वा मारेणाकृष्टः। अतो मारेणोपगुप्तस्य पर्षदाकृष्टा। प्रीतिमनसा मारेण स्थविरोपगुप्तस्य शिरसि माला बद्धा। यावत् स्थविरोपगुप्तः समन्वाहरितुमारब्धः—कोऽयम्? पश्यति मारः। तस्य बुद्धिरुत्पन्ना—अयं मारो भगवच्छासने महान्तं व्याक्षेपं करोति। किमर्थमयं भगवता न विनीतः? पश्यति ममायं विनेयः। तस्य च विनयात 30 सत्त्वानुग्रहादहं भगवता अलक्षणको बुद्धो निर्दिष्टः। यावत् स्थविरोपगुप्तः समन्वाहरति—किमस्य विनयकाल उपस्थित आहोस्विन्नेति? पश्यति—विनयकाल उपस्थितः। ततः स्थविरोपगुप्तेन त्रयः कुणपा गृहीताः—अहिकुणपं कुर्कुरकुणपं मनुष्यकुणपं च। ऋद्ध्या च

पुष्पमालामभिनिर्माय मारसकाशमभिगतः। दृष्ट्वा च मारस्य प्रीतिरुत्पन्ना—उपगुप्तोऽपि मया आकृष्ट इति। ततो मारेण स्वशरीरमुपनामितम्। स्थविरोपगुप्तः स्वयमेव बध्नाति। ततः स्थविरोपगुप्तेनाहिकुणपं मारस्य शिरसि बद्धम्, कुर्कुरकुणपं ग्रीवायाम्, कर्णावसक्तं मनुष्य- C 358
कुणपं च। ततः समालभ्योवाच—

भिक्षुजनप्रतिकूला माला बद्धा यथैव मे भवता। 5
कामिजनप्रतिकूलं तव कुणपमिदं मया बद्धम्॥ १८॥

यत्ते बलं भवति तत्प्रतिदर्शयस्व
बुद्धात्मजेन हि सहाद्य समागतोऽसि।
उद्वृत्तमप्यनिलभिन्नतरंगवक्त्रं
व्यावर्तते मलयकुक्षिषु सागराम्भः॥ १९॥ 10

अथ मारस्तं कुणपमपनेतुमारब्धः। परमपि च स्वयमनुप्रविश्य पिपीलिक इवाद्रिराजमपनयितुं न शशाक। असमर्थो वैहायसमुत्पत्योवाच—

यदि मोक्तुं न शक्यामि कण्ठात् श्वकुणपं स्वयम्।
अन्ये देवापि मोक्ष्यन्ते मत्तोऽभ्यधिकतेजसः॥ २०॥

स्थविर उवाच— 15

ब्रह्माणं शरणं शतक्रतुं वा
दीप्तं वा प्रविश हुताशमर्णवं वा।
न क्लेदं न च परिशोषणं न भेदं
कण्ठस्थं कुणपमिदं तु यास्यतीह॥ २१॥

समहेन्द्ररुद्रोपेन्द्रद्रविणेश्वरयमवरुणकुबेरवासवादीनां देवानामभिगम्य अकृतार्थ एव 20
ब्रह्माणमभिगतः। तेन चोक्तः—मर्षय वत्स,

शिष्येण दशबलस्य स्वयमृद्ध्या कृतान्तमर्यादा।
कस्तां भेत्तुं शक्तो वेलां वरुणालयस्येव॥ २२॥

अपि पद्मनालसूत्रैर्बद्ध्वा हिमवन्तमुद्धरेत् कश्चित्।
न तु तव कण्ठासक्तं श्वकुणपमिदमुद्धरेयमहम्॥ २३॥ 25

कामं ममापि महदस्ति बलं तथापि
नाहं तथागतसुतस्य बलेन तुल्यः।
तेजस्विनां न खलु न ज्वलनेऽस्ति किं तु
नासौ द्युतिर्हुतवहे रविमण्डले या॥ २४॥

मारोऽब्रवीत्—किमिदानीमाज्ञापयसि? कं शरणं व्रजामीति? ब्रह्माब्रवीत्—

शीघ्रं तमेव शरणं व्रज यं समेत्य
भ्रष्टस्त्वं ऋद्धिविभवाद्यशसः सुखाच्च।
भ्रष्टो हि यः क्षितितले भवतीह जन्तु-
5 रुत्तिष्ठति क्षितिमसाववलम्ब्य भूयः॥ २५॥

अथ मारस्तथागतशिष्यसामर्थ्यमुपलभ्य चिन्तयामास—

C 359 ब्रह्मणा पूज्यते यस्य शिष्याणामपि शासनम्।
तस्य बुद्धस्य सामर्थ्यं प्रमातुं को नु शक्नुयात्॥ २६॥
कर्तुकामोऽभविष्यत्कां शिष्टिं स मम सुव्रतः।
10 यां नाकरिष्यत्क्षान्त्या तु तेनाहमनुरक्षितः॥ २७॥

किं बहुना?

अद्यावैमि मुनेर्महाकरुणतां तस्यातिमैत्र्यात्मनः
सर्वोपद्रवविप्रमुक्तमनसश्चामीकराद्रिद्युतेः।
मोहान्धेन हि तत्र तत्र स मया तैस्तैर्नयैः खेदित-
15 स्तेनाहं च तथापि नाम बलिना नैवाप्रियं श्रावितः॥ २८॥

अथ कामधात्वधिपतिर्मारः नास्त्यन्या गतिरन्यत्रोपगुप्तकादेवेति ज्ञात्वा सर्वमुत्सृज्य स्थविरोपगुप्तसमीपमुपेत्य पादयोर्निपत्योवाच—भदन्त, किमविदितमेतद्भदन्तस्य यथा बोधिमूलमुपादाय मया भगवतो विप्रियशतानि कृतानि? कुतः?

शालायां ब्राह्मणग्रामे मामासाद्य स गौतमः।
20 भक्तच्छेदमपि प्राप्य नाकार्षीन्मम विप्रियम्॥ २९॥
गौर्भूत्वा सर्पवत् स्थित्वा कृत्वा शाकटिकाकृतिम्।
स मयायासितो नाथो न चाहं तेन हिंसितः॥ ३०॥
त्वया पुनरहं वीर त्यक्त्वा (तु) सहजां दयाम्।
सदेवासुरमध्येषु लोकेष्वद्य विडम्बितः॥ ३१॥

25 स्थविरोऽब्रवीत्—पापीयन्, कथमपरीक्ष्यैव तथागतमाहात्म्येषु श्रावकमुपसंहरसि—

किं सर्षपेण समतां नयसीह मेरुं
खद्योतकेन रविं मण्डलिना समुद्रम्।
अन्या हि सा दशबलस्य कृपा प्रजासु
न श्रावकस्य हि महाकरुणास्ति सौम्य॥ ३२॥

30 अपि च—

यदर्थेन भगवता सापराधोऽपि मर्षितः।
इदं तत् कारणं साक्षादस्माभिरुपलक्षितम्॥ ३३॥

मार उवाच—

ब्रूहि ब्रूहि श्रीमतस्तस्य भावं
सङ्गं छेत्तुं क्षान्तिगुप्तव्रतस्य ।
योऽसौ मोहान्नित्यमायासितो मे
तेनाहं च प्रेक्षितो मैत्र्येणैव ॥ ३४ ॥ 5

स्थविर उवाच—शृणु सौम्य, त्वं हि भगवत्यसकृदसकृदवस्खलितः । न च बुद्धावरोपितानामकुशलानां धर्माणामन्यत् प्रक्षालनमन्यत्र तथागतप्रसादादेव ।

तदेतत्कारणं तेन पश्यता दीर्घदर्शिना ।
त्वं नाप्रियमिह प्रोक्तः प्रियाण्येव तु लम्भितः ॥ ३५ ॥

न्यायेनानेन भक्तिस्तव हृदि जनिता तेनाग्रमतिना 10 C 360
स्वल्पापि ह्यत्र भक्तिर्भवति मतिमतां निर्वाणफलदा ।
संक्षेपाद्यत्कृतं ते वृजिनमिह मुने मोहान्धमनसा
सर्वं प्रक्षालितं तत्तव हृदयगतैः श्रद्धाम्बुविसरैः ॥ ३६ ॥

अथ मारः कदम्बपुष्पवदाहृष्टरोमकूपः सर्वाङ्गेन प्रणिपत्योवाच—

स्थाने मया बहुविधं परिखेदितोऽसौ 15
प्राक् सिद्धितश्च भुवि सिद्धमनोरथेन ।
सर्वं च मर्षितमृषिप्रवरेण तेन
पुत्रापराध इव सानुनयेन पित्रा ॥ ३७ ॥

स बुद्धप्रसादाप्यायितमनाः सुचिरं बुद्धगुणाननुस्मृत्य स्थविरस्य पादयोर्निपत्योवाच—

अनुग्रहो मेऽद्य परः कृतस्त्वया 20
निवेशितं यन्मयि बुद्धगौरवम् ।
इदं तु कण्ठव्यवलम्बि मैत्र्या
महर्षिकोपाभरणं विसर्जय ॥ ३८ ॥

स्थविर उवाच—समयतो विमोक्ष्यामीति । मार उवाच—कः समय इति? स्थविर उवाच—अद्यप्रभृति भिक्षवो न विहेठयितव्या इति । मारोऽब्रवीत्—न विहेठयिष्ये । कमपरमाज्ञापयसीति? स्थविर उवाच—एवं तावच्छासनकार्यं प्रति ममाज्ञा । स्वकार्यं प्रति विज्ञापयिष्यामि भवन्तम् । ततो मारः ससंभ्रम उवाच—प्रसीद स्थविर, किमाज्ञापयसि? स्थविरोऽब्रवीत्—स्वयमत्रगच्छसि—यदहं वर्षशतपरिनिर्वृते भगवति प्रव्रजितः, तद्धर्मकायो मया तस्य दृष्टः । त्रैलोक्यनाथस्य काञ्चनाद्रिनिभस्तस्य न दृष्टो रूपकायो मे । 25

तदनु त्वमनुग्रहमप्रतिम-
मिह विदर्शय बुद्धविग्रहम् ।
प्रियमधिकमतो हि नास्ति मे
दशबलरूपकुतूहलो ह्यहम् ॥ ३९ ॥

5 मार उवाच—तेन हि ममापि समयः श्रूयताम् ।
सहसा तमिहोद्वीक्ष्य बुद्धनेपथ्यधारिणम् ।
न प्रणामस्त्वया कार्यः सर्वज्ञगुणगौरवात् ॥ ४० ॥

बुद्धानुस्मृतिपेशलेन मनसा पूजां यदि त्वं मयि
स्वल्पामप्युपदर्शयिष्यसि विभो दग्धो भविष्याम्यहम् ।
10 का शक्तिर्मम वीतरागविहितां सोढुं प्रणामक्रियां
हस्तन्यासमिवोद्वहन्ति न गजस्यैरण्डवृक्षाङ्कुराः ॥ ४१ ॥

C 361 स्थविरोऽप्याह—एवमस्तु । न भवन्तं प्रणमिष्यामीति । मारोऽब्रवीत्—तेन हि मुहूर्त-
मागमय, यावदहं वनगहनमनुप्रविश्य—

शूरं वञ्चयितुं पुरा व्यवसितेनोत्तप्तहेमप्रभं
15 बौद्धं रूपमचिन्त्यबुद्धिविभवादासीन्मया यत्कृतम् ।
कृत्वा रूपमहं तदेव नयनप्रह्लादिकं देहिना-
मेषोऽप्यर्कमयूखजालममलं भामण्डलेनाक्षिपन् ॥ ४२ ॥

अथ स्थविरः एवमस्तु इत्युक्त्वा तं कुणपमपनीय तथागतरूपदर्शनोत्सुकोऽवस्थितः ।
मारश्च वनगहनमनुप्रविश्य बुद्धरूपं कृत्वा नट इव सुरुचिरनेपथ्यस्तस्माद्वनगहनादारब्धो
20 निष्क्रमितुम् । वक्ष्यते हि—

ताथागतं वपुरथोत्तमलक्षणाढ्य-
मादर्शयन्नयनशान्तिकरं नराणाम् ।
प्रत्यग्ररङ्गमिव चित्रपटं महार्ह-
मुद्घाटयन् वनमसौ तदलंचकार ॥ ४३ ॥

25 अथ व्यामप्रभामण्डलमण्डितमसेचनकदर्शनं भगवतो रूपमभिनिर्माय दक्षिणे पार्श्वे
स्थविरशारद्वतीपुत्रं वामपार्श्वे स्थविरमहामौद्गल्यायनं पृष्ठतश्चायुष्मन्तमानन्दं बुद्धपात्रव्यग्रहस्तं
स्थविरमहाकश्यपानिरुद्धसुभूतिप्रभृतीनां च महाश्रावकाणां रूपाण्यभिनिर्माय अर्धत्रयोदशभि-
र्भिक्षुशतैरर्धचन्द्रेणानुपरिवृतं बुद्धवेषमादर्शयित्वा मारः स्थविरोपगुप्तस्यान्तिकमाजगाम ।
स्थविरोपगुप्तस्य च भगवतो रूपमिदमीदृशमिति प्रामोद्यमुत्पन्नम् । स प्रमुदितमनास्त्वरित-
30 मासनादुत्थाय निरीक्षमाण उवाच—

धिगस्तु तां निष्करुणामनित्यतां
भिनत्ति रूपाणि यदीदृशान्यपि।
शरीरमीदृक्किल तन्महामुने-
रनित्यतां प्राप्य विनाशमागतम् ॥ ४४ ॥

स बुद्धावलम्बनया स्मृत्या तथाप्यासक्तमनाः संवृत्तो यथा बुद्धं भगवन्तमहं पश्यामीति व्यक्तमुपागतः। स पद्ममुकुलप्रतिममञ्जलिं कृत्वोवाच—अहो रूपशोभा भगवतः। किं बहुना?  5

वक्त्रेणाभिभवत्ययं हि कमलं नीलोत्पलं चक्षुषा  O 362
कान्त्या पुष्पवनं घनं प्रियतया चन्द्रं समाप्तद्युतिम्।
गाम्भीर्येण महोदधिं स्थिरतया मेरुं रविं तेजसा  10
गत्या सिंहमवेक्षितेन वृषभं वर्णेन चामीकरम् ॥ ४५ ॥

स भूयस्या मात्रया हर्षेणापूर्यमाणहृदयो व्यापिना स्वरेणोवाच—

अहो भावविशुद्धानां कर्मणो मधुरं फलम्।
कर्मणेदं कृतं रूपं नैश्वर्येण यदृच्छया ॥ ४६ ॥

यत्तत्कल्पसहस्रकोटिनियुतैर्वाक्कायचित्तोद्भवं  15
दानक्षान्तिसमाधिबुद्धिनियमैस्तेनार्हता शोधितम्।
तेनेदं जननेत्रकान्तममलं रूपं समुत्थापितं
यं दृष्ट्वा रिपुरप्यभिप्रमुदितः स्यात्किं पुनर्मद्विधः ॥ ४७ ॥

संबुद्धालम्बनैः संज्ञां विस्मृत्य बुद्धसंज्ञामधिष्ठाय मूलनिकृत्त इव द्रुमः सर्वशरीरेण मारस्य पादयोर्निपतितः। अथ मारः ससंभ्रमोऽब्रवीत्—एवं तं भदन्त नार्हसि समयं  20 व्यतिक्रमितुम्। स्थविर उवाच—कः समय इति? मार उवाच—ननु प्रतिज्ञातं भदन्तेन—नाहं भवन्तं प्रणमिष्यामीति। ततः स्थविरोपगुप्तः पृथिवीतलादुत्थाय सगद्गदकण्ठोऽब्रवीत्—पापीयन्,

न खलु न विदितं मे यस्य वादिप्रधानो
जलविहत इवाग्निर्निर्वृतिं संप्रयातः।  25
अपि तु नयनकान्तामाकृतिं तस्य दृष्ट्वा
तमृषिमभिनतोऽहं त्वां तु नाभ्यर्चयामि ॥ ४८ ॥

मार उवाच—कथमिहाहं नार्चितो भवामि, यदेवं मां प्रणमसीति। स्थविरोऽब्रवीत्—श्रूयताम्, यथा त्वं नैव मया अभ्यर्चितो भवसि, न च मया समयातिक्रमः कृत इति।

C 363

मृण्मयेषु प्रतिकृतिष्वमराणां यथा जनः।
मृतसंज्ञामनादृत्य नमत्यमरसंज्ञया ॥ ४९ ॥
तथाहं त्वामिहोद्वीक्ष्य लोकनाथवपुर्धरम्।
मारसंज्ञामनादृत्य नतः सुगतसंज्ञया ॥ ५० ॥

5 अथ मारो बुद्धवेषमन्तर्धापयित्वा स्थविरोपगुप्तमभ्यर्च्य प्रक्रान्तः। यावच्चतुर्थे दिवसे मारः स्वयमेव मथुरायां घण्टावघोषितुमारब्धः—यो युष्माकं स्वर्गापवर्गसुखं प्रार्थयते, स स्थविरोपगुप्तसकाशाद्धर्मं शृणोतु, यैश्च युष्माभिस्तथागतो न दृष्टस्ते स्थविरोपगुप्तं पश्यन्तु इति। आह च—

उत्सृज्य दारिद्र्यमनर्थमूलं
10 यः स्फीतशोभां श्रियमिच्छतीह।
स्वर्गापवर्गाय च यस्य वाञ्छा
स श्रद्धया धर्ममतः शृणोतु ॥ ५१ ॥
दृष्टो न यैर्वा द्विपदप्रधानः
शास्ता महाकारुणिकः स्वयंभूः।
15 ते शास्तृकल्पं स्थविरोपगुप्तं
पश्यन्तु भास्वत्त्रिभवप्रदीपम् ॥ ५२ ॥

यावन्मथुरायां शब्दो विसृतः—स्थविरोपगुप्तेन मारो विनीत इति। श्रुत्वा च यद्भूयसा मथुरावास्तव्यो जनकायः स्थविरोपगुप्तसकाशं निर्गतः। ततः स्थविरोपगुप्तोऽनेकेषु ब्राह्मणशतसहस्रेषु संनिपतितेषु सिंह इव निर्भीः सिंहासनमभिरूढः। वक्ष्यति च—

20 मां प्रति न ते शक्यं सिंहासनमविदुषा समभिरोढुम्।
यः स सिंहासनस्थो मृग इव स हि याति संकोचम् ॥ ५३ ॥
सिंह इव यस्तु निर्भीर्निनदति प्रवरारिदर्पनाशार्थम्।
सिंहासनमभिरोढुं स कथिकसिंहो भवति योग्यः ॥ ५४ ॥

यावत् स्थविरोपगुप्तेन पूर्वकालकरणीयां कथां कृत्वा सत्यानि संप्रकाशितानि।

C 364

25 श्रुत्वा चानेकैः प्राणिशतसहस्रैर्मोक्षभागीयानि कुशलमूलान्याक्षिप्तानि। कैश्चिदनागामिफलं प्राप्तम्, कैश्चित् सकृदागामिफलम्, कैश्चित् स्रोतआपत्तिफलम्, यावदष्टादशसहस्राणि प्रव्रजितानि। सर्वैश्च युज्यमानैर्यावदर्हत्त्वं प्राप्तम् ॥

तत्र चोरुमुण्डपर्वते गुहा अष्टदशहस्ता दैर्घ्येण द्वादशहस्ता विस्तारेण। यदा ते कृतकरणीयाः संवृत्तास्तदा स्थविरोपगुप्तेनाभिहितम्—यो मदीयेनाववादेन सर्वक्लेशप्रहाणा-
30 दर्हत्त्वं साक्षात्करिष्यति, तेन चतुरङ्गुलमात्रा शलाका गुहायां प्रक्षेप्तव्या। यावदेकस्मिन् दिवसे दशभिरर्हत्सहस्रैः शलाकाः प्रक्षिप्ताः। तस्य यावदासमुद्रायां [पृथिव्यां] शब्दो विसृतः—मथुराया-

मुपगुप्तनामा अववादकानामग्रो निर्दिष्टो भगवता। तद्यथा हि विनीतकामधात्वीश्वरे द्वितीय-शास्तृकल्पे महात्मनि स्थविरोपगुप्ते सुरमनुजमहोरगासुरगरुडयक्षगन्धर्वविद्याधरार्चितपादयुग्मे पूर्वबुद्धक्षेत्रावरोपितकुशलबीजसंततीनामनेकेषां सत्त्वशतसहस्राणां सद्धर्मसलिलवर्षधारा-निपातेन मोक्षाङ्कुरानभिवर्धयन्नुरुमुण्डे शैले॥

कार्यानुरोधात् प्रणतसकलसामन्तचूडामणिमयूखोद्भासितपादपीठस्याशोकस्य राज्ञः 5 पूर्वं पांशुप्रदानं समनुस्मरिष्यामः। इत्येवमनुश्रूयते—

भगवान् राजगृहे विहरति वेणुवने कलिन्दकनिवापे। अथ भगवान् पूर्वाह्णे निवास्य पात्रचीवरमादाय भिक्षुगणपरिवृतो भिक्षुसंघपुरस्कृतो राजगृहं पिण्डाय प्राविक्षत्। वक्ष्यति च—

कनकाचलसंनिभाग्रदेहो 10
द्विरदेन्द्रप्रतिमः सलीलगामी।
परिपूर्णशशाङ्कसौम्यवक्त्रो
भगवान् भिक्षुगणैर्वृतो जगाम॥ ५५॥

यावद्भगवता साभिसंस्कारं नगरद्वारे पादं प्रतिष्ठापितम्। धर्मता खलु यस्मिन् समये बुद्धा भगवन्तः साभिसंस्कारं नगरद्वारमिन्द्रकीले पादौ व्यवस्थापयन्ति, तदा चित्रा- 15 ण्यद्भुतानि प्रादुर्भवन्ति। अन्धाश्चक्षूंषि प्रतिलभन्ते। बधिराः श्रोत्रग्रहणसमर्था भवन्ति। पङ्गवो गमनसमर्था भवन्ति। हडिनिगडचारकावबद्धानां सत्त्वानां बन्धनानि शिथिलीभवन्ति। जन्मजन्मवैरानुबद्धाः सत्त्वास्तदनन्तरं मैत्रचित्रतां लभन्ते। वत्सा दामानि च्छित्त्वा मातृभिः सार्धं समागच्छन्ति। हस्तिनः क्रोशन्ति, अश्वा हेषन्ते, ऋषभा गर्जन्ति, शुकशारिककोकिल-जीवंजीवकबर्हिणो मधुरान् [शब्दान्] निकूजन्ति। पेडागता अलंकारा मधुरशब्दं निश्चारयन्ति। 20 C 365 अपराहतानि च वादित्रभाण्डानि मधुरं शब्दं निश्चारयन्ति। उन्नतोन्नताः पृथिवीप्रदेशा अवनमन्ति। अवनताश्चोन्नमन्ति, अपगतपाषाणशर्करकपालाश्चावतिष्ठन्ते। इयं च तस्मिन् समये पृथिवी षड्विकारं प्रकम्पते। तद्यथा—पूर्वो दिग्भाग उन्नमति पश्चिमोऽवनमति, अन्तोऽवनमति मध्य उन्नमति, चलितः प्रचलितो वेधितः प्रवेधितः। इतीमे चान्ये चाद्भुत-धर्माः प्रादुर्भवन्ति भगवतो नगरप्रवेशे। वक्ष्यति च— 25

लवणजलनिवासिनी ततो वा
नगरनिगममण्डिता सशैला।
मुनिचरणनिपीडिता च भूमी
पवनबलाभिहतेव यानपात्रम्॥ ५६॥

अथ बुद्धप्रवेशकालनियतैः प्रातिहार्यैरावर्जिताः स्त्रीमनुष्यास्तन्नगरमनिलबलचलित- 30 भिन्नवीचीतरङ्गक्षुभितमिव महासमुद्रं विमुक्तोच्चनादं बभूव। न हि बुद्धप्रवेशतुल्यं नाम जगत्यद्भुतमुपलभ्यते। पुरप्रवेशसमये हि भगवतश्चित्राण्यद्भुतानि दृश्यन्ते। वक्ष्यति च—

निम्ना चोन्नमते नतावनमते बुद्धानुभावान्मही
स्थाणुः शर्करकण्टकव्यपगतो निर्दोषतां याति च ।
अन्धा मूकजडेन्द्रियाश्च पुरुषा व्यक्तेन्द्रियास्तत्क्षणं
संवाद्यन्त्यनिघट्टिताश्च नगरे नन्दन्ति तूर्यस्वनाः ॥ ५७ ॥

5 सर्वं च तन्नगरं सूर्यसहस्रातिरेकया कनकमरीचिवर्णया बुद्धप्रभया स्फुटं बभूव । आह च—

C 366 सूर्यप्रभामवभत्स्र्य हि तस्य भाभि-
र्व्याप्तं जगत्सकलमेत्र सकाननस्थम् ।
संप्राप्य च प्रवरधर्मकथाभिरामो
10 लोकं सुरासुरनरं हि समुक्तभावम् ॥ ५८ ॥

यावद्भगवान् राजमार्गं प्रतिपन्नः । तत्र द्वौ बालदारकौ । एकोऽग्रकुलिकपुत्रो द्वितीयः कुलिकपुत्रश्च पांश्वागारैः क्रीडतः । एकस्य जयो नाम, द्वितीयस्य विजयः । ताभ्यां भगवान् दृष्टो द्वात्रिंशन्महापुरुषलक्षणालंकृतशरीरः असेचनकदर्शनश्च । यावज्जयेन दारकेन सक्तुं दास्यामीति पांश्वञ्जलिर्भगवतः पात्रे प्रक्षिप्तः, विजयेन च कृताञ्जलिनाभ्यनुमोदितम् । 15 वक्ष्यति च—

दृष्ट्वा महाकारुणिकं स्वयंभुवं
व्यामप्रभोद्द्योतितसर्वगात्रम् ।
धीरेण वक्त्रेण कृतप्रसादः
पांशुं ददौ जातिजरान्तकाय ॥ ५९ ॥

20 स भगवते प्रतिपादयित्वा प्रणिधानं कर्तुमारब्धः—अनेनाहं कुशलमूलेन एकच्छत्रायां पृथिव्यां राजा स्याम्, अत्रैव च बुद्धे भगवति कारां कुर्यामिति ।

ततो मुनिस्तस्य निशाम्य भावं
बालस्य सम्यक्प्रणिधिं च बुद्ध्वा ।
इष्टं फलं क्षेत्रवशेन दृष्ट्वा
25 जग्राह पांशुं करुणायमानः ॥ ६० ॥

तेन यावद्राज्यविपाक्यं कुशलमाक्षिप्तम् । ततो भगवता स्मितं विदर्शितम् । धर्मता खलु यस्मिन् समये बुद्धा भगवन्तः स्मितं विदर्शयन्ति, तस्मिन् समये नीलपीतलोहितावदातमञ्जिष्ठस्फटिकरजतवर्णा अर्चिषो मुखान्निश्चरन्ति । केचिदूर्ध्वतो गच्छन्ति, केचिदधस्ताद्गच्छन्ति । येऽधो गच्छन्ति, ते संजीवं कालसूत्रं संघातं रौरवं महारौरवं तपनं प्रतापन- 30 मवीचिपर्यन्तेषु गत्वा ये शीतनरकास्तेषूष्णीभूत्वा निपतन्ति, ये उष्णनरकास्तेषु शीतीभूत्वा C 367 निपतन्ति । तेन तेषां सत्त्वानां कारणाविशेषाः प्रतिप्रस्रभ्यन्ते । तेषामेवं भवति—किं नु

भवन्तो वयमितश्च्युताः, आहोस्विदन्यत्रोपपन्ना इति, येनास्माकं कारणाविशेषाः प्रतिप्रस्रब्धाः। तेषां भगवान् प्रसादसंजननार्थं निर्मितं विसर्जयति। तेषामेवं भवति—न वयमितश्च्युताः, नाप्यन्यत्रोपपन्नाः। अपि त्वयमपूर्वदर्शनः [ सत्त्वः ]। अस्यानुभावेनास्माकं कारणाविशेषाः प्रतिप्रस्रब्धा इति। ते निर्मिते चित्तानि प्रसादयित्वा नरकवेदनीयानि कर्माणि क्षपयित्वा देवमनुष्येषु प्रतिसंधिं गृह्णन्ति यत्र सत्त्वानां भाजनभूता भवन्ति। ये ऊर्ध्वतो गच्छन्ति, ते 5 चातुर्महाराजिकान् देवांस्त्रायस्त्रिंशान् यामांस्तुषितान्निर्माणरतीन् परनिर्मितवशवर्तिनः ब्रह्मकायिकान् ब्रह्मपुरोहितान् महाब्रह्मान् परीत्ताभानप्रमाणाभानाभास्वरान् परीत्तशुभानप्रमाणशुभान् शुभकृत्स्नाननभ्रकान् पुण्यप्रसवान् बृहत्फलानबृहानतपान् सुदृशान् सुदर्शनानकनिष्ठपर्यन्तेषु देवेषु गत्वा अनित्यं दुःखं शून्यमनात्मेत्युद्घोषयन्ति। गाथाद्वयं च भाषन्ते—

आरभध्वं निष्क्रामत युज्यध्वं बुद्धशासने। 10
धुनीत मृत्युनः सैन्यं नडागारमिव कुञ्जरः॥ ६१॥
यो ह्यस्मिन् धर्मविनये अप्रमत्तश्चरिष्यति।
प्रहाय जातिसंसारं दुःखस्यान्तं करिष्यति॥ ६२॥

अथ ता अर्चिषस्त्रिसाहस्रमहासाहस्रं लोकधातुमन्वाहिण्ड्य भगवन्तमेवानुगच्छन्ति। यदि भगवानतीतं कर्म व्याकर्तुकामो भवति, पृष्ठतोऽन्तर्धीयन्ते। अनागतं व्याकर्तुकामो 15 भवति, पुरतोऽन्तर्धीयन्ते। नरकोपपत्तिं व्याकर्तुकामो भवति, पादतलेऽन्तर्धीयन्ते। तिर्यगुपपत्तिं व्याकर्तुकामो भवति, पार्ष्ण्यामन्तर्धीयन्ते। प्रेतोपपत्तिं व्याकर्तुकामो भवति, पादाङ्गुष्ठेऽन्तर्धीयन्ते। मनुष्योपपत्तिं व्याकर्तुकामो भवति, जानुनोऽन्तर्धीयन्ते। बलचक्रवर्तिराज्यं व्याकर्तुकामो भवति, वामे करतलेऽन्तर्धीयन्ते। चक्रवर्तिराज्यं व्याकर्तुकामो भवति, दक्षिणे C 368 करतलेऽन्तर्धीयन्ते। देवोपपत्तिं व्याकर्तुकामो भवति, नाभ्यामन्तर्धीयन्ते। श्रावकबोधिं 20 व्याकर्तुकामो भवति, आस्येऽन्तर्धीयन्ते। प्रत्येकां बोधिं व्याकर्तुकामो भवति, ऊर्णायामन्तर्धीयन्ते। अनुत्तरां सम्यक्संबोधिं व्याकर्तुकामो भवति, उष्णीषेऽन्तर्धीयन्ते। अथ ता अर्चिषो भगवन्तं त्रिः प्रदक्षिणीकृत्य भगवतो वामे करतलेऽन्तर्हिताः। अथायुष्मानानन्दः कृताञ्जलिपुटो गाथां भाषते—

विगतोद्धवा दैन्यमदप्रहीणा 25
बुद्धा जगत्युत्तमहेतुभूताः।
नाकारणं शङ्खमृणालगौरं
स्मितं विदर्शयन्ति जिना जितारयः॥ ६३॥

तत्कालं स्वयमधिगम्य वीर बुद्ध्या
श्रोतॄणां श्रमण जिनेन्द्र काङ्क्षितानाम्। 30
धीराभिर्मुनिवृष वाग्भिरुत्तमाभि-
रुत्पन्नं व्यपनय संशयं शुभाभिः॥ ६४॥

मेघस्तनितनिर्घोष गोवृषेन्द्रनिभेक्षण ।
फलं पांशुप्रदानस्य व्याकुरुष्व नरोत्तम ॥ ६५ ॥

भगवानाह—एवमेतदानन्द एवमेतदानन्द । नाहेत्वप्रत्ययं तथागता अर्हन्तः सम्यक्संबुद्धाः स्मितमुपदर्शयन्ति । अपि तु सहेतु सप्रत्ययं तथागता अर्हन्तः सम्यक्संबुद्धाः 5 स्मितमुपदर्शयन्ति । पश्यसि त्वमानन्द दारकं येन तथागतस्य पात्रे पांश्वञ्जलिः प्रक्षिप्तः ? एवं भदन्त । अयमानन्द दारकोऽनेन कुशलमूलेन वर्षशतपरिनिर्वृतस्य तथागतस्य पाटलिपुत्रे नगरे अशोको नाम्ना राजा भविष्यति चतुर्भागचक्रवर्ती धार्मिको धर्मराजा, यो मे शरीरधातून् वैस्तारिकान् करिष्यति । चतुरशीतिं धर्मराजिकासहस्रं प्रतिष्ठापयिष्यति । बहुजनहिताय प्रतिपत्स्यत इति । आह च—

C 369 10 अस्तंगते मयि भविष्यति एकराजा
योऽसौ ह्यशोक इति नाम विशालकीर्तिः ।
मद्धातुगर्भपरिमण्डितजम्बुखण्ड-
मेतत्करिष्यति नरामरपूजितानाम् ॥ ६६ ॥

अयमस्य देयधर्मो यत्तथागतस्य पांश्वञ्जलिः पात्रे प्रक्षिप्तः । यावद्भगवता तेषां सर्व 15 आयुष्मते आनन्दाय दत्ताः । गोमयेन मिश्रयित्वा यत्र चंक्रमे तथागतश्चंक्रम्यते, तत्र गोमयकार्षीं प्रयच्छति । यावदायुष्मता आनन्देन तेषां सगोमयेन मिश्रयित्वा यत्र चंक्रमति भगवान्, तत्र गोमयकार्षी दत्ता ॥

तेन खलु पुनः समयेन राजगृहे नगरे बिम्बिसारो राजा राज्यं कारयति । राज्ञो बिम्बिसारस्य अजातशत्रुः पुत्रः । अजातशत्रोरुदायी । उदायिभद्रस्य मुण्डः । मुण्डस्य 20 काकवर्णी । काकवर्णिनः सहली । सहलिनस्तुलकुची । तुलकुचेर्महामण्डलः । महामण्डलस्य प्रसेनजित् । प्रसेनजितो नन्दः । नन्दस्य बिन्दुसारः । पाटलिपुत्रे नगरे बिन्दुसारो नाम राजा राज्यं कारयति । बिन्दुसारस्य राज्ञः पुत्रो जातः । तस्य सुसीम इति नामधेयं कृतम् । तेन च समयेन चम्पायां नगर्यामन्यतमो ब्राह्मणः । तस्य दुहिता जाता अभिरूपा दर्शनीया प्रासादिका जनपदकल्याणी । सा नैमित्तिकैर्व्याकृता—अस्या दारिकाया राजा भर्ता भविष्यति । 25 द्वे पुत्ररत्ने जनयिष्यति, एकश्चतुर्भागचक्रवर्ती भविष्यति । द्वितीयः प्रव्रजित्वा सिद्धव्रतो भविष्यति । श्रुत्वा च ब्राह्मणस्य रोमहर्षो जातः । संपत्तिकामो लोकः । स तां दुहितरं प्रहाय पाटलिपुत्रं गतः । तेन सा सर्वालंकारैर्विभूषयित्वा राज्ञो बिन्दुसारस्य भार्यार्थमनुप्रदत्ता—इयं हि देवकन्या धन्या प्रशस्ता चेति । यावद् राज्ञा बिन्दुसारेणान्तःपुरं प्रवेशिता । अन्तःपुरिकाणां बुद्धिरुत्पन्ना—इयमभिरूपा प्रासादिका जनपदकल्याणी । यदि राजा अनया 30 सार्धं परिचारयिष्यति, अस्माकं भूयश्चक्षुःसंप्रेषणमपि न करिष्यति । ताभिः सा नापिताकर्म शिक्षापिता । सा राज्ञः केशश्मश्रुं प्रसाधयति यावत् सुशिक्षिता संवृत्ता । यदा

आरभते राज्ञः केशश्मश्रुं प्रसाधयितुम्, तदा राजा शेते। यावद् राज्ञा प्रीतेन वरेण प्रवारिता—किं त्वं वरमिच्छसीति? तया अभिहितम्—देवेन मे सह समागमः स्यात्। राजा आह—त्वं नापिनी, अहं राजा क्षत्रियो मूर्धाभिषिक्तः। कथं मया सार्धं समागमो भविष्यति? सा कथयति—देव नाहं नापिनी, अपि तु ब्राह्मणस्याहं दुहिता। तेन देवस्य पत्न्यर्थं दत्ता। राजा कथयति—केन त्वं नापितकर्म शिक्षापिता? सा कथयति—अन्तःपुरिकाभिः। राजा आह—न भूयस्त्वया नापितकर्म कर्तव्यम्। यावद्राज्ञा अग्रमहिषी स्थापिता। तया सार्धं क्रीडति रमते परिचारयति। सा आपन्नसत्त्वा संवृत्ता। यावदष्टानां नवानां वा मासानामत्ययात् प्रसूता। तस्याः पुत्रो जातः। तस्य विस्तरेण जातिमहं कृत्वा किं कुमारस्य भवतु नाम? सा कथयति—अस्य दारकस्य जातस्य अशोकास्मि संवृत्ता। तस्य अशोक इति नाम कृतम्। यावद्द्वितीयः पुत्रो जातः। विगते शोके जातः। तस्य विगतशोक इति नाम कृतम्। अशोको दुःस्पर्शगात्रः। राज्ञो बिन्दुसारस्यानभिप्रेतः। अथ राजा बिन्दुसारः कुमारं परीक्षितुकामः पिङ्गलवत्साजीवं परिव्राजकमामन्त्रयते—उपाध्याय, कुमारांस्तावत्परीक्षामः—कः शक्यते ममात्ययाद्राज्यं कारयितुम्? पिङ्गलवत्साजीवः परिव्राजकः कथयति—तेन हि देव कुमारानादाय सुवर्णमण्डपमुद्यानं निर्गच्छ, परीक्षामः। यावद्राजा कुमारानादाय सुवर्णमण्डपमुद्यानं निर्गतः। यावदशोकः कुमारो मात्रा चोच्यते—वत्स, राजा कुमारान् परीक्षितुकामः सुवर्णमण्डपमुद्यानं गतः, त्वमपि तत्र गच्छेति। अशोकः कथयति—राज्ञोऽहमनभिप्रेतो दर्शनेनापि, किमहं तत्र गमिष्यामि? सा कथयति—तथापि गच्छेति। अशोक उवाच—आहारं प्रेषय। यावदशोकः पाटलिपुत्रान्निर्गच्छति, राधगुप्तेन चाग्रामात्यपुत्रेणोक्तः—अशोक, क्व गमिष्यसीति? अशोकः कथयति—राजा अद्य सुवर्णमण्डपे उद्याने कुमारान् परीक्षयति। तत्र राज्ञो महल्लको हस्तिनागस्तिष्ठति। यावदशोकस्तस्मिन् महल्लकेऽभिरुह्य सुवर्णमण्डपमुद्यानं गत्वा कुमाराणां मध्येऽत्र पृथिव्यां प्रस्तीर्य निषसाद। यावत् कुमाराणामाहार उपनामितः। अशोकस्यापि शाल्योदनं दधिसमिश्रं मृद्भाजने प्रेषितम्। ततो राज्ञा बिन्दुसारेण पिङ्गलवत्साजीवः परिव्राजकोऽभिहितः—उपाध्याय, परीक्ष कुमारान्—कः शक्यते ममात्ययाद्राज्यं कर्तुमिति? पश्यति पिङ्गलवत्साजीवः परिव्राजकः, चिन्तयति च—अशोको राजा भविष्यति। अयं च राज्ञो नाभिप्रेतः। यदि कथयिष्यामि अशोको राजा भविष्यतीति, नास्ति मे जीवितम्। स कथयति—देव अभेदेन व्याकरिष्यामि। राजा आह—अभेदेन व्याकुरुष्व। आह—यस्य यानं शोभनं स राजा भविष्यति। तेषामेकैकस्य बुद्धिरुत्पन्ना—मम यानं शोभनम्। अहं राजा भविष्यामि। अशोकश्चिन्तयति—अहं हस्तिस्कन्धेनागतः। मम यानं शोभनम्, अहं राजा भविष्यामीति। राजा आह—भूयस्तावदुपाध्याय परीक्षस्व। पिङ्गलवत्साजीवः परिव्राजकः कथयति—देव, यस्यासनमग्रम्, स राजा भविष्यति। तेषामेकैकस्य बुद्धिरुत्पन्ना—ममासनमग्रम्। अशोकश्चिन्तयति—मम पृथिव्यासनम्, अहं राजा भविष्यामि। एवं भाजनं भोजनं पानम्। विस्तरेण कुमारान् परीक्ष्य प्रविष्टः।

दि० ३०

यावदशोको मात्रोच्यते—को व्याकृतो राजा भविष्यतीति? अशोकः कथयति—अभेदेन व्याकृतम्—यस्य यानमग्रमासनं पानं भाजनं भोजनं चेति, स राजा भविष्यतीति। यथा पश्यमि—अहं राजा भविष्यामि। मम हस्तिस्कन्धं यानं पृथिवी आसनं मृण्मयं भाजनं शाल्योदनं दधिव्यञ्जनं पानीयं पानमिति ॥

5 ततः पिङ्गलवत्साजीवः परिव्राजकः अशोको राजा भविष्यतीति तस्य मातरमारब्धः सेवितुम्। यावत् तयोच्यते—उपाध्याय, कतरः कुमारो राज्ञो बिन्दुसारस्यात्ययाद्राजा भविष्यतीति? आह—अशोकः। तयोच्यते—कदाचित् त्वां राजा निर्बन्धेन पृच्छेत्। गच्छ त्वम्। प्रत्यन्तं समाश्रय। यदा शृणोषि अशोको राजा संवृत्तः, तदा आगन्तव्यम्। यावत् स प्रत्यन्तेषु जनपदेषु संश्रितः ॥

10 अथ राज्ञो बिन्दुसारस्य तक्षशिला नाम नगरं विरुद्धम्। तत्र राज्ञा बिन्दुसारेण अशोको विसर्जितः—गच्छ कुमार, तक्षशिलानगरं संनाहय। चतुरङ्गं बलकायं दत्तम्, यानं प्रहरणं

C 372 च प्रतिषिद्धम्। यावदशोकः कुमारः पाटलिपुत्रान्निर्गच्छन् भृत्यैर्विज्ञप्तः—कुमार, नैवास्माकं सैन्यप्रहरणम्—केन वयं कं युध्यामः? ततः अशोकेनाभिहितम्—यदि नाम राज्यविपाक्यं कुशलमस्ति, सैन्यं प्रहरणं च प्रादुर्भवतु। एवमुक्ते कुमारेण पृथिव्यामवकाशो दत्तः।

15 देवताभिः सैन्यप्रहरणानि चोपनीतानि। यावत् कुमारश्चतुरङ्गेन बलकायेन तक्षशिलां गतः। श्रुत्वा तक्षशिलानिवासिनः पौरा अर्धतृतीयानि योजनानि मार्गे शोभां कृत्वा पूर्णघटमादाय प्रत्युद्गताः। प्रत्युद्गम्य च कथयन्ति—न वयं कुमारस्य विरुद्धाः, नापि राज्ञो बिन्दुसारस्य, अपि तु दुष्टामात्या अस्माकं परिभवं कुर्वन्ति। महता च सत्कारेण तक्षशिलां प्रवेशितः। एवं विस्तरेणाशोकः खशराज्यं प्रवेशितः। तस्य द्वौ महानग्नौ संश्रितौ। तेन तौ

20 वृत्त्या संविभक्तौ तस्याग्रतः पर्वतान् संछिन्दन्तौ संप्रस्थितौ। देवताभिश्चोक्तम्—अशोकश्चतुर्भागचक्रवर्ती भविष्यति, न केनचिद्विरोधितव्यमिति। विस्तरेण यावदासमुद्रा पृथिवी आज्ञापिता ॥

यावत् सुसीमः कुमार उद्यानात् पाटलिपुत्रं प्रविशति। राज्ञो बिन्दुसारस्याग्रामात्यः खल्लाटकः पाटलिपुत्रान्निर्गच्छति। तस्य सुसीमेन कुमारेण क्रीडाभिप्रायतया खटका पातिता।

25 यावदमात्यश्चिन्तयति—इदानीं खटकां निपातयति। यदा राजा भविष्यति, तदा शस्त्रं पातयिष्यति। तथा करिष्यामि यथा राजैव न भविष्यति। तेन पञ्चामात्यशतानि भिन्नानि। अशोकश्चतुर्भागचक्रवर्ती निर्दिष्ट एव, राज्ये प्रतिष्ठापयिष्यामः। तक्षशिलाश्च विरोधिताः। यावद्राज्ञा सुसीमः कुमारस्तक्षशिलामनुप्रेषितः। न च शक्यते संनामयितुम्। बिन्दुसारश्च राजा ग्लानीभूतः। तेनाभिहितम्—सुसीमं कुमारमानयथ, राज्ये प्रतिष्ठापयिष्यामीति। अशोकं

30 तक्षशिलां प्रवेशयथ। यावदमात्यैरशोकः कुमारो हरिद्रया प्रलिप्तो लाक्षां च लोहपात्रे काथयित्वा कथितेन रसेन लोहपात्राणि म्रक्षयित्वा छोरयन्ति—अशोकः कुमारो ग्लानीभूत

C 373 इति। यदा बिन्दुसारः स्वल्पावशेषप्राणः संवृत्तः, तदा अमात्यैरशोकः कुमारः सर्वालंकारै-

भूंषयित्वा राज्ञो बिन्दुसारस्योपनीतः—इमं तावद्राज्ये प्रतिष्ठापय । यदा सुसीम आगतो भविष्यति, तदा तं राज्ये प्रतिष्ठापयिष्यामः । ततो राजा रुषितः । अशोकेन चाभिहितम्—यदि मम धर्मेण राज्यं भवति, देवता मम पट्टं बन्धन्तु । यावद्देवताभिः पट्टो बद्धः । तं दृष्ट्वा बिन्दुसारस्य राज्ञ उष्णं शोणितं मुखादागतं यावत्कालगतः । यदा अशोको राज्ये प्रतिष्ठितः, तस्योर्ध्वं योजनं यक्षाः शृण्वन्ति, अधो योजनं नागाः । तेन राधगुप्तोऽग्रामात्यः स्थापितः । 5 सुसीमेनापि श्रुतम्—बिन्दुसारो राजा कालगतः, अशोको राज्ये प्रतिष्ठितः । इति श्रुत्वा च रुषितोऽभ्यागतः । त्वरितं च तस्माद्देशादागतः । अशोकेनापि पाटलिपुत्रे नगरे एकस्मिन् द्वारे एको नग्नः स्थापितः, द्वितीये द्वितीयः, तृतीये राधगुप्तः, पूर्वद्वारे स्वयमेव राजा अशोकोऽवस्थितः । राधगुप्तेन च पूर्वस्मिन् द्वारे यन्त्रमयो हस्ती स्थापितः । अशोकस्य च प्रतिमां परिखां खनयित्वा खदिराङ्गारैश्च पूरयित्वा तृणेनाच्छाद्य पांशुनाकीर्णा । सुसीमश्चाभिहितः— 10 यदि शक्यसेऽशोकं घातयितुं राजेति(?) । स यावत्पूर्वद्वारं गतः—अशोकेन सह योत्स्यामीति । अङ्गारपूर्णायां परिखायां पतितः । तत्रैव चानयेन व्यसनमापन्नः । यदा च सुसीमः प्रघातितः, तस्यापि महानग्नो भद्रायुधो नाम्ना अनेकसहस्रपरिवारः, स भगवच्छासने प्रव्रजितोऽर्हन् संवृत्तः॥

यदा अशोको राज्ये प्रतिष्ठितः स तैरमात्यैरवज्ञया दृश्यते । तेनामात्यानामभिहितम्—भवन्तः, पुष्पवृक्षान् फलवृक्षांश्च छित्त्वा कण्टकवृक्षान् परिपालयथ । अमात्या आहुः— 15 देवेन कुत्र दृष्टम्? अपि तु कण्टकवृक्षान् छित्त्वा पुष्पवृक्षान् फलवृक्षांश्च परिपालयितव्यम् । तैर्यावत् त्रिरपि राज्ञ आज्ञा प्रतिकूलिता, ततो राज्ञा रुषितेन असिं निष्कोशं कृत्वा पञ्चानाममात्यशतानां शिरांसि छिन्नानि । यावद्राजा अशोकोऽपरेण समयेनान्तःपुरपरिवृतो वसन्तकालसमये पुष्पितफलितेषु पादपेषु पूर्वनगरस्योद्यानं गतः । तत्र च परिभ्रमता अशोकवृक्षः C 374 सुपुष्पितो दृष्टः । ततो राज्ञो ममायं सहनामा इत्यनुनयो जातः । स च राजा अशोको 20 दुःस्पर्शगात्रः । ता युवतयस्तं नेच्छन्ति स्प्रष्टुम् । यावद्राजा शयितः, तस्यान्तःपुरेण रोषेण तस्मादशोकवृक्षात् पुष्पाणि शाखाश्च छिन्नाः । यावद्राज्ञा प्रतिबुद्धेन सोऽशोकवृक्षो दृष्टः, पृष्टश्च—केन तच्छिन्नम्? ते कथयन्ति—देव, अन्तःपुरिकाभिरिति । श्रुत्वा च राज्ञा अमर्षजातेन पञ्च स्त्रीशतानि किटिकैः संवेष्ट्य दग्धानि । तस्येमान्यशुभान्यालोक्य चण्डो राजा चण्डाशोक इति व्यवस्थापितः । यावद्राधगुप्तेनाग्रामात्येनाभिहितः—देव, न सदृशं स्वयमेवेदृशमकार्यं कर्तुम् । अपि तु देवस्य वध्यघातकाः पुरुषाः स्थापयितव्याः, ये देवस्य वध्यकरणीयं शोधयिष्यन्ति । यावद्राज्ञा राजपुरुषाः प्रयुक्ताः—वध्यघातं मे मार्गध्वेति । 25

यावत् तत्र नातिदूरे पर्वतपादमूले कर्वटकम् । तत्र तन्त्रवायः प्रतिवसति । तस्य पुत्रो जातः । गिरिक इति नामधेयं कृतम् । चण्डो दुष्टात्मा मातरं पितरं च परिभाषते, दारकदारिकाश्च ताडयति, पिपीलिकान् मक्षिकान् मूषिकान् मत्स्यांश्च जालेन बडिशेन 30 प्रघातयति । चण्डो दारकस्तस्य चण्डगिरिक इति नामधेयं कृतम् । यावद्राजपुरुषैर्दृष्टः पापे कर्मणि प्रवृत्तः । स तैरभिहितः—शक्यसे राज्ञोऽशोकस्य वध्यकरणीयं कर्तुम्? स

आह—कृत्स्नस्य जम्बुद्वीपस्य वध्यकरणीयं साधयिष्यामीति। यावद्राज्ञो निवेदितम्। राज्ञा अभिहितम्—आनीयतामिति। स च राजपुरुषैरभिहितः—आगच्छ, राजा त्वामाह्वयतीति। तेनाभिहितम्—आगमयत, यावदहं मातापितरौ अवलोकयामीति। यावन्मातापितरौ उवाच—अम्ब तात, अनुजानीध्वम्। यास्याम्यहं राज्ञोऽशोकस्य वध्यकरणीयं साधयितुम्। ताभ्यां 5 च स निवारितः। तेन तौ जीविताद्व्यपरोपितौ। एवं यावद्राजपुरुषैरभिहितः—किमर्थं C 375 चिरेणाभ्यागतोऽसि? तेन चैतत्प्रकरणं विस्तरेणारोचितम्। स तैर्यावद्राज्ञोऽशोकस्योपनामितः। तेन राज्ञोऽभिहितम्—ममार्थाय गृहं कारयस्वेति। यावद्राज्ञा गृहं कारापितं परमशोभनं द्वारमात्ररमणीयम्। तस्य रमणीयकं बन्धनमिति संज्ञा व्यवस्थापिता। स आह—देव, वरं मे प्रयच्छ, यस्तत्र प्रविशेत्तस्य न भूयो निर्गम इति। यावद्राज्ञाभिहितम्—10 एवमस्तु इति॥

ततः स चण्डगिरिकः कुर्कुटारामं गतः। भिक्षुश्च बालपण्डितः सूत्रं पठति। सत्त्वा नरकेषूपपन्नाः। यावन्नरकपाला गृहीत्वा अयोमय्यां भूमौ आदीप्तायां संप्रज्वलितायामेकज्वालीभूतायामुत्तानकान् प्रतिष्ठाप्य अयोमयेन विष्कम्भकेन मुखद्वारं विष्कम्भ्य अयोगुडानादीप्तान् प्रदीप्तान् संप्रज्वलितानेकज्वालीभूतानास्ये प्रक्षिपन्ति, ये तेषां सत्त्वानामोष्ठौ 15 अपि दहन्ति, जिह्वामपि कण्ठमपि कण्ठनालमपि हृदयमपि हृदयसामन्तमपि अन्त्राण्यन्त्रगुणानपि दग्ध्वा अधः प्रघरति। एवं दुःखा हि भिक्षवो नारकाः सत्त्वा नरकेषूपपन्नाः। यावन्नरकपाला गृहीत्वा अयोमय्यां भूमौ आदीप्तायां प्रदीप्तायां संप्रज्वलितायामेकज्वालीभूतायामुत्तानकान् प्रतिष्ठाप्य अयोमयेन विष्कम्भकेन मुखद्वारं विष्कम्भ्य क्वथितं ताम्रमास्ये प्रक्षिपन्ति, यत्तेषां सत्त्वानामोष्ठावपि दहति, जिह्वामपि ताल्वपि कण्ठमपि कण्ठनालमपि, 20 अन्त्राण्यन्त्रगुणानपि दग्ध्वा अधः प्रघरति। एवं दुःखा हि भिक्षवो नरकाः। सन्ति सत्त्वा नरकेषूपपन्ना यान्नरकपाला गृहीत्वा अयोमय्यां भूमौ आदीप्तायां संप्रज्वलितायामेकज्वालीभूतायामवाङ्मुखान् प्रतिष्ठाप्य अयोमयेन सूत्रेणादीप्तेन संप्रज्वलितेनैकज्वालीभूतेनास्फाट्य अयोमयेन कुठारेणादीप्तेन संप्रदीप्तेन संप्रज्वलितेनैकज्वालीभूतेन तक्ष्णुवन्ति संतक्ष्णुवन्ति संप्रतक्ष्णुवन्ति अष्टांशमपि षडंशमपि चतुरस्रमपि वृत्तमपि मण्डलमपि उन्नतमपि अवनतमपि 25 शान्तमपि विशान्तमपि तक्ष्णुवन्ति। एवं दुःखा हि भिक्षवो नरकाः। सन्ति सत्त्वा नरकेषूपपन्ना यान्नरकपाला गृहीत्वा अयोमय्यां भूमौ आदीप्तायां प्रदीप्तायां संप्रज्वलितायामेकज्वालीभूतायामवाङ्मुखान् प्रतिष्ठाप्य अयोमयेन सूत्रेणादीप्तेन प्रदीप्तेन संप्रज्वलितेनैकज्वालीभूतेनास्फाट्य अयोमय्यां भूम्यामादीप्तायां प्रदीप्तायां संप्रज्वलितायामेकज्वालीभूतायां तक्ष्णुवन्ति संतक्ष्णुवन्ति संपरितक्ष्णुवन्ति, अष्टांशमपि षडंशमपि चतुरस्रमपि मण्डलमपि उन्नतमपि C 376 30 अवनतमपि शान्तमपि विशान्तमपि तक्ष्णुवन्ति। एवं दुःखा हि भिक्षवो नरकाः। सन्ति सत्त्वा नरकेषूपपन्ना यान्नरकपाला गृहीत्वा अयोमय्यां भूमावादीप्तायां प्रदीप्तायां संप्रज्वलितायामेकज्वालीभूतायामुत्तानकान् प्रतिष्ठाप्य पञ्चविषटबन्धनां कारणां कारयन्ति, उभयो-

र्हस्तयोरायसौ कीलौ क्रामन्ति, उभयोः पादयोरायसे कीले क्रामन्ति, मध्ये हृदयस्यायसं कीलं क्रामन्ति। [एवं] सुदुःखा हि भिक्षवो नरकाः। एवं पञ्च वेदना इति कुरुते सदृशाश्च कारणाः सत्त्वानामारब्धाः कारयितुम्॥

यावत् श्रावस्त्यामन्यतमः सार्थवाहः पत्न्या सह महासमुद्रमवतीर्णः। तस्य सा पत्नी महासमुद्रे प्रसूता। दारको जातः। तस्य समुद्र इति नामधेयं कृतम्। यावद्विस्तरेण 5 द्वादशभिर्वर्षैर्महासमुद्रादुत्तीर्णः। स च सार्थवाहः पञ्चभिर्धूर्तशतैर्मुषितः। सार्थवाहः स प्रघातितः। स च समुद्रः सार्थवाहपुत्रो भगवच्छासने प्रव्रजितः। स जनपदचारिकां चरन् पाटलिपुत्रमनुप्राप्तः। स पूर्वाह्णे निवास्य पात्रचीवरमादाय पाटलिपुत्रं पिण्डाय प्रविष्टः। सोऽनभिज्ञतया च रमणीयकं भवनं प्रविष्टः। तच्च द्वारमात्ररमणीयमभ्यन्तरं नरकभवनसदृशं प्रतिभयम्। दृष्ट्वा च पुनर्निर्गन्तुकामश्चण्डगिरिकेनावलोकितः। गृहीत्वा चोक्तः— 10 इह ते निधनमुपगन्तव्यमिति। विस्तरेण कार्यम्। ततो भिक्षुः शोकार्तो बाष्पकण्ठः संवृत्तः। तेनोच्यते—किमिदं बालदारक इव रुदसीति? स भिक्षुः प्राह—

न शरीरविनाशं हि शोचामि सर्वशः।
मोक्षधर्मान्तरायं तु शोचामि भृशमात्मनः॥ ६७॥
दुर्लभं प्राप्य मानुष्यं प्रव्रज्यां च सुखोदयाम्। 15
शाक्यसिंहं च शास्तारं पुनस्त्यक्ष्यामि दुर्मतिः॥ ६८॥

तेनोच्यते—दत्तवरोऽहं नृपतिना। धीरो भव। नास्ति ते मोक्ष इति। ततः सकरुणैर्वचनैस्तं भिक्षुः क्रमं याचति स्म मासं यावत्। सप्तरात्रमनुज्ञातः। स खलु मरणभयोद्विग्नहृदयः सप्तरात्रेण मे न भवितव्यमिति व्यायतमतिः संवृत्तः॥

अथ सप्तमे दिवसेऽशोकस्य राज्ञोऽन्तःपुरिकां कुमारेण सह संरक्तां निरीक्षमाणां 20 संलपन्तीं च दृष्ट्वा सहदर्शनादेव रुषितेन राज्ञा तौ द्वावपि तं चारकमनुप्रेषितौ। तत्र मुसलैरयोद्रोण्यामस्थ्यवशेषौ कृतौ। ततो भिक्षुस्तौ दृष्ट्वा संविग्नः प्राह—

अहो कारुणिकः शास्ता सम्यगाह महामुनिः।
फेनपिण्डोपमं रूपमसारमनवस्थितम्॥ ६९॥
क्व तद्वदनकान्तित्वं गात्रशोभा क्व सा गता। 25
धिगस्त्वयं संसारो रमन्ते यत्र बालिशाः॥ ७०॥
इदमालम्बनं प्राप्तं चारके वसता मया।
यमाश्रित्य तरिष्यामि पारमद्य भवोदधेः॥ ७१॥
तेन तां रजनीं कृत्स्नां युज्यता बुद्धशासने।
सर्वसंयोजनं छित्त्वा प्राप्तमर्हत्त्वमुत्तमम्॥ ७२॥ 30

ततस्तस्मिन् रजनीक्षये स भिक्षुश्चण्डगिरिकेनोच्यते—भिक्षो, निर्गता रात्रिः। उदित आदित्यः। कारणाकालस्तवेति। ततो भिक्षुराह—दीर्घायुः, ममापि निर्गता रात्रिः, उदित आदित्यः। परानुग्रहकाल इति। यथेष्टं वर्ततामिति। चण्डगिरिकः प्राह—नावगच्छामि। विस्तीर्यतां वचनमेतदिति। ततो भिक्षुराह—

C 378

5 ममापि हृदयाद्धोरा निर्गता मोहशर्वरी।
पञ्चावरणसंछन्ना क्लेशतस्करसेविता॥ ७३॥
उदितो ज्ञानसूर्यश्च मनोनभसि मे शुभः।
प्रभया यस्य पश्यामि त्रैलोक्यमिह तत्त्वतः॥ ७४॥
परानुग्रहकालो मे शास्तुर्वृत्तानुवर्तिनः।
10 इदं शरीरं दीर्घायुर्यथेष्टं क्रियतामिति॥ ७५॥

ततस्तेन निर्घृणेन दारुणहृदयेन परलोकनिरपेक्षेण रोषाविष्टेन बहूदकायां स्थाल्यां नररुधिरवसामूत्रपुरीषसंकुलायां महालोह्यां प्रक्षिप्तः। प्रभूतेन्धनैश्चाग्निः प्रज्वालितः। स च बहुनापीन्धनक्षयेन न संतप्यते। ततः प्रज्वालयितुं (प्रारब्धः।) यदा तदापि न प्रज्वलति, ततो विचार्य तां लोहीं, पश्यति तं भिक्षुं पद्मस्योपरि पर्यङ्केनोपविष्टम्। दृष्ट्वा च ततो राज्ञे निवेदया-
15 मास। अथ राजनि समागते प्राणिसहस्रेषु संनिपतितेषु स भिक्षुर्वैनेयकालमवेक्षमाणः—

रिद्धिं समुत्पाद्य स तन्मुहूर्तं
लोह्यन्तरस्थः सलिलार्द्रगात्रः।
निरीक्षमाणस्य जनस्य मध्ये
नभस्तलं हंस इवोत्पपात॥ ७६॥

20 विचित्राणि च प्रातिहार्याणि दर्शयितुमारब्धः। वक्ष्यति हि—

अर्धेन गात्रेण ववर्ष तोय-
मर्धेन जज्वाल हुताशनश्च।
वर्षन् ज्वलंश्चैव रराज यः खे
दीप्तौषधिप्रस्रवणेव शैलः॥ ७७॥
25 तमुद्गतं व्योम्नि निशाम्य राजा
कृताञ्जलिर्विस्मयफुल्लवक्त्रः।
उद्वीक्षमाणस्तमुवाच धीरं
कौतूहलात्किंचिदहं विवक्षुः॥ ७८॥

C 379

मनुष्यतुल्यं तव सौम्य रूपं
30 ऋद्धिप्रभावस्तु नरानतीत्य।
न निश्चयं तेन विभो व्रजामि
को नाम भावस्तव शुद्धभाव॥ ७९॥

तत्सांप्रतं ब्रूहि ममेदमर्थं
यथा प्रजानामि तव प्रभावम्।
ज्ञात्वा च ते धर्मगुणप्रभावान्
यथाबलं शिष्यवदाचरेयम्॥ ८०॥

ततो भिक्षुः प्रवचनपरिग्राहकोऽयं भविष्यति, भगवद्धातुं च विस्तरीं करिष्यति, 5
महाजनहितार्थं च प्रतिपत्स्यत इति मत्वा स्वगुणमुद्भावयंस्तमुवाच–

अहं महाकारुणिकस्य राजन्
प्रहीणसर्वाश्रवबन्धनस्य।
बुद्धस्य पुत्रो वदतां वरस्य
धर्मान्वयः सर्वभवेष्वसक्तः॥ ८१॥ 10
दान्तेन दान्तः पुरुषर्षभेण
शान्तिं गतेनापि शमं प्रणीतः।
मुक्तेन संसारमहाभयेभ्यो
निर्मोक्षितोऽहं भवबन्धनेभ्यः॥ ८२॥

अपि च। महाराज, त्वं भगवता व्याकृतः–वर्षशतपरिनिर्वृतस्य मम पाटलिपुत्रे 15
नगरेऽशोको नाम राजा भविष्यति चतुर्भागचक्रवर्ती धर्मराजः, यो मे शरीरधातून् वैस्तारिकान् करिष्यति, चतुरशीतिं धर्मराजिकासहस्रं प्रतिष्ठापयिष्यति। इदं च देवेन नरकसदृशं स्थानमेव स्थापितं यत्र प्राणिसहस्राणि निपात्यन्ते। तदर्हसि देव सर्वसत्त्वेभ्योऽभयप्रदानं दातुम्, भगवतश्च मनोरथं परिपूरयितुम्। आह च–

तस्मान्नरेन्द्र अभयं प्रयच्छ 20
सत्त्वेषु कारुण्यपुरोजवेषु।
नाथस्य संपूर्य मनोरथं च
विस्तारिकान् धर्मधरान् कुरुष्व॥ ८३॥

अथ स राजा बुद्धे समुपजातप्रसादः कृतकरसंपुटस्तं भिक्षुं क्षमयन्नुवाच– C 380

दशबलसुत क्षन्तुमर्हसीमं 25
कुकृतमिदं च तवाद्य देशयामि।
शरणमृषिमुपैमि तं च बुद्धं
गणवरमार्यनिवेदितं च धर्मम्॥ ८४॥

अपि च–

करोमि चैष व्यवसायमद्य तं 30
तद्गौरवात्तत्प्रवणप्रसादात्।

गां मण्डयिष्यामि जिनेन्द्रचैत्यै-
हंसांशशङ्खेन्दुबलाककल्पैः ॥ ८५ ॥

यावत् स भिक्षुस्तदेव ऋद्धया प्रक्रान्तः। अथ राजा आरब्धो निष्क्रामितुम्। ततश्चण्डगिरिकः कृताञ्जलिरुवाच—देव, लब्धवरोऽहम्। नैकस्य विनिर्गम इति। राजा 5 आह—मा तावन्ममापीच्छसि घातयितुम्। स उवाच—एवमेव। राजा आह—कोऽस्माकं प्रथमतरं प्रविष्टः? चण्डगिरिक उवाच—अहम्। ततो राज्ञा अभिहितम्। कोऽत्रेति? यावद्वध्यघातैर्गृहीतः। गृहीत्वा च यन्त्रगृहं प्रवेशितः। प्रवेशयित्वा दग्धः। तच्च रमणीयकं बन्धनमपनीतम् सर्वसत्त्वेभ्यश्चाभयप्रदानमनुप्रदत्तम्। ततो राजा भगवच्छरीरधातुं विस्तरीष्यामीति चतुरङ्गेन बलकायेन गत्वा अजातशत्रुप्रतिष्ठापितं द्रोणस्तूपमुत्पाट्य शरीरधातुं 10 गृहीतवान्। यत्रोद्धारणं च विस्तरेण कृत्वा धातुप्रत्यंशं दत्वा स्तूपं प्रतिष्ठाप्य एवं द्वितीयं स्तूपं विस्तरेण भक्तिमतो यावत्सप्तद्रोणाद्गृहाय स्तूपांश्च प्रतिष्ठाप्य रामग्रामं गतः। ततो राजा नागैर्नागभवनमवतारितः, विज्ञप्तश्च—वयमस्यात्रैव पूजां करिष्याम इति। यावद्राज्ञा अभ्यनुज्ञातम्। ततो नागराजा पुनरपि नागभवनादुत्तारितः। वक्ष्यति हि—

रामग्रामे त्वष्टमं स्तूपमद्य
15 नागास्तत्कालं भक्तिमन्तो ररक्षुः।
धातून्येतस्मान्नोपलेभे स राजा
श्रद्धाभू (?) राजा चिन्तयति यस्त्वेतत्कृत्वा जगाम ॥ ८६ ॥

C 381 यावद्राजा चतुरशीतिकरण्डसहस्रं कारयित्वा सौवर्णरूप्यस्फटिकवैडूर्यमयानां तेषु धातवः प्रक्षिप्ताः। एवं विस्तरेण चतुरशीतिकुम्भसहस्रं पट्टसहस्रं च यक्षाणां हस्ते दत्वा 20 विसर्जितम्—आसमुद्रायां पृथिव्यां हीनोत्कृष्टमध्यमेषु नगरेषु यत्र कोटिः परिपूर्यते, तत्र धर्मराजिकां प्रतिष्ठापयितव्यम् ॥

तस्मिन् समये तक्षशिलायां षट्त्रिंशत्कोटयः। तैरभिहितम्—षट्त्रिंशत्करण्डकाननुप्रयच्छेति। राजा चिन्तयति—न यदि वैस्तारिका धातवो भविष्यन्ति। उपायज्ञो राजा। तेनाभिहितम्—पञ्चत्रिंशत्कोटयः शोधयितव्याः। विस्तरेण यावद्राज्ञा अभिहितम्—यत्रा25 धिकतरा भवन्ति, यत्र च न्यूनतराः, तत्र न दातव्यम् ॥

यावद्राजा कुर्कुटारामं गत्वा स्थविरयशसमभिगम्योवाच—अयं मे मनोरथः—एकस्मिन् दिवसे एकस्मिन्मुहूर्ते चतुरशीतिधर्मराजिकासहस्रं प्रतिष्ठापयेयमिति। स्थविरेणाभिहितम्—एवमस्तु। अहं तस्मिन् समये पाणिना सूर्यमण्डलं प्रतिच्छादयिष्यामीति। यावत् तस्मिन् दिवसे स्थविरयशसा पाणिना सूर्यमण्डलं प्रतिच्छादितम्। एकस्मिन् दिवसे एक30 मुहूर्ते चतुरशीतिधर्मराजिकासहस्रं प्रतिष्ठापितम्। वक्ष्यति च—

ताभ्यः सप्तभ्यः पूर्विकाभ्यः कृतिभ्यो

धातुं तस्य ऋषेः स ह्युपादाय मौर्यः।

चक्रे स्तूपानां शारदाभ्रप्रभानां

लोके साशीति शासदहा सहस्रम्॥ ८७॥

यावच्च राज्ञा अशोकेन चतुरशीतिधर्मराजिकासहस्रं प्रतिष्ठापितम्, धार्मिको धर्मराजा 5 संवृत्तः। तस्य धर्माशोक इति संज्ञा जाता। वक्ष्यति च–

आर्यमौर्यश्रीः स प्रजानां हितार्थं

कृत्स्नं स्तूपान् कारयामास लोकम्।

चण्डाशोकत्वं प्राप्य पूर्वं पृथिव्यां C 382

धर्माशोकत्वं कर्मणा तेन लेभे॥ ८८॥ 10

पांशुप्रदानावदानं षड्विंशतिमम्॥



## २७ कुणालावदानम् ।

स इदानीमचिरजातप्रसादो बुद्धशासने यत्र शाक्यपुत्रीयान् ददर्श आकीर्णे रहसि वा, तत्र शिरसा पादयोर्निपत्य वन्दते स्म । तस्य च यशो नामामात्यः परमश्राद्धो भगवति । स तं राजानमुवाच—देव, नार्हसि सर्ववर्णप्रव्रजितानां प्रणिपातं कर्तुम् । सन्ति हि 5 शाक्यश्रामणेरकाश्चतुर्भ्यो वर्णेभ्यः प्रव्रजिता इति । तस्य राजा न किंचिदवोचत् । अथ स राजा केनचित् कालान्तरेण सर्वसचिवानुवाच—विविधानां प्राणिनां शिरोभिः कार्यम् । तत्त्वममुकस्य प्राणिनः शीर्षमानय, त्वममुकस्येति । यशामात्यः पुनराज्ञप्तः—त्वं मानुषं शीर्षमानयेति । समानीतेषु च शिरःसु अभिहिताः—गच्छत, इमानि शिरांसि मूल्येन विक्रीणीध्वमिति । अथ सर्वशिरांसि विक्रीतानि । तदेव मानुष्यं शिरो न कश्चिज्जग्राह । ततो 10 राज्ञाभिहितः—विनापि मूल्येन कस्मैचिदेतच्छिरो देहीति । न चास्य कश्चित् प्रतिग्राहको बभूव । ततो यशामात्यस्तस्य शिरसः प्रतिग्राहकमनासाद्य सव्रीडो राजानमुपेत्येदमर्थमुवाच—

गोगर्दभोरभ्रमृगद्विजानां
मूल्यैर्गृहीतानि शिरांसि पुंभिः ।
15 शिरस्त्विदं मानुषमप्रशस्तं
न गृह्यते मूल्यमृतेऽपि राजन् ॥ १ ॥

अथ स राजा तममात्यमुवाच—किमिदमितीदं मानुषशिरो न कश्चिद्गृह्णातीति ? अमात्य उवाच—जुगुप्सितत्वादिति । राजाब्रवीत्—किमेतदेव शिरो जुगुप्सितमाहोस्वित् सर्वमानुषशिरांसीति ? अमात्य उवाच—सर्वमानुषशिरांसीति । राजाब्रवीत्—किमिदं मदीयम् C 383 20 मपि शिरो जुगुप्सितमिति ? स च भयान्नेच्छति तस्माद्भूतार्थमभिधातुम् । स राज्ञाभिहितः—अमात्य, सत्यमुच्यतामिति । स उवाच—एवमिति । ततः स राजा तममात्यं प्रतिज्ञायां प्रतिष्ठाप्य प्रत्यादिशन्निममर्थमुवाच—हं भोः, रूपैश्वर्यजनितमदविस्मित, युक्तमिदं भवतः, यस्मात् त्वं भिक्षुचरणप्रणामं मां विच्छन्दयितुमिच्छसि ?

विनापि मूल्यैर्विजुगुप्सितत्वात्
25 प्रतिग्रहीता भुवि यस्य नास्ति ।
शिरस्तदासाद्य ममेह पुण्यं
यद्यर्जितं किं विपरीतमत्र ॥ २ ॥

जातिं भवान् पश्यति शाक्यभिक्षु-
ष्वन्तर्गतांस्तेषु गुणान्न चेति ।
30 अतो भवान् जातिमदावलेपा-
दात्मानमन्यांश्च हिनस्ति मोहात् ॥ ३ ॥

आवाहकालेऽथ विवाहकाले
　　जातेः परीक्षा न तु धर्मकाले ।
धर्मक्रियाया हि गुणा निमित्ता
　　गुणाश्च जातिं न विचारयन्ति ॥ ४ ॥

यद्युच्चकुलीनगता दोषा गर्हां प्रयान्ति लोकेऽस्मिन् ।　　5
कथमिव नीचजनगता गुणा न सत्कारमर्हन्ति ॥ ५ ॥

चित्तवशेन हि पुंसां कलेवरं निन्द्यतेऽथ सत्क्रियते ।
शाक्यश्रमणमनांसि च शुद्धान्यर्च्यान्यतः शाक्याः ॥ ६ ॥

यदि गुणपरिवर्जितो द्विजातिः
　　पतित इति प्रथितोऽपि यात्यवज्ञाम् ।　　10
न तु निधनकुलोद्गतोऽपि जन्तुः
　　शुभगुणयुक्त इति प्रणम्य पूज्यः ॥ ७ ॥

अपि च ।

किं ते कारुणिकस्य शाक्यवृषभस्यैतद्वचो न श्रुतं
　　प्राज्ञैः सारमसारकेभ्य इह यन्नृभ्यो ग्रहीतुं क्षमम् ।　　15
तस्यानन्यथवादिनो यदि च तामाज्ञां चिकीर्षाम्यहं
　　व्याहन्तुं च भवान् यदि प्रयतते नैतत् सुहृल्लक्षणम् ॥ ८ ॥

इक्षुक्षोदवदुज्झितो भुवि यदा कायो मम स्वप्स्यति
　　प्रत्युत्थाननमस्कृताञ्जलिपुटक्लेशक्रियास्वक्षमः ।　　C 384
कायेनाहमनेन किं नु कुशलं शक्ष्यामि कर्तुं तदा　　20
　　तस्मान्नार्यमतः श्मशाननिधनात् सारं ग्रहीतुं मया ॥ ९ ॥

भवनादिव प्रदीप्तान्निमज्जमानादिवाप्सु रत्ननिधेः ।
कायाद्विधाननिधनाद्ये सारं नाधिगच्छन्ति ॥ १० ॥

ते सारमपश्यन्तः सारासारेष्वकोविदा प्राज्ञाः ।
ते मरणमकरवदनप्रवेशसमये विषीदन्ति ॥ ११ ॥　　25

दधिघृतनवनीतक्षीरतक्रोपयोगा-
　　दुरमपहृतसारो मण्डकुम्भोऽवभग्नः ।
न भवति बहु शोच्यं यद्वदेवं शरीरे
　　सुचरितहृतसारे नैति शोकोऽन्तकाले ॥ १२ ॥

सुचरितविमुखानां गर्वितानां यदा तु
प्रसभमिह हि मृत्युः कायकुम्भं भिनत्ति ।
दहति हृदयमेषां शोकवह्निस्तदानीं
दधिघट इव भग्ने सर्वशोऽप्राप्तसारे ॥ १३ ॥
5 कर्तुं विघ्नमतो न मेऽर्हति भवान् कायप्रणामं प्रति
श्रेष्ठोऽस्मीत्यपरीक्षको हि गणयन् मोहान्धकारावृतः ।
कायं यस्तु परीक्षते दशबलव्याहारदीपैर्बुधो
नासौ पार्थिवभृत्ययोर्विषमतां कायस्य संपश्यति ॥ १४ ॥
त्वग्मांसास्थिशिरायकृत्प्रभृतयो भावा हि तुल्या नृणा-
10 माहार्यैस्तु विभूषणैरधिकता कायस्य निष्पद्यते ।
एतत्सारमिहेष्यते तु यदिमं निश्रित्य कायाधमं
प्रत्युत्थाननमस्कृतादिकुशलं प्राज्ञैः समुत्थाप्यते ॥ १५ ॥ इति ।

अथाशोको राजाऽहिरोदकसिकतापिण्डैरण्डकाष्ठेभ्योऽपि असारतरत्वं कायस्यावेत्य प्रणामादिभ्यः समुत्थस्य फलस्य बहुकल्पशः स्थापयित्वा सुमेरुवन्महापृथिवीभ्यः समुत्थस्य 15 फलस्य बहुकल्पशः स्थापयित्वा सुमेरुवन्महापृथिवीभ्यः सारतरतामवेक्ष्य भगवतः स्तूपवन्द-नायामात्मानमलंकर्तुकामोऽमात्यगणपरिवृतः कुर्कुटारामं गत्वा तत्र वृद्धान्ते स्थित्वा कृता-ञ्जलिरुवाच—अस्ति—

C 385

कश्चिदन्योऽपि निर्दिष्टो द्वितीयः सर्वदर्शिना ।
यथाहं तेन निर्दिष्टः पांशुदानेन धीमता ॥ १६ ॥

20 तत्र यशो नाम्ना संघस्थविर उवाच--अस्ति महाराज । यदा भगवतः परिनिर्वाणकाल-समये तदा अपलालं नागं दमयित्वा कुम्भकालं चण्डालीगोपालीं च नागं च मथुरामनुप्राप्तः, तत्र भगवानायुष्मन्तमानन्दमामन्त्रयते—अस्यामानन्द मथुरायां वर्षशतपरिनिर्वृतस्य तथागतस्य गुप्तो नाम्ना गान्धिको भविष्यति । तस्य पुत्रो भविष्यत्युपगुप्तो नाम्ना अववादकानामग्रोऽलक्ष-णको बुद्धः, यो मम वर्षशतपरिनिर्वृतस्य बुद्धकार्यं करिष्यति । पश्यसि त्वमानन्द दूरत 25 एव नीलनीलाम्बरराजिम् ? एवं भदन्त । एष आनन्द उरुमुण्डो नाम पर्वतः । अत्र वर्ष-शतपरिनिर्वृतस्य तथागतस्य नटभटिका नामारण्यायतनं भविष्यति । एतदग्रं मे आनन्द भविष्यति शमथानुकूलानां शय्यासनानां यदुत नटभटिका नामारण्यायतनम् । आह च—

अववादकानां प्रवर उपगुप्तो महायशाः ।
व्याकृतो लोकनाथेन बुद्धकार्यं करिष्यति ॥ १७ ॥

30 राजा आह—किं पुनः स शुद्धसत्त्व उत्पन्नः, अथाद्यापि नोत्पद्यत इति ? स्थविर उवाच—उत्पन्नः स महात्मा । उरुमुण्डे पर्वते जितक्लेशोऽर्हद्गणैः परिवृतस्तिष्ठति लोकानु-कम्पार्थम् । अपि च देव—

सर्वज्ञलीलो हि स शुद्धसत्त्वो
धर्मं प्रणीतं वदते गणाग्रे ।
देवासुरेन्द्रोरगमानुषांश्च
सहस्रशो मोक्षपुरं प्रणेता ॥ १८ ॥

तेन खलु समयेन आयुष्मानुपगुप्तोऽष्टादशभिरर्हत्सहस्रैः परिवृतो नटभटिकारण्यायतने प्रतिवसति। श्रुत्वा च राजा अमात्यगणानाहूय कथयति— 5

संनाह्यतां हस्तिरथाश्वकायः
शीघ्रं प्रयास्याम्युरुमुण्डशैलम् ।
द्रक्ष्यामि सर्वाश्रवविप्रमुक्तं
साक्षादर्हन्तं ह्युपगुप्तं नाम ॥ १९ ॥ 10

ततोऽमात्यैरभिहितः—देव दूतः प्रेषयितव्यो विषयनिवासी, स देवस्य स्वयमेवागमिष्यति। राजा आह—नासौ अस्माकमर्हत्यभिगन्तुम्, किं तु वयमेवार्हामस्तस्याभिगन्तुम्। अपि च— C 386

मन्ये वज्रमयं तस्य देहं शैलोपमाधिकम् ।
शास्तृतुल्योपगुप्तस्य यो ह्याज्ञामाक्षिपेन्नरः ॥ २० ॥ 15

यावद्राज्ञा स्थविरोपगुप्तस्य सकाशं दूतो न प्रेषितः स्थविरदर्शनायागमिष्यामीति। स्थविरोपगुप्तश्चिन्तयति—यदि राजा आगमिष्यति, महाजनकायस्य पीडा भविष्यति गोचरस्य च। ततः स्थविरेणाभिहितम्—स्वयमेवाभिगमिष्यामीति । ततो राज्ञा स्थविरोपगुप्तस्यार्थे नौयानेनागमिष्यतीति यावच्च मथुरां यावच्च पाटलिपुत्रमन्तरान्नौसंक्रमोऽवस्थापितः। अथ स्थविरोपगुप्तो राज्ञोऽशोकस्यानुग्रहार्थमष्टादशभिरर्हत्सहस्रैः परिवृतो नावमभिरुह्य पाटलिपुत्रमनुप्राप्तः। ततो राजपुरुषै राज्ञोऽशोकस्य निवेदितम्—देव, दिष्ट्या वर्धस्व। 20

अनुग्रहार्थं तव सोपगुप्त-
श्चित्तेश्वरः शासनकर्णधारः ।
पुरस्कृतस्तीर्णभवौघपारैः
सार्धं समभ्यागत एष पद्भ्याम् ॥ २१ ॥ 25

श्रुत्वा च राज्ञा प्रीतमनसा शतसहस्रमूल्यो मुक्ताहारः स्वशरीरादपनीय प्रियाख्यायिनो दत्तः। घाण्टिकं चाहूय कथयति—घुष्यन्तां पाटलिपुत्रे घण्टाः। स्थविरोपगुप्तस्यागमनं निवेद्यताम्। वक्तव्यम्—

उत्सृज्य दारिद्र्यमनर्थमूलं
यः स्फीतशोभां श्रियमिच्छतीह । 30
स्वर्गापवर्गाय च हेतुभूतं
स पश्यतां कारुणिकोपगुप्तम् ॥ २२ ॥

येभिर्न दृष्टो द्विपदप्रधानः
शास्ता महाकारुणिकः स्वयंभूः।
ते शास्तृकल्पं स्थविरोपगुप्तं
पश्यन्त्युदारं त्रिभवप्रदीपम्॥ २३॥

5 यावद्राज्ञा पाटलिपुत्रे घण्टां घोषयित्वा नगरशोभां च कारयित्वा अर्धतृतीयानि योजनानि गत्वा सर्ववाद्येन सर्वपुष्पगन्धमाल्येन सर्वपौरैः सर्वामात्यैः सह स्थविरोपगुप्तं प्रत्युद्गतः। ददर्श राजा स्थविरोपगुप्तं दूरत एवाष्टादशभिरर्हत्सहस्रैरर्धचन्द्रेणोपगुप्तम्। यदन्तरं च राजा स्थविरोपगुप्तमद्राक्षीत्, तदन्तरं हस्तिस्कन्धादवतीर्य पद्भ्यां नदीतीरमभिगम्य एकं पादं नदीतीरे स्थाप्य द्वितीयं नौफलके स्थविरोपगुप्तं सर्वाङ्गेनानुपरिगृह्य नौ-
10 [संक्रमाद्] उत्तारितवान्। उत्तार्य च मूलनिकृत्त इव द्रुमः सर्वशरीरेणोपगुप्तस्य पादयोर्निपतितो मुखतुण्डकेन च पादौ अनुपरिमार्ज्य उत्थाय द्वौ जानुमण्डलौ पृथिवीतले निक्षिप्य कृताञ्जलिः स्थविरोपगुप्तं निरीक्षमाण उवाच—

C 387

यदा मया शत्रुगणान्निहत्य
प्राप्ता समुद्राभरणा सशैला।
15 एकातपत्रा पृथिवी तदा मे
प्रीतिर्न सा या स्थविरं निरीक्ष्य॥ २४॥

त्वद्दर्शनान्मे द्विगुणः प्रसादः
संजायतेऽस्मिन् वरशासनाग्रे।
त्वद्दर्शनाच्चैव परेऽपि शुद्ध्या
20 दृष्टो मयाद्याप्रतिमः स्वयंभूः॥ २५॥

अपि च।

शान्तिं गते कारुणिके जिनेन्द्रे
त्वं बुद्धकार्यं कुरुषे त्रिलोके।
नष्टे जगन्मोहनिमीलिताक्षे
25 त्वमर्कवज्ज्ञानवभासकर्ता॥ २६॥

त्वं शास्तृकल्पो जगदेकचक्षु-
रववादकानां प्रवरः शरण्यम्।
विभो ममाज्ञां वद शीघ्रमद्य
कर्तास्मि वाक्यं तव शुद्धसत्त्वा॥ २७॥

अथ स्थविरोपगुप्तो दक्षिणेन पाणिना राजानं शिरसि परिमार्जयन्नुवाच–

अप्रमादेन संपाद्य राज्यैश्वर्यं प्रवर्तताम्।
दुर्लभं त्रीणि रत्नानि नित्यं पूजय पार्थिव ॥ २८ ॥

अपि च महाराज तेन भगवता तथागतेनार्हता सम्यक्संबुद्धेन तव च मम [च] शासनमुपन्यस्तं सत्त्वसारथिवरेण गणमध्ये परीत्तं परिपाल्यं यत्नतोऽस्माभिः। राजा आह– 5 C 388
स्थविर, यथा अहं निर्दिष्टो भगवता, तदेवानुष्ठीयते। कुतः?

स्तूपैर्विचित्रैर्गिरिशृङ्गकल्पै-
श्छत्रध्वजैश्चोच्छ्रितरत्नचित्रैः।
संशोभिता मे पृथिवी समन्ता-
द्वैस्तारिका धातुधराः कृताश्च ॥ २९ ॥ 10

अपि च।

आत्मा पुत्रं गृहं दारान् पृथिवी कोशमेव च।
न किंचिदपरित्यक्तं धर्मराजस्य शासने ॥ ३० ॥

स्थविरोपगुप्त आह–साधु साधु महाराज, एतदेवानुष्ठेयम्। कुतः?

ये सारमुपजीवन्ति कायाद्भोगैश्च जीविकाम्। 15
गते काले न शोचन्ति इष्टं यान्ति सुरालयम् ॥ ३१ ॥

यावद्राजा महता श्रीसमुदयेन स्थविरोपगुप्तं राजकुले प्रवेशयित्वा सर्वाङ्गेनानुपरिगृह्य प्रज्ञप्त एवासने निषादयामास। स्थविरोपगुप्तस्य शरीरं मृदु सुमृदु, तद्यथा तूलपिचुर्वा कर्पासपिचुर्वा। अथ राजा स्थविरोपगुप्तस्य शरीरसंस्पर्शमवगम्य कृताञ्जलिरुवाच–

मृदूनि तेऽङ्गानि उदारसत्त्वा 20
तूलोपमाः काशिसमोपमाश्च।
अहं त्वधन्यः खरकर्कशाङ्गो
निःस्पर्शगात्रः परुषाश्रयश्च ॥ ३२ ॥

स्थविर उवाच–

दानं मनापं सुशुभं प्रणीतं 25
दत्तं मया ह्यप्रतिपुद्गलस्य।
न पांशुदानं हि मया प्रदत्तं
यथा त्वयादायि तथागतस्य ॥ ३३ ॥

राजा आह–स्थविर,

बालभावादहं पूर्वं क्षेत्रं प्राप्य ह्यनुत्तरम्। 30
पांशून् रोपितवांस्तत्र फलं यस्येदृशं मम ॥ ३४ ॥

अथ स्थविरो राजानं संहर्षयन्नुवाच—महाराज,

पश्य क्षेत्रस्य माहात्म्यं पांशुर्यत्र विरुह्यते।
राजश्रीर्येन ते प्राप्ता आधिपत्यमनुत्तरम्॥ ३५॥

C 389 श्रुत्वा च राजा विस्मयोत्फुल्लनेत्रोऽमात्यानाहूयोवाच—

5 बलचक्रवर्तिराज्यं प्राप्तं मे पांशुदानमात्रेण।
केन भगवान् भवन्तो नार्चयितव्यः प्रयत्नेन॥ ३६॥

अथ राजा स्थविरोपगुप्तस्य पादयोर्निपत्योवाच—स्थविर, अयं मे मनोरथो ये भगवता बुद्धेन प्रदेशा अध्युषितास्तानर्चेयम्, चिह्नानि च कुर्यां पश्चिमस्यां जनतायामनुग्रहार्थम्। आह च—ये बुद्धेन भगवता प्रदेशा अध्युषिताः, तानर्चयन्नहं गत्वा चिह्नानि चैव कुर्यां 10 पश्चिमां जनतामनुकम्पार्थम्। स्थविर उवाच—साधु साधु महाराज, शोभनस्ते चित्तोत्पादः। अहं प्रदर्शयिष्याम्यधुना।

ये तेनाध्युषिता देशास्तान्नमस्ये कृताञ्जलिः।
गत्वा चिह्नानि तेष्वेव करिष्यामि न संशयः॥ ३७॥

अथ राजा चतुरङ्गबलकायं संनाह्य गन्धमाल्यपुष्पमादाय स्थविरोपगुप्तसहायः 15 संप्रस्थितः। अथ स्थविरोपगुप्तो राजानमशोकं सर्वप्रथमेन लुम्बिनीवनं प्रवेशयित्वा दक्षिणं हस्तमभिप्रसार्योवाच—अस्मिन् महाराज प्रदेशे भगवान् जातः। आह च—

इदं हि प्रथमं चैत्यं बुद्धस्योत्तमचक्षुषः।
जातमात्रेह स मुनिः प्रक्रान्तः सप्तपदं भुवि॥ ३८॥
चतुर्दिशमवलोक्य वाचं भाषितवान् पुरा।
20 इयं मे पश्चिमा जातिर्गर्भावासश्च पश्चिमः॥ ३९॥

अथ राजा सर्वशरीरेण तत्र पादयोर्निपत्य उत्थाय कृताञ्जलिः प्ररुदन्नुवाच—

धन्यास्ते कृतपुण्यै(ण्या)श्च यैर्दृष्टः स महामुनिः।
प्रजातः संश्रुता यैश्च वाचस्तस्य मनोरमाः॥ ४०॥

अथ स्थविरो राज्ञः प्रसादवृद्ध्यर्थमुवाच—महाराज, किं द्रक्ष्यसि तां देवताम्?

25 यया दृष्टः प्रजायन्स वनेऽस्मिन् वदतां वरः।
क्रममाणः पदान् सप्त श्रुता वाचो यया मुनेः॥ ४१॥

C 390 राजा आह—परं स्थविर द्रक्ष्यामि। अथ स्थविरोपगुप्तो यस्य वृक्षस्य शाखामवलम्ब्य देवी महामाया प्रसूता, तेन दक्षिणहस्तमभिप्रसार्योवाच—

नैवासिका या इहाशोकवृक्षे
30 संबुद्धदर्शिनी या देवकन्या।
साक्षादसौ दर्शयतु स्वदेहं
राज्ञो ह्यशोकस्य [मनः]प्रसादवृद्ध्यै॥ ४२॥

यावत् सा देवता स्वरूपेण स्थविरोपगुप्तसमीपे स्थित्वा कृताञ्जलिरुवाच—स्थविर, किमाज्ञापयसि? अथ स्थविरो राजानमशोकमुवाच—महाराज, इयं सा देवता, यया दृष्टो भगवान् जायमानः। अथ राजा कृताञ्जलिस्तां देवतामुवाच—

दृष्टस्त्वया लक्षणभूषिताङ्गः
प्रजायमानः कमलायताक्षः। 5
श्रुतास्त्वया तस्य नरर्षभस्य
वाचो मनोज्ञाः प्रथमा वनेऽस्मिन्॥ ४३॥

देवता प्राह—

मया हि दृष्टः कनकावदातः
प्रजायमानो द्विपदप्रधानः। 10
पदानि सप्त क्रममाण एव
श्रुता च वाचमपि तस्य शास्तुः॥ ४४॥

राजा आह—कथय देवते, कीदृशी भगवतो जायमानस्य श्रीर्बभूवेति। देवता प्राह—न शक्यं मया वाग्भिः संप्रकाशयितुम्। अपि तु संक्षेपतः शृणु—

विनिर्मिताभा कनकावदाता 15
सेन्द्रे त्रिलोके नयनाभिरामा।
ससागरान्ता च मही सशैला
महार्णवस्था इव नौश्चचाल॥ ४५॥

यावद्राज्ञा जात्यां शतसहस्रं दत्तम्। चैत्यं च प्रतिष्ठाप्य राजा प्रक्रान्तः॥

अथ स्थविरोपगुप्तो राजानं कपिलवस्तु निवेदयित्वा दक्षिणहस्तमभिप्रसार्योवाच— 20
अस्मिन् प्रदेशे महाराज बोधिसत्त्वो राज्ञः शुद्धोदनस्योपनामितः। तं द्वात्रिंशता महापुरुषलक्षणालंकृतशरीरमसेचनकदर्शनं च दृष्ट्वा राजा सर्वशरीरेण बोधिसत्त्वस्य पादयोर्निपतितः। इदं महाराज शाक्यवर्धं नाम देवकुलम्। अत्र बोधिसत्त्वो जातमात्र उपनीतो देवमर्चयिष्यतीति। सर्वदेवताश्च बोधिसत्त्वस्य पादयोर्निपतिताः। ततो राज्ञा शुद्धोदनेन बोधिसत्त्वो देवतानामप्ययं देव इति तेन बोधिसत्त्वस्य देवातिदेव इति नामधेयं कृतम्। अस्मिन् 25
प्रदेशे महाराज बोधिसत्त्वो ब्राह्मणानां नैमित्तिकानां विपश्चिकानामुपदर्शितः। अस्मिन् प्रदेशे असितेन ऋषिणा निर्दिष्टो बुद्धो लोके भविष्यतीति। अस्मिन् प्रदेशे महाराज महाप्रजापत्या संवर्धितः। अस्मिन् प्रदेशे लिपिज्ञानं शिक्षापितः। अस्मिन् प्रदेशे हस्तिग्रीवायामश्वपृष्ठे रथे शरधनुर्ग्रहे तोमरग्रहेऽङ्कुशग्रहे कुलानुरूपासु विद्यासु पारगः संवृत्तः। इयं बोधिसत्त्वस्य व्यायामशाला बभूव। अस्मिन् प्रदेशे महाराज बोधिसत्त्वो देवताशत- 30
सहस्रैः परिवृतः षष्टिभिः स्त्रीसहस्रैः सार्धं रतिमनुभूतवान्। अस्मिन् प्रदेशे बोधिसत्त्वो जीर्णातुरमृतसंदर्शनोद्विग्नो वनं संश्रितः। अस्मिन् प्रदेशे जम्बुच्छायायां निषद्य विविक्तं

C 391

पापकैरकुशलैर्धर्मैः सवितर्कं सविचारं विवेकजं प्रीतिसुखमनाश्रवसदृशं प्रथमध्यानं समापन्नः। अथ परिणते मध्याह्ने अतिक्रान्ते भक्तकालसमये अन्येषां वृक्षाणां छाया प्राचीननिम्ना प्राचीनप्रवणा प्राचीनप्राग्भारा, जम्बुच्छाया बोधिसत्त्वस्य कायं न जहाति। दृष्ट्वा च पुना राजा शुद्धोदनः सर्वशरीरेण बोधिसत्त्वस्य पादयोर्निपतितः। अनेन द्वारेण बोधिसत्त्वो 5 देवताशतसहस्रैः परिवृतोऽर्धरात्रेः कपिलवस्तुनो निर्गतः। अस्मिन् प्रदेशे बोधिसत्त्वेन छन्दकस्याश्वमाभरणानि च दत्वा प्रतिनिवर्तितः। आह च—

छन्दाभरणान्यश्वं च अस्मिन् प्रतिनिवर्तितः।
निरुपस्थायिको वीरः प्रविष्टैकस्तपोवनम्॥ ४६॥

अस्मिन् प्रदेशे बोधिसत्त्वो लुब्धकसकाशात् काशिकैर्वस्त्रैः काषायाणि वस्त्राणि C 392 10 ग्रहाय प्रव्रजितः। अस्मिन् प्रदेशे भार्गवेणाश्रमेणोपनिमन्त्रितः। अस्मिन् प्रदेशे बोधिसत्त्वो राज्ञा बिम्बिसारेणार्धराज्येनोपनिमन्त्रितः। अस्मिन् प्रदेशे आराडोद्रकमभिगतः। आह च—

उद्रकाराडका नाम ऋषयोऽस्मिंस्तपोवने।
अधिगताचार्यसत्त्वेन पुरुषेन्द्रेण तापिता॥ ४७॥

अस्मिन् प्रदेशे बोधिसत्त्वेन षड्वर्षाणि दुष्करं चीर्णम्। आह च—

15 षड्वर्षाणि हि कटुकं तपस्तप्त्वा महामुनिः।
नायं मार्गो ह्यभिज्ञाय इति ज्ञात्वा समुत्सृजेत्॥ ४८॥

अस्मिन् प्रदेशे बोधिसत्त्वेन नन्दाया नन्दवलायाश्च ग्रामिकदुहित्र्योः सकाशात् षोडशगुणितं मधुपायसं परिभुक्तम्। आह च—

अस्मिन् प्रदेशे नन्दाया भुक्त्वा च मधुपायसम्।
20 बोधिमूलं महावीरो जगाम वदतां वरः॥ ४९॥

अस्मिन् प्रदेशे बोधिसत्त्वः कालिकेन नागराजेन बोधिमूलमभिगच्छन् संस्तुतः। आह च—

कालिकभुजगेन्द्रेण संस्तुतो वदतां वरः।
प्रयातोऽनेन मार्गेण बोधिमण्डेऽमृतार्थिनः॥ ५०॥

25 अथ राजा स्थविरस्य पादयोर्निपत्य कृताञ्जलिरुवाच—

अपि पश्येम नागेन्द्रं येन दृष्टस्तथागतः।
व्रजानोऽनेन मार्गेण मत्तनागेन्द्रविक्रमः॥ ५१॥

अथ कालिको नागराजः स्थविरसमीपे स्थित्वा कृताञ्जलिरुवाच—स्थविर, किमाज्ञापयसीति। अथ स्थविरो राजानमुवाच—अयं स महाराज कालिको नागराजा येन भगवा- 30 ननेन मार्गेण बोधिमूलं निर्गच्छन् संस्तुतः। अथ राजा कृताञ्जलिः कालिकं नागराजमुवाच—

दृष्टस्त्वया ज्वलितकाञ्चनतुल्यवर्णः
शास्ता ममाप्रतिसमः शरदेन्दुवक्त्रः।
आख्याहि मे दशबलस्य गुणैकदेशं
तत्कीदृशी वद भवन् सुगते तदानीम् ॥ ५२ ॥

कालिक उवाच—न शक्यं वाग्भिः संप्रकाशयितुम्। अपि तु संक्षेपं शृणु— 5 C 393

चरणतलपराहता सशैला
अवनिस्तदा प्रचचाल षड्विकारम्।
रविकिरणप्रभाधिका नृलोके
सुगतशशिद्युतिसंनिभा मनोज्ञा ॥ ५३ ॥

यावद्राजा चैत्यं प्रतिष्ठाप्य प्रक्रान्तः। अथ स्थविरोपगुप्तो राजानं बोधिमूलमुप- 10
नामयित्वा दक्षिणं करमभिप्रसार्योवाच—अस्मिन् प्रदेशे महाराज बोधिसत्त्वेन महामैत्री-
सहायेन सकलं मारबलं जित्वा अनुत्तरा सम्यक्संबोधिरभिसंबुद्धा। आह च—

इह मुनिवृषभेण बोधिमूले
नमुचिबलं विकृतं निरस्तमाशु।
इदममृतमुदारमग्र्यबोधिं 15
ह्यधिगतमप्रतिपुद्गलेन तेन ॥ ५४ ॥

यावद्राज्ञा बोधौ शतसहस्रं दत्तम्। चैत्यं च प्रतिष्ठाप्य राजा प्रक्रान्तः। अथ
स्थविरोपगुप्तो राजानमशोकमुवाच—अस्मिन् प्रदेशे भगवान् चतुर्णां महाराजानां सकाशा-
च्चत्वारि शैलमयानि पात्राणि ग्रहायैकं पात्रमधिमुक्तम्। अस्मिन् प्रदेशे त्रपुषभल्लिकयोर्वणिजो-
रपि पिण्डपात्रः प्रतिगृहीतः। अस्मिन् प्रदेशे भगवान् वाराणसीमभिगच्छन्नुपगेनाजी- 20
विकेन संस्तुतः। यावत् स्थविरो राजानं ऋषिवदन(पतन?)मुपनीय दक्षिणं हस्तमभि-
प्रसार्योवाच—अस्मिन् प्रदेशे महाराज भगवता त्रिपरिवर्तं द्वादशाकारं धर्म्यं धर्मचक्रं
प्रवर्तितम्। आह च—

शुभं धर्ममयं चक्रं संसारविनिवर्तये।
अस्मिन् प्रदेशे नाथेन प्रवर्तितमनुत्तरम् ॥ ५५ ॥ 25

अस्मिन् प्रदेशे जटिलसहस्रं प्रव्राजितम्। अस्मिन् प्रदेशे राज्ञो बिम्बिसारस्य धर्मं
देशितम्। राज्ञा च बिम्बिसारेण सत्यानि दृष्टानि, अशीतिभिश्च देवतासहस्रैरनेकैश्च
मागधकैर्ब्राह्मणगृहपतिसहस्रैः। अस्मिन् प्रदेशे भगवता शक्रस्य देवेन्द्रस्य धर्मो देशितः, C 394
शक्रेण च सत्यानि दृष्टान्यशीतिभिश्च देवतासहस्रैः। अस्मिन् प्रदेशे महाप्रातिहार्यं
विदर्शितम्। अस्मिन् प्रदेशे भगवान् देवेषु त्रायस्त्रिंशेषु वर्षा उषित्वा मातुर्जनयित्र्या धर्मं 30

देशयित्वा देवगणपरिवृतोऽवतीर्णः। विस्तरेण यावत् स्थविरो राजानमशोकं कुशिनगरीमुपनामयित्वा दक्षिणं करतलमभिप्रसार्योवाच—अस्मिन् प्रदेशे महाराज भगवान् सकलं बुद्धकार्यं कृत्वा निरुपधिशेषे निर्वाणधातौ परिनिर्वृतः। आह च—

लोकं सदेवमनुजासुरयक्षनाग-
5 मक्षय्यधर्मविनये मतिमान् विनीय।
वैनेयसत्त्वविरहानुपशान्तबुद्धिः
शान्तिं गतः परमकारुणिको महर्षिः॥ ५६॥

श्रुत्वा च राजा मूर्छितः पतितः। यावज्जलपरिषेकं कृत्वोत्थापितः। अथ राजा कथंचित् संज्ञामुपलभ्य परिनिर्वाणे शतसहस्रं दत्वा चैत्यं प्रतिष्ठाप्य पादयोर्निपत्योवाच—
10 स्थविर, अयं मे मनोरथः—ये च भगवता श्रावका अग्रतायां निर्दिष्टाः, तेषां शरीरपूजां करिष्यामीति। स्थविर उवाच—साधु साधु महाराज। शोभनस्ते चित्तोत्पादः। स्थविरो राजानमशोकं जेतवनं प्रवेशयित्वा दक्षिणं करमभिप्रसार्योवाच—अयं महाराज स्थविरशारिपुत्रस्य स्तूपः। क्रियतामस्यार्चनमिति। राजा आह—के तस्य गुणा बभूवुः? स्थविर उवाच—स हि द्वितीयशास्ता धर्मसेनाधिपतिर्धर्मचक्रप्रवर्तनः प्रज्ञावतामग्रो निर्दिष्टो
15 भगवता।

सर्वलोकस्य या प्रज्ञा स्थापयित्वा तथागतम्।
शारिपुत्रस्य प्रज्ञायाः कलां नार्हति षोडशीम्॥ ५७॥

आह च—

सद्धर्मचक्रमतुलं यज्जिनेन प्रवर्तितम्।
20 अनुवृत्तं हि तत्तेन शारिपुत्रेण धीमता॥ ५८॥
C 395 कस्तस्य साधु बुद्धान्यः पुरुषः शारद्वतस्येह।
ज्ञात्वा गुणगणनिधिं वक्तुं शक्नोति निरवशेषात्॥ ५९॥

ततो राजा प्रीतमनाः स्थविरशारद्वतीपुत्रस्तूपे शतसहस्रं दत्वा कृताञ्जलिरुवाच—

शारद्वतीपुत्रमहं भक्त्या वन्दे विमुक्तभवसङ्गम्।
25 लोकप्रकाशकीर्तिं ज्ञानवतामुत्तमं वीरम्॥ ६०॥

यावत् स्थविरोपगुप्तः स्थविरमहामौद्गल्यायनस्य स्तूपमुपदर्शयन्नुवाच—इदं महाराज स्थविरमहामौद्गल्यायनस्य स्तूपम्। क्रियतामस्यार्चनमिति। राजा आह—के तस्य गुणा बभूवुरिति? स्थविर उवाच—स हि ऋद्धिमतामग्रो निर्दिष्टो भगवता, येन दक्षिणेन पादाङ्गुष्ठेन शक्रस्य देवेन्द्रस्य वैजयन्तः प्रासादः प्रकम्पितः, नन्दोपनन्दौ नागराजानौ विनीतौ।
30 आह च—

शक्रस्य येन भवनं पादाङ्गुष्ठेन कम्पितम् ।
पूजनीयः प्रयत्नेन कोलितः स द्विजोत्तमः ॥ ६१ ॥
भुजगेश्वरौ प्रतिभयौ दान्तौ तौ येनातिदुर्दमौ ।
लोके कस्तस्य शुद्धबुद्धेः पारं गच्छेद्गुणार्णवस्य ॥ ६२ ॥

यावद्राजा महामौद्गल्यायनस्य स्तूपे शतसहस्रं दत्वा कृताञ्जलिरुवाच— 5

ऋद्धिमतामग्रो यो जन्मजराशोकदुःखनिर्मुक्तः ।
मौद्गल्यायनमहं वन्दे मूर्ध्ना प्रणिपत्य विख्यातम् ॥ ६३ ॥

यावत् स्थविरोपगुप्तः स्थविरमहाकाश्यपस्य स्तूपम्....। क्रियतामस्यार्चनमिति । राजा आह—के तस्य गुणा बभूवुः ? स्थविर उवाच—स हि महात्मा अल्पेच्छानां संतुष्टानां धुतगुणवादिनामग्रो निर्दिष्टो भगवता, अर्धासनेनोपनिमन्त्रितः, श्वेतचीवरेणाच्छादितः, दीनातुरग्राहकः शासनसंधारकश्चेति । आह च— 10 C 557

पुण्यक्षेत्रमुदारं दीनातुरग्राहको निरायासः ।
सर्वज्ञचीवरधरः शासनसंधारको मतिमान् ॥ ६४ ॥
कस्तस्य गुरोर्मनुजो वक्तुं शक्तो गुणान्निरवशेषान् ।
आसनवरस्य सुमतिर्यस्य जिनो दत्तवानर्धम् ॥ ६५ ॥ 15

ततो राजा अशोकः स्थविरमहाकाश्यपस्य स्तूपे शतसहस्रं दत्त्वा कृताञ्जलिरुवाच—

पर्वतगुहानिलायं वैरपराङ्मुखं प्रशमयुक्तम् । C 396
संतोषगुणविवृद्धं वन्दे खलु काश्यपं स्थविरम् ॥ ६६ ॥

यावत् स्थविरोपगुप्तः स्थविरवक्कुलस्य स्तूपं दर्शयन्नुवाच—इदं महाराज स्थविरवक्कुलस्य स्तूपम् । क्रियतामर्चनमिति । राजा आह—के तस्य गुणा बभूवुरिति ? स्थविर उवाच— 20 स महात्मा अल्पाबाधानामग्रो निर्दिष्टो भगवता । अपि च । न तेन कस्यचिद्द्विपदिका गाथा श्राविता । राजा आह—दीयतामत्र काकणिः । यावदमात्यैरभिहितः—देव, किमर्थं तुल्येष्ववस्थितेष्वत्र काकणी दीयत इति ? राजा आह—श्रूयतामत्राभिप्रायो मम—

आज्ञाप्रदीपेन मनोगृहस्थं
हतं तमो यद्यपि तेन कृत्स्नम् । 25
अल्पेच्छभावान्न कृतं हि तेन
यथा कृतं सत्त्वहितं तदन्यैः ॥ ६७ ॥

सा प्रत्याहता तस्यैव राज्ञः पादमूले निपतिता । यावदमात्या विस्मिता ऊचुः—अहो तस्य महात्मनोऽल्पेच्छता बभूव । अनयाप्यनर्थी । यावत् स्थविरोपगुप्तः स्थविरानन्दस्य स्तूपमुपदर्शयन्नुवाच—इदं स्थविरानन्दस्य स्तूपम् । क्रियतामस्यार्चनमिति । राजा आह—के 30 तस्य गुणा बभूवुरिति ? स्थविर उवाच—स हि भगवत उपस्थायको बभूव, बहुश्रुतानामग्र्यः प्रवचनग्राहकश्चेति । आह च—

मुनिपात्ररक्षणपटुः स्मृतिधृतिमतिनिश्चितः श्रुतसमुद्रः ।
विस्पष्टमधुरवचनः सुरनरमहितः सदानन्दः ॥ ६८ ॥
संबुद्धचित्तकुशलः सर्वत्र विचक्षणो गुणकरण्डः ।
जिनसंस्तुतो जितरणः सुरनरमहितः सदानन्दः ॥ ६९ ॥

5 यावद्राज्ञा तस्य स्तूपे कोटिर्दत्ता । यावदमात्यैरभिहितः—किमर्थमयं देव सर्वेषां सकाशादधिकतरं पूज्यते ? राजा आह—श्रूयतामभिप्रायः—

यत्तच्छरीरं वदतां वरस्य
धर्मात्मनो धर्ममयं विशुद्धम् ।
C 397 तद्धारितं तेन विशोकनाम्ना
10 तस्माद्विशेषेण स पूजनीयः ॥ ७० ॥
धर्मप्रदीपो ज्वलति प्रजासु
क्लेशान्धकारान्तकरो यदद्य ।
तत्तत्प्रभावात्सुगतेन्द्रसूनो-
स्तस्माद्विशेषेण स पूजनीयः ॥ ७१ ॥
15 यदा समुद्रं सलिलं समुद्रे
कुर्वीत कश्चिन्न हि गोष्पदेन ।
नाथेन तद्धर्ममवेक्ष्य भावं
सूत्रान्तकोऽयं स्थविरेऽभिषिक्तः ॥ ७२ ॥

अथ राजा स्थविराणां स्तूपार्चनं कृत्वा स्थविरोपगुप्तस्य पादयोर्निपत्य प्रीतिमना 20 उवाच—

मानुष्यं सफलीकृतं क्रतुशतैरिष्टेन संप्राप्यते
राज्यैश्वर्यगुणैश्चलैश्च विभवैः सारं गृहीतं परम् ।
लोकं चैत्यशतैरलंकृतमिदं श्वेताभ्रकूटप्रभै-
रस्याद्याप्रतिमस्य शासनमिदं किं नः कृतं दुष्करम् ॥ ७३ ॥ इति ।

25 यावद्राजा स्थविरोपगुप्तस्य प्रणामं कृत्वा प्रक्रान्तः ॥

यावद्राज्ञा अशोकेन जातौ बोधौ धर्मचक्रे परिनिर्वाणे एकैकशतसहस्रं दत्तम्, तस्य बोधौ विशेषतः प्रसादो जातः—इह भगवतानुत्तरा सम्यक्संबोधिरभिसंबुद्धेति । स यानि विशेषयुक्तानि रत्नानि, तानि बोधिं प्रेषयति । अथ राज्ञोऽशोकस्य तिष्यरक्षिता नाम अग्रमहिषी । तस्या बुद्धिरुत्पन्ना—अयं राजा मया सार्धं रतिमनुभवति, विशेषयुक्तांश्च(क्तानि 30 च) रत्नानि बोधौ प्रेषयति । तया मातङ्गी व्याहरिता—शक्यसि त्वं बोधिं मम सपत्नीं प्रघातितुम् ? तयाभिहितम्—शक्यामि, किं तु कार्षापणान् देहीति । यावन्मातङ्ग्या बोधिवृक्षो मन्त्रैः परिजप्तः, सूत्रं च बद्धम् । यावद्बोधिवृक्षः शुष्कितुमारब्धः । ततो राजपुरुषै राज्ञे निवेदितम्—देव, बोधिवृक्षः शुष्यत इति । आह च—

यत्रोपविष्टेन तथागतेन
कृत्स्नं जगद्बुद्धमिदं यथावत्।
सर्वज्ञता चाधिगता नरेन्द्र
बोधिद्रुमोऽसौ निधनं प्रयाति ॥ ७४ ॥ C 398

श्रुत्वा च राजा मूर्च्छितो भूमौ पतितः। यावज्जलसेकं दत्त्वोत्थापितः। अथ राजा 5 कथंचित् संज्ञामुपलभ्य प्ररुदन्नुवाच—

दृष्ट्वान्वहं तं द्रुमराजमूलं
जानामि दृष्टोऽद्य मया स्वयंभूः।
नाथद्रुमे चैव गते प्रणाशं
प्राणाः प्रयास्यन्ति ममापि नाशम् ॥ ७५ ॥ 10

अथ तिष्यरक्षिता राजानं शोकार्तमवेक्ष्योवाच—देव, यदि बोधिर्न भविष्यति, अहं देवस्य रतिमुत्पादयिष्यामि। राजा आह—न सा स्त्री, अपि तु बोधिवृक्षः सः। तत्र भगवता अनुत्तरा सम्यक्संबोधिरधिगता। तिष्यरक्षिता मातङ्गीमुवाच—शक्यसि त्वं बोधिवृक्षं यथापौराणमवस्थापितुम्? मातङ्गी आह—यदि तावत् प्राणान्तिकावशिष्टा भविष्यति, यथापौराणमवस्थापयिष्यामीति। विस्तरेण यावत्तया सूत्रं मुक्त्वा वृक्षसामन्तेन खनित्वा दिवसे 15 क्षीरकुम्भसहस्रेण पाययति। यावदल्पैरहोभिर्यथापौराणः संवृत्तः। ततो राजपुरुषै राज्ञे निवेदितम्—देव, दिष्ट्या वर्धस्व, यथापौराणः संवृत्तः। श्रुत्वा च प्रीतमना बोधिवृक्षं निरीक्षमाण उवाच—

बिम्बिसारप्रभृतिभिः पार्थिवेन्द्रैर्द्युतिंधरैः।
न कृतं तत्करिष्यामि सत्कारद्वयमुत्तमम् ॥ ७६ ॥ 20
बोधिं च स्नापयिष्यामि कुम्भैर्गन्धोदकाकुलैः।
आर्यसंघस्य च करिष्यामि सत्कारं पञ्चवार्षिकम् ॥ ७७ ॥

अथ राजा सौवर्णरूप्यवैडूर्यस्फटिकमयानां कुम्भानां सहस्रं गन्धोदकेन पूरयित्वा प्रभूतं चान्नपानं समुदानीय गन्धमाल्यपुष्पसंचयं कृत्वा स्नात्वा अहतानि वासांसि नवानि दीर्घदशानि प्रावृत्य अष्टाङ्गसमन्वागतमुपवासमुपोष्य धूपकटच्छुकमादाय शरणतलमभिरुह्य 25 चतुर्दिशमायाचितुमारब्धः—ये भगवतो बुद्धस्य श्रावकास्ते ममानुग्रहायागच्छन्तु। अपि च— C 399

सम्यग्गता ये सुगतस्य शिष्याः
शान्तेन्द्रिया निर्जितकामदोषाः।
संमाननार्हा नरदेवपूजिता
आयान्तु तेऽस्मिन्ननुकम्पया मम ॥ ७८ ॥ 30

प्रशमदमरता विमुक्तसङ्गाः
प्रवरसुताः सुगतस्य धर्मराज्ञः।
असुरसुरनरार्चितार्यवृत्ता-
स्त्विह मदनुग्रहणात्समभ्युपैन्तु ॥ ७९ ॥

5 वसन्ति काश्मीरपुरे सुरम्ये
ये चापि धीरास्तमसावनेऽस्मिन्।
महावने रेवतके रयेऽर्या
अनुग्रहार्थं मम तेऽभ्युपेयुः ॥ ८० ॥

अनवतप्तह्रदे निवसन्ति ये
10 गिरिनदीषु सपर्वतकन्दरेषु।
जिनसुताः खलु ध्यानरताः सदा
समुदयान्त्विह तेऽद्य कृपाबलाः ॥ ८१ ॥

शैरीषके ये प्रवरे विमाने
वसन्ति पुत्रा वदतां वरस्य।
15 अनुग्रहार्थं मम ते विशोका
ह्यायान्तु कारुण्यनिविष्टभावाः ॥ ८२ ॥

गन्धमादनशैले च ये वसन्ति महौजसः।
इहायान्तु कारुण्यमुत्पाद्योपनिमन्त्रिताः ॥ ८३ ॥

एवमुक्ते च राज्ञा त्रीणि शतसहस्राणि भिक्षूणां संनिपतितानि। तत्रैकं शतसह-
20 स्राणामर्हतां शैक्षाणां पृथग्जनकल्याणकानां च। न कश्चिद्वृद्धासनमाक्रम्यते स्म। राजा आह—किमर्थं वृद्धासनं तन्नाक्रम्यते? तत्र यशो नाम्ना वृद्धः षडभिज्ञः। स उवाच—महाराज, वृद्धस्य तदासनमिति। राजा आह—अस्ति स्थविर त्वत्सकाशादन्यो वृद्धतर इति? स्थविर उवाच—अस्ति महाराज—

वदतां वरेण वशिना निर्दिष्टः सिंहनादिनामग्र्यः।
O 400 25 पिण्डोलभरद्वाजस्यैतदग्रासनं नृपते ॥ ८४ ॥

अथ राजा कदम्बपुष्पवदाहृष्टरोमकूपः कथयति—अस्ति कश्चिद्बुद्धदर्शी भिक्षुर्ध्रियत इति? स्थविर उवाच—अस्ति महाराज पिण्डोलभरद्वाजो नाम्ना बुद्धदर्शी तिष्ठत इति। राजा कथयति—स्थविर, शक्यः सोऽस्माभिर्द्रष्टुमिति? स्थविर उवाच—महाराज, इदानीं द्रक्ष्यसि। अयं तस्यागमनकाल इति। अथ राजा प्रीतमना उवाच—

लाभः परः स्यादतुलो ममेह
महासुखश्चायमनुत्तमश्च।
पश्याम्यहं यत्तमुदारसत्त्वं
साक्षाद्भरद्वाजसगोत्रनामं॥ ८५॥

ततो राजा कृतकरपुटो गगनतलावसक्तदृष्टिरवस्थितः। अथ स्थविरपिण्डोल- 5
भरद्वाजोऽनेकैरर्हत्सहस्रैरर्धचन्द्राकारेणोपगूढो राजहंस इव गगनतलादवतीर्य वृद्धान्ते
निषसाद। स्थविरपिण्डोलभरद्वाजं दृष्ट्वा तान्यनेकानि भिक्षुशतसहस्राणि प्रत्युपस्थितानि।
अद्राक्षीद्राजा पिण्डोलभरद्वाजं श्वेतपलितशिरसं प्रलम्बभ्रूललाटं निगूढाक्षितारकं प्रत्येक-
बुद्धाश्रयम्। दृष्ट्वा च राजा मूलनिकृत्त इव द्रुमः सर्वशरीरेण स्थविरपिण्डोलभरद्वाजस्य
पादयोः पतितः। मुखतुण्डकेन च पादावनुपरिमार्ज्य उत्थाय तौ जानुमण्डलौ पृथिवीतले 10
प्रतिष्ठाप्य कृताञ्जलिः स्थविरपिण्डोलभरद्वाजं निरीक्षमाणः प्ररुदन्नुवाच—

यदा मया शत्रुगणान्निहत्य
प्राप्ता समुद्राभरणा सशैला।
एकातपत्रा पृथिवी तदा मे
प्रीतिर्न या मे स्थविरं निरीक्ष्य॥ ८६॥ 15

त्वद्दर्शनाद्भवति। दृष्टोऽद्य तथागतः। करुणालाभात् त्वद्दर्शनाच्च द्विगुणप्रसादो
ममोत्पन्नः। अपि च स्थविर दृष्टस्ते त्रैलोक्यनाथो गुरुर्मे भगवान् बुद्ध इति? ततः स्थविर-
पिण्डोलभरद्वाज उभाभ्यां पाणिभ्यां भ्रुवमुन्नाम्य राजानमशोकं निरीक्षमाण उवाच—

दृष्टो मया ह्यसकृदप्रतिमो महर्षिः C 401
संतप्तकाञ्चनसमोपमतुल्यतेजाः। 20
द्वात्रिंशल्लक्षणधरः शरदिन्दुवक्त्रो
ब्राह्मस्वराधिकरणो ह्यरणाविहारी॥ ८७॥

राजा आह—स्थविर, कुत्र ते भगवान् दृष्टः, कथं चेति? स्थविर उवाच—यदा
महाराज भगवान् विजितमारपरिवारः पञ्चभिरर्हच्छतैः सार्धं प्रथमतो राजगृहे वर्षामुपगतः,
अहं तत्कालं तत्रैवासम्। मया स दक्षिणीयः सम्यग्दृष्ट इति। आह च— 25

वीतरागैः परिवृतो वीतरागो महामुनिः।
यदा राजगृहे वर्षा उषितः स तथागतः॥ ८८॥
तत्कालमासं तत्राहं संबुद्धस्य तदन्तिके।
यथा पश्यसि मां साक्षादेवं दृष्टो मया मुनिः॥ ८९॥

यदापि महाराज भगवता श्रावस्त्यां तीर्थ्यान् विजयार्थं महाप्रातिहार्यं कृतम्, 30
बुद्धावतंसकं यावदकनिष्ठभवनं निर्मितं महत्, तत्कालं तत्रैवाहमासम्। मया तद्बुद्धविक्रीडितं
दृष्टमिति। आह च—

तीर्थ्या यदा भगवता कुपथप्रयाता
ऋद्धिप्रभावविधिना खलु निर्गृहीताः।
विक्रीडितं दशबलस्य तदा ह्युदारं
दृष्टं मया तु नृप हर्षकरं प्रजानाम्॥ ९०॥

5 यदापि महाराज भगवता देवेषु त्रायस्त्रिंशेषु वर्षा उषित्वा मातुर्जनयित्र्या धर्मं देशयित्वा देवगणपरिवृतः सांकाश्ये नगरेऽवतीर्णः, अहं तत्कालं तत्रैवासम्। मया सा देवमनुष्यसंपदा दृष्टा, उत्पलवर्णया च निर्मिता चक्रवर्तिसंपदा इति। आह च—

यदावतीर्णो वदतां वरिष्ठो
वर्षामुषित्वा खलु देवलोके।
10 तत्राप्यहं संनिहितो बभूव
दृष्टो मयासौ मुनिरग्रसत्त्वः॥ ९१॥

C 402 यदा महाराज सुमागधया अनाथपिण्डददुहित्र्या उपनिमन्त्रितः पञ्चभिरर्हच्छतैः सार्धं ऋद्ध्या पुण्ड्रवर्धनं गतः, तदाहं ऋद्ध्या पर्वतशैलं ग्रहाय गगनतलमाक्रम्य पुण्ड्रवर्धनं गतः। तन्निमित्तं च मे भगवता आज्ञाक्षिप्ता—न तावत् ते परिनिर्वातव्यं यावद्धर्मो नान्तर्हित 15 इति। आह च—

यदा जगामर्द्धिबलेन नायकः
सुमागधयोपनिमन्त्रितो गुरुः।
तदा गृहीत्वार्धबलेन शैलं
जगाम तूर्णं खलु पुण्ड्रवर्धनम्॥ ९२॥

20 आज्ञा तदा शाक्यकुलोदितेन
दत्ता च मे कारुणिकेन तेन।
तावन्न ते निर्वृतिरभ्युपेया
अन्तर्हितो यावदयं न धर्मः॥ ९१॥

यदापि महाराज त्वया पूर्वं बालभावाद्भगवतो राजगृहं पिण्डाय प्रविष्टस्य सक्तुं 25 दास्यामीति पांश्वञ्जलिर्भगवतः पात्रे प्रक्षिप्तः, राधगुप्तेन चानुमोदितम्, त्वं च भगवता निर्दिष्टः—अयं दारको वर्षशतपरिनिर्वृतस्य मम पाटलिपुत्रे नगरे अशोको नाम राजा भविष्यति चतुर्भागचक्रवर्ती धार्मिको धर्मराजा, यो मे शरीरधातुकं वैस्तारिकां करिष्यति, चतुरशीति-धर्मराजिकासहस्रं प्रतिष्ठापयिष्यति, अहं तत्कालं तत्रैवासीत्। आह च—

यदा पांश्वञ्जलिर्दत्तस्त्वया बुद्धस्य भाजने।
30 बालभावात् प्रसादित्वा तत्रैवाहं तदाभवम्॥ ९४॥

राजा आह—स्थविर, कुत्रेदानीमुष्यत इति? स्थविर उवाच—

उत्तरे सरराजस्य पर्वते गन्धमादने।
वसामि नृपते तत्र सार्धं सब्रह्मचारिभिः॥ ९५॥

राजा आह—कियन्तः स्थविरस्य परिवाराः? स्थविर उवाच—

षष्ठ्यर्हन्तः सहस्राणि परिवारो नृणां वर। 5
वसामि यैरहं सार्धं निस्पृहैर्जितकल्मषैः॥ ९६॥

अपि च महाराज, किमनेन संदेहेन कृतेन? परिविष्यतां भिक्षुसंघः। भुक्तवतो C 403
भिक्षुसंघस्य प्रतिसंमोदनां करिष्यामि। राजा आह—एवमस्तु, यथा स्थविर आज्ञापयति।
किं तु बुद्धस्मृतिप्रतिबोधितोऽहं बोधिस्नपनं तावत् करिष्यामि। समनन्तरं च मनापेन
चाहारेण भिक्षुसंघमुपस्थास्यामीति। अथ राजा सर्वमित्रमुद्घोषकमामन्त्रयति—अहमार्यसंघस्य 10
शतसहस्रं दास्यामि, कुम्भसहस्रेण च बोधिं स्नापयिष्यामि, मम नाम्ना घुष्यतां पञ्चवार्षिक-
मिति। तत्कालं च कुणालस्य नयनद्वयमविपन्नमासीत्। स राज्ञो दक्षिणे पार्श्वे स्थितः।
तेनाङ्गुलिद्वयमुत्क्षिप्तम्, न तु वाग्भाषिता। द्विगुणं त्वहं प्रसादयिष्यामीत्याकारयति।
पाणिना वर्धितमात्रे च कुणालेन सर्वजनकायेन हास्यं मुक्तम्। ततो राजा हास्यं मुक्त्वा
कथयति—अहो राधगुप्त, केनैतद्वर्धितमिति? राधगुप्तः कथयति—देव, बहवः पुण्यार्थिनः 15
प्राणिनः। यः पुण्यार्थी, तेन वर्धितमिति। राजा आह—शतसहस्रत्रयं दास्यामीत्यार्यसंघे
कुम्भसहस्रेण च बोधिं स्नपयिष्यामि, मम नाम्ना घुष्यतां पञ्चवार्षिकमिति। यावत् कुणालेन
चतस्रोऽङ्गुल्य उत्क्षिप्ताः। ततो राजा रुषितः। राधगुप्तमुवाच—अहो राधगुप्त, कोऽयमस्माभिः
सार्धं प्रतिद्वन्द्वयत्यलोकज्ञः? रुषितं च राजानमवेक्ष्य राधगुप्तो राज्ञः पादयोर्निपत्योवाच—
देव, कस्य शक्तिर्नरेन्द्रेण सार्धं विस्पर्धितुं भवेत्? कुणालो गुणवान्, पित्रा सार्धं विकुर्वते। 20
अथ राजा दक्षिणेन परिवृत्य कुणालमवलोक्योवाच—स्थविरोऽहम्। कोशं स्थापयित्वा
राज्यमन्तःपुरममात्यगणमात्मानं च कुणालं सुवर्णरूप्यस्फटिकवैडूर्यमयानां पञ्चकुम्भसहस्राणि
नानागन्धपूर्णानि क्षीरचन्दनकुङ्कुमकर्पूरवासितैर्महाबोधिं स्नपयिष्यामि, पुष्पशतसहस्राणि च
बोधिप्रमुखे चार्यसंघे ददामि, मम नाम्ना घुष्यतां पञ्चवार्षिकमिति। आह च—

राज्यं समृद्धं संस्थाप्य कोश- 25
मन्तःपुराणि चामात्यगणं च सर्वम्।
ददामि संघे गुणपात्रभूते
आत्मा कुणालं च गुणोपपन्नम्॥ ९७॥

ततो राजा पिण्डोलभरद्वाजप्रमुखे भिक्षुसंघे निर्यातयित्वा बोधिवृक्षस्य च चतुर्दिशं C 404
वारं बद्ध्वा स्वयमेव च वारमभिरुह्य चतुर्भिः कुम्भसहस्रैर्बोधिस्नपनं कृतवान्। कृतमात्रे च 30
बोधिस्नपने बोधिवृक्षो यथापौराणः संवृत्तः। वक्ष्यति हि—

कृतमात्रे नृपतिना बोधिस्नपनमुत्तमम् ।
बोधिवृक्षस्तदा जातो हरित्पल्लवकोमलः ॥ ९८ ॥
दृष्ट्वा हरितपत्राढ्यं पल्लवाङ्कुरकोमलम् ।
राजा हर्षं परं जगाम सामात्यगणनैगमः ॥ ९९ ॥

5 अथ राजा बोधिस्नपनं कृत्वा भिक्षुसंघं परिवेष्टुमारब्धः । तत्र यशो नाम्ना स्थविरः । तेनाभिहितम्—महाराज, महानयं परमदक्षिणीय आर्यसंघः संनिपतितः, तथा ते परिवेष्टव्यं यथा ते क्षतिर्न स्यादिति । ततो राजा स्वहस्तेन परिवेषणं यावन्नवकान्तं गतः । तत्र द्वौ श्रामणेरौ संरञ्जनीयं धर्मं समादाय वर्ततः । एकेनापि सक्तवो दत्ताः, द्वितीयेनापि सक्तवः । एकेन खाद्यकाः, द्वितीयेनापि खाद्यका एव । एकेन मोदकाः, द्वितीयेनापि मोदकाः । तौ 10 दृष्ट्वा राजा हसितः । इमौ श्रामणेरौ बालक्रीडया क्रीडतः । यावद्राज्ञा भिक्षुसंघं परिवेष्य वृद्धान्तमारूढः । स्थविरेण चानुयुक्तः—मा देवेन कुत्रचिदप्रसादमुत्पादित इति । राजा आह—न इति । अपि तु अस्ति द्वौ श्रामणेरौ बालक्रीडया क्रीडतः, यथा बालदारकाः पांशुागारैः क्रीडन्ति, एवं तौ श्रामणेरौ सक्तुक्रीडया क्रीडतः, खाद्यक्रीडया क्रीडतः । स्थविर उवाच—अलं महाराज, उभौ हि तौ उभयतोभागविमुक्तौ अर्हन्तौ । श्रुत्वा च राज्ञः 15 प्रीतिमनसो बुद्धिरुत्पन्ना—तौ श्रामणेरौ आगम्य भिक्षुसंघं पटेनाच्छादयिष्यामि । ततस्तौ श्रामणेरौ राज्ञोऽभिप्रायमवगम्य भूयोऽन्येऽस्माभिः स्वगुणा उद्भावयितव्या इति, तयोरेकेन कटाहका उपस्थापिता, द्वितीयेन रङ्गः समुदानीतः । राज्ञा दृष्टौ श्रामणेरकौ । किमिदमारब्धम्? तयोरभिहितम्—देवोऽस्माकमवगम्य भिक्षुसंघं पटेनाच्छादयितुकामः । तान् पटान् रञ्जयिष्यामः । श्रुत्वा च राज्ञो बुद्धिरुत्पन्ना—मया केवलं चिन्तितम्, न तु वाग्निश्चारिता । पर- 20 चित्तवादौ एतौ महात्मानौ । ततः सर्वशरीरेण पादयोर्निपत्य कृताञ्जलिरुवाच—

मौर्यः सभृत्यः सजनः सपौरः
सुलब्धलाभार्थसुयष्टयज्ञः ।
यस्येदृशः साधुजने प्रसादः
काले तथोत्साहि कृतं च दानम् ॥ १०० ॥

25 यावद्राज्ञा अभिहितम्—युष्माकमागम्य त्रिचीवरेण भिक्षुसंघमाच्छादयिष्यामीति । ततो राजा अशोकः पञ्चवार्षिके पर्यवसिते सर्वभिक्षून् त्रिचीवरेणाच्छाद्य चत्वारि शतसहस्राणि संघस्याच्छादनं दत्वा पृथिवीमन्तःपुरममात्यगणमात्मानं च कुणालं च निष्क्रीतवान् । भूयसा भगवच्छासने श्रद्धा प्रतिलब्धा चतुरशीतिधर्मराजिकासहस्रं प्रतिष्ठापितमिति ॥

यस्मिन्नेव दिवसे राज्ञा अशोकेन चतुरशीतिधर्मराजिकासहस्रं प्रतिष्ठापितम्, तस्मिन्नेव 30 दिवसे राज्ञोऽशोकस्य पद्मावती नाम्ना देवी प्रसूता । पुत्रो जातोऽभिरूपो दर्शनीयः प्रासादिकः । नयनानि चास्य परमशोभनानि । यावद्राज्ञोऽशोकस्य निवेदितम्—देव, दिष्ट्या वृद्धिः । देवस्य पुत्रो जातः । श्रुत्वा राजा आत्तमनाः कथयति—

प्रीतिः परा मे विपुला ह्यवाप्ता
　　मौर्यस्य वंशस्य परा विभूतिः ।
धर्मेण राज्यं मम कुर्वतो हि
　　जातः सुतो धर्मविवर्धनोऽस्तु ॥ १०१ ॥

तस्य धर्मविवर्धन इति नाम कृतम् । यावत् कुमारो राज्ञोऽशोकस्योपनामितः । अथ 5
राजा कुमारं निरीक्ष्य प्रीतमनाः कथयति—

C 406

सुतस्य मे नेत्रवराः सुपुण्याः
　　सुजातनीलोत्पलसंनिकाशाः ।
अलंकृतं शोभति यस्य वक्त्रं
　　संपूर्णचन्द्रप्रतिमं विभाति ॥ १०२ ॥　　10

यावद्राजा अमात्यानुवाच—दृष्टानि भवद्भिः कस्येदृशानि नयनानि ? अमात्या ऊचुः—
देव, मनुष्यभूतस्य न दृष्टानि, अपि तु देव, अस्ति हिमवति पर्वतराजे कुणालो नाम पक्षी
प्रतिवसति, तस्य सदृशानि नयनानि । आह च—

हिमेन्द्रराजे गिरिशैलशृङ्गे
　　प्रवालपुष्पप्रसवे जलाढ्ये ।　　15
कुणालनाम्नेति निवासपक्षी
　　नेत्राणि तेनास्य समान्यमूनि ॥ १०३ ॥

ततो राज्ञा अभिहितम्—कुणालः पक्षी आनीयतामिति । तस्योर्ध्वतो योजनं यक्षाः
शृण्वन्त्यधो योजनं नागाः । ततो यक्षैस्तत्क्षणेन कुणालः पक्षी आनीतः । अथ राजा
कुणालस्य नेत्राणि सुचिरं निरीक्ष्य न किंचिद्विशेषं पश्यति । ततो राज्ञाभिहितम्— 20
कुमारस्य कुणालसदृशानि नयनानि । भवतु कुमारस्य कुणाल इति नाम । वक्ष्यति हि—

नेत्रानुरागेण स पार्थिवेन्द्रः
　　सुतः कुणालेति तदा बभाषे ।
ततोऽस्य नाम प्रथितं पृथिव्यां
　　तस्यार्यसत्त्वस्य नृपात्मजस्य ॥ १०४ ॥　　25

विस्तरेण यावत् कुमारो महान् संवृत्तः । तस्य काञ्चनमाला नाम दारिका पत्न्यर्थे
आनीता । यावद्राजा अशोकः कुणालेन सह कुर्कुटारामं गतः । तत्र यशो नाम्ना संघ-
स्थविरोऽर्हन् षडभिज्ञः । स पश्यति—कुणालस्य नचिरान्नयनविनाशो भविष्यति । तेन राज्ञोऽ-
भिहितम्—किमर्थं कुणालः स्वकर्मणि न नियुज्यते ? ततो राज्ञा अभिहितः—कुणाल, संघ-
स्थविरो यदाज्ञापयति तत्परिपालयितव्यम् । ततः कुणालः स्थविरस्य पादयोर्निपत्य कथयति— 30
स्थविर, किमाज्ञापयसि ? स्थविर उवाच—चक्षुः कुणाल अनित्यमिति कुरु । आह—

चक्षुः कुमार सततं परीक्ष्यं
चलात्मकं दुःखसहस्रयुक्तम्।
C 407 यत्रानुरक्ता बहवः पृथग्जनाः
कुर्वन्ति कर्माण्यहितावहानि ॥ १०५ ॥

5 स च तथा अभ्यासं करोति मनसिकारप्रयुक्तः। एकाभिरामः प्रशमारामश्च संवृत्तः। स राजकुले विविक्ते स्थानेऽवस्थितश्चक्षुरादीन्यायतनान्यनित्यादिभिराकारैः परीक्षते। तिष्यरक्षिता च नाम्ना अशोकस्याग्रमहिषी तं प्रदेशमभिगता। सा तं कुणालमेकाकिनं दृष्ट्वा नयनानुरागेण गात्रेषु परिष्वज्य कथयति—

दृष्ट्वा तवेदं नयनाभिरामं
10 श्रीमद्वपुर्नेत्रयुगं च कान्तम्।
दंदह्यते मे हृदयं समन्ता-
द्दावाग्निना प्रज्वलतेव कक्षम् ॥ १०६ ॥

श्रुत्वा कुणाल उभाभ्यां पाणिभ्यां कर्णौ पिधाय कथयति—

वाक्यं न युक्तं तव वक्तुमेतत्
15 सूनोः पुरस्ताज्जननी ममासि।
अधर्मरागं परिवर्जयस्व
अपायमार्गस्य हि एष हेतुः ॥ १०७ ॥

ततस्तिष्यरक्षिता तत्कालमलभमाना क्रुद्धा कथयति—

अभिकामामभिगतां यत्त्वं नेच्छसि मामिह।
20 नचिरादेव दुर्बुद्धे सर्वथा न भविष्यसि ॥ १०८ ॥

कुणाल उवाच—

मम भवतु मरणं मा तु स्थितस्य धर्मे विशुद्धभावस्य।
न तु जीवितेन कार्यं सज्जनधिक्कृतेन मम ॥ १०९ ॥
स्वर्गस्य धर्मलोपो यतो भवति जीवितेन किं तेन।
25 मम मरणहेतुना वै बुधपरिभूतेन धिक्कृतेन ॥ ११० ॥

यावत् तिष्यरक्षिता कुणालस्य छिद्रान्वेषिणी अवस्थिता। राज्ञोऽशोकस्योत्तरापथे तक्षशिला नगरं विरुद्धम्। श्रुत्वा च राजा स्वयमेवाभिप्रस्थितः। ततोऽमात्यैरभिहितः—देव, कुमारः प्रेष्यताम्। स संनामयिष्यति। अथ राजा कुणालमाहूय कथयति— वत्स कुणाल, गमिष्यसि तक्षशिलानगरं संनामयितुम्? कुणाल उवाच—परं देव गमिष्यामि।

C 408

ततो नृपस्तस्य निशाम्य भावं
पुत्राभिधानस्य मनोरथस्य।
स्नेहाच्च योग्यं मनसा च बुद्ध्वा
आज्ञापयामास विधाय यात्राम्॥ १११॥

अथ राजा अशोको नगरशोभां मार्गशोभां च कृत्वा जीर्णातुरकृपणानाथांश्च मार्गा- 5
दपनीय एकरथेऽभिरुह्य कुमारेण सह पाटलिपुत्रान्निर्गतः। अनुव्रजित्वा निवर्तमानः कुणालं कण्ठे परिष्वज्य नयनं निरीक्षमाणः प्ररुदन्नुवाच—

धन्यानि तस्य चक्षूंषि चक्षुष्मन्तश्च ते जनाः।
सततं ये कुमारस्य द्रक्ष्यन्ति मुखपङ्कजम्॥ ११२॥

यावन्नैमित्तिको ब्राह्मणः—कुमारस्य नचिरान्नयनविनाशो भविष्यति। स च राजा 10
अशोकस्तस्य नयनेष्वत्यर्थमनुषक्तः। दृष्ट्वा च कथयति—

नृपात्मजस्य नयने विशुद्धे
महीपतिश्चाप्यनुरक्तमस्य।
श्रिया विवृद्धे हि सुखानुकूले
पश्यामि नेत्रेऽद्य विनश्यमाने॥ ११३॥ 15

इदं पुरं स्वर्गमिव प्रहृष्टं
कुमारसंदर्शनजातहर्षम्।
पुरं विपन्ने नयने तु तस्य
भविष्यति शोकपरीतचेताः॥ ११४॥

अनुपूर्वेण तक्षशिलामनुप्राप्तः। श्रुत्वा च तक्षशिलापौरा अर्धत्रिकाणि योजनानि 20
मार्गशोभां नगरशोभां च कृत्वा पूर्णकुम्भैः प्रत्युद्गताः। वक्ष्यति च—

श्रुत्वा तक्षशिलापौरो रत्नपूर्णघटादिकान्।
गृह्य प्रत्युज्जगामाशु बहुमान्यो नृपात्मजम्॥ ११५॥

प्रत्युद्गम्य कृताञ्जलिरुवाच—न वयं कुमारस्य विरुद्धाः, न राज्ञोऽशोकस्य, अपि तु दुष्टात्मानोऽमात्या आगत्यास्माकमपमानं कुर्वन्ति। यावत्कुणालो महता संमानेन तक्षशिलां 25
प्रवेशितः॥

C 409

राज्ञश्चाशोकस्य महान् व्याधिरुत्पन्नः। तस्य मुखादुच्चारो निर्गन्तुमारब्धः। सर्वरोमकूपेभ्यश्चाशुचि प्रघरति। न च शक्यते चिकित्सितुम्। ततो राज्ञा अभिहितम्—कुणालमानयत, राज्ये प्रतिष्ठापयिष्यामीति। किं ममेदृशेन जीवितेन प्रयोजनम्? श्रुत्वा च तिष्यरक्षिता चिन्तयति—यदि कुणालं राज्ये प्रतिष्ठास्यति, नास्ति मम जीवितम्। 30
तया अभिहितम्—अहं ते स्वस्थं करिष्यामि। किं तु वैद्यानां प्रवेशः प्रतिषिध्यताम्। यावद्राज्ञा वैद्यानां प्रवेशः प्रतिषिद्धः। ततस्तिष्यरक्षितया वैद्यानामभिहितम्—यदि कश्चि-

दीदृशेन व्याधिना स्पृष्टः स्त्री वा पुरुषो वा आगच्छति, मम दर्शयितव्यः। अन्यतमश्चाभीरस्तादृशेनैव व्याधिना स्पृष्टः। तस्य पत्न्या वैद्याय व्याधिर्निवेदितः। वैद्येनाभिहितम्—स एवागच्छतु आतुरः। व्याधिं दृष्ट्वा भैषज्यमुपदेक्ष्यामि। यावदाभीरो वैद्यसकाशमभिगतः। वैद्येन च तिष्यरक्षितायाः समीपमुपनीतः। ततस्तिष्यरक्षितया प्रतिगुप्ते प्रदेशे जीविताद्

5 व्यपरोपितः। जीविताद् व्यपरोप्य कुक्षिं पाटयित्वा पश्यति च तस्य पक्वाशयस्थाने अन्त्रायां कृमिर्महान् प्रादुर्भूतः। स यद्यूर्ध्वं गच्छति तेनाशुचीनि प्रघरति, अथाधो गच्छति, अधः प्रघरति। यावत् तत्र मरिचान् पेषयित्वा दत्तं न च म्रियते। एवं पिप्पली शृङ्गवेरं च। विस्तरेण यावत् पलाण्डुर्दत्तः। स्पृष्टश्च मृत उच्चारमार्गेण निर्गतः। एतच्च प्रकरणं तया राज्ञे निवेदितम्—देव, पलाण्डुं परिभुङ्क्ष्व, स्वास्थ्यं भविष्यति। राजा आह—देवि, अहं

10 क्षत्रियः। कथं पलाण्डुं परिभक्षयामि? देव्युवाच—देव, परिभोक्तव्यं जीवितस्यार्थे, भैषज्यमेतत्। राज्ञा परिभुक्तम्। स च कृमिर्मृत उच्चारमार्गेण निर्गतः। स्वस्थीभूतश्च राजा। तेन परितुष्टेन तिष्यरक्षिता वरेण प्रवारिता—किं ते वरं प्रयच्छामि? तया अभिहितम्—सप्ताहं मम देवो राज्यं प्रयच्छतु। राजा आह—अहं को भविष्यामि? देव्युवाच—सप्ताहस्यात्ययाद्देव एव राजा भविष्यति। यावद्राज्ञा तिष्यरक्षितायाः सप्ताहं राज्यं दत्तम्। तस्या

C 410 15 बुद्धिरुत्पन्ना—इदानीं मया अस्य कुणालस्य वैरं निर्यातितव्यम्। तया कपटलेखो लिखितस्तक्षशिलकानां पौराणाम्—कुणालस्य नयनं विनाशयितव्यमिति। आह च—

राजा ह्यशोको बलवान् प्रचण्ड
आज्ञापयत्तक्षशिलाजनं हि।
उद्धार्यतां लोचनमस्य शत्रो-
20 मौर्यस्य वंशस्य कलङ्क एषः॥ ११६॥

राज्ञोऽशोकस्य यत्र कार्यमाशु परिप्राप्यं भवति, दन्तमुद्रया मुद्रयति। यावत् तिष्यरक्षिता शयितस्य राज्ञस्तं लेखं दन्तमुद्रया मुद्रयिष्यामीति राज्ञः सकाशमभिगता। राजा च भीतः प्रतिबुद्धः। देवी कथयति—किमिदमिति? राजा कथयति—देवि, स्वप्नं मेऽशोभनं दृष्टम्। पश्यामि द्वौ गृध्रौ कुणालस्य नयनमुत्पाटयितुमिच्छतः। देवी कथयति—स्वास्थ्यं

25 कुमारस्येति। एवं द्विरपि राजा भीतः प्रतिबुद्धः कथयति— देवि, स्वप्नो मे न शोभनो दृष्ट इति। तिष्यरक्षिता कथयति—कीदृशः स्वप्न इति। राजा आह—पश्यामि कुणालम्—दीर्घकेशनखश्मश्रुः पुरं प्रविष्टः। देव्याह—स्वास्थ्यं कुमारस्येति। यावत् तिष्यरक्षितया राज्ञः शयितस्य स लेखो दन्तमुद्रया मुद्रयित्वा तक्षशिलां प्रेषितः। यावद्राज्ञा शयितेन स्वप्ने दृष्टं दन्ता विशीर्णाः। ततो राजा तस्या एव रात्रेरत्यये नैमित्तिकानाहूय कथयति—कीदृश एषां

30 स्वप्नानां विपाक इति? नैमित्तिकाः कथयन्ति—देव, य ईदृशस्वप्नानि पश्यति। आह च—

दन्ता यस्य विशीर्यन्ते स्वप्नान्ते प्रपतन्ति च।
चक्षुर्भेदं च पुत्रस्य पुत्रनाशं च पश्यति॥ ११७॥

श्रुत्वा च राजा अशोकस्त्वरितमुत्थायासनात् कृताञ्जलिश्चतुर्दिशं देवतां याचयितुमारब्धः । आह च–

या देवता शास्तुरभिप्रसन्ना
धर्मे च संघे च गणप्रधाने ।
ये चापि लोके ऋषयो वरिष्ठा
रक्षन्तु तेऽस्मत्तनयं कुणालम् ॥ ११८ ॥

स च लेखोऽनुपूर्वेण तक्षशिलामुपनीतः । अथ तक्षशिलाः पौरजानपदा लेखदर्शनात् कुणालस्य गुणविस्तरतुष्टा नोत्सहन्ते तदप्रियं निवेदितुम् । चिरं विचारयित्वा राजा दुष्टशीलः स्वपुत्रस्य न मर्षयति, प्रागेवास्माकं मर्षयति । आह च–

मुनिवृत्तस्य शान्तस्य सर्वभूतहितैषिणः ।
यस्य द्वेषः कुमारस्य कस्यान्यस्य भविष्यति ॥ ११९ ॥

तैर्यावत्कुणालस्य निवेदितम्, लेखश्चोपनीतः । ततः कुणालो वाचयित्वा कथयति–विश्रब्धं यथात्मप्रयोजनं क्रियतामिति । यावच्चण्डाला उपनीताः–कुणालस्य नयनमुत्पाटयथेति । ते च कृताञ्जलिपुटा ऊचुः–नोत्साहयामः । कुतः ?

यो हि चन्द्रमसः कान्तिं मोहादभ्युद्धरेन्नरः ।
स चन्द्रसदृशाद्वक्त्रात्तव नेत्रे समुद्धरेत् ॥ १२० ॥

ततः कुमारेण मकुटं दत्तम् । अनया दक्षिणयोत्पाटयथेति । तस्य तु कर्मणोऽवश्यं विपत्तव्यम् । पुरुषो हि विकृतरूपोऽष्टादशभिर्दौर्वर्णिकैः समन्वागतोऽभ्यागतः । स कथयति–अहमुत्पाटयिष्यामीति । यावत्कुणालस्य समीपं नीतः । तस्मिंश्च समये कुणालस्य स्थविराणां वचनमामुखीभूतम् । स तद्वचनमनुस्मृत्योवाच–

इमां विपत्तिं विज्ञाय तैरुक्तं तत्त्ववादिभिः ।
पश्यानित्यमिदं सर्वं नास्ति कश्चिद् ध्रुवे स्थितः ॥ १२१ ॥
कल्याणमित्रास्ते मह्यं सुखकामा हितैषिणः ।
यैरयं देशितो धर्मो वीतक्लेशैर्महात्मभिः ॥ १२२ ॥

अनित्यतां संपरिपश्यतो मे
गुरूपदेशान्मनसि प्रकुर्वतः ।
उत्पाटनेऽहं न बिभेमि सौम्य
नेत्रद्वयस्यास्थिरतां हि पश्ये ॥ १२३ ॥

उत्पाटे वा न वा नेत्रे यथा वा मन्यते नृपः ।
गृहीतसारं चक्षुर्मे ह्यनित्यादिभिराश्रयैः ॥ १२४ ॥

ततः कुणालस्तं पुरुषमुवाच–तेन हि भोः पुरुष, एकं तावन्नयनमुत्पाट्य मम हस्तेऽनुप्रयच्छ । यावत् स पुरुषः कुणालस्य नयनमुत्पाटयितुं प्रवृत्तः । ततोऽनेकानि प्राणिशतसहस्राणि विक्रोष्टुमारब्धानि–कष्टं भोः ।

एषा हि निर्मला ज्योत्स्ना गगनात्पतते शशी।
पुण्डरीकवनाच्चापि श्रीमन्नुत्पाट्यतेऽम्बुजम्॥ १२५॥

तेषु प्राणिशतसहस्रेषु रुदत्सु कुणालस्यैव नयनमुत्पाट्य हस्ते दत्तम्। ततः कुणालस्तन्नयनं गृह्योवाच—

5 रूपाणि कस्मान्न निरीक्षसे त्वं
यथापुरा प्राकृत मांसपिण्ड।
ते वञ्चितास्ते च विगर्हणीया
आत्मेति ये त्वामबुधाः श्रयन्ते॥ १२६॥
सामग्रजं बुद्बुदसंनिकाशं
10 सुदुर्लभं निर्विषमस्वतन्त्रम्।
एवं प्रवीक्षन्ति सदाप्रमत्ता
ये त्वां न ते दुःखमनुप्रयान्ति॥ १२७॥
एवमनुविचिन्तयता तेन सर्वभावेष्वनित्यताम्।
स्रोतापत्तिफलं प्राप्तं जनकायस्य पश्यतः॥ १२८॥

15 ततः कुणालो दृष्टसत्यस्तं पुरुषमुवाच—इदानीं द्वितीयं विश्रब्धं नयनमुत्पाट्य हस्ते दत्त। अथ कुणालो मांसचक्षुष्युद्धृते प्रज्ञाचक्षुषि च विशुद्धे कथयति—

उद्धृतं मांसचक्षुर्मे यद्यप्येतत्सुदुर्लभम्।
प्रज्ञाचक्षुर्विशुद्धं मे प्रतिलब्धमनिन्दितम्॥ १२९॥
परित्यक्तोऽहं नृपतिना यद्यहं पुत्रसंज्ञया।
20 धर्मराजस्य पुत्रत्वमुपेतोऽस्मि महात्मनः॥ १३०॥
ऐश्वर्याद्यद्यहं भ्रष्टः शोकदुःखनिबन्धनात्।
धर्मैश्वर्यमवाप्तं मे दुःखशोकविनाशनम्॥ १३१॥

यावत्कुणालेन श्रुतम्—नायं तातस्याशोकस्य कर्म, अपि तु तिष्यरक्षिताया अयं प्रयोग इति। श्रुत्वा च कुणालः कथयति—

25 चिरं सुखं चैव सा तिष्यनाम्नी
आयुर्बलं पालयते च देवी।
C 413 संप्रेषितोऽयं हि यया प्रयोगो
यस्यानुभावेन कृतः स्वकार्थः॥ १३२॥

ततः काञ्चनमालया श्रुतम्—कुणालस्य नयनान्युत्पाटितानीति। श्रुत्वा च भर्तृतया 30 कुणालसमीपमुपसंक्रम्य पर्षदमवगाह्य कुणालमुद्धृतनयनं रुधिरावसिक्तगात्रं दृष्ट्वा मूर्च्छिता भूमौ पतिता। यावज्जलसेकं कृत्वोत्थापिता। ततः कथंचित् संज्ञामुपलभ्य सस्वरं प्ररुदन्त्युवाच—

नेत्राणि कान्तानि मनोहराणि
ये मां निरीक्ष्याजनयन्ति तुष्टिम्।
ते मे विपन्ना ह्यनिरीक्षणीया-
स्त्यजन्ति मे प्राणसमाः शरीरम् ॥ १३३ ॥

ततः कुणालो भार्यामनुनयन्नुवाच—अलं रुदितेन। नार्हसि शोकमाश्रयितुम्। 5
स्वयंकृतानामिह कर्मणां फलमुपस्थितम्। आह च—

कर्मात्मकं लोकमिदं विदित्वा
दुःखात्मकं चापि जनं हि मत्वा।
मत्वा च लोकं प्रियविप्रयोगं
कर्तुं प्रिये नार्हसि बाष्पमोक्षम् ॥ १३४ ॥ 10

ततः कुणालो भार्यया सह तक्षशिलाया निष्कासितः। स गर्भादानमुपादाय परमसुकुमारशरीरः। न किंचिदुत्सहते कर्म कर्तुम्। केवलं वीणां वादयति, गायति च। ततो भैक्ष्यं लभते। कुणालः पत्न्या सह भुङ्क्ते। ततः काञ्चनमाला येन मार्गेण पाटलिपुत्रादानीता, तमेव मार्गमनुस्मरन्ती भर्तृद्वितीया पाटलिपुत्रं गता। यावदशोकस्य गृहमारब्धा प्रवेष्टुम्। द्वारपालेन च निवारितौ। यावद्राज्ञोऽशोकस्य यानशालायामवस्थितौ। 15
ततः कुणालो रात्र्याः प्रत्यूषसमये वीणां वादयितुमारब्धः। यथा नयनान्युत्पाटितानि, सत्यदर्शनं च कृतम्, तदनुरूपं हितं च गीतं प्रारब्धम्। आह च—

C 414

चक्षुरादीनि यः प्राज्ञः पश्यत्यायतनानि च।
ज्ञानदीपेन शुद्धेन स संसाराद्विमुच्यते ॥ १३५ ॥
यदि तव भवदुःखपीडिता 20
भवति दोषविनिश्रिता मतिः।
सुखमिह च यदीच्छसि ध्रुवं
त्वरितमिहायतनानि संत्यजस्व ॥ १३६ ॥

तस्य गीतशब्दो राज्ञा अशोकेन श्रुतः। श्रुत्वा च राजा प्रीतमना उवाच—

गीतं कुणालेन मयि प्रसक्तं 25
वीणास्वरं चैव श्रुतिश्चिरेण।
अभ्यागतोऽपीह गृहं नु कंचि-
न्न चेच्छति द्रष्टुमयं कुमारः ॥ १३७ ॥

अथ राजा अशोकोऽन्यतमपुरुषमाहूयोवाच—पुरुष, लक्ष्यते—

न खल्वेष किं गीतस्य कुणालसदृशो ध्वनिः। 30
कर्मण्यधैर्यतां चैव सूचयन्निव लक्ष्यते ॥ १३८ ॥
तदनेनास्मि शब्देन धैर्यादाकम्पितो भृशम्।
कलभस्येव नष्टस्य प्रनष्टकलभः करी ॥ १३९ ॥

गच्छ, कुणालमानयस्वेति। यावत् पुरुषो यानशालां गतः। पश्यति कुणालमुद्धृत-नयनं वातातपपरिदग्धगात्रम्। अप्रत्यभिज्ञाय च राजानमशोकमभिगम्योवाच—देव, न ह्येष कुणालः। अन्धक एष वनीपकः पत्न्या सह देवस्य यानशालायामवस्थितः। श्रुत्वा च राजा संविग्नश्चिन्तयामास—यथा मया स्वप्नान्यशोभनानि दृष्टानि, नियतं कुणालस्य नयनानि
5 विनष्टानि भविष्यन्ति। आह च—

स्वप्नान्तरे निमित्तानि यथा दृष्टानि मे पुरा।
निःसंशयं कुणालस्य नेत्रे वै निधनं गते॥ १४०॥

ततो राजा प्ररुदन्नुवाच—

शीघ्रमानीयतामेष मत्समीपं वनीपकः।
10 न हि मे शाम्यते चेतः सुतव्यसनचिन्तया॥ १४१॥

यावत् पुरुषो यानशालां गत्वा कुणालमुवाच—कस्य त्वं पुत्रः, किं च नाम? कुणालः प्राह—

अशोको नाम राजासौ मौर्याणां कुलवर्धनः।
C 415 कृत्स्नेयं पृथिवी यस्य वशे वर्तति किंकर॥ १४२॥
15 तस्य राज्ञस्त्वहं पुत्रः कुणाल इति विश्रुतः।
धार्मिकस्य तु पुत्रोऽहं बुद्धस्यादित्यबान्धवः॥ १४३॥

ततः कुणालः पत्न्या सह राज्ञोऽशोकस्य समीपमानीतः। अथ राजा अशोकः [पश्यति] कुणालमुद्धृतनयनं वातातपपरिदग्धगात्रं रथ्याचोलकसंघातप्रत्यवरेण वाससा लक्ष्यालक्ष्यप्रच्छादितकौपीनम्। स तमप्रत्यभिज्ञाय आकृतिमात्रकं दृष्ट्वा राजा कथयति—त्वं कुणाल
20 इति? कुणालः प्राह—एवं देव, कुणालोऽस्मीति। श्रुत्वा मूर्च्छितो भूमौ पतितः। वक्ष्यति हि—

ततः कुणालस्य मुखं निरीक्ष्य
नेत्रोद्धृतं शोकपरीतचेताः।
राजा ह्यशोकः पतितो धरण्यां
हा पुत्रशोकेन हि दह्यमानः॥ १४४॥

25 यावज्जलपरिषेकं कृत्वा राजानमुत्थापयित्वा आसने निषादितः। अथ राजा कथंचित् संज्ञामुपलभ्य कुणालमुत्सङ्गे स्थापयामास। वक्ष्यति हि—

ततो मुहूर्तं नृप आश्वसित्वा
कण्ठे परिष्वज्य रसाश्रुकण्ठः।
मुहुः कुणालस्य मुखं प्रमृज्य
बहूनि राजा विललाप तत्र॥ १४५॥
30 नेत्रे कुणालप्रतिमे विलोक्य
सुतं कुणालेति पुरा बभाषे।

तदस्य नेत्रे निधनं गते ते
पुत्रं कुणालेति कथं च वक्ष्ये ॥ १४६ ॥

आह च–

कथय कथय साधु पुत्र ताव-
द्वदनमिदं तव चारुनेत्रम्। 5
गगनमिव विपन्नचन्द्रतार-
व्यपगतशोभमनीक्षकं कृतं ते ॥ १४७ ॥
अकरुणहृदयेन तेन तात C 416
मुनिसदृशस्य न साधु साधुबुद्धेः।
नरवरनयनेष्ववैरवैरं 10
प्रकृतमिदं मम भूरि शोकमूलम् ॥ १४८ ॥
वद सुवदन क्षिप्रमेतदर्थं
व्रजति शरीरमिदं पुरा विनाशम्।
तव नयनविनाशशोकदग्धं
वनमिव नागविमुक्तवज्रदग्धम् ॥ १४९ ॥ 15

ततः कुणालः पितरं प्रणिपत्योवाच–

राजन्नतीतं खलु नैव शोच्यं
किं न श्रुतं ते मुनिवाक्यमेतत्।
यत्कर्मभिस्तेऽपि जिना न मुक्ताः
प्रत्येकबुद्धाः सुदृढैस्तथैव ॥ १५० ॥ 20
लब्धाः फलस्थाश्च पृथग्जनाश्च
कृतानि कामान्यशुभानि देहिनाम्।
स्वयंकृतानामिह कर्मणां फलं
कथं तु वक्ष्यामि परैरिदं कृतम् ॥ १५१ ॥
अहमेव महाराज कृतापराधश्च सापराधश्च। 25
विनिवर्तयामि योऽहं विनयामि विपत्तिजननानि ॥ १५२ ॥
न शस्त्रवज्राग्निविषाणि पन्नगाः
कुर्वन्ति पीडां नभसोऽविकारिणः।
शरीरलक्ष्येण धृतेन पार्थिव
पतन्ति दुःखान्यशिवानि देहिनाम् ॥ १५३ ॥ 30

अथ राजा शोकाग्निना संतापितहृदय उवाच–

केनोद्धृतानि नयनानि सुतस्य मह्यं
को जीवितं सुमधुरं त्यजितुं व्यवस्तः।

शोकानलो निपतितो हृदये प्रचण्डः
आचक्ष्व पुत्र लघु कस्य हरामि दण्डम् ॥ १५४ ॥

यावद्राज्ञा अशोकेन श्रुतम्—तिष्यरक्षिताया अयं प्रयोग इति । श्रुत्वा राजा तिष्यरक्षितामाहूयोवाच—

C 417 5 कथं हि धन्ये न निमज्जसे क्षितौ
छिन्दामि शीर्षं परशुप्रहारैः ।
त्यजाम्यहं त्वामतिपापकारिणी-
मधर्मयुक्तां श्रियमात्मवानिव ॥ १५५ ॥

ततो राजा क्रोधाग्निना प्रज्वलितस्तिष्यरक्षितां निरीक्ष्योवाच—

10 उत्पाट्य नेत्रे परिपातयामि
गात्रं किमस्या नखरैः सुतीक्ष्णैः ।
जीवन्तिशूलामथ कारयामि
छिन्दामि नासां क्रकचेन वास्याः ॥ १५६ ॥
क्षुरेण जिह्वामथ कर्तयामि
15 विषेण पूर्णामथ घातयिष्ये ।
स इत्येवमादिवधप्रयोगं
बहुप्रकारं ह्यवदन्नरेन्द्रः ॥ १५७ ॥
श्रुत्वा कुणालः करुणात्मकस्तु
विज्ञापयामास गुरुं महात्मा ।
20 अनार्यकर्मा यदि तिष्यरक्षिता
त्वमार्यकर्मा भव मा वध स्त्रियम् ॥ १५८ ॥
फलं हि मैत्र्या सदृशं न विद्यते
प्रभोस्तितिक्षा सुगतेन वर्णिता ।
पुनः प्रणम्य पितरं कुमारः
25 कृताञ्जलिः सूनृतवाग्जगाद ॥ १५९ ॥
राजन्न मे दुःखमलोऽस्ति कश्चि-
त्तीव्रापकारेऽपि न मन्युतापः ।
मनः प्रसन्नं यदि मे जनन्यां
येनोद्धृते मे नयने स्वयं हि ।
30 तत्तेन सत्येन ममास्तु ताव-
न्नेत्रद्वयं प्राक्तनमेव सद्यः ॥ १६० ॥

C 418 इत्युक्तमात्रे पूर्वाधिकप्रशोभिते नेत्रयुग्मे प्रादुर्बभूवतुः । यावद्राज्ञा अशोकेन तिष्यरक्षिता अमर्षितेन जतुगृहं प्रवेशयित्वा दग्धा, तक्षशिलाश्च पौराः प्रघातिताः ॥

भिक्षवः संशयजाताः सर्वसंशयच्छेत्तारमायुष्मन्तं स्थविरोपगुप्तं पृच्छन्ति—किं कुणालेन कर्म कृतं यस्य कर्मणो विपाकेन नयनान्युत्पाटितानि? स्थविर उवाच—तेन ह्यायुष्मन्तः श्रूयताम्—

भूतपूर्वमतीतेऽध्वनि वाराणस्यामन्यतमो लुब्धकः। स हिमवन्तं गत्वा मृगान् प्रघातयति। सोऽपरेण समयेन हिमवन्तं गतः। तत्र पाशनिपतितान्येकस्यां गुहायां 5 प्रविष्टान्यासादितानि। तेन वागुरया सर्वे गृहीताः। तस्य बुद्धिरुत्पन्ना—यदि प्रघातयिष्यामि, मांसः क्लेदमुपयास्यति। तेन पञ्चानां मृगशतानां नयनान्युत्पाटितानि॥

किं मन्यध्वमायुष्मन्तः? योऽसौ लुब्धकः, स एष कुणालः। यत्तत्रानेन बहूनां मृगशतानां नयनान्युत्पाटितानि, तस्य कर्मणो विपाकेन बहूनि वर्षशतसहस्राणि नरकेषु दुःखमनुभूय ततः कर्मावशेषेण पञ्च जन्मशतानि तस्य नयनान्युत्पाटितानि॥ 10

किं कर्म कृतं यस्य कर्मणो विपाकेनोच्चे कुले उपपन्नः, प्रासादिकश्च संवृत्तः, सत्यदर्शनं च कृतम्?

तेन ह्यायुष्मन्तः श्रूयताम्—भूतपूर्वमतीतेऽध्वनि चत्वारिंशद्वर्षसहस्रायुषि प्रजायां क्रकुच्छन्दो नाम सम्यक्संबुद्धो लोक उदपादि। यदा क्रकुच्छन्दः सम्यक्संबुद्धः सकलं बुद्धकार्यं कृत्वा निरुपधिशेषे निर्वाणधातौ परिनिर्वृतः, तस्य अशोकेन राज्ञा चतूरत्नमयं स्तूपं 15 कारितम्। यदा राजा अशोकः कालगतः, अश्राद्धो राजा राज्यं प्रतिष्ठितः। तानि रत्नान्यदत्तादायिकैर्हृतानि। पांशुकाष्ठं चावशिष्टम्। अत्र जनकायो गत्वा विशीर्णं दृष्ट्वा शोचितुमारब्धः। तस्मिंश्च समयेऽन्यतमश्च श्रेष्ठिपुत्रः। तेनोक्तः—किमर्थं रुद्यत इति? तैरभिहितम्—क्रकुच्छन्दस्य सम्यक्संबुद्धस्य स्तूपं चतूरत्नमयमासीत्, स इदानीं विशीर्ण इति। ततस्तेन च तत्र क्रकुच्छन्दस्य सम्यक्संबुद्धस्य कायप्रमाणिका प्रतिमा बभूव 20 विशीर्णा, सा अभिसंस्कृता, सम्यक्प्रणिधानं च कृतम्—यादृशः क्रकुच्छन्दः शास्ता, ईदृशमेव शास्तारमारागयेयं मा विरागयेयमिति॥ C 419

किं मन्यध्वमायुष्मन्तः? योऽसौ श्रेष्ठिपुत्रः, स एष कुणालः। यत्रानेन क्रकुच्छन्दस्य स्तूपमभिसंस्कृतम्, तस्य कर्मणो विपाकेनोच्चकुले उपपन्नः। यत्प्रतिमा अभिसंस्कृता, तेन कर्मणो विपाकेन कुणालः प्रासादिकः संवृत्तः। यत् प्रणिधानं कृतम्, तस्य कर्मणो 25 विपाकेन कुणालेन शाक्यमुनिः सम्यक्संबुद्धस्तादृश एव शास्ता समारागितो न विरागितः, सत्यदर्शनं च कृतम्॥

इति श्रीदिव्यावदाने कुणालावदानं सप्तविंशतिमं समाप्तम्॥

---

## २८ वीतशोकावदानम् ।

यदा राज्ञा अशोकेन भगवच्छासने श्रद्धा प्रतिलब्धा, तेन चतुरशीतिधर्मराजिकासहस्रं प्रतिष्ठापितं पञ्चवार्षिकं च कृतम् । त्रीणि शतसहस्राणि भिक्षूणां भोजितानि यत्रैकोऽर्हतां द्वौ शैक्षाणां पृथग्जनकल्याणकानां च । (स)समुद्रायां पृथिव्यां जनकाया
5 यद्भूयसा भगवच्छासनेऽभिप्रसन्नाः । तस्य भ्राता वीतशोको नाम तीर्थ्याभिप्रसन्नः । स तीर्थ्यैर्विग्राहितः—नास्ति श्रमणशाक्यपुत्रीयाणां मोक्ष इति । एते हि सुखाभिरताः परिखेदभीरवश्चेति । यावद्राज्ञा अशोकेनोच्यते—वीतशोक, मा त्वमनायतनेऽप्रसादमुत्पादय, अपि तु बुद्धधर्मसंघे प्रसादमुत्पादय । एष आयतनगतः प्रसाद इति । अथ राजा अशोकोऽपरेण समयेन मृगवधाय निर्गतः । तत्र वीतशोकेनारण्ये ऋषिर्दृष्टः पञ्चातपेनावस्थितः ।
C 420 10 स च कष्टतपः सारसंज्ञी । तेनाभिगम्य पादाभिवन्दनं कृत्वा स ऋषिः पृष्टः—भगवन्, कियच्चिरं ते इहारण्ये प्रतिवसतः? स उवाच—द्वादश वर्षाणीति । वीतशोकः कथयति—कस्तवाहारः? स ऋषिरुवाच—फलमूलानि । किं प्रावरणम्? दर्भचीवराणि । का शय्या? तृणसंस्तरणम् । वीतशोक उवाच—भगवन्, किं दुःखं बाधते? ऋषिरुवाच—इमे मृगा ऋतुकाले संवसन्ति । यदा मृगानां संवासो दृष्टो भवति, तस्मिन् समये रागेण परिदह्यामि ।
15 वीतशोक उवाच—अस्य कष्टेन तपसा रागोऽद्यापि न बाध्यते, प्रागेव श्रमणाः शाक्यपुत्रीयाः स्वास्तीर्णासनशयनोपसेविनः । कुत एषां रागप्रहाणं भविष्यति? आह च—

कष्टेऽस्मिन् विजने वने निवसतां वाय्वम्बुमूलाशिनां
रागो नैव जितो यदीह ऋषिणा कालप्रकर्षेण हि ।
भुक्त्वान्नं सघृतं प्रभूतपिशितं दध्युत्तमालंकृतं
20 शाक्येष्विन्द्रियनिग्रहो यदि भवेद्विन्ध्यः प्लवेत्सागरे ॥ १ ॥

सर्वथा वञ्चितो राजा अशोको यच्छ्रमणेषु शाक्यपुत्रीयेषु कारां करोति । एतच्च वचनं श्रुत्वा राजा उपायज्ञोऽमात्यानुवाच—अयं वीतशोकस्तीर्थ्याभिप्रसन्नः । उपायेन भगवच्छासनेऽभिप्रसादयितव्यः । अमात्या आहुः—देव, किमाज्ञापयसि? राजा आह—यदा अहं राजा अलंकारं मौलिं पट्टं चापनयित्वा स्नानशालां प्रविष्टो भवामि, तदा यूयं वीतशोकस्यो-
25 पायेन मौलिं पट्टं च बद्ध्वा सिंहासने निषादयिष्यथ । एवमस्तु इति । यावद्राजा राजालंकारं मौलिं पट्टं चापनयित्वा स्नानशालायां प्रविष्टः, ततोऽमात्यैर्वीतशोक उच्यते—राज्ञोऽशोकस्यात्ययात् त्वं राजा भविष्यसि । इमं तावद्राजालंकारं प्रवरमौलिं पट्टं च बद्ध्वा सिंहासने निषीदयिष्यामः—किं शोभसे न वेति । तैस्तदाभरणमौलिं पट्टं च बद्ध्वा सिंहासने निषादितो
C 421 राज्ञश्च निवेदितम् । ततो राजा अशोको वीतशोकं राजालंकारं मौलिपट्टबद्धं च सिंहासनोप-
30 विष्टं दृष्ट्वा कथयति—अद्याप्यहं जीवामि । त्वं राजा संवृत्तः । ततो राज्ञा अभिहितम्—कोऽत्र? ततो यावद्वध्यघातका नीलाम्बरवसनाः प्रलम्बकेशा घण्टाशब्दपाणयो राज्ञः पादयोर्निपत्योवाच—देव, किमाज्ञापयसि? राजा आह—वीतशोको मया परित्यक्त इति ।

यावद्वीतशोक उच्यते–सशब्दैर्वध्यघातैरस्माभिः परिवृतोऽसीति। ततोऽमात्या राज्ञः पादयोर्निपत्योवाच–देव, मर्षय वीतशोकम्। देवस्यैष भ्राता। ततो राज्ञा अभिहितम्–सप्ताहमस्य मर्षयामि। भ्राता चैषः। मम भ्रातुः स्नेहादस्य सप्ताहं राज्यं प्रयच्छामि। यावत् तूर्यशतानि संप्रवादितानि, जयशब्दैश्चानन्दितम्, प्राणिशतसहस्रैश्चाञ्जलिः कृतः, स्त्रीशतैश्च परिवृतः। वध्यघातकाश्च द्वारि तिष्ठन्ति। दिवसे गते वीतशोकस्याग्रतः स्थित्वा आरोचयन्ति–निर्गतं 5 वीतशोक एकं दिवसम्। षडहान्यवशिष्टानि। एवं द्वितीये दिवसे। विस्तरेण यावत्सप्ताहदिवसे वीतशोको राजालंकारविभूषितो राज्ञोऽशोकस्य समीपमुपनीतः। ततो राज्ञा अशोकेनाभिहितम्–वीतशोक, कच्चित्सुगीतं सुनृत्यं सुवादितमिति? वीतशोक उवाच–न मे दृष्टं वा स्याच्छ्रुतं वेति। आह च–

येन श्रुतं भवेद्गीतं नृत्यं चापि निरीक्षितम्। 10
रसाश्चास्वादिता येन स भूयात्तव निर्णयम्॥ २॥

राजा आह–वीतशोक, इदं मया राज्यं सप्ताहं तव दत्तम्, तूर्यशतानि संप्रवादितानि, जयशब्दैश्चानन्दितम्, अञ्जलिशतानि प्रगृहीतानि, स्त्रीशतैश्च परिचीर्णः। कथं त्वं कथयसि–नैव मे दृष्टं न श्रुतमिति? वीतशोक उवाच–

न मे दृष्टं नृत्यं न च नृप श्रुतो गीतनिनदो 15
न मे गन्धा घ्राता न खलु रसा मेऽद्य विदिताः।
न मे स्पृष्टः स्पर्शः कनकमणिहाराङ्गजनितः
समूहो नारीणां मरणपरिविद्धेन मनसा॥ ३॥
स्त्रियो नृत्तं गीतं भवनशयनान्यासनविधिर्वयो रूपं लक्ष्मीर्बहुविविधरत्ना च वसुधा। 20
निरानन्दा शून्या मम नृप वरशय्या गतसुखा
स्थितान् दृष्ट्वा द्वारे वधकपुरुषान्नीलवसनान्॥ ४॥
श्रुत्वा घण्टारवं घोरं नीलाम्बरधरस्य हि। C 422
भयं मे मरणाज्जातं पार्थिवेन्द्र सुदारुणम्॥ ५॥
मृत्युशल्यपरीतोऽहं नाश्रौषीद्गीतमुत्तमम्। 25
नाद्राक्षं नृपते नृत्तं न च भोक्तुं मनःस्पृहा॥ ६॥
मृत्युज्वरगृहीतस्य न मे स्वप्नोऽपि विद्यते।
कृत्स्ना मे रजनी याता मृत्युमेवानुचिन्तयन्॥ ७॥

राजा आह–वीतशोक, मा तावत् तवैकजन्मिकस्य मरणभयात्तव राजश्रियं प्राप्य हर्षो नोत्पन्नः। किं पुनर्भिक्षवो जन्मशतमरणभयभीताः सर्वाण्युपपत्त्यायतनानि दुःखा- 30 न्यनुसृतानि पश्यन्ति। नरके तावच्छरीरसंतापकृतमग्निदाहदुःखं च, तिर्यक्षु अन्योन्यभक्षणपरित्रासदुःखम्, प्रेतेषु क्षुत्तर्षदुःखम्, पर्येष्टिसमुदाचारदुःखं मनुष्येषु, च्यवन-

पतनभ्रंशदुःखं देवेषु। एभिः पञ्चभिर्दुःखैस्त्रैलोक्यमनुषक्तम्। शारीरमानसैर्दुःखैरुत्पीडिता वधकभूतान् स्कन्धान् पश्यन्ति, शून्यग्रामभूतान्यायतनानि, चौरभूतानि विषयाणि, कृत्स्नं च त्रैधातुकमनित्यताग्निना प्रदीप्तं पश्यन्ति। तेषां रागः कथमुत्पद्यते? आह च—

मा तावदेकजन्मिकस्य मरणभयात्तव न जायते हर्षः।
5 मनसि विषयैर्मनोज्ञैः सततं खलु पश्यमानस्य॥ ८॥

किं पुनर्जन्मशतानां मरणभयमनागतं विचिन्तयताम्।
मनसि भविष्यति हर्षो भिक्षूणां भोजनाद्येषु॥ ९॥

तेषां तु वस्त्रशयनासनभोजनादि
मोक्षेऽभियुक्तमनसां जनयेत सङ्गम्।
10 पश्यन्ति ये वधकशत्रुनिभं शरीर-
मादीप्तवेश्मसदृशांश्च भवाननिलान्॥ १०॥

कथं च तेषां न भवेद्विमोक्षो
मोक्षार्थिनां जन्मपराङ्मुखानाम्।
येषां मनः सर्वसुखाश्रयेषु
15 व्यावर्तते पद्मदलादिवाम्भः॥ ११॥

C 423 यदा वीतशोको राज्ञा अशोकेनोपायेन भगवच्छासनेऽभिप्रसादितः, स कृतकरपुट उवाच—देव, एषोऽहं तं भगवन्तं तथागतमर्हन्तं सम्यक्संबुद्धं शरणं गच्छामि धर्मं च भिक्षुसंघं चेति। आह च—

एष व्रजामि शरणं विबुद्धनवकमलविमलनिभनेत्रम्।
20 बुधविबुधमनुजमहितं जिनं विरागं च संघं च॥ १२॥ इति।

अथ राजा अशोको वीतशोकं कण्ठे परिष्वज्योवाच—न त्वं मया परित्यक्तः, अपि तु बुद्धशासनाभिप्रसादार्थं तव मया एष उपायः प्रदर्शितः। ततो वीतशोको गन्धपुष्पमाल्यादिवादित्रसमुदयेन भगवतश्चैत्यानर्चयति, सद्धर्मं च शृणोति, संघे च कारां कुरुते। स कुर्कुटारामं गतः। तत्र यशो नाम स्थविरोऽर्हन् षडभिज्ञः। स तस्य पुरतो 25 निषण्णो धर्मश्रवणाय। स्थविरश्च तमवलोकयितुमारब्धः। स पश्यति वीतशोकमुपचितहेतुकं चरमभविकम्। तेनैवाश्रयेणार्हत्त्वं प्राप्तव्यम्। तेन तस्य प्रव्रज्याया वर्णो भाषितः। तस्य श्रुत्वा स्पृहा जाता—प्रव्रजेयं भगवच्छासने। तत उत्थाय कृताञ्जलिः स्थविरमुवाच—लभेयाहं स्वाख्याते धर्मविनये प्रव्रज्यामुपसंपदं भिक्षुभावम्। चरेयमहं भवतोऽन्तिके ब्रह्मचर्यम्। स्थविर उवाच—वत्स, राजानमशोकमनुज्ञापयस्वेति। ततो वीत30 शोको येन राजा अशोकस्तेनोपसंक्रम्य कृताञ्जलिरुवाच—देव, अनुजानीहि माम्। प्रव्रजिष्यामि स्वाख्याते धर्मविनये सम्यगेव श्रद्धया अगारादनगारिकाम्। आह च—

उद्भ्रान्तोऽस्मि निरङ्कुशो गज इव व्यावर्तितो विभ्रमात्
त्वद्बुद्धिप्रभवाङ्कुशेन विधिवद्बुद्धोपदेशैरहम् ।
एकं त्वमर्हसि मे वरं प्रदर्शितुं त्वं पार्थिवानां पते
लोकालोकवरस्य शासनवरे लिङ्गं शुभं धारयेत् ॥ १३ ॥

श्रुत्वा च राजा साश्रुकण्ठो वीतशोकं कण्ठे परिष्वज्योवाच—वीतशोक, अलमनेन 5 C 424
व्यवसायेन । प्रव्रज्या खलु वैवर्णिकाभ्युपगतावासः, पांशुकूलं प्रावरणं परिजनोज्झितम्, आहारो भैक्ष्यं परकुले, शयनासनं वृक्षमूले तृणसंस्तरः पर्णसंस्तरः, व्याबाधे खल्वपि भैषज्यमसुलभं पूतिमूत्रं च भोजनम् । त्वं च सुकुमारः शीतोष्णक्षुत्पिपासानां दुःखानामसहिष्णुः । प्रसीद, निवर्तय मानसम् । वीतशोक उवाच—देव,

नैव हि जाने तं नूनं विषयतृषितोऽनायासविहतः 10
प्रव्रज्यां प्राप्तुकामो न रिपुहृतबलो नैवार्थकृपणः ।
दुःखार्तं मृत्युनेष्टं व्यसनपरिगतं दृष्ट्वा जगदिदं
पन्थानं जन्मभीरुः शिवमभयमहं गन्तुं व्यवसितः ॥ १४ ॥

श्रुत्वा च राजा अशोकः सत्वरं प्ररुदितुमारब्धः । अथ वीतशोको राजानमनुनयन्नुवाच—देव, 15

संसारदोलामभिरुह्य लोलां
यदा निपातो नियतः प्रजानाम् ।
किमर्थमागच्छति विक्रिया ते
सर्वेण सर्वस्य यदा वियोगः ॥ १५ ॥

राजा आह—वीतशोक, भैक्षे तावदभ्यासः क्रियताम् । राजकुले वृक्षवाटिकायां 20
तस्य तृणसंस्तरः संस्तृतः, भोजनं चास्य दत्तम् । सोऽन्तःपुरं पर्यटति, महार्हं चाहारं न लभते । ततो राज्ञा अन्तःपुरिका अभिहिता—प्रव्रजितसारूप्यमस्याहारमनुप्रयच्छतेति । तेन यावदभिदूषिता पूतिकुल्माषा लब्धाः । तांश्च परिभोक्तुमारब्धः । दृष्ट्वा राज्ञा अशोकेन निवारितः । अनुज्ञातश्च—प्रव्रज, किं तु प्रव्रजित्वा उपदर्शयिष्यसि । स यावत् कुर्कुटारामं गतः । तस्य बुद्धिरुत्पन्ना—यदीह प्रव्रजिष्यामि, आकीर्णो भविष्यामि । ततो विदेहेषु जन- 25
पदेषु गत्वा प्रव्रजितः । ततस्तेन युज्यता यावदर्हत्त्वं प्राप्तम् । अथायुष्मतो वीतशोकस्यार्हत्त्वं प्राप्तस्य विमुक्तिप्रीतिसुखसंवेदिन एतदभवत्—अस्ति खलु मे—पूर्वं राज्ञोऽशोकस्य गृहद्वारमनुप्राप्तः । ततो दौवारिकमुवाच—गच्छ, राज्ञोऽशोकस्य निवेदय—वीतशोको द्वारि तिष्ठति देवं द्रष्टुकाम इति । ततो दौवारिको राजानमशोकमभिगम्योवाच—देव, दिष्ट्या वृद्धिः ।
वीतशोकोऽभ्यागतो द्वारि तिष्ठति देवं द्रष्टुकामः । ततो राज्ञा अभिहितम्—गच्छ, शीघ्रं 30 C 425
प्रवेशयेति । यावद्वीतशोको राजकुलं प्रविष्टः । दृष्ट्वा च राजा अशोकः सिंहासनादुत्थाय मूलनिकृत्त इव द्रुमः सर्वशरीरेणायुष्मन्तं वीतशोकं निरीक्षमाणः प्ररुदन्नुवाच—

भूतेषु संसर्गगतेषु नित्यं
दृष्ट्वापि मां नैति यथा विकारम्।
विवेकवेगाधिगतस्य शङ्के
प्रज्ञारसस्यातिरसस्य तृप्तः ॥ १६ ॥

5 अथ राज्ञोऽशोकस्य राधगुप्तो नामाग्रामात्यः। स पश्यति–आयुष्मतो वीतशोकस्य पांशुकूलं च चीवरं मृण्मयं पात्रं यावदन्नं भैक्ष्यं लूहप्रणीतम्। दृष्ट्वा च राज्ञः पादयोर्निपत्य कृताञ्जलिरुवाच–देव, यथा अयमल्पेच्छः संतुष्टश्च, नियतमयं कृतकरणीयो भविष्यति, प्रीतिरुत्पाद्येत। कुतः?

भैक्षान्नभोजनं यस्य पांशुकूलं च चीवरम्।
10 निवासो वृक्षमूलं च तस्यानियतं कथम् ॥ १७ ॥

निराश्रवं यस्य मनो विशालं
निरामयं चोपचितं शरीरम्।
स्वच्छन्दतो जीवितसाधनं च
नित्योत्सवं तस्य मनुष्यलोके ॥ १८ ॥

15 श्रुत्वा ततो राजा प्रीतमना उवाच–

अपहाय मौर्यवंशं मगधपुरं सर्वरत्ननिचयं च।
दृष्ट्वा वंशनिवहं प्रहीणमदमानमोहसारम्भम् ॥ १९ ॥
अत्युद्धृतमिव मन्ये यशसा पूतं पुरमिव महं च।
प्रतिपद्यतां त्वया दशबलधरशासनमुदारेण ॥ २० ॥

20 अथ राजा अशोकः सर्वाङ्गेन परिगृह्य प्रज्ञप्त एवासने निषादयामास, प्रणीतेन चाहारेण स्वहस्तं संतर्पयति। भुक्तवन्तं विदित्वा धौतहस्तमपनीतपात्रमायुष्मतो वीतशोकस्य पुरतो निषण्णो धर्मश्रवणाय। अथायुष्मान् वीतशोको राजानमशोकं धर्म्यया कथया संदर्शयन्नुवाच– C 426

अप्रमादेन संपाद्य राज्यैश्वर्यं प्रवर्तताम्।
25 दुर्लभा त्रीणि रत्नानि नित्यं पूजय पार्थिव ॥ २१ ॥

स यावद्धर्म्यया कथया संहर्षयित्वा संप्रस्थितः ॥

अथ राजा अशोकः कृतकरपुटः पञ्चभिरमात्यशतैः परिवृतोऽनेकैश्च पौरजनपदसहस्रैः परिवृतः पुरस्कृत आयुष्मन्तं वीतशोकमनुव्रजितुमारब्धः। वक्ष्यति हि–

भ्राता ज्येष्ठेन राज्ञा तु गौरवेणानुगम्यते।
30 प्रव्रज्यायाः खलु श्लाघ्यं संदृष्टिकमिदं फलम् ॥ २२ ॥

तत आयुष्मान् वीतशोकः स्वगुणानुद्भावयन् पश्यतः सर्वजनकायस्य ऋद्ध्या वैहायस-मुत्पत्य प्रक्रान्तः। अथ राजा अशोकः कृतकरपुटः प्राणिशतसहस्रैः परिवृतः पुरस्कृतो गगनतलावसक्तदृष्टिरायुष्मन्तं वीतशोकं निरीक्षमाण उवाच—

स्वजनस्नेहनिःसङ्गो विहंग इव गच्छसि।
श्रीरागनिगदैर्बद्धानस्मान् प्रत्यादिशन्निव ॥ २३ ॥ 5
आत्मायत्तस्य शान्तस्य मनःसंकेतचारिणः।
ध्यानस्य फलमेतच्च रागान्धैर्यन्न दृश्यते ॥ २४ ॥

अपि च।

ऋद्ध्या खल्ववभर्त्सिताः परमया श्रीगर्विताास्ते वयं
बुद्ध्या खल्वपि नामिताः शिरसिताः प्रज्ञाभिमानोदयम्। 10
प्राप्तार्थेन फलान्धबुद्धिमनसः संत्रेजितास्ते वयं
संक्षेपेण सबाष्पदुर्दिनमुखाः स्थाने विमुक्ता वयम् ॥ २५ ॥

तत्रायुष्मान् वीतशोकः प्रत्यन्तिमेषु जनपदेषु शय्यासनाय निर्गतः। तस्य च महान् व्याधिरुत्पन्नः। श्रुत्वा च राज्ञा अशोकेन भैषज्यमुपस्थायिकाश्च विसर्जिताः। तस्य तेन व्याधिना स्पृष्टस्य शिरः खुस्तमभवत्। यदा च व्याधिर्विगतः, तस्य विरूढानि शिरसि रोमाणि। 15 तेन वैद्योपस्थायकाश्च विसर्जिताः। तस्य च गोरसप्राय आहारोऽनुसेव्यते। स घोषं गत्वा (C 427) भैक्ष्यं पर्यटति। तस्मिंश्च समये पुण्ड्रवर्धननगरे निर्ग्रन्थोपासकेन बुद्धप्रतिमा निर्ग्रन्थस्य पादयोर्निपातिता चित्रार्पिता। उपासकेनाशोकस्य राज्ञो निवेदितम्। श्रुत्वा च राज्ञा अभि-हितम्—शीघ्रमानीयताम्। तस्योर्ध्वं योजनं यक्षाः शृण्वन्ति, अधो योजनं नागाः। यावत्तं तत्क्षणेन यक्षैरुपनीतम्। दृष्ट्वा च राज्ञा रुषितेनाभिहितम्—पुण्ड्रवर्धने सर्वे आजीविकाः 20 प्रघातयितव्याः। यावदेकदिवसेऽष्टादशसहस्राण्याजीविकानां प्रघातितानि। ततः पाटलि-पुत्रे भूयोऽन्येन निर्ग्रन्थोपासकेन बुद्धप्रतिमा निर्ग्रन्थस्य पादयोर्निपातिता चित्रार्पिता। श्रुत्वा च राज्ञा अमर्षितेन स निर्ग्रन्थोपासकः सबन्धुवर्गो गृहं प्रवेशयित्वा अग्निना दग्धः। आज्ञप्तं च—यो मे निर्ग्रन्थस्य शिरो दास्यति, तस्य दीनारं दास्यामीति। घोषितम्। स चायुष्मान् वीतशोक आभीरस्य गृहे रात्रिं वासमुपगतः। तस्य च व्याधिना क्लिष्टस्य लूहानि चीव- 25 राणि, दीर्घकेशनखश्मश्रुः। आभीर्या बुद्धिरुत्पन्ना—निर्ग्रन्थोऽयमस्माकं गृहे रात्रिं वासमुप-गतः। स्वामिनमुवाच—आर्यपुत्र, संपन्नोऽयमस्माकं दीनारः। इमं निर्ग्रन्थं प्रघातयित्वा शिरो राज्ञोऽशोकस्योपनामयेयमिति। ततः स आभीरोऽसिं निष्कोषं कृत्वा आयुष्मन्तं वीतशोक-मभिगतः। आयुष्मता च वीतशोकेन पूर्वान्ते ज्ञानं क्षिप्तम्। पश्यति स्वयंकृतानां कर्मणां फलमिदमुपस्थितम्। ततः कर्मप्रतिशरणो भूत्वा अवस्थितः। तेन तथास्याभीरेण शिरश्छिन्नम्। 30 राज्ञोऽशोकस्योपनीतम्—दीनारं प्रयच्छेति। दृष्ट्वा च राज्ञा अशोकेन परिज्ञातम्—विरलानि चास्य शिरसि रोमाणि न व्यक्तिमुपगच्छन्ति। ततो वैद्या उपस्थायका आनीताः। तैर्दृष्ट्वा

अभिहितम्—देव, वीतशोकस्यैतच्छिरः। श्रुत्वा राजा मूर्च्छितो भूमौ पतितः। यावज्जलसेकं दत्वा स्थापितः। अमात्यैश्चाभिहितम्—देव, वीतरागाणामप्यत्र पीडा। दीयतां सर्वसत्त्वे-
C 428 ष्वभयप्रदानम्। यावद्राज्ञा अभयप्रदानं दत्तम्—न भूयः कश्चित् प्रघातयितव्यः॥

ततो भिक्षवः संशयजाताः सर्वसंशयच्छेत्तारमायुष्मन्तमुपगुप्तं पृच्छन्ति—किं कर्म
5 कृतमायुष्मता वीतशोकेन यस्य कर्मणो विपाकेन शस्त्रेण प्रघातितः? स्थविर उवाच—तेन ह्यायुष्मन्तः कर्माणि कृतानि पूर्वमन्यासु जातिषु। श्रूयताम्—

भूतपूर्वं भिक्षवोऽतीतेऽध्वनि अन्यतमो लुब्धो मृगान् प्रघातयित्वा जीविकां कल्पयति। अटव्यामुदपानम्। स तत्र लुब्धो गत्वा पाशान् यन्त्रांश्च स्थापयित्वा मृगान् प्रघातयति। असति बुद्धानामुत्पादे प्रत्येकबुद्धा लोके उत्पद्यन्ते। विस्तरः। अन्यतरः प्रत्येकबुद्ध-
10 स्तस्मिन्नुदपाने आहारकृत्यं कृत्वा उदपानादुत्तीर्य वृक्षमूले पर्यङ्केन निषण्णः। तस्य गन्धेन मृगास्तस्मिन्नुदपाने नाभ्यागताः। स लुब्ध आगत्य पश्यति—नैव मृगा उदपानमभ्यागताः। पदानुसारेण च तं प्रत्येकबुद्धमभिगतः। दृष्ट्वा चास्य बुद्धिरुत्पन्ना—अनेनैष आदीनव उत्पादितः। तेनासिं निष्कोषं कृत्वा स प्रत्येकबुद्धः प्रघातितः॥

किं मन्यध्वे आयुष्मन्तः? योऽसौ लुब्धः, स एष वीतशोकः। यत्रानेन मृगाः
15 प्रघातिताः, तस्य कर्मणो विपाकेन महान् व्याधिरुत्पन्नः। यत्प्रत्येकबुद्धः शस्त्रेण प्रघातितः, तस्य कर्मणो विपाकेन बहूनि वर्षसहस्राणि नरकेषु दुःखमनुभूय पञ्च जन्मशतानि मनुष्ये-ष्पपन्नः शस्त्रेण प्रघातितः। तत्कर्मावशेषेणैतर्हि अर्हत्प्राप्तोऽपि शस्त्रेण प्रघातितः॥

किं कर्म कृतं येनोच्चकुले उपपन्नः, अर्हत्त्वं च प्राप्तम्? स्थविर उवाच—काश्यपे सम्यक्संबुद्धे प्रव्रजितोऽभूत् प्रदानरुचिः। तेन दायकदानपतयः संघभक्तं कारापितास्तर्प-
20 णानि यवागूपानानि निमन्त्रणकानि। स्तूपेषु च छत्राण्यवरोपितानि, ध्वजाः पताकाः।
C 429 गन्धमाल्यपुष्पवादित्रसमुदयेन पूजाः कृताः। तस्य कर्मणो विपाकेनोच्चकुले उपपन्नः। यावद्दशवर्षसहस्राणि ब्रह्मचर्यं चरित्वा सम्यक्प्रणिधानं कृतम्, तस्य कर्मणो विपाकेनार्हत्त्वं प्राप्तमिति॥

इति श्रीदिव्यावदाने वीतशोकावदानमष्टाविंशतिमम्॥



## २९ अशोकावदानम् ।

यदा राज्ञा अशोकेन अर्धामलकदानेन भगवच्छासने श्रद्धा प्रतिलब्धा, स भिक्षूनुवाच—केन भगवच्छासने प्रभूतं दानं दत्तम्? भिक्षव ऊचुः—अनाथपिण्डदेन गृहपतिना। राजा आह—कियत्तेन भगवच्छासने दानं दत्तम्? भिक्षव ऊचुः—कोटिशतं तेन भगवच्छासने दानं दत्तम्। श्रुत्वा च राजा अशोकश्चिन्तयति—तेन गृहपतिना भूत्वा कोटिशतं 5 भगवच्छासने दानं दत्तम्। तेनाभिहितम्—अहमपि कोटिशतं भगवच्छासने दानं दास्यामि। तेन यावच्चतुरशीतिधर्मराजिकासहस्रं प्रतिष्ठापितम्, सर्वत्र च शतसहस्राणि दत्तानि—जातौ, बोधौ, धर्मचक्रे, परिनिर्वाणे च, सर्वत्र शतसहस्रं दत्तम्। पञ्चवार्षिकं कृतम्। तत्र च चत्वारि शतसहस्राणि दत्तानि, त्रीणि शतसहस्राणि भिक्षूणां भोजितानि यत्रैकर्महतां द्वौ शैक्षाणां पृथग्जनकल्याणकानां च। कोशं स्थापयित्वा महापृथिवीमन्तः- 10 पुरामात्यगणमात्मानं कुणालं च आर्यसंघे निर्यातयित्वा चत्वारि शतसहस्राणि दत्त्वा निष्क्रीतवान्। षण्णवतिकोट्यो भगवच्छासने दानं दत्तम्। स यावद् ग्लानीभूतः। अथ राजा इदानीं न भविष्यामीति विक्लवीभूतः। तस्य राधगुप्तो नामामात्यो येन सह पांशुदानं दत्तम्। तदा स राजानमशोकं विक्लवीभूतमवेक्ष्य पादयोर्निपत्य कृताञ्जलिरुवाच—

यच्छत्रुसंघैः प्रबलैः समेत्य 15 C 430
नोद्वीक्षितं चण्डदिवाकराभम्।
पद्माननश्रीशतसंप्रपीतं
कस्मात् सबाष्पं तव देव वक्त्रम्॥ १॥

राजा आह—राधगुप्त, नाहं द्रव्यविनाशं न राज्यनाशनं न चाश्रयवियोगं शोचामि, किं तु शोचामि—आर्यैर्यद्विप्रयुक्ष्यामि। 20

नाहं पुनः सर्वगुणोपपन्नं
संघं समक्षं नरदेवपूजितम्।
संपूजयिष्यामि वरान्नपानै-
रेतं विचिन्त्याश्रुविमोक्षणं मे॥ २॥

अपि च राधगुप्त, अयं मे मनोरथो बभूव—कोटिशतं भगवच्छासने दानं दास्यामीति, 25 स च मेऽभिप्रायो न परिपूर्णः। ततो राज्ञा अशोकेन चत्वारः कोट्यः परिपूरयिष्यामीति हिरण्यसुवर्णं कुर्कुटारामं प्रेषयितुमारब्धः॥

तस्मिंश्च समये कुणालस्य संपदिर्नाम पुत्रो युवराज्ये प्रवर्तते। तस्यामात्यैरभिहितम्—कुमार, अशोको राजा स्वल्पकालावस्थायी। इदं च द्रव्यं कुर्कुटारामं प्रेष्यते। कोशबलिनश्च राजानः। निवारयितव्यः। यावत् कुमारेण भाण्डागारिकः प्रतिषिद्धः। यदा राज्ञोऽशोक- 30 स्याप्रतिषिद्धा (तस्य) सुवर्णभाजने आहारमुपनाम्यते। भुक्त्वा तानि सुवर्णभाजनानि

कुर्कुटारामं प्रेषयति । तस्य सुवर्णभाजनं प्रतिषिद्धम् । रूप्यभाजने आहारमुपनाम्यते, तान्यपि कुर्कुटारामं प्रेषयति । ततो रूप्यभाजनमपि प्रतिषिद्धम्, यावल्लोहभाजन आहार-मुपनाम्यते । तान्यपि राजा अशोकः कुर्कुटारामं प्रेषयति । तस्य यावन्मृद्भाजन आहारमुप-नाम्यते । तस्मिंश्च समये राज्ञोऽशोकस्य अर्धामलकं करान्तरगतम् । अथ राजा अशोकः 5 संविग्नोऽमात्यान् पौरांश्च संनिपात्य कथयति—कः सांप्रतं पृथिव्यामीश्वरः ? ततोऽमात्य उत्था-यासनाद्येन राजा अशोकस्तेनाञ्जलिं प्रणम्योवाच—देवः पृथिव्यामीश्वरः । अथ राजा अशोकः साश्रुदुर्दिननयनवदनोऽमात्यानुवाच— C 431

दाक्षिण्यादनृतं हि किं कथयत भ्रष्टाधिराज्या वयं
शेषं त्वामलकार्धमित्यवसितं यत्र प्रभुत्वं मम ।
10 ऐश्वर्यं धिगनार्यमुद्धतनदीतोयप्रवेशोपमं
मर्त्येन्द्रस्य ममापि यत्प्रतिभयं दारिद्र्यमभ्यागतम् ॥ ३ ॥

अथवा को भगवतो वाक्यमन्यथा करिष्यति ? संपत्तयो हि सर्वा विपत्तिनिधना इति प्रतिज्ञातं यदवितथवादिना गौतमेन, न हि तद्विसंवदति ॥

प्रतिशिष्यतेऽस्मन्ने चिरादाज्ञा मम यावती यथा मनसा ।
15 साद्यैव महाद्रिशिलातलविहतनदीवत् प्रतिनिवृत्ता ॥ ४ ॥

आज्ञाप्य व्यवधूतडिम्बडमरामेकातपत्रां मही-
मुत्पाट्य प्रतिगर्वितानरिगणानाश्वास्य दीनातुरान् ।
भ्रष्टस्वायतनो न भाति कृपणः संप्रत्यशोको नृपः
छिन्नाम्लानविशीर्णपत्रकुसुमः शुष्यत्यशोको यथा ॥ ५ ॥

20 ततो राजा अशोकः समीपं गतं पुरुषमाहूयोवाच—भद्रमुख, पूर्वगुणानुरागाद्भ्रष्टैश्वर्य-स्यापि मम इमं तावदपश्चिमं व्यापारं कुरु । इदं ममार्धामलकं ग्रहाय कुर्कुटारामं गत्वा संघे निर्यातय । मद्वचनाच्च संघस्य पादाभिवन्दनं कृत्वा वक्तव्यम्—जम्बुद्वीपैश्वर्यस्य राज्ञ एष सांप्रतं विभव इति । इदं तावदपश्चिमं दानं तथा परिभोक्तव्यं यथा मे संघगता दक्षिणा विस्तीर्णा स्यादिति । आह च—

25 इदं प्रदानं चरमं ममाद्य
राज्यं च तं चैव गतं स्वभावम् ।
आरोग्यवैद्योषधिवर्जितस्य
त्राता न मेऽस्त्यार्यगणाद्बहिर्धा ॥ ६ ॥

C 432 तत्तथा भुज्यतां येन प्रदानं मम पश्चिमम् ।
30 यथा संघगता मेऽद्य विस्तीर्णा दक्षिणा भवेत् ॥ ७ ॥

एवं देवेति स पुरुषो राज्ञोऽशोकस्य प्रतिश्रुत्य तदर्धामलकं गृह्य कुर्कुटारामं गत्वा वृद्धान्ते स्थित्वा कृताञ्जलिस्तदर्धामलकं संघे निर्यातयन्नुवाच—

एकच्छत्रसमुच्छ्रयां वसुमतीमाज्ञापयन् यः पुरा
लोकं तापयति स्म मध्यदिवसप्राप्तो दिवा भास्करः।
भाग्यच्छिद्रमवेक्ष्य सोऽद्य नृपतिः स्वैः कर्मभिर्वञ्चितः
संप्राप्ते दिवसक्षये रविरिव भ्रष्टप्रभावः स्थितः॥ ८॥

भक्त्यवनतेन शिरसा प्रणम्य संघाय तेन खलु दत्तमिदमामलकस्यार्धं लक्ष्मीचापल्य- 5
चिह्नितम्। ततः संघस्थविरो भिक्षूनुवाच—भदन्ता भवन्तः, शक्यमिदानीं संवेगमुत्पादयितुम्। कुतः? एवं ह्युक्तं भगवता—परविपत्तिः संवेजनीयं स्थानमिति। कस्येदानीं सहृदयस्य संवेगो नोत्पद्यते? कुतः?

त्यागशूरो नरेन्द्रोऽसावशोको मौर्यकुञ्जरः।
जम्बुद्वीपेश्वरो भूत्वा जातोऽर्धामलकेश्वरः॥ ९॥ 10

भृत्यैः स भूमिपतिरद्य हृताधिकारो
दानं प्रयच्छति किलामलकार्धमेतत्।
श्रीभोगविस्तरमदैरतिगर्विताना
प्रत्यादिशन्निव मनांसि पृथग्जनानाम्॥ १०॥

यावत्तदर्धामलकं चूर्णयित्वा यूषे प्रक्षिप्य संघे चारितम्। ततो राजा अशोको राध- 15
गुप्तमुवाच—कथय राधगुप्त, कः सांप्रतं पृथिव्यामीश्वरः? अथ राधगुप्तोऽशोकस्य पादयोर्निपत्य कृताञ्जलिरुवाच—देवः पृथिव्यामीश्वरः। अथ राजा अशोकः कथंचिदुत्थाय चतुर्दिशमवलोक्य संघाय अञ्जलिं कृत्वोवाच—एष इदानीं महत्कोशं स्थापयित्वा इमां समुद्रपर्यन्तां महापृथिवीं C 433
भगवच्छ्रावकसंघे निर्यातयामि। आह च—

इमां समुद्रोत्तमनीलकञ्चुका- 20
मनेकरत्नाकरभूषिताननाम्।
ददाम्यहं भूतधरां समन्दरां
संघाय तस्मिन्नुपभुज्यते फलम्॥ ११॥

अपि च।

दानेनाहमनेन नेन्द्रभवनं न ब्रह्मलोके फलं 25
काङ्क्षामि द्रुतवारिवेगचपलां प्रागेव राजश्रियम्।
दानस्यास्य फलं तु भक्तिमहतो यन्मेऽस्ति तेनाप्नुयां
चित्तैश्वर्यमहार्यमार्यमहितं नायाति यद्विक्रियाम्॥ १२॥

यावत् पत्राभिलिखितं कृत्वा दन्तमुद्रया मुद्रितम्। ततो राजा महापृथिवीं संघे दत्वा
कालगतः। यावदमात्यैर्नीलपीताभिः शिबिकाभिर्निर्हरित्वा शरीरपूजां कृत्वा राजानं प्रति- 30
ष्ठापयिष्याम इति, यावद्राधगुप्तेनाभिहितम्। राज्ञा अशोकेन महापृथिवी संघे निर्यातिता

इति । ततोऽमात्यैरभिहितम्—किमर्थमिति ? राधगुप्त उवाच—एष राज्ञोऽशोकस्य मनोरथो बभूव—कोटिशतं भगवच्छासने दानं दास्यामीति । तेन षण्णवतिकोट्यो दत्ता यावद्राज्ञ्या प्रतिषिद्धा । तदभिप्रायेण राज्ञा महापृथिवी संघे दत्ता । यावदमात्यैश्चतस्रः कोट्यो भगवच्छासने दत्त्वा पृथिवीं निष्क्रीय संपदिः राज्ये प्रतिष्ठापितः । संपदेर्बृहस्पतिः पुत्रः, बृहस्पतेर्वृषसेनः, 5 वृषसेनस्य पुष्यधर्मा, पुष्यधर्मणः पुष्यमित्रः । सोऽमात्यानामन्त्रयते—क उपायः स्याद्यदस्माकं नाम चिरं तिष्ठेत् ? तैरभिहितम्—देवस्य च वंशादशोको नाम्ना राजा बभूवेति । तेन चतुरशीतिधर्मराजिकासहस्रं प्रतिष्ठापितम् । यावद्भगवच्छासनं प्राप्यते, तावत्तस्य यशः स्थास्यति । देवोऽपि चतुरशीतिधर्मराजिकासहस्रं प्रतिष्ठापयतु । राजा आह—महेशाख्यो राजा अशोको बभूव । अन्यः कश्चिदुपाय इति ? तस्य ब्राह्मणपुरोहितः पृथग्जनोऽश्राद्धः । 10 तेनाभिहितम्—देव, द्वाभ्यां कारणाभ्यां नाम चिरं स्थास्यति । यावद्राजा पुष्यमित्रश्चतुरङ्गबलकायं संनाहयित्वा भगवच्छासनं विनाशयिष्यामीति कुक्कुटारामं निर्गतः । द्वारे च सिंहनादो मुक्तः । यावत्स राजा भीतः पाटलिपुत्रं प्रविष्टः । एवं द्विरपि त्रिरपि । यावद्भिक्षूंश्च संघमाहूय कथयति—भगवच्छासनं नाशयिष्यामीति । किमिच्छथ स्तूपं संघारामान् वा ? भिक्षुभिः परिगृहीताः । यावत्पुष्यमित्रो यावत् संघारामं भिक्षूंश्च प्रघातयन् प्रस्थितः । 15 स यावच्छाकलमनुप्राप्तः । तेनाभिहितम्—यो मे श्रमणशिरो दास्यति, तस्याहं दीनारशतं दास्यामि । धर्मराजिकावार्हद्बुद्ध्या(?) शिरो दातुमारब्धम् । श्रुत्वा च राजा अर्हत्प्रघातयितुमारब्धः । स च निरोधं समापन्नः । तस्य परोपक्रमो न क्रमते । स यत्नमुत्सृज्य यावत्कोष्ठकं गतः । दंष्ट्रानिवासी यक्षश्चिन्तयति—इदं भगवच्छासनं विनश्यति । अहं च शिक्षां धारयामि । न मया शक्यं कस्यचिदप्रियं कर्तुम् । तस्य दुहिता कृमिशेन यक्षेण याच्यते, न 20 चानुप्रयच्छति—त्वं पापकर्मकारीति । यावत्सा दुहिता तेन कृमिशस्य दत्ता भगवच्छासनपरित्राणार्थं परिग्रहपरिपालनार्थं च । पुष्यमित्रस्य राज्ञः पृष्ठतः यक्षो महान् प्रमाणे यूयम्(?) । तस्यानुभावात्स राजा न प्रतिहन्यते । यावद्दंष्ट्रानिवासी यक्षस्तं पुष्यमित्रानुबन्धयक्षं ग्रहाय पर्वतचर्येऽचरत् । यावद्दक्षिणा महासमुद्रं गतः । कृमिशेन च यक्षेण महान्तं पर्वतमानयित्वा पुष्यमित्रो राजा सबलवाहनोऽवष्टब्धः । तस्य मुनिहत इति संज्ञा व्यवस्थापिता । यदा 25 पुष्यमित्रो राजा प्रघातितस्तदा मौर्यवंशः समुच्छिन्नः ॥

C 434

इति श्रीदिव्यावदाने अशोकावदानं समाप्तम् ॥

---

## ३० सुधनकुमारावदानम् ।

पुनरपि[1] महाराज यन्मया अनुत्तरसम्यक्संबोधिप्राप्तये दानानि दत्तानि, पुण्यानि कृतानि, वीर्यपारमिता च परिरिपूता, अनुत्तरा सम्यक्संबोधिर्नाराधिता, तच्छ्रूयताम् ॥ C 435

भूतपूर्वं महाराज पाञ्चालविषये राजानौ बभूवतुः, उत्तरपाञ्चालो दक्षिणपाञ्चालश्च । तत्रोत्तरपाञ्चालो महाधनो नाम्ना हस्तिनापुरे राज्यं कारयति ऋद्धं च स्फीतं च क्षेमं च 5 सुभिक्षं च आकीर्णबहुजनमनुष्यं च शान्तकलिकलहडिम्बडमरतस्करदुर्भिक्षरोगापगतं शालीक्षुगोमहिषीसंपन्नम् । धार्मिको धर्मराजो धर्मेण राज्यं कारयति । तस्मिंश्च नगरे महाह्रद उत्पलकुमुदपुण्डरीकसंपन्नो हंसकारण्डवचक्रवाकोपशोभितो रमणीयः । तत्र च ह्रदे जन्मचित्रको नाम नागपोतः प्रतिवसति । स कालेन कालं सम्यग्वारिधारामनुप्रयच्छति । अतीव शस्यसंपत्तिर्भवति । शस्यवती वसुमती । सुभिक्षान्नपानो देशः । 10 दानमानसत्कारवांश्च लोकः श्रमणब्राह्मणकृपणवनीपकोपभोज्यः । दक्षिणपाञ्चालस्तु राजा अधर्मभूयिष्ठश्चण्डो रभसः कर्कशोऽधर्मेण राज्यं कारयति, नित्यं दण्डेन घातनधारणबन्धनहडिनिगडोपरोधेन राष्ट्रनिवासिनां त्रासयति । अधर्मभूयिष्ठतया चास्य देवो न कालेन कालं सम्यग्वारिधारामुत्सृजति । ततोऽसौ महाजनकायः संत्रस्तः स्वजीवितापेक्षया राष्ट्रपरित्यागं कृत्वा उत्तरपाञ्चालस्यैव राज्ञो विषयं गत्वा प्रतिवसति । यावदपरेण समयेन दक्षिणपाञ्चालो 15 राजा मृगयाव्यपदेशेन जनपदान् व्यवलोकनाय निर्गतः । यावत् पश्यति ग्रामनगराणि शून्यानि, उद्यानदेवकुलानि भिन्नप्रभग्नानि । स जनकायः क्व गत इति कथयति । अमात्याः कथयन्ति—देव, उत्तरपाञ्चालस्य राज्ञो विषयं गतः । किमर्थम् ? देव, अभयं प्रयच्छ, कथयामः । दत्तं भवतु । ततस्ते कथयन्ति—देव, उत्तरपाञ्चालो राजा C 436 धर्मेण राज्यं कारयति । तस्य जनपदा ऋद्धाश्च स्फीताश्च क्षेमाश्च सुभिक्षाश्च आकीर्ण- 20 बहुजनमनुष्याश्च प्रशान्तकलिकलहडिम्बडमरतस्करदुर्भिक्षरोगापगताः शालीक्षुगोमहिषीसंपन्नाः । दानमानसत्कारवांश्च लोकः श्रमणब्राह्मणवनीपकोपभोज्यः । देवस्तु चण्डो रभसः कर्कशो नित्यं ताडनघातनधारणबन्धननिगडोपरोधे(न) राष्ट्रं त्रासयति । यतोऽसौ जनकायः संत्रस्तः संवेगमापन्न उत्तरपाञ्चालस्य राज्ञो विषयं गतः । दक्षिणपाञ्चालो राजा कथयति—भवन्तः, कोऽसावुपायः स्याद्येनासौ जनकायः पुनरागत्य एषु ग्रामनगरेषु प्रतिवसेत् ? 25 अमात्या आहुः—यदि देव उत्तरपाञ्चालवद्धर्मेण राज्यं कारयसि, मैत्रचित्तोऽनुकम्पाचित्तश्च राष्ट्रं पालयसि, नचिरादसौ जनकायः पुनरागत्य एषु ग्रामनगरेषु प्रतिवसेत् । दक्षिणपाञ्चालो राजा कथयति—भवन्तः, यद्येवम्, अहमप्युत्तरपाञ्चालवद्धर्मेण राज्यं कारयामि, मैत्रचित्तो हितचित्तोऽनुकम्पाचित्तश्च राष्ट्रं पालयामि । यूयं तथा कुरुत, यथा असौ जनकायः पुनरागत्य एषु ग्रामनगरेषु प्रतिवसतीति । अमात्या आहुः—देव, अपरोऽपि 30 तत्रानुशंसोऽस्ति । तस्मिन् नगरे महाह्रद उत्पलकुमुदपुण्डरीकसंछन्नो हंसकारण्डवचक्र-

---

१ C reads नमः before पुनरपि.

वाकोपशोभितः। तत्र जन्मचित्रको नाम नागपोतकः प्रतिवसति। स कालेन कालं सम्यग्वारिधारामनुप्रयच्छति। अतीव शस्यसंपत्तिर्भवति। तेन तस्य शस्यवती वसुमती, सुभिक्षान्नपानश्च देशः। राजा आह—कोऽसौ उपायः स्याद्येनासौ नागपोत इहानीयेत? अमात्या आहुः—देव, विद्यामन्त्रधारिणः, तानानयेति। ते समन्विष्यन्ताम्। ततो राज्ञा
5 सुवर्णपिटकं ध्वजाग्रे बद्ध्वा स्वविजिते घण्टावघोषणं कारितम्—य उत्तरपाञ्चालराजविषयाज्जन्मचित्रकं नाम नागपोतकमानयति, तस्येमं सुवर्णपिटकं दास्यामि, महता च सत्कारेण सत्करिष्यामीति। यावदन्यतमोऽहितुण्डिकोऽमात्यानां सकाशं गत्वा कथयति—ममेदं सुवर्णपिटकमनुप्रयच्छत। अहं जन्मचित्रं नाम नागपोतकमपहृत्यानयामीति।
C 437 अमात्याः कथयन्ति—एष गृहाण। स कथयति—यो युष्माकं श्रद्धयितः प्रत्ययितश्च, तस्य
10 हस्ते तिष्ठतु। आनीते जन्मचित्रे नागपोतके ग्रहीष्यामीति। एवं कुरुष्वेति। ततोऽसौ अहितुण्डिकः प्रत्ययितस्य पुरुषस्य हस्ते सुवर्णपिटकं स्थापयित्वा हस्तिनापुरं गतः। तेनासौ ह्रदः समन्ततो व्यवलोकितः। निमित्तीकृतः—असौ जन्मचित्रो नागपोतक एतस्मिन् प्रदेशे तिष्ठतीति। ततो बल्युपहारनिमित्तं पुनः प्रत्यागतः। अमात्यानां कथयति—बल्युपहारमेनं प्रयच्छत। सप्तमे दिवसे तं नागपोतकमपहृत्य आनयामीति। स चाहितुण्डिकस्तेन
15 संलक्षितः—ममासावपहरणायागतः। सप्तमे दिवसे मामपहरिष्यति। मातापितृवियोगजं मे दुःखं भविष्यतीति। किं करोमि, किं शरणं प्रपद्येयमिति। तस्य ह्रदस्य नातिदूरे द्वौ लुब्धकौ प्रतिवसतः, सारको हलकः। तौ ह्रदमाश्रित्य जीविकां कल्पयतः। ये स्थलगताः प्राणिनो मृगशरभसूकरादयस्तं ह्रदमुपसर्पन्ति, तान् प्रघातयतः, येऽपि जलगता मत्स्यकच्छपमण्डूकादयः। तत्र सारकः कालगतः, हलको जीवति। जन्मचित्रो
20 नागपोतः संलक्षयति—कोऽन्योऽस्ति मम शरणमृते हलकात् लुब्धकात्? ततो मनुष्यवेषमास्थाय हलकस्य लुब्धकस्य सकाशं गतः। गत्वा कथयति—भोः पुरुष, किं त्वं जानीषे कस्यानुभावाद्धनस्य राज्ञो जनपदा ऋद्धाश्च स्फीताश्च सुभिक्षाकीर्णबहुजनमनुष्याश्च प्रशान्तकलिकलहडिम्बडमरतस्करदुर्भिक्षरोगापगताः शालीक्षुगोमहिषीसंपन्ना इति? स कथयति—जाने स राजा धार्मिको धर्मेण राज्यं कारयति, मैत्रचित्तो हितचित्तोऽनुकम्पाचित्तश्च
25 राष्ट्रं पालयतीति। स कथयति—किमेतदेव, अथास्त्यन्यदपि? लुब्धकः कथयति—अस्त्यन्योऽप्यनुशंसः। अस्मिन् प्रदेशे जन्मचित्रको नाम नागपोतकः प्रतिवसति। स कालेन कालं सम्यग्वारिधारामनुप्रयच्छति। अतीव शस्यसंपत्तिर्भवति। शस्यवती वसुमती, सुभिक्षान्नपानश्च देश इति। जन्मचित्रः कथयति—तं नागपोतकमितो विषयादपहरेत्, तस्य नाग-
C 438 पोतकस्य किं स्यात्? न शोभनं स्यात्, मातापितृवियोगजं दुःखं स्याद्राज्ञो राष्ट्रस्य च।
30 योऽपहरति, तस्य किं त्वं कुर्याः? स आह—जीविताद्व्यपरोपयेयम्। जानीषे त्वं कतरोऽसौ नागपोतक इति? न जाने। अहमेवासौ नागः। दक्षिणपाञ्चालवैषयिकेनाहितुण्डिकेनापहृत्य नीयेत। स बल्युपहारविधानार्थं गतः। सप्तमे दिवसे आगमिष्यति।

आगत्य अस्य ह्रदस्य चतसृषु दिक्षु खदिरशलाकान्निखन्य नानारङ्गैः सूत्रैर्वेष्टयित्वा मन्त्राना-
वर्तयिष्यति । तत्र त्वया प्रच्छन्ने संनिकृष्टे स्थातव्यम् । यदा तेनायमेवंरूपः प्रयोगः कृतो
भवति, तदा ह्रदमध्यात् क्वथमानं पानीयमुत्थास्यति अहं चोत्थास्यामि । तदा त्वयासौ
अहितुण्डिकः शरेण मर्मणि ताडयितव्यः, आशु चोपसंक्रम्य वक्तव्यः—मन्त्रानुपसंहर । मा ते
उत्कृत्तमूलं शिरः कृत्वा पृथिव्यां निपातयिष्यामीति । यद्यसौ मन्त्राननुपसंहृत्य प्राणैर्वियो- 5
क्ष्यते, मृतं तेऽहं यावज्जीवं मन्त्रपाशबद्धः स्यामिति । लुब्धकः प्राह—यदि तवैकस्यैवं गुणः
स्यात्, तथाप्यहमेवं कुर्याम्, प्रागेव सराजकस्य राष्ट्रस्य । गच्छ, अहं ते त्रातेति ।
ततस्तेन नागपोतकेन तस्यैकपार्श्वे गुप्तस्थानमुपदर्शितम् । यावदसौ लुब्धकः सप्तमे दिवसे
प्रतिगुप्ते प्रदेशे आत्मानं गोपयित्वा अवस्थितः । स चाहितुण्डिक आगत्य बल्युपहारं
कर्तुमारब्धः । तेन चतसृषु दिक्षु चत्वारः खदिरकीलका निखाताः । नानारङ्गैः सूत्रैर्वेष्ट- 10
यित्वा मन्त्रा आवर्तिताः । ततस्तस्मात् पानीयं क्वथितुमारब्धम् । लुब्धकेन च शरेण
मर्मणि ताडितः । निष्कोशं चासिं कृत्वा अभिहितः—त्वमस्मद्विषयनिवासिनं नागपोतमप-
हरसि । मा ते उत्कृत्तमूलं शिरः कृत्वा पृथिव्यां निपातयामीति । ततोऽहितुण्डिकेन दुःख-
वेदनाभिभूतेन मरणभयभीतेन मन्त्रा व्यावर्तिताः । तत्समनन्तरं च लुब्धकेन जीविताद्
व्यपरोपितः । ततो नागो मन्त्रपाशविनिर्मुक्तो ह्रदादभ्युद्गम्य लुब्धकं परिष्वक्तवान्, एवं 15
चाह—त्वं मे माता, त्वं मे पिता, यन्मया त्वामागम्य मातापितृवियोगजं दुःखं नोत्पन्नम् । C 439
आगच्छ, भवनं गच्छामः । तेनासौ भवनं नीतः, नानाविधेन चान्नपानेन संतर्पितः,
रत्नानि चोपदर्शितानि, मातापित्रोश्च निवेदितः । अम्ब तात—एष मे सुहृच्छरणं बान्धवः ।
अस्यानुभावाद्युष्माभिः सह वियोगो न जात इति । ताभ्यामसौ वरेण प्रवारितो विविधानि
च रत्नानि दत्तानि । स तान्यादाय तस्माद् ह्रदाद् व्युत्थितः । तस्य च ह्रदस्य नातिदूरे 20
पुष्पफलसलिलसंपन्ने नानाशकुनिकूजिते ऋषेरग्रमाश्रमपदम् । तत्र च नागपोतकेन सार्धं
वृत्तकं तत्सर्वं विस्तरेण समाख्यातम् । तत ऋषिः कथयति—किं रत्नैः किं वा ते सुवर्णेन ?
तस्य भवनेऽमोघो नाम पाशस्तिष्ठति, तं याचस्व । ततो लुब्धकोऽमोघपाशे संजाततृष्णः
ऋषिवचनमुपश्रुत्य पुनरपि नागभवनं गतः । यावत्पश्यति भवनद्वारे तममोघपाशम् ।
तस्यैतदभवत्—एष स पाशो यो मया प्रार्थनीयः । इति विदित्वा नागभवनं प्रविष्टः । ततो 25
जन्मचित्रेण नागपोतकेन अन्यैश्च नागैः ससंभ्रमैः प्रतिसंमोदितो रत्नैश्च प्रवारितः । स
कथयति—अलं मम रत्नैः । किं तु एतममोघपाशं प्रयच्छथेति । स नाग आह—तवानेन
किं प्रयोजनम् ? यदा गरुत्मतोपद्रुता भवामः, तदा अनेनात्मानं रक्षामः । लुब्धक आह—
युष्माकमेष कदाचित् कर्हिचित् गरुत्मतोपद्रुतानामुपयोगं गच्छति । मम तु अनेन
सततमेव प्रयोजनम् । यद्यस्ति कृतमुपकृतं च, अनुप्रयच्छेति । जन्मचित्रस्य नागपोतकस्यै- 30
तदभवत्—ममानेन बहूपकृतम् । मातापितरौ अवलोक्य ददामीति । तेन मातापितरौ
अवलोक्य स पाशो दत्तः । ततोऽसौ लुब्धकः पृथिवीलब्धप्रख्येन सुखसौमनस्येनाप्या-
यितमना अमोघपाशमादाय नागभवनादभ्युद्गम्य स्वगृहं गतः ॥

यावदपरेण समयेन धनो राजा देव्या सार्धं क्रीडति रमते परिचारयति। तस्य क्रीडतो रममाणस्य परिचारयतो न पुत्रो न दुहिता। स करे कपोलं दत्त्वा चिन्तापरो व्यवस्थितः—अनेकधनसमुदितं मे गृहम्। न मे पुत्रो न दुहिता। ममात्ययात्स्वकुलवंशच्छेदे
C 440 राष्ट्रापहारः सर्वस्वन्तस्वापतेयमपुत्रमिति कृत्वा अन्यराजविधेयो भविष्यतीति। स श्रमण-
5 ब्राह्मणसुहृत्संबन्धिबान्धवैरुच्यते—देव, किमसि चिन्तापरः? स एतत्प्रकरणं विस्तरेणारोचयति। ते कथयन्ति—देवताराधनं कुरु, पुत्रस्ते भविष्यतीति। सोऽपुत्रः पुत्राभिनन्दी शिववरुणकुबेरवासवादीनन्यांश्च देवताविशेषानायाचते, तद्यथा—आरामदेवता वनदेवता चत्वरदेवता शृङ्गाटकदेवता बलिप्रतिग्राहिकाः। सहजाः सहधर्मिका नित्यानुबद्धा अपि देवता आयाचते। अस्ति चैष लोके प्रवादो यदायाचनहेतोः पुत्रा जायन्ते दुहितरश्चेति। तच्च
10 नैवम्। यद्येवमभविष्यत्, एकैकस्य पुत्रसहस्रमभविष्यत्, तद्यथा राज्ञश्चक्रवर्तिनः। अपि तु त्रयाणां स्थानानां संमुखीभावात्पुत्रा जायन्ते दुहितरश्च। कतमेषां त्रयाणाम्? मातापितरौ रक्तौ भवतः संनिपतितौ। माता चास्य कल्या भवति ऋतुमती च। गन्धर्वः प्रत्युपस्थितो भवति। एषां त्रयाणां स्थानानां संमुखीभावात्पुत्रा जायन्ते दुहितरश्च। स चैवमायाचनपरस्तिष्ठति। अन्यतमश्च भद्रकल्पिको बोधिसत्त्वस्तस्याग्रमहिष्या अवक्रान्तः।
15 पञ्चावेणीया धर्मा एकत्ये पण्डितजातीये मातृग्रामे। कतमे पञ्च? रक्तं पुरुषं जानाति विरक्तं जानाति। कालं जानाति ऋतुं जानाति। गर्भमवक्रान्तं जानाति। यस्य सकाशाद्गर्भमवक्रामति तमपि जानाति। दारकं जानाति, दारिकां जानाति। सचेद्दारको भवति, दक्षिणं कुक्षिं निश्रित्य तिष्ठति। सचेद्दारिका भवति, वामं कुक्षिं निश्रित्य तिष्ठति। सा आत्तमनाः स्वामिन आरोचयति—दिष्ट्या वर्धस्व आर्यपुत्र। आपन्नसत्त्वास्मि संवृत्ता। यथा च मे दक्षिणं
20 कुक्षिं निश्रित्य तिष्ठति, नियतं दारको भविष्यतीति। सोऽप्यात्तमनात्तमनाः पूर्वं कायमुन्नमय्य दक्षिणं बाहुमभिप्रसार्य उदानमुदानयति—अप्येवाहं चिरकालाभिलषितं पुत्रमुखं पश्येयम्। जातो मे स्यान्नावजातः। कृत्यानि मे कुर्वीत। प्रतिभरेत्। दायाद्यं मे प्रतिपद्येत। कुलवंशो मे चिरस्थितिकः स्यात्। अस्माकं चाप्यतीतकालगतानामल्पं वा
C 441 प्रभूतं वा दानानि दत्वा पुण्यानि कृत्वा अस्माकं नाम्ना दक्षिणामादेक्ष्यति—इदं तयोर्यत्र-
25 तत्रोपपन्नयोर्गच्छतोरनुगच्छतु इति। आपन्नसत्त्वां विदित्वा उपरिप्रासादतलगतामयन्त्रितां धारयति तिक्ताम्ललवणमधुरकटुकषायविवर्जितैराहारैः। हारार्धहारविभूषितगात्रीमप्सरसमिव नन्दनवनचारिणीं मञ्चान्मञ्चं पीठात्पीठमनवतरन्तीमधरिमां भूमिम्। न चास्याः किंचिदमनोज्ञशब्दश्रवणं यावदेव गर्भस्य परिपाकाय। सा अष्टानां वा नवानां वा मासानामत्ययात्प्रसूता। दारको जातोऽभिरूपो दर्शनीयः प्रासादिको गौरः कनकवर्णश्छत्राकारशिराः
30 प्रलम्बबाहुर्विस्तीर्णललाट उच्चघोणः संगतभ्रूस्तुङ्गनासः सर्वाङ्गप्रत्यङ्गोपेतः। तस्य जातौ आनन्दभेर्यस्ताडिताः। श्रुत्वा राजा कथयति—किमेतदिति। अन्तःपुरिकाभी राज्ञे निवेदितम्—देव, दिष्ट्या वर्धस्व। पुत्रस्ते जात इति। ततो राज्ञा तं सर्वं नगरमपगतपाषाणशर्करकठल्लं

व्यवस्थितम्, चन्दनवारिसिक्तमुच्छ्रितध्वजपताकं सुरभिधूपघटिकोपनिबद्धं नानापुष्पाभिकीर्णरमणीयम्। आज्ञा च दत्ता—श्रमणब्राह्मणकृपणवनीपकेभ्यो दानं प्रयच्छत, सर्वबन्धनमोक्षं च कुरुतेति। तस्यैवं त्रीणि सप्तकान्येकविंशतिदिवसान् विस्तरेण जातकर्म करोति। तस्य जातिमहं कृत्वा नामधेयं व्यवस्थापितुमारब्धम्—किं भवतु दारकस्य नामेति? अमात्याः कथयन्ति—अयं दारको धनस्य राज्ञः पुत्रः, भवतु दारकस्य सुधनो नामेति। तस्य सुधन इति 5 नामधेयं व्यवस्थापितम्। सुधनो दारकोऽष्टाभ्यो धात्रीभ्योऽनुदत्तो द्वाभ्यामंसधात्रीभ्यां द्वाभ्यां क्षीरधात्रीभ्यां द्वाभ्यां मलधात्रीभ्यां द्वाभ्यां क्रीडनिकाभ्यां धात्रीभ्याम्। सोऽष्टाभिर्धात्रीभिरुन्नीयते वर्ध्यते क्षीरेण दध्ना नवनीतेन सर्पिषा सर्पिमण्डैर्वा अन्यैश्चोत्तप्तोत्तप्तैरुपकरणविशेषैः। आशु वर्धते ह्रदस्थमिव पङ्कजम्॥

स यदा महान् संवृत्तस्तदा लिप्यामुपन्यस्तः संख्यायां गणनायां मुद्रायामुद्धारे न्यासे 10 निक्षेपे वस्तुपरीक्षायां कुमारपरीक्षायां कुमारिकापरीक्षायां दारुपरीक्षायां रत्नपरीक्षायां वस्त्रपरीक्षायाम्। सोऽष्टासु परीक्षासु घटको वाचकः पण्डितः पटुप्रचारः संवृत्तः। स यानि तानि भवन्ति राज्ञां क्षत्रियाणां मूर्धाभिषिक्तानां जनपदैश्वर्यमनुप्राप्तानां महान्तं पृथिवीमण्डलमभिनिर्जित्याध्यावसतां पृथग्भवन्ति शिल्पस्थानकर्मस्थानानि, तद्यथा—हस्तिग्रीवायामश्वपृष्ठे रथे त्सरौ धनुषि अपयाने निर्याणेऽङ्कुशग्रहे पाशग्रहे छेद्ये भेद्ये मुष्टिबन्धे शिखाबन्धे पद- 15 बन्धे दूरवेधे शब्दवेधे मर्मवेधेऽक्षुण्णवेधे दृढप्रहारितायाम्। पञ्चस्थानेषु कृतावी संवृत्तः। तस्य पित्रा त्रीण्यन्तःपुराणि व्यवस्थापितानि ज्येष्ठं मध्यं कनीयसम्। त्रीणि वासगृहाणि मापितानि, हैमन्तिकं ग्रैष्मिकं वार्षिकम्। त्रीण्युद्यानानि मापितानि, हैमन्तिकं ग्रैष्मिकं वार्षिकम्। ततः सुधनकुमार उपरिप्रासादतलगतो निष्पुरुषेण तूर्येण क्रीडति रमते परिचारयति॥ 20

C 442

यावदपरेण समयेन हलको लुब्धको मृगयामन्वेषमाणस्तेन तेनानुविचरन्नन्यतमं पर्वतमनुप्राप्तः। तस्य च पर्वतस्याधस्तादृषेराश्रमपदं पश्यति पुष्पफलसंपन्नं नानापक्षिगणविचरितम्। महान्तं च ह्रदमुत्पलकुमुदपुण्डरीकसंछन्नं हंसकारण्डवचक्रवाकोपशोभितम्। स तमाश्रमपदं परिभ्रमितुमारब्धः। यावत्तं ऋषिं पश्यति दीर्घकेशश्मश्रुनखरोमाणं वातातपकर्षितशरीरं चीवरवल्कलधारिणमन्यतमवृक्षमूलाश्रयतृणकुटिकाकृतनिलयम्। दृष्ट्वा च पुनः 25 पादाभिवन्दनं कृत्वा कृताञ्जलिपुटः पप्रच्छ—भगवन्, कियच्चिरमस्मिन् प्रदेशे तव प्रतिवसतः? चत्वारिंशद्वर्षाणि। अस्ति त्वया इयता कालेनास्मिन् प्रदेशे कश्चिदाश्चर्याद्भुतधर्मो दृष्टः श्रुतो वा? प्रशान्तात्मा ऋषिर्मन्दं मन्दमुवाच—भद्रमुख, दृष्टस्तेऽयं ह्रदः? दृष्टो भगवन्। एषा ब्रह्मसभा नाम पुष्किरिणी उत्पलपद्मकुमुदपुण्डरीकसंछन्ना नानापक्षिगणनिषेविता हिमरजततुषारगौराम्बुसंपूर्णा सुरभिकुसुमपूर्णतोया। अस्यां पुष्किरिण्यां पञ्च- 30 दशम्यां मनोहरा नाम द्रुमस्य किन्नरराजस्य दुहिता पञ्चकिन्नरीशतपरिवारा नानाविधस्नानोद्वर्तनैरागत्य स्नाति। स्नानकाले चास्या मधुरगीतवादितशब्देन मृगपक्षिणोऽपह्रियन्ते।

C 443

अहमपि तं शब्दं श्रुत्वा महता प्रीतिसौमनस्येन सप्ताहमतिनामयामि। एतदाश्चर्यं भद्रमुख मया दृष्टमिति। अथ हलकस्य लुब्धकस्यैतदभवत्—शोभनोऽयं मया अमोघः पाशो नागाल्लब्धो मनोहरायाः किन्नर्याः क्षेप्स्यामीति। सोऽपरेण समयेन पूर्णपञ्चदश्याममोघं पाशमादाय ह्रदतीरसमीपे पुष्पफलविटपगहनमाश्रित्य अवधानतत्परोऽवस्थितः। यावन्मनोहरा किन्नरी
5 पञ्चशतपरिवारिता तादृश्यैव विभूत्या ब्रह्मसभां पुष्किरिणीमवतीर्णा स्नातुम्। तत्समनन्तरं च हलकेन लुब्धकेन अमोघः पाशः क्षिप्तः, येन मनोहरा किन्नरी बद्धा। तया अमोघपाशश्रितया ह्रदे महाहतनादः कृतो भीषणश्च शब्दो निश्चारितः, यं श्रुत्वा परिशिष्टः किन्नरिगण इतश्चामुतश्च संभ्रान्तो मनोहरां निरीक्षितुमारब्धः। पश्यन्ति बद्धाम्। दृष्ट्वा च पुनर्भीता निष्पलायिताः। अद्राक्षीत्स लुब्धकस्तां परमरूपदर्शनीयाम्। दृष्ट्वा च पुनरुप-
10 श्लिष्टो ग्रहीष्यामीति। सा आह—हा हतास्मि, हा मन्दभाग्या, ममेदृशीमवस्थामाप्ताम्।

मा नैषीस्त्वं हि मा स्प्राक्षीर्नैतत्तव सुचेष्टितम्।
राजभोग्या सुरूपाहं न साधु ग्रहणं तव॥ १॥ इति॥

लुब्धकः प्राह—यदि त्वां न गृह्णामि, निष्पलायसे। सा कथयति—नाहं निष्पलाये। यदि न श्रद्दधासि, इमं चूडामणिं गृहाण। अस्यानुभावेनाहमुपरिविहायसा गच्छामीति।
15 लुब्धकः कथयति—कथं जाने? तया शिरस्थश्चूडामणिर्दत्त उक्तश्च—एष चूडामणिर्यस्य हस्ते, तस्याहं वशा भवामि। ततो लुब्धकेनासौ चूडामणिर्गृहीतः, पाशबद्धां चैनां संप्रस्थितः॥

C 444 तेन खलु समयेन सुधनराजकुमारो मृगयानिर्गतः। अद्राक्षीत्स लुब्धकः सुधनं राजकुमारमभिरूपं दर्शनीयं प्रासादिकम्। दृष्ट्वा च पुनरस्यैतदभवत्—अयं च राजकुमारः, इयं च परमदर्शनीया। यद्येनां द्रक्ष्यति, बलाद्ग्रहीष्यति। यन्न्वहमेनां प्राभृतन्यायेन स्वय-
20 मेवोपनयेयम्। ततस्तां पाशबद्धामादाय येन राजकुमारस्तेनोपसंक्रान्तः। उपसंक्रम्य पादयोर्निपत्य कथयति—इदं मम देवस्य स्त्रीरत्नं प्राभृतमानीतम्, प्रतिगृह्यतामिति। अद्राक्षीत्सुधनकुमारो मनोहरां किन्नरीमभिरूपां दर्शनीयां प्रासादिकां परमशुभवर्णपुष्कलतया समन्वागतां सर्वगुणसमुदितामष्टादशभिः स्त्रीलक्षणैः समलंकृतां जनपदकल्याणां काञ्चनकलशकूर्मपीनोन्नतकठिनसहितसुजातवृत्तप्रगल्भमानस्तनीमभिनीलरक्तांशुकविसृतायतनव-
25 कमलसदृशनयनां सुभ्रुवमायततुङ्गनासां विद्रुममणिरत्नबिम्बफलसंस्थानसदृशाधरोष्ठीं सुदृढपरिपूर्णगण्डपार्श्वामत्यर्थरतिकरकपोलतिलकानुपूर्वचरितां संगतभ्रुवारविन्दविकचसदृशपरिपूर्णविमलशशिवपुषं प्रलम्बबाहुं गम्भीरत्रिवलिकसंततमध्यां स्तनभारावनाम्यमानपूर्वार्धां रथाङ्गसंस्थितसुजातजघनां कदलीगर्भसदृशकरानुपूर्वावस्थितसुजातकरभोरुं सुनिगूढसुरचितसर्वाङ्गसुन्दरशिरां सहितमणिपीडासंरक्तकरतलप्रहर्षनूपुरवलयां हारार्धहारनिर्घोषविमलशितगति-
30 मायतनीलसूक्ष्मकेशीं सचीवरप्रभ्रष्टकाञ्चीगुणां नूपुरावच्छादितपादां क्षामोदरीम्। तां प्रतिकीर्णहारामुत्तप्तजाम्बूनदचारुपूर्णां दृष्ट्वा कुमारः सहसा पपात विद्धो दृढरागशरेण। तत्र स रागत्राहदवदहनपतङ्गसदृशेन जलचन्द्रचञ्चलविमलोज्ज्वलस्वभावेन दुर्ग्राह्यतरेण नदीतरङ्गझष-

मकरसुरभिगमनेन गरुडपवनजवसमगतिना तूलपरिवर्तनलघुतरेण वानरावस्थितचपलो-
क्रान्ततरेण सतताभ्यासक्लेशनिषेवणरागसुखास्वादलोभेन सर्वक्लेशविषमदुर्गप्रपातनिःसङ्गेन C 445
परमसलीलेन चित्तेन तद्भूतानुगतया अयोनिशोमनस्कारधनुर्विसृतैः संयोगाभिलषितपरम-
रहस्यशब्देन कामशरेण हृदये विद्धः। आह च–

दृष्ट्वा च तां सुधन इन्दुसमानवक्त्रां 5
प्रावृड्घनान्तरविनिश्चरितेव विद्युत्।
तत्स्नेहमन्मथविलाससमुद्भवेन
सद्यः स चेतसि नु रागशरेण विद्धः॥ २॥

स तामतिमनोहरां गृहीत्वा हस्तिनापुरं गतः। स च लुब्धः पञ्चग्रामवरेणाच्छादितः।
ततः सुधनो राजकुमारो मनोहरया रूपयौवनगुणेन सुधनः कुमारोऽनेकैश्चोपचारशतैस्तथा 10
अपहृतो यथा मुहूर्तमपि तां न जहाति। यावदपरेण समयेन जेतवनाद्द्वौ ब्राह्मणौ अभ्यागतौ।
तत्रैको राजानं संश्रितः, द्वितीयः सुधनं कुमारम्। यो राजानं संश्रितः, स राज्ञा पुरोहितः
स्थापितो भोगैश्च संविभक्तः। यस्तु सुधनं कुमारम्, स भोगमात्रेण संविभक्तः। स कथ-
यति–कुमार, यदा त्वं पितुरत्ययाद्राष्ट्रे प्रतिष्ठास्यसि, तदा मे किं करिष्यसीति? । सुधनः
कथयति–यथा तव सहायो ब्राह्मणो मम पित्रा पौरोहित्येऽवस्थापितः, एवमहं त्वामपि पौरोहित्ये 15
स्थापयामीति। एष च वृत्तान्तस्तेन ब्राह्मणेन कर्णपरंपरया श्रुतः । तस्यैतदभवत्–अहं
तथा करिष्ये, यथा कुमारो राज्यमेव नासादयिष्यति, कुतस्त्वं पुरोहितं स्थापयिष्यतीति?
यावदपरेण समयेन तस्य राज्ञो विजितेऽन्यतमः कार्वटिकः प्रतिविरुद्धः, तस्य समुच्छित्तये
एको दण्डः प्रेषितः । स हतविहतविध्वस्तः प्रत्यागतः । एवं यावत्सप्त, ये दण्डाः
प्रेषिताः, तेऽपि हस्तविध्वस्ताः प्रत्यागताः। अमात्यै राजा विज्ञापितः–देव, किमर्थं स्वबलं 20
हार्यते, परं वर्ध्यते? यावन्नैकः कश्चिद्देवस्य विजिते शस्त्रबलोपजीवी सर्वोऽसौ आहूयता-
मिति। ब्राह्मणः पुरोहितः संलक्षयति–अयं स कुमारस्य वधोपायकाल इति। तेन राजा
विज्ञप्तः–देव, नैवमसौ शक्यः संनामयितुम्। राजा कथयति–किं मया स्वयं गन्तव्यम्? C 446
पुरोहितः कथयति–किमर्थं देवः स्वयं गच्छति? अयं सुधनः कुमारो युवा बलदर्पयुक्तः।
एष दण्डसहायः प्रेष्यतामिति। राजा कथयति–एवमस्त्विति । ततो राजा कुमारमाहूय 25
कथयति–गच्छ कुमार, दण्डसहायः कार्वटिकं संनामय। एवं देवेति सुधनः कुमारो राज्ञः
प्रतिश्रुत्य अन्तःपुरं प्रविष्टः। मनोहरादर्शनाच्चास्य सर्वं विस्मृतम्। पुनरपि राज्ञा अभिहितः–
पुनरपि तद्दर्शनात्सर्वं विस्मृतम्। पुरोहितेन चाभिहितः–देव, सुधनः कुमारो मनोहरया
अतीव सक्तो न शक्यते प्रेषयितुम्। राजा कथयति–साधनं सज्जं क्रियताम् । निर्गतः
कुमारोऽन्तःपुरात् प्रेषयितव्यो यथा मनोहरायाः सकाशं न प्रतिवसतीति । एवं देवेति 30
अमात्यै राज्ञः प्रतिश्रुत्य बलौघो हस्त्यश्वरथपदातिसंपन्नोऽनेकप्रहरणोपकरणयुक्तः सज्जीकृतः।
ततः कुमारो निर्गतः उक्तः–गच्छ कुमार, सज्जो बलौघ इति। स कथयति–देव, गमिष्यामि

मनोहरां दृष्ट्वा। राजा कथयति—कुमार न द्रष्टव्या, कालोऽतिवर्तते। स कथयति—तावद्यदि एवम्, मातरं दृष्ट्वा गच्छामि। गच्छ कुमार अवलोक्य जननीम्। स मनोहरासन्तकं चूडामणिमादाय मातुःसकाशमुपसंक्रान्तः। पादयोर्निपत्य कथयति—अम्ब, अहं कार्वटिकं संनामनाय गच्छामि।

5 दुहिता शक्रकल्पस्य किन्नरेन्द्रस्य मानिनी।
पाल्या विरहशोकार्ता मद्वात्सल्यधिया त्वया॥ ३॥

अयं चूडामणिः सुगुप्तं स्थापयितव्यः। न कदाचिन्मनोहराया दातव्योऽन्यत्र प्राणवियोगादिति। स एवं मातरं पितरं संदिश्य अभिवाद्य च नानायोधबलौघतूर्यनिर्नादितैः संप्रस्थितः। अनुपूर्वेण जनपदानतिक्रम्य तस्य कार्वटिकस्य नातिदूरेऽन्यतमं वृक्षमूलं 10 निश्रित्य वासमुपगतः। तेन खलु समयेन वैश्रवणो महाराजोऽनेकयक्षपरिवारोऽनेकयक्षशत-C 447 सहस्रपरिवारः। तेन यक्षाणां यक्षसमितिं संप्रस्थितः। तस्य तेन पथा गच्छतः खगपथेन यानमवस्थितम्। तस्यैतदभवत्—बहुशोऽहमनेन पथा समतिक्रान्तः। न च मे कदाचिद्यानं प्रतिहतम्। कोऽत्र हेतुर्येनेदानीं प्रतिहत इति? पश्यति सुधनं कुमारम्। तस्यैतदभवत्—अयं भद्रकल्पिको बोधिसत्त्वः खेदमापत्स्यति युद्धायाभिप्रस्थितः। साहाय्यमस्य करणीयम्। 15 कार्वटिकः संनामयितव्यः। न च कस्यचित्प्राणिनः पीडा करणीयेति विदित्वा पाञ्चिकं महायक्षसेनापतिमामन्त्रयते—एहि त्वं पाञ्चिक, सुधनस्य कुमारस्य कार्वटिकमयुद्धेन संनामय। न च ते कस्यचित्प्राणिनः पीडा कर्तव्येति। तथेति पाञ्चिकेन यक्षसेनापतिना वैश्रवणस्य महाराजस्य प्रतिश्रुत्य दिव्यश्चतुरङ्गो बलकायो निर्मितः—तालमात्रप्रमाणाः पुरुषाः, पर्वतप्रमाणा हस्तिनः, हस्तिप्रमाणा अश्वाः। ततो नानाविधखड्गमुशलतोमरपाशचक्रशरपरश्वधादिशस्त्र-20 विशेषेण नानावादित्रसंक्षोभेण च महाभयमुपदर्शयन् महता बलौघेन पाञ्चिकोऽनुप्राप्तः।

हस्त्यश्वरथनिर्घोषान्नानावादित्रनिस्वनात्।
यक्षाणां स्वप्रभावाच्च प्राकारः प्रपपात वै॥ ४॥

ततस्ते कर्वटनिवासिनस्तं बलौघं दृष्ट्वा तच्च प्राकारपतनं परं विषादमापन्नाः पप्रच्छुः—कुत एष बलौघ आगच्छतीति? ते कथयन्ति—शीघ्रं शीघ्रं द्वाराणि मुञ्चत। एष 25 पृष्ठतः कुमार आगच्छति। तस्य च बलौघो यदि चिरं विधारयिष्यथ, सर्वथा न भविष्यथेति। ते कथयन्ति—

व्युत्पन्ना न वयं राज्ञो न कुमारस्य धीमतः।
नृपपौरुषकेभ्यो स्म भीताः संत्रासमागताः॥ ५॥

तैर्द्वाराणि मुक्तानि। तत उच्छ्रितध्वजपताकापूर्णकलशा नानाविधतूर्यनिर्नादितैः 30 सुधनं कुमारं प्रत्युद्गताः। तेन च समाश्वासिताः, तदभिप्रायश्च राजभटः स्थापितः। निपकाश्च निगृहीताः। करप्रत्यायाश्च निबद्धाः। ततस्तं कर्वटकं स्फीतीकृत्य सुधनकुमारः

प्रतिनिवृत्तः। धनेन च राज्ञा तामेव रात्रिं स्वप्नो दृष्टः—गृध्रेणागत्य राज्ञ उदरं स्फोटयित्वा अन्त्राण्याकृष्य सर्वं तन्नगरमन्त्रैर्वेष्टितम्, सप्त रत्नानि गृहं प्रवेश्यमानानि दृष्टानि। ततो राजा भीतस्त्रस्तः संविग्न आहृष्टरोमकूपो लघुलघ्वेवोत्थाय महाशयने निषद्य करे कपोलं दत्त्वा चिन्तापरो व्यवस्थितः—मा हैव मे अतोनिदानं राज्याच्च्युतिर्भविष्यति, जीवितस्य वा अन्तराय इति। स प्रभातायां रजन्यां स्वप्नं ब्राह्मणाय पुरोहिताय निवेदयामास। स संलक्षयति— यादृशो देवेन स्वप्नो दृष्टः, नियतं कुमारेण कर्वटको निर्जितः। वितथनिर्देशः करणीयः। इति कृत्वा कथयति—देव, न शोभनः स्वप्नः। नियतमतोनिदानं राज्याच्च्युतिर्भविष्यति, जीवितस्यान्तराय इति। केवलं तु अत्रास्ति प्रतिकारः, स च ब्राह्मणकमन्त्रेषु दृष्टः। कोऽसौ प्रतिकारः? देव, उद्याने पुष्करिणी पुरुषप्रमाणिका कर्तव्या। ततः सुधया प्रलेप्तव्या। सुसंमृष्टां कृत्वा क्षुद्रमृगाणां रुधिरेण पूरयितव्या। ततो देवेन स्नानप्रयतेन तां पुष्करिणी-मेकेन सोपानेनावतरितव्यम्, एकेनावतीर्य द्वितीयेनोत्तरितव्यम्, द्वितीयेनोत्तीर्य तृतीयेनाव-तरितव्यम्, तृतीयेनावतीर्य चतुर्थेनोत्तरितव्यम्। ततश्चतुर्भिर्ब्राह्मणैर्वेदवेदाङ्गपारगैर्देवस्य पादयोर्जिह्वया निर्लेढव्यम्, किन्नरवसया च धूपो देयः। एवं देवो विधूतपापश्चिरं राज्यं पालयिष्यतीति। राजा कथयति—सर्वमेतच्छक्यं यदिदं किन्नरमेदमतीव दुर्लभम्। पुरोहितः कथयति—देव, यदेव दुर्लभं तदेव सुलभम्। राजा कथयति—यथा कथम्? पुरोहितः कथयति—देव, नन्वियं मनोहरा किन्नरी। राजा कथयति—पुरोहित, मा मैवं वद। कुमारस्यात्र प्राणाः प्रतिष्ठिताः। स कथयति—ननु देवेन श्रुतम्—

त्यजेदेकं कुलस्यार्थे ग्रामस्यार्थे कुलं त्यजेत्।
ग्रामं जनपदस्यार्थे आत्मार्थे पृथिवीं त्यजेत्॥ ६॥
दृढेनाढ्यात्मना(?) राज्यं कुमारस्यास्य धीमतः।
शक्ष्यसि ह्यपरां कर्तुं घातयैनां मनोहराम्॥ ७॥ इति।

आत्माभिनन्दिनो न किंचिन्न प्रतिपद्यन्त इति तेनाधिवासितम्। ततो यथो-पदिष्टं पुरोहितेन कारयितुमारब्धम्। पुष्करिणी खाता सुधयोपलिप्ता संमृष्टा क्षुद्रमृग-रुधिरमुपावर्तयितुमारब्धम्। स च प्रयोगः सुधनस्यान्तःपुरजनेनोपलब्धः। ताः प्रीति-मनसः संवृत्ताः—वयं रूपयौवनसंपन्नाः। इदानीमस्माकं सुधनः कुमारः परिचारयिष्यतीति। ताः प्रमुदिता दृष्ट्वा मनोहरा पृच्छति—किं यूयमतीव प्रहर्षिता इव? यावदपरया स वृत्तान्तो विस्तरेण मनोहराया निवेदितः। ततो मनोहरा संजातदुःखदौर्मनस्या येन सुधनस्य कुमा-रस्य जननी तेनोपसंक्रान्ता। उपसंक्रम्य पादयोर्निपत्य करुणदीनविलम्बितैरक्षरैरेतमर्थं निवेद-यामास। सा कथयति—यद्येवं स्वागतमिदं कुरु विचारयिष्यामीति। मनोहरया आगम्य पुनरपि समाख्यातम्। तया अपि विचारितम्। पश्यति भूतम्। ततस्तया स चूडामणि-र्वस्त्राणि च मनोहरायै दत्तानि, उक्ता च—पुत्रिके, प्राप्ते काले आगन्तव्यम्। एवं ममो-पालम्भो न भवतीति। ततो राजा यथादिष्टेन क्रमेण स्नानप्रयतो रुधिरपूर्णां पुष्किरिणी-

मवतीर्योत्तीर्णः। ततोऽस्य ब्राह्मणैर्जिह्वया पादौ निलीढौ, अवस्थितः—आनीयतां किन्नरीति च समादिष्टम्। तत्समनन्तरमेव मनोहरा गगनतलमुत्प्लुत्य गाथां भाषते—

स्पर्शसंगमनं मह्यं हसितं रमितं च मे।
नागीव बन्धनान्मुक्ता एषा गच्छामि सांप्रतम्॥ ८॥ इति।

5 राज्ञा दृष्टा वायुपथेन गच्छन्ती। स भीतः पुरोहितमामन्त्रयते—यदर्थं कृतो यज्ञः, स न संपन्नः, मनोहरा किन्नरी निष्पलायितेति। पुरोहितः कथयति—देव, सिद्धार्थोऽपगतपापो देवः सांप्रतमिति। ततो मनोहरायाः खगपथेन गच्छन्त्या एतदभवत्—यदहमेतामवस्थां प्राप्ता, तत्तस्य ऋषेर्व्यपदेशात्। यदि तेन नाख्यातमभविष्यत्, नाहं ग्रहणं गता अभविष्यत्। तेन हि यास्यामि तावदस्यैव ऋषेः सकाशमिति। सा तस्याश्रमपदं गता। पादाभिवन्दनं 10 कृत्वा तं ऋषिमुवाच—महर्षे, तव व्यपदेशादहं ग्रहणं गता, मनुष्यस्य संस्पर्शश्च संप्राप्तः। (C 450) जीवितान्तरायश्चैतत्संवृत्तः। तद्विज्ञापयामि—यदि यदा कदाचित्सुधनः कुमार आगच्छति मां समन्वेषमाणः, तस्येमामङ्गुलिमुद्रां दातुमर्हसि। एवं च वक्तव्यम्—कुमार, विषमाः पन्थानो दुर्गमाः, खेदमापत्स्यसे, निवर्तस्वेति। यदि निवार्यमाणो न तिष्ठेत्, तस्य मार्गं व्यपदेष्टुमर्हसि—कुमार, मनोहरया समाख्यातम्—उत्तरे दिग्भागे त्रयः कालपर्वताः, तानतिक्रम्य 15 अपरे त्रयः, तानप्यतिक्रम्य अपरे त्रयः, तानतिक्रम्य हिमवान् पर्वतराजः, तस्योत्तरेणोत्किलकपर्वतः, तत उत्कूलको जलपथ एकधारको वज्रकः कामरूपी। उत्कीलक ऐरावतोऽधोबाणः प्रमोक्षणः एते पर्वताः समतिक्रमणीयाः। तत्र खदिरके पर्वते गुहा, प्रवेश एकधारके तु कीलकाः, वज्रके पक्षिराजेन प्रवेशः। एभिरुपायैस्ते पर्वता अतिक्रमणीयाः, यन्त्राणि च भङ्क्तव्यानि। अजवक्त्रमेण्ढकः पुरुषो राक्षसरूपी पिङ्गलागुहायां लालास्रोतसा 20 महानजगरो वेगेन प्रधावति। स ते विक्रमेण हन्तव्यः। अरान्तरगतां नाभीं यत्र पश्येत्तत्र किटिभकश्च।

अयं मुक्तेन बाणेन हन्तव्यो मम कारणात्।
यत्र पश्येद्द्वौ मेषौ संघट्टन्तौ परस्परम्।
तयोः शृङ्गमेकं भङ्क्त्वा मार्गं प्रतिलप्स्यसे॥ ९॥
25 आयसौ पुरुषौ दृष्ट्वा शस्त्रपाणी महाभयौ।
तयोरेकं पादयित्वा मार्गं प्रतिलप्स्यसे॥ १०॥
संकोचयन्तीं प्रसारयन्तीं राक्षसीमायसं मुखम्।
यदा पश्येत्तत्र कीलकं ललाटे तस्या निखानयेत्॥ ११॥
शूलावर्तस्तदा कूपो विलङ्घ्यस्ते षष्टिहस्तकः।
30 हरिपिङ्गलकेशाक्षो दारुणो यत्र राक्षसः॥ १२॥
कार्मुकं मण्डलं कृत्वा हन्तव्यश्च दुरासदः।
नद्यश्च बह्वस्तार्या नक्रग्रहसमाकुलाः॥ १३॥

रङ्गा पतङ्गा तपनी चित्रा रुदन्ती हसन्ती आशीविषा वेत्रनदी च। C 451

रङ्गायां राक्षसीकोपः पतङ्गायाममनुष्यकाः।
तपन्त्यां ग्राहबहुलत्वं चित्रायां कामरूपिणः॥ १४॥
रुदन्त्यां किन्नरीचेट्यो हसन्त्यां किन्नरस्नुषा।
आशीविषायां नानाविधाः सर्पा वेत्रनद्यां तु शाल्मलिः॥ १५॥ 5
रङ्गायां धैर्यकरणं पतङ्गायां पराक्रमः।
तपन्त्यां ग्राहमुखबन्धं चित्रायां विविधगीतम्॥ १६॥

रुदन्त्यां सौमनस्ये समुत्तारम्, हसन्त्यां तूष्णीभावयोगेन, आशीविषायां सर्पविषमन्त्र-योगेन, वेत्रनद्यां तीक्ष्णशस्त्रसंपातयोगेन समुत्तारः। नदीः समतिक्रम्य पञ्च यक्षशतानि गुल्मकम्। तद्धैर्यमास्थाय विद्राव्यम्। ततो द्रुमस्य किन्नरराजस्य भवनमिति। ततो 10 मनोहरा तं ऋषिमेवमुक्त्वा पादाभिवन्दनं कृत्वा प्रक्रान्ता॥

यावत्सुधनः कुमारस्तं कर्वटकं संनाम्य गृहीतप्राभृतो हस्तिनापुरमनुप्राप्तः। श्रुत्वा च राजा परां प्रीतिमुपगतः। ततः कुमारो मार्गश्रमं प्रतिविनोद्य पितुः सकाशं गतः। प्रणामं कृत्वा पुरस्तान्निषण्णः। राज्ञा परमया संतोषणया संभाषितः, उक्तश्च—कुमार, शिवेन त्वमागतः? देव, तव प्रसादात्कर्वटकः संनामितः, निपका गृहीताः, चिन्तकः स्थापितः। इमे तु कर- 15 प्रत्ययाः। पण्यागारश्च स्थाप्यतामिति। राजा कथयति—शोभनं प्रतिगृहीतम्। ततः पितुः प्रणामं कृत्वा संप्रस्थितः। राजा कथयति—कुमार तिष्ठ, प्राभृतं सहिता एव भोक्ष्यामः। देव गच्छामि, चिरं दृष्टा मे मनोहरा। अलं कुमार अद्य गमनेन। तिष्ठ, श्वो गमिष्यसीति। सोऽनवबुध्यमान एवमाह—तात, अद्यैव मया अवश्यं गन्तव्यम्। राजा तूष्णीमवस्थितः। ततः कुमारः स्वगृहं गतः। यावत्पश्यति श्रिया वर्जितमन्तःपुरद्वारम्। स चिन्तापरः प्रविश्य 20 C 452 मनोहरां न पश्यति। इतश्चामुतश्च संभ्रान्तः शून्यहृदयः शब्दं कर्तुमारब्धः—मनोहरे मनोहरे इति। यावदन्तःपुरं संनिपतितम्। ताः स्त्रियः क्षेपं कर्तुमारब्धाः। विद्धोऽसौ हृदयशल्येन सुतरां प्रष्टुमारब्धः। ताभिर्यथाभूतं समाख्यातम्। स शोकेन संप्रमुह्यते। ताः स्त्रियः कथयन्ति—देव, अस्मिन्नन्तःपुरे तत्प्रविशिष्टतराः स्त्रियः सन्ति, किमर्थं शोकः क्रियते? स पितुर्नैर्गुण्य-मुपश्रुत्य कृतघ्नतां च, मातुः सकाशमुपसंक्रान्तः। पादयोर्निपत्य कथयति—अम्ब, 25

मनोहरां न पश्यामि मनोरथगुणैर्युताम्।
साधुरूपसमायुक्ता क्व गता मे मनोहरा॥ १७॥
मनसा संप्रधावामि मनो मे संप्रमुह्यते।
हृदयं दह्यते चैव रहितस्य तया भृशम्॥ १८॥
मनोभिरामा च मनोहरा च 30
मनोनुकूला च मनोरतिश्च।

संतप्तदेहोऽस्मि मनोहरां विना
कुतो ममेदं व्यसनं समागतम् ॥ १९ ॥ इति।

सा कथयति—पुत्र, कृच्छ्रसंकटसंबाधप्राप्ता मनोहरेति मया प्रतिमुक्ता। अम्ब, यथा कथम्? तया यथावृत्तं विस्तरेण समाख्यातम्। स पितुर्नैर्गुण्यमकृतज्ञतां च ज्ञात्वा कथ-
5 यति—कुत्र गता कतरेण वा पथेति? सा कथयति—

एषोऽसौ पर्वतशैल ऋषिसंघनिषेवितः।
उषितो धर्मराजेन यत्र याता मनोहरा ॥ २० ॥ इति।

स मनोहरावियोगदुःखार्तः कृच्छ्रं विललाप, करुणं परिदेवते—

मनोहरां न पश्यामि मनोरथगुणैर्युताम्।
10 साधुरूपसमायुक्ता क्व गता मे मनोहरा ॥ २१ ॥
मनसा संप्रधावामि मनो मे संप्रमुह्यते।
हृदयं दह्यते चैव रहितस्य तया भृशम् ॥ २२ ॥
मनोभिरामा च मनोहरा च
मनोनुकूला च मनोरतिश्च।
C 453 15 संतप्तदेहोऽस्मि मनोहरां विना
कुतो ममेदं व्यसनं समागतम् ॥ २३ ॥ इति।

ततो मात्रा अभिहितः—पुत्र, सन्त्यस्मिन्नन्तःपुरे तद्विशिष्टतराः स्त्रियः। किमर्थं शोकः क्रियत इति? कुमारः कथयति—कुतो मे रतिरनुप्राप्यतामिति? स तया समाश्वास्यमानोऽपि शोकसंतापसंतप्तस्तस्याः प्रवृत्तिं समन्वेषमाण इतश्चामुतश्च परिभ्रमितुमारब्धः। तस्य बुद्धि-
20 रुत्पन्ना—यत एव लब्धस्तमेव तावत्पृच्छामि। स हलकस्य सकाशं गतः पृच्छति—मनोहरा कुतस्त्वया लब्धेति? स कथयति—अमुष्मिन् प्रदेशे ऋषिः प्रतिवसति। तस्याश्रमपदे ब्रह्म-सभा नाम पुष्किरिणी। तस्यां स्नातुमवतीर्णा ऋषिव्यपदेशेन लब्धेति। स संलक्षयति—ऋषिरिदानीमभिगन्तव्यः, तस्मात्प्रवृत्तिर्भविष्यतीति। एष च वृत्तान्तो राज्ञा श्रुतः—मनोहरा-वियोगात्कुमारोऽतीव विक्लव इति। ततो राज्ञा अभिहितः—कुमार, किमसि विक्लवः? इदानीं
25 तद्विशिष्टतरमन्तःपुरं व्यवस्थापयिष्यामीति। स कथयति—तात, न शक्यं मया तामनानीय अन्तःपुरस्थेन भवितुम्। स राज्ञा बह्वप्युच्यमानो न निवर्तते। ततो राज्ञा नगरप्राकारशृङ्गे-ष्वारक्षकाः पुरुषाः स्थापिताः, यथा कुमारो न निष्कासतीति। कुमारः कृत्स्नां रात्रिं जागर्तु-कामः। उक्तं च—पञ्चेमे रात्र्या अल्पं स्वपन्ति बहु जागर्ति। कतमे पञ्च पुरुषाः? स्त्रियामवेक्ष्य-(पेक्षा?)वान् प्रतिबद्धचित्तः। स्त्रीपुरुष उत्क्रोशः, ऋणी, चौरसेनापतिः, भिक्षुश्चालब्ध-
30 वीर्य इति। अथ कुमारस्यैतदभवत्—यदि द्वारेण यास्यामि, राजा द्वारपालकान् रक्षकांश्च दण्डेनोत्सादयिष्यति। यन्न्वहमरक्षितेन पथा गच्छेयमिति। स रात्र्या व्युत्थाय नीलोत्पल-

मालाबद्धशिरा येन रक्षिणः पुरुषा न सन्ति, तेन तां मालां ध्वजे बद्ध्वा अवतीर्णः । चन्द्रश्चोदितः । ततोऽसौ चन्द्रमवेक्ष्य मनोहराविरहित एवं विललाप–

भोः पूर्णचन्द्र रजनीकर तारराज
त्वं रोहिणीनयनकान्त सुसार्थवाह ।
कच्चित्प्रिया मम मनोहरणैकदक्षा 5 C 454
दृष्टा त्वया भुवि मनोहरनामधेया ॥ २४ ॥ इति ।

अनुभूतपूर्वरतिमनुस्मरन् जगाम । ददर्श मृगीम् । तामप्युवाच–

हे त्वं कुरङ्गि तृणवारिपलाशभक्षे
स्वस्त्यस्तु ते चर सुखं न मृगारिरस्मि ।
दीर्घेक्षणा मृगवधूकमनीयरूपा 10
दृष्टा त्वया मम मनोहरनामधेया ॥ २५ ॥

स तामतिक्रम्य अन्यतमं प्रदेशं गतो ददर्श वनं नानापुष्पफलोपशोभितं भ्रमरैरुपभुज्यमानसारम् । ततोऽन्यतमं भ्रमरमुवाच–

नीलाञ्जनाचलसुवर्ण मधुद्विरेफ
वंशान्तराम्बुरुहमध्यकृताधिवास । 15
वर्णाधिमात्रसदृशायतकेशहस्ता
दृष्टा त्वया मम मनोहरनामधेया ॥ २६ ॥

तस्मादपि प्रदेशादतिक्रान्तः पश्यत्याशीविषम् । दृष्ट्वा चाह–

भोः कृष्णसर्प तनुपल्लवलोलजिह्व
वक्त्रान्तरोत्पतितधूमकलापवक्त्र । 20
रागाग्निना तव समो न विषाग्निरुग्रो
दृष्टा त्वया मम मनोहरनामधेया ॥ २७ ॥

तमपि प्रदेशं समतिक्रान्तो ददर्शापरं कोकिलाभिनादितम् । दृष्ट्वा च पुनस्तं कोकिलमुवाच–

भोः कोकिलोत्तम वनान्तरवृक्षवासिन् 25
नारी मनोहर पतत्रिगणस्य राजन् ।
नीलोत्पलामलसमायतचारुनेत्रा
दृष्टा त्वया मम मनोहरनामधेया ॥ २८ ॥

तमपि प्रदेशं समतिक्रान्तो ददर्शाशोकवृक्षं सर्वपरिफुल्लम् ।

मङ्गल्यनामान्तरनामयुक्त 30
सर्वद्रुमाणामधिराजतुल्य ।

मनोहराशोक विमूर्च्छितं मां
एषोऽञ्जलिस्ते कुरु वीतशोकम् ॥ २९ ॥

C 455 स एवं विक्रमोऽनुपूर्वेण तस्य ऋषेराश्रमपदमनुप्राप्तः । स तं ऋषिं सविनयं प्रणिपत्योवाच—

5 चीराजिनाम्बरधर क्षमया विशिष्ट
मूलाङ्कुरामलकबिल्वकपित्थभक्त ।
वन्दे ऋषे नतशिरा वद मे लघु त्वं
दृष्टा त्वया मम मनोहरनामधेया ॥ ३० ॥

ततः स ऋषिः सुधनं कुमारं स्वागतवचनासनदानक्रियादिपुरःसरः प्रतिसंमोद्य
10 उवाच—

दृष्टा सा परिपूर्णचन्द्रवदना नीलोत्पलाभास्वरा
रूपेण प्रियदर्शना सुवदना नीलाञ्चितभ्रूलता ।
त्वं स्वस्थो भुवि भुज्यतां हि विविधं मूलं फलं च प्रभो
पश्चात्स्वस्ति गमिष्यसीति मनसा नात्रास्ति मे संशयः ॥ ३१ ॥

15 इदं ह्यवोचद्वचनं च सुभ्रूः
कुमार तृष्णा त्वयि बाधते मे ।
महच्च दुःखं वसतां वनेषु
यातां रमां द्रक्ष्यसि निश्चयेन ॥ ३२ ॥ इति ॥

इयं च तया अङ्गुलिमुद्रिका दत्ता । कथयति च—कुमार, विषमाः पन्थानो
20 दुर्गमाः । खेदमापत्स्यसे, निवर्तस्वेति । यदि च निवार्यमाणो न तिष्ठेत्, तस्य मार्गमुपदेष्टुमर्हसि । कुमार, इदं च तया समाख्यातम्—उत्तरे दिग्भागे त्रयः कालपर्वताः, तानतिक्रम्य अपरे त्रयः, तानप्यतिक्रम्य हिमवान् पर्वतराजः । तत्प्रवेशेन त्वया इमानि भैषज्यानि समुदानेतव्यानि—तद्यथा सूदया नामौषधिस्तया घृतं पक्त्वा पातव्यम् । तेन च ते न तृषा न बुभुक्षा, स्मृतिबलं च वर्धयति । वानरः समुदानेतव्यः, मन्त्रमध्येतव्यम्, सशरं
25 धनुर्ग्रहीतव्यम्, मणयोऽवभासात्मकाः अगदो विषघातकोऽयस्कीलास्त्रयो वीणा च । हिमवतः पर्वराजस्योत्तरेणोत्कीलकः पर्वतः । ततः कूलको जलपथः खदिरक एकधारको वज्रकः कामरूपी । उत्कीलक ऐरावतकोऽधोबाणः प्रमोक्षक एते पर्वताः । सर्वे ते समति-
C 456 क्रमणीयाः । तत्र खदिरके पर्वते गुहा, प्रवेश एकधारके तु कीलकाः, वज्रके पक्षिराजेन प्रवेशः । एभिरुपायैस्ते सर्वे पर्वताः समतिक्रमणीयाः, यन्त्राणि च भङ्क्तव्यानि । अजवक्त्रो
30 मेण्ढकः पुरुषो राक्षसीरूपी पिङ्गलायां गुहायां लालास्रोतसा महता अजगरो वेगेन प्रधावति । स ते विक्रमेण हन्तव्यः । अरान्तरगतां नाभीं यत्र पश्येत्तत्र किटिभकश्च ।

अयं मुक्तेन बाणेन हन्तव्यो मम कारणात् ।
यत्र पश्येद्द्वौ मेषौ संघट्टन्तौ परस्परम् ।
तयोः शृङ्गमेकं भङ्क्त्वा मार्गं प्रतिलप्स्यसे ॥ ३३ ॥
आयसौ पुरुषौ दृष्ट्वा शस्त्रपाणी महाभयौ ।
तयोरेकं ताडयित्वा मार्गं प्रतिलप्स्यसे ॥ ३४ ॥ 5
संकोचयन्तीं प्रसारयन्तीं राक्षसीमायसं मुखम् ।
यदा पश्येत्तदा कीलं ललाटे तस्या निखानयेत् ॥ ३५ ॥
शूलावर्तस्तदा कूपो विलङ्घ्यस्ते षष्टिहस्तकः ।
हरिपिङ्गलकेशाक्षो दारुणो यक्षराक्षसः ॥ ३६ ॥
कार्मुकं मण्डलं कृत्वा हन्तव्यश्च दुरासदः । 10
नद्यश्च बह्वस्तार्या नक्रग्राहसमाकुलाः ॥ ३७ ॥

रङ्गा पतङ्गा तपनी चित्रा रुदन्ती हसन्ती आशीविषा वेत्रनदी च ।

रङ्गायां राक्षसीकोपः पतङ्गायाममानुषाः ।
तपन्त्यां ग्राहबहुत्वं चित्रायां कामरूपिणः ॥ ३८ ॥
रुदन्त्यां किन्नरीचेट्यो हसन्त्यां किन्नरीस्नुषा । 15
आशीविषायां नानाविधाः सर्पा वेत्रनद्यां तु शाल्मलिः ॥ ३९ ॥
रङ्गायां धैर्यकरणं पतङ्गायां पराक्रमः ।
तपन्त्यां ग्राहमुखबन्धश्चित्रायां विविधं गीतम् ॥ ४० ॥

रुदन्त्यां सौमनस्येन समुत्तारः । हसन्त्यां तूष्णीभावेन, आशीविषायां सर्वविषमन्त्रप्रयोगेण समुत्तारः, वेत्रनद्यां तीक्ष्णशस्त्रसंपातयोगेन समुत्तारः। नदीमतिक्रम्य पञ्च यक्षशतानि 20 C 457 गुल्मकस्थानम् । तद्धैर्यमास्थाय विद्राव्यम् । ततो द्रुमस्य किन्नरराजस्य भवनमिति ॥

ततः सुधनः कुमारो यथोपदिष्टानौषधिमन्त्रागदप्रयोगान् समुदानीय तस्य ऋषेः पादाभिवन्दनं कृत्वा प्रक्रान्तः । ततस्तेन यथोपदिष्टाः सर्वे समुदानीताः स्थापयित्वा वानरम् । ततस्तानादाय पुनरपि तस्य ऋषेः सकाशमुपसंक्रान्तः । उक्तश्च—अलं कुमार, किमनेन व्यवसायेन ? किं मनोहरया ? त्वमेकाकी असहायः शरीरसंशयमवाप्स्यसीति । कुमारः प्राह— 25 महर्षे, अवश्यमेवाहं प्रयास्यामीति । कुतः ?

चन्द्रस्य खे विचरतः क्व सहायभावो
दंष्ट्राबलेन बलिनश्च मृगाधिपस्य ।
अग्नेश्च दावदहने क्व सहायभावः
अस्मद्विधस्य च सहायबलेन किं स्यात् ॥ ४१ ॥ 30

किं भो महार्णवजलं न विगाहितव्यं
किं सर्पदष्ट इति नैव चिकित्सनीयः ॥
वीर्यं भजेत्सुमहदूर्जितसत्त्वदृष्टं
यत्ने कृते यदि न सिद्ध्यति कोऽत्र दोषः ॥ ४२ ॥ इति ।

5 ततः सुधनः कुमारो मनोहरोपदिष्टेन विधिना संप्रस्थितः। अनुपूर्वेण पर्वतनदीगुहाप्रपातादीनि भैषज्यमन्त्रागदप्रयोगेण विनिर्जित्य द्रुमस्य किन्नरराजस्य भवनसमीपं गतः। कुमारोऽपश्यन्नगरमदूरं श्रीमदुद्यानोपशोभितं नानापुष्पफलोपेतं नानाविहगसेवितं तडागदीर्घिकावापीकिन्नरैः समुपावृतम्। किन्नरीस्तत्र चापश्यत् पानीयार्थमुपगताः। ततस्ताः सुधनकुमारेणाभिहिताः—किमनेन बहुना पानीयेन क्रियत इति? ताः कथयन्ति—अस्ति 10 द्रुमस्य किन्नरराजस्य दुहिता मनोहरा नाम। सा मनुष्यहस्तगता बभूव। तस्याः स मनुष्यगन्धो नश्यति। सुधनः कुमारः पृच्छति—किमेते घटाः समस्ताः सर्वे तस्या उपरि निपात्यन्ते, आहोस्विदनुपूर्वेणेति? ताः कथयन्ति—अनुपूर्व्या। स संलक्षयति—शोभनोऽयमुपायः। C 458 इमामङ्गुलिमुद्रामेकस्मिन् घटे प्रक्षिपामीति। तेनैकस्याः किन्नर्या घटेऽनालक्षितं प्रक्षिप्ता। सा च किन्नरी अभिहिता—अनेन त्वया घटेन मनोहरा तत्प्रथमतरं स्नापयितव्या। सा संलक्ष15 यति—नूनमत्र कार्येण भवितव्यम्। ततस्तयासौ घटः प्रथमतरं मनोहराया मूर्ध्नि निपातितो यावदङ्गुलिमुद्रा उत्सङ्गे निपतिता। सा मनोहरया प्रत्यभिज्ञाता। ततः किन्नरीं पृच्छति—मा तत्र कश्चिन्मनुष्योऽभ्यागतः? सा आह—अभ्यागतः। गच्छ, एनं प्रच्छन्नं प्रवेशय। तया प्रवेशितः, सुगुप्ते प्रदेशे स्थापितः। ततो मनोहरा पितुः पादयोर्निपत्य कथयति—तात, यद्यसौ सुधनः कुमार आगच्छेत्, येनाहं हृता, तस्य त्वं किं कुर्याः? स कथयति—20 तमहं खण्डशतं कृत्वा चतसृषु दिक्षु क्षिपेयम्। मनुष्योऽसौ, किं तेनेति। मनोहरा कथयति—तात, मनुष्यभूतस्य कुत इहागमनम्? अहमेवं ब्रवीमीति। ततो द्रुमस्य किन्नरराजस्य पर्यवस्थानो विगतः। ततो विगतपर्यवस्थानः कथयति—यद्यसौ कुमार आगच्छेत्, तस्याहं त्वां सर्वालंकारविभूषितां प्रभूतचित्रोपकरणैः किन्नरीसहस्रपरिवृतां भार्यार्थं दद्यामिति। ततो मनोहरया हृष्टतुष्टप्रमुदितया सुधनः कुमारो दिव्यालंकार25 विभूषितो द्रुमस्य किन्नरराजस्योपदर्शितः। ततो द्रुमः किन्नरराजः सुधनं कुमारं ददर्श अभिरूपं दर्शनीयं प्रासादिकं परमया शुभवर्णपुष्कलतया समन्वागतम्। दृष्ट्वा च पुनः परं विस्मयमुपगतः। ततस्तस्य जिज्ञासां कर्तुकामेन सौवर्णाः स्तम्भा उच्छ्रिताः, सप्त तालाः, सप्त भेर्यः, सप्त सूकराः। आह च—

त्वया कान्त्या जितास्तावदेते किन्नरदारकाः।
30 संदर्शितप्रभावस्तु दिव्यसंबन्धमर्हसि ॥ ४३ ॥
अल्पायतं शरवणं कृत्वोद्धृत्य शरं क्षणात्।
व्युप्तमन्यूनमुच्चित्य पुनर्देहि तिलाढकम् ॥ ४४ ॥

संदर्शय धनुर्वेदे दृढलक्षादिकौशलम्।
ततः कीर्तिपताकेयं तवायत्ता मनोहरा ॥ ४५ ॥

सुधनकुमारो बोधिसत्त्वः। कुशलाश्च भवन्ति बोधिसत्त्वास्तेषु तेषु शिल्पस्थानकर्म-स्थानेषु। देवताश्चैषामौत्सुक्यमापत्स्यन्ते अविघ्नभावाय। ततो बोधिसत्त्वो नृत्तगीतवीणा-पणवसुघोषकवल्लरीमृदङ्गादिनानाविधेन दैवतोपसंहृतेन वादित्रविशेषेण समन्तादापूर्यमाणोऽनेकैः किन्नरसहस्रैः परिवृतः। C 459 5

शतक्रतुसमादिष्टैर्यक्षैः सूकररूपिभिः।
उत्पाटिते शरवने समे व्युप्तं तिलाढकम् ॥ ४६ ॥
एकीकृतं समुच्चित्य शक्रसृष्टैः पिपीलकैः।
कुमारः किन्नरेन्द्राय विस्मिताय न्यवेदयत् ॥ ४७ ॥ 10

नीलोत्पलदलाभेनासिना गृहीतेन पश्यतो द्रुमस्य किन्नरराजस्य सौवर्णस्तम्भसमीपं गत्वा तान् स्तम्भान् कदलीच्छेदेन खण्डखण्डं छेत्तुमारब्धः। ततस्तान् तिलशोऽवकीर्य सप्त तालान् सप्त भेरीः सप्त च सूकरान् बाणेन विध्य सुमेरुवदकम्प्योऽवस्थितः। ततो गगनतलस्थाभिर्देवताभिश्च किन्नरशतसहस्रैर्हाहाकारकिलिकिलाप्रक्ष्वेडोच्चैर्नादो मुक्तः, यं दृष्ट्वा च किन्नरराजः परं विस्मयमुपगतः। ततः किन्नरीसहस्रस्य मनोहरासमानरूपस्य मध्ये 15 मनोहरां स्थापयित्वा सुधनः कुमारोऽभिहितः—एहि कुमार, प्रत्यभिजानासि मनोहरामिति? ततः सुधनः कुमारस्तां प्रत्यभिज्ञाय गाथाभिगीतेनोक्तवान्—

यथा द्रुमस्य दुहिता ममेह त्वं मनोहरा।
शीघ्रमेतेन सत्येन पदं व्रज मनोहरे ॥ ४८ ॥

ततः सा द्रुतपदमभिक्रान्ता। किन्नराः कथयन्ति—देव, अयं सुधनः कुमारो बलवीर्य- 20 पराक्रमसमन्वितो मनोहरायाः प्रतिरूपः। किमर्थं विप्रलभ्य? दीयतामस्य मनोहरेति। ततो द्रुमः किन्नरराजः किन्नरगणेन संवर्णितः सुधनं किन्नराभिमतेन महता सत्कारेण पुरस्कृत्य मनोहरां दिव्यालंकारविभूषितां वामेन पाणिना गृहीत्वा दक्षिणेन सौवर्णभृङ्गारं सुधनं कुमारमभिहितः—कुमार, एषा ते मनोहरा किन्नरीपरिवृता भार्यार्थाय दत्ता। अपरिचिता C 460 मानुषाः, यथैनां न परित्यक्षसीति। परं तातेति सुधनः कुमारो द्रुमस्य किन्नरराजस्य 25 प्रतिश्रुत्य किन्नरभवनस्थो मनोहरया सार्धं निष्पुरुषेण तूर्येण क्रीडते रमते परिचारयति। सोऽपरेण समयेन स्वदेशमनुस्मृत्य मातापितृवियोगजेन दुःखेनात्याहतो मनोहराया निवेद-यति—मातापितृवियोगजं मे दुःखं बाधत इति। ततो मनोहरया एष वृत्तान्तो विस्तरेण पितुर्निवेदितः। स कथयति—गच्छ कुमारेण सार्धम्। अपक्रान्तया ते भवितव्यम्। विप्रलम्भका मनुष्याः। ततो द्रुमेण किन्नरराजेन प्रभूतं मणिमुक्तासुवर्णादीन् दत्त्वा अनुप्रेषितः। स 30 मनोहरया सार्धमुपरिविहायसा किन्नरखगपथेन संप्रस्थितः। अनुपूर्वेण हस्तिनापुरनगरमनु-

प्राप्तः । ततो हस्तिनापुरं नगरं नानामनोहरेण सुरभिना गन्धविशेषेण सर्वा दिगामोदितम् । श्रुत्वा धनेन राज्ञा आनन्दभेर्यस्ताडिताः, सर्वं च तन्नगरमपगतपाषाणशर्करकठल्लं कारितम् । चन्दनवारिसिक्तमामुक्तपट्टदामकलापसमुच्छ्रितध्वजपताकं सुरभिधूपघटिकोपनिबद्धं नानापुष्पावकीर्णरमणीयम् । ततः कुमारोऽनेकनरवरसहस्रपरिवृतो मनोहरया सार्धं हस्तिनापुरं 5 नगरं प्रविष्टः । ततो मार्गश्रमं प्रतिविनोद्य विविधानि रत्नान्यादाय पितुः सकाशमुपसंक्रान्तः । पित्रा कण्ठे परिष्वक्तः । पार्श्वे राजासने निषण्णः । किन्नरनगरगमनागमनं च विस्तरेण समाख्यातम् । ततो धनेन राज्ञा अतिबलवीर्यपराक्रम इति विदित्वा राज्याभिषेकेणाभिषिक्तः । सुधनः कुमारः संलक्षयति—यन्मम मनोहरया सार्धं समागमः संवृत्तो राज्याभिषेकश्चानुप्राप्तः, तत्पूर्वकृतहेतुविशेषात् । यन्न्वहमिदानीं दानानि दद्याम्, पुण्यानि 10 कुर्यामिति । तेन हस्तिनापुरे नगरे द्वादश वर्षाणि निरर्गडो यज्ञ इष्टः ॥

स्यात्खलु ते महाराज अन्यः स तेन कालेन समयेन सुधनः कुमारो वेति ? न खल्वेवं द्रष्टव्यम् । अपि त्वहमेव तेन कालेन तेन समयेन बोधिसत्त्वचर्यायां वर्तमानः सुधनो नाम राजा बभूव । यन्मया मनोहरानिमित्तं बलवीर्यपराक्रमो दर्शितः, द्वादश वर्षाणि निरर्गडो यज्ञ इष्टः, न तेन मया अनुत्तरा सम्यक्संबोधिरधिगता, किं तु तद्दानं तच्च वीर्यमनु- C 461 15 त्तरायाः सम्यक्संबोधेर्हेतुमात्रकं प्रत्ययमात्रकं संभारमात्रकम् ॥

इत्यवोचद्भगवान् । आत्तमनसस्ते च सर्वे लोका भगवतो भाषितमभ्यनन्दन् ॥

इति सुधनकुमारावदानं समाप्तम् ॥



## २१ तोयिकामहावदानम् ।

तत्र भगवानायुष्मन्तमामन्त्रयते स्म—आगमय आनन्द येन श्रावस्तीति । एवं भदन्तेत्यायुष्मानानन्दो भगवतः प्रत्यश्रौषीत् । अथ भगवान् येन श्रावस्ती तेन चारिकां प्रक्रान्तः । यावदन्यतमस्मिन् प्रदेशे ब्राह्मणश्छिन्नभक्तो हलं वाहयति, तस्यार्थाय दारिका पेयामादाय गता । भगवांश्च तं प्रदेशमनुप्राप्तः । ददर्श स ब्राह्मणो बुद्धं भगवन्तं द्वात्रिंशता 5 महापुरुषलक्षणैः समलंकृतमशीत्यानुव्यञ्जनैर्विराजितगात्रं व्यामप्रभालंकृतं सूर्यसहस्रातिरेकप्रभं जङ्गममिव रत्नपर्वतं समन्ततो भद्रकम् । सहदर्शनाच्चास्य भगवति प्रसाद उत्पन्नः । न तथा द्वादशवर्षाभ्यस्तः शमथश्चित्तस्य कल्यतां जनयति, अपुत्रस्य वा पुत्रप्रतिलम्भः, दरिद्रस्य वा निधिदर्शनम्, राज्याभिनन्दिनो वा राज्याभिषेकः, यथोपचितकुशलमूलस्य सत्त्वस्य तत्प्रथमतो बुद्धदर्शनम् । स तां पेयामादाय लघुलघ्वेव येन भगवांस्तेनोपसंक्रान्तः । 10 उपसंक्रम्य भगवन्तमेतदवोचत्—इयं भो गौतम पेया । यद्यस्ति ममान्तिकेऽनुकम्पा, पिबेद्भगवान् गौतमः पेयामिति । ततो भगवता ब्राह्मणस्य जीर्णकूपो दर्शितः—सचेत्ते ब्राह्मण परित्यक्ता, C 462 अस्मिन् जीर्णकूपे प्रक्षिपेति । तेन तस्मिन् जीर्णकूपे प्रक्षिप्ता । स जीर्णकूपो वाप्यायमानः पेयापूर्णः, यथापि तद्बुद्धानां बुद्धानुभावेन देवतानां च देवतानुभावेन । ततो भगवता स ब्राह्मणोऽभिहितः—चारय महाब्राह्मण पेयामिति । स चारयितुमारब्धः । भगवता तथा 15 अधिष्ठिता यथा सर्वसंघेन पीता । स च जीर्णकूपो वाप्यायमानस्तथैव पेयापूर्णोऽवस्थितः । ततोऽसौ ब्राह्मणो भूयस्या मात्रया अभिप्रसन्नो भगवतः पादाभिवन्दनं कृत्वा पुरस्तान्निषण्णो धर्मश्रवणाय । तस्य भगवता आशयानुशयं धातुं प्रकृतिं च ज्ञात्वा तादृशी चतुरार्यसत्यसंप्रतिवेधिकी धर्मदेशना कृता, पूर्ववद्यावदनादिकालोपचितं सत्कायदृष्टिशैलं ज्ञानवज्रेण भित्त्वा स्रोतआपत्तिफलं साक्षात्कृतम् । अतिक्रान्तोऽहं भदन्त, अतिक्रान्तः । एषोऽहं 20 भगवन्तं बुद्धं शरणं गच्छामि धर्मं च भिक्षुसंघं च । उपासकं च मां धारय अद्याग्रेण यावज्जीवं प्राणोपेतं शरणं गतमभिप्रसन्नम् । अथासौ ब्राह्मणो वणिगिव लब्धलाभः शस्यसंपन्न इव कृषीवलः शूर इव विजितसंग्रामः सर्वरोगनिर्मुक्त इवातुरो भगवतो भाषितमभ्यानन्द्यानुमोद्य भगवतः पादौ शिरसा वन्दित्वा भगवतोऽन्तिकात् प्रक्रान्तो यावत्क्षेत्रं गतः । पश्यति तस्मिन् क्षेत्रे सौवर्णान् यवान् संपन्नान् । दृष्ट्वा च पुनर्विस्मयोत्फुल्ललोचनो 25 गाथां भाषते—

> अहो गुणमयं क्षेत्रं सर्वदोषविवर्जितम् ।
> अद्यैव वापितं बीजमद्यैव फलदायकम् ॥ १ ॥

ततोऽसौ ब्राह्मणस्त्वरितत्वरितं राज्ञः सकाशमुपसंक्रान्तः । उपसंक्रम्य जयेनायुषा वर्धयित्वा राजानमुवाच—देव, मया यवाः प्रकीर्णाः, ते सौवर्णाः संवृत्ताः । तस्याधिष्ठायकेन 30 प्रसादः क्रियतामिति । राज्ञा अधिष्ठायकोऽनुप्रेषितः । ब्राह्मणेन राशीकृत्य भाजितः । राजभागः स्वाभाविका यवाः संवृत्ताः । अधिष्ठायकेन राज्ञे निवेदितम् । राज्ञा समादिष्टम्—

C 463 पुनर्भाजयतेति । तैः पुनर्भाजितम् । तथैव राजभागः स्वाभाविका यवाः संवृत्ताः । एवं यावत् सप्तकृत्वो भाजितम् । तथैव । राजा कुतूहलजातः स्वयमेव गतः पश्यति—तथैव । तेनासौ ब्राह्मणोऽभिहितः—ब्राह्मण, तवैतत्पुण्यनिर्जातम् । अलं राजभागेन, यथाभिप्रेतं तन्ममानुप्रयच्छेति । ततस्तेन ब्राह्मणेन परितुष्टेन यद्दत्तम्, तत्सौवर्णाः संवृत्ताः ॥

5 ततो भगवान् संप्रस्थितः। यावदन्यतमस्मिन् प्रदेशे पञ्चकार्षशतान्युत्पाडुत्पाण्डुकानि स्फुटितपाणिपादानि शणशाटीनिवासितानि लाङ्गलानि वाहयन्ति । तेऽपि बलीवर्दा बद्धैः प्रयोक्त्रैः प्रतोदयष्टिभिः क्षतविक्षतगात्रा मुहुर्मुहुर्निश्वसन्तो वहन्ति । ददृशुस्ते कार्षका बुद्धं भगवन्तं द्वात्रिंशता महापुरुषलक्षणैः समलंकृतं पूर्ववद्यावदुपचितकुशलमूलसत्त्वस्य तत्प्रथमतो बुद्धदर्शनम् । ततो येन भगवांस्तेनोपसंक्रान्ताः । अद्राक्षीद्भगवांस्तान् कार्षकान् दूरादेव । 10 दृष्ट्वा च पुनर्विनेयापेक्षया मार्गादपक्रम्य पुरस्ताद्भिक्षुसंघस्य प्रज्ञप्त एवासने निषण्णः । एते कार्षका भगवतः पादौ शिरसा वन्दित्वा एकान्तनिषण्णाः। ततो भगवता तेषां कार्षकाणामाशयानुशयं धातुं प्रकृतिं च ज्ञात्वा तादृशी चतुरार्यसत्यसंप्रतिवेधिकी धर्मदेशना कृता, पूर्ववद्यावदनादिकालोपचितं सत्कायदृष्टिशैलं ज्ञानवज्रेण भित्त्वा स्रोतआपत्तिफलं साक्षात्कृतम् । ते दृष्टसत्या येन भगवांस्तेनोपसंक्रान्तः । प्रणमय्य भगवन्तमिदमवोचन्—देशय 15 भदन्त, स्वाख्याते धर्मविनये प्रव्रज्यामुपसंपदं भिक्षुभावम् । चरेम भगवतोऽन्तिके ब्रह्मचर्यमिति । ते भगवता एहिभिक्षुकया प्रव्राजिताः पूर्ववद्यावत्तेऽवस्थिता बुद्धमनोरथेन[1] ।
C 464 तेषां भगवता अववादो दत्तः । तैर्युज्यमानैः पूर्ववदभिवाद्याश्च संवृत्ताः । तेऽपि बलीवर्दा योक्त्राणि वरत्राणि च छित्त्वा येन भगवांस्तेनोपसंक्रान्ताः। उपसंक्रम्य भगवन्तं सामन्तकेन अनुपरिवार्यावस्थिताः । तेषां भगवता त्रिभिः पदार्थैर्धर्मो देशितः पूर्ववद्यावद्यथा गङ्गावतारे 20 हंसमत्स्यकूर्माणां यावद् दृष्टसत्याः स्वभवनं गताः ॥

भिक्षवः संशयजाताः सर्वसंशयच्छेत्तारं बुद्धं भगवन्तं पप्रच्छुः—किं नु तैः कार्षकपूर्वकैर्भिक्षुभिः कर्म कृतं येन कार्षकाः संवृत्ताः, भगवतश्च शासने प्रव्रज्य सर्वक्लेशप्रहाणादर्हत्त्वं साक्षात्कृतम्? तैर्बलीवर्दपूर्वकैर्देवपुत्रैः किं कर्म कृतम्, येन बलीवर्देषूपपन्नाः, सत्यदर्शनं च कृतमिति? भगवानाह—एभिरेव भिक्षवः कर्माणि कृतान्युपचितानि लब्धसंभाराणि 25 पूर्ववद्यावत्फलन्ति खलु देहिनाम् ॥

भूतपूर्वं भिक्षवोऽस्मिन्नेव भद्रकल्पे विंशतिवर्षसहस्रायुषि प्रजायां काश्यपो नाम शास्ता लोक उदपादि । पूर्ववत् । स वाराणसीनगरीमुपनिश्रित्य विहरति ऋषिवदने(पतने) मृगदावे । तस्य शासने एतानि पञ्च कर्षकशतानि प्रव्रजितान्यभूवन् । तत्रैभिर्न पठितं न स्वाध्यायितं नापि मनसिकारो विहितः। किं तु श्रद्धादेयं भुक्त्वा भुक्त्वा संगणिकाभिरतैः 30 कौसीद्येनाभिनामितम् ॥

---

1 This is the last word of the well-known stanza: एहीति चोक्तास्ते तथागतेन etc.

किं मन्यध्वे भिक्षवो यानि तानि पञ्च भिक्षुशतानि, एतान्येव तानि पञ्च कर्षकशतानि। योऽसौ विहारस्वामी, स एवासौ गृहपतिर्यस्यैते कार्षकाः। यदेभिर्विहारस्वामिसन्तकं श्रद्धादेयं परिभुज्य न पठितं न स्वाध्यायितं नापि मनसिकारो विहितः, किं तु संगणिकाभिरतैः कौसीद्येनाभिनामितम्, तेन कर्मणा पञ्च जन्मशतानि तस्य विहारस्वामिनः कार्षकाः संवृत्ताः। यावदेतर्ह्यपि तस्यैव कार्षका जाताः। यदेभिः काश्यपस्य 5 सम्यक्संबुद्धस्य शासने प्रव्रज्य ब्रह्मचर्यं चरितम्, तेनैतर्हि मम शासने प्रव्रज्य सर्वक्लेशप्रहाणादर्हत्त्वं साक्षात्कृतम्। ते च बलीवर्दपूर्विणो देवपुत्राः काश्यपस्य सम्यक्संबुद्धस्य शासने प्रव्रजिता आसन्। तत्रैभिः क्षुद्रानुक्षुद्राणि शिक्षापदानि खण्डितानि। तेन कर्मणा बलीवर्देषूपपन्नाः। यन्ममान्तिके चित्तमभिप्रसादितम्, तेन देवेषूपपन्नाः। यत्काश्यपे सम्यक्संबुद्धे ब्रह्मचर्यं वासितम्, तेनेदानीं देवपुत्रभूतैः सत्यदर्शनं कृतम्। इति भिक्षव एकान्त- 10 कृष्णानां कर्मणामेकान्तकृष्णो विपाकः, पूर्ववद्यावदाभोगः करणीयः। इत्येवं वो भिक्षवः शिक्षितव्यम्॥

C 465

तत्र भगवानायुष्मन्तमामन्त्रयते स्म—आगमय आनन्द येन तोयिका। एवं भदन्तेत्यायुष्मानानन्दो भगवतोऽश्रौषीत्। भगवांस्तोयिकामनुप्राप्तः। तस्मिंश्च प्रदेशे ब्राह्मणो लाङ्गलं वाहयति। अथासौ ददर्श बुद्धं भगवन्तं द्वात्रिंशता महापुरुषलक्षणैः 15 समलंकृतगात्रं पूर्ववद्यावत्समन्ततो भद्रकम्। दृष्ट्वा संलक्षयति—यदि भगवन्तं गौतममुपेत्य अभिवादयिष्यामि, कर्मपरिहाणिर्मे भविष्यति। अथ नोपेत्याभिवादयिष्यामि, पुण्यपरिहाणिः। तत्कोऽसावुपायः स्याद्येन मे न कर्मपरिहाणिः स्यान्नापि पुण्यपरिहाणिरिति? तस्य बुद्धिरुत्पन्ना—अत्रस्थ एवाभिवादनं करोमि। एवं न कर्मपरिहाणिर्भवति नापि पुण्यपरिहाणिरिति। तेन यथागृहीतयैव प्रतोदयष्ट्या तत्रस्थेनाभिवादनं कृतम्— 20 अभिवादये बुद्धं भगवन्तम्। तत्र भगवानायुष्मन्तमानन्दमामन्त्रयते—क्षण आनन्द एष ब्राह्मणः। सचेदस्यैवं सम्यक्प्रत्यात्मज्ञानदर्शनं प्रवर्तते। एतस्मिन् प्रदेशे काश्यपस्य सम्यक्संबुद्धस्याविकोपितोऽस्थिसंघातस्तिष्ठतीति। अथानेनोपसंक्रम्य वन्दितो भवेयम्। एवमनेन द्वाभ्यां सम्यक्संबुद्धाभ्यां वन्दना कृता भवेत्। तत्कस्य हेतोः? अस्मिन् आनन्द प्रदेशे काश्यपस्य सम्यक्संबुद्धस्याविकोपितोऽस्थिसंघातस्तिष्ठतीति। अथायुष्मानानन्दो लघु- 25 लघ्वेव चतुर्गुणमुत्तरासङ्गं प्रज्ञप्य भगवन्तमिदमवोचत्—निषीदतु भगवान् प्रज्ञप्त एवासने। एवमयं पृथिवीप्रदेशो द्वाभ्यां सम्यक्संबुद्धाभ्यां परिभुक्तो भविष्यति, यच्च काश्यपेन सम्यक्संबुद्धेन, यच्चैतर्हि भगवतेति। निषण्णो भगवान् प्रज्ञप्त एवासने। निषद्य भगवान् भिक्षूनामन्त्रयते स्म—इच्छथ यूयं भिक्षवः काश्यपस्य सम्यक्संबुद्धस्य शरीरसंघातमविकोपितं द्रष्टुम्? एतस्य भगवन् कालः, एतस्य सुगत समयोऽयम्। भगवान् भिक्षूणां काश्यपस्य 30 सम्यक्संबुद्धस्याविकोपितं शरीरसंघातमुपदर्शयतु, दृष्ट्वा भिक्षवश्चित्तमभिप्रसादयिष्यन्ति। भगवता लौकिकं चित्तमुत्पादितम्। धर्मता खलु यस्मिन् समये बुद्धा भगवन्तो लौकिकं

C 466

चित्तमुत्पादयन्ति, तस्मिन् समये कुन्तपिपीलिकादयोऽपि प्राणिनो भगवतश्चेतसा चित्तमाजानन्ति। नागाः संलक्षयन्ति—किं कारणं भगवता लौकिकं चित्तमुत्पादितम्? भगवान् काश्यपस्य सम्यक्संबुद्धस्य शरीरसंघातमविकोपितं द्रष्टुकामः। ततस्तैः काश्यपस्य सम्यक्संबुद्धस्याविकोपितः शरीरसंघात उच्छ्रापितः। तत्र भगवान् भिक्षूनामन्त्रयते स्म—गृह्णीत 5 भिक्षवो निमित्तम्। अन्तर्धास्यतीति। अन्तर्हितः॥

राज्ञा प्रसेनजिता श्रुतम्—भगवता श्रावकाणां दर्शनाय अविकोपितः काश्यपस्य सम्यक्संबुद्धस्य शरीरसंघात उच्छ्रापित इति। श्रुत्वा च पुनः कुतूहलजातः सार्धमन्तःपुरेण कुमारैरमात्यैर्भटबलाग्रैर्नैगमजनपदैश्च द्रष्टुं संप्रस्थितः। एवं विरूढकोऽनाथपिण्डदो गृहपतिः, ऋषिदत्तः पुराणस्थपतिः, विशाखा मृगारमाता, अनेकानि च प्राणिशतसहस्राणि 10 कुतूहलजातानि द्रष्टुं संप्रस्थितानि पूर्वकैश्च कुशलमूलैः संचोद्यमानानि। यावदसौ अन्तर्हितः। तैः श्रुतम्—अन्तर्हितोऽसौ भगवतः काश्यपस्य सम्यक्संबुद्धस्य शरीरसंघात इति। श्रुत्वा च पुनस्तेषां दुःखदौर्मनस्यमुत्पन्नम्—वृथा अस्माकमागमनं जातमिति॥

C 467 अथान्यतमेन चोपासकेन स प्रदेशः प्रदक्षिणीकृतः। एवं चेतसा चित्तमभिसंस्कृतम्—अस्मान्मे पदाविहारात् कियत्पुण्यं भविष्यतीति? अथ भगवांस्तस्य महाजनकायस्या-15 विप्रतिसारसंजननार्थं तस्य चोपासकस्य चेतसा चित्तमाज्ञाय गाथां भाषते—

शतंसहस्राणि सुवर्णनिष्का
जाम्बूनदा नास्य समा भवन्ति।
यो बुद्धचैत्येषु प्रसन्नचित्तः
पदाविहारं प्रकरोति विद्वान्॥ २॥

20 अन्यतमेनाप्युपासकेन तस्मिन् प्रदेशे मृत्तिकापिण्डो दत्तः। एवं चित्तमभिसंस्कृतम्—पदाविहारस्य तावदियत्पुण्यमाख्यातं भगवता। अस्य तु मृत्तिकापिण्डस्य कियत्पुण्यं भविष्यतीति? अथ भगवान् तस्यापि चित्तमाज्ञाय गाथां भाषते—

शतंसहस्राणि सुवर्णपिण्डं
जाम्बूनदा नास्य समा भवन्ति।
25 यो बुद्धचैत्येषु प्रसन्नचित्त
आरोपयेन्मृत्तिकपिण्डमेकम्॥ ३॥ इति॥

तच्छ्रुत्वा अनेकैः प्राणिशतसहस्रैर्मृत्पिण्डसमारोपणं कृतम्। अपरैस्तत्र मुक्तपुष्पाणि क्षिप्तानि, एवं चित्तमभिसंस्कृतम्—पदाविहारस्य मृत्तिकापिण्डस्य चेयत्पुण्यमुक्तं भगवता, 30 अस्माकं तु मुक्तपुष्पाणां कियत्पुण्यं भविष्यतीति? अथ भगवांस्तेषामपि चित्तमाज्ञाय गाथां भाषते—

शतंसहस्राणि सुवर्णमूढं
जाम्बूनदा नास्य समा भवन्ति।
यो बुद्धचैत्येषु प्रसन्नचित्त
आरोपयेन्मुक्तकपुष्पराशिम्॥ ४॥ इति।

अपरैस्तत्र मालाविहारः कृतः, चित्तं चाभिसंस्कृतम्—मुक्तपुष्पाणां भगवता इयत्पुण्य- 5
मुक्तम्। अस्माकं मालाविहारस्य कियत्पुण्यं भविष्यतीति? अथ भगवांस्तेषामपि चित्त-
माज्ञाय गाथां भाषते—

शतंसहस्राणि सुवर्णवाहा
जाम्बूनदा नास्य समा भवन्ति।
यो बुद्धचैत्येषु प्रसन्नचित्तो 10 C 468
मालाविहारं प्रकरोति विद्वान्॥ ५॥ इति।

अपरैस्तत्र दीपमाला दत्ता, चित्तं चाभिसंस्कृतम्—मालाविहारस्य भगवता इयत्पुण्य-
मुक्तम्। अस्माकं प्रदीपदानस्य कियत्पुण्यं भविष्यतीति? अथ भगवांस्तेषामपि चेतसा
चित्तमाज्ञाय गाथां भाषते—

शतंसहस्राणि सुवर्णकोट्यो 15
जाम्बूनदा नास्य समा भवन्ति।
यो बुद्धचैत्येषु प्रसन्नचित्तः
प्रदीपदानं प्रकरोति विद्वान्॥ ६॥ इति।

अपरैस्तत्र गन्धाभिषेको दत्तः, चित्तं चाभिसंस्कृतम्—प्रदीपदानस्य भगवता इयत्
पुण्यमुक्तम्। अस्माकं गन्धाभिषेकस्य कियत्पुण्यं भविष्यतीति? अथ भगवांस्तेषां चेतसा 20
चित्तमाज्ञाय गाथां भाषते—

शतंसहस्राणि सुवर्णराशयो
जाम्बूनदा नास्य समा भवन्ति।
यो बुद्धचैत्येषु प्रसन्नचित्तो
गन्धाभिषेकं प्रकरोति विद्वान्॥ ७॥ इति। 25

अपरैस्तत्र ध्वजपताकारोपणं कृतम्, चित्तं चाभिसंस्कृतम्—पदाविहारस्य मृत्पिण्ड-
दानस्य मुक्तपुष्पाणां मालाविहारस्य प्रदीपदानस्य गन्धाभिषेकस्य च इयत्पुण्यमुक्तं भगवता,
अस्माकं छत्रध्वजपताकारोपणस्य कियत्पुण्यं भविष्यतीति? अथ भगवांस्तेषां चित्तमाज्ञाय
गाथां भाषते—

शतंसहस्राणि सुवर्णपर्वता
मेरोः समा नास्य समा भवन्ति ।
यो बुद्धचैत्येषु प्रसन्नचित्त
आरोपयेच्छत्रध्वजपताकम् ॥ ८ ॥

5 एषां हि दक्षिणा प्रोक्ता अप्रमेये तथागते ।
समुद्रकल्पे संबुद्धे सार्थवाहे अनुत्तरे ॥ ९ ॥ इति ।

तेषामेतदभवत्—परिनिर्वृतस्य तावद्भगवतः पूजाकरणादि यत्पुण्यमुक्तं भगवता, C 469 तिष्ठतः कियत्पुण्यं भविष्यतीति । अथ भगवांस्तेषामपि चेतसा चित्तमाज्ञाय गाथां भाषते—

तिष्ठन्तं पूजयेद्यश्च यश्चापि परिनिर्वृतम् ।
10 समं चित्तप्रसादेन नास्ति पुण्यविशेषता ।
एवं ह्यचिन्तिया बुद्धा बुद्धधर्माप्यचिन्तिया ॥ १० ॥
अचिन्तियैः प्रसन्नानामप्रतिहतधर्मचक्रप्रवर्तिनाम् ।
सम्यक्संबुद्धानां नालं गुणपारमधिगन्तुम् ॥ ११ ॥ इति ।

ततो भगवता तस्य महाजनकायस्य तथाविधा धर्मदेशना कृता, यां श्रुत्वा अनेकैः 15 प्राणिशतसहस्रैर्महान् विशेषोऽधिगतः । कैश्चिच्छ्रावकबोधौ चित्तान्युत्पादितानि, कैश्चित् प्रत्येकबोधौ, कैश्चिदुष्मगतानि प्रतिलब्धानि, कैश्चिद् मूर्धानः, कैश्चित्सत्यानुलोमाः क्षान्तयः, कैश्चिच्छ्रोतआपत्तिफलं साक्षात्कृतम्, कैश्चित्सकृदागामिफलम्, कैश्चिदनागामिफलम्, कैश्चित्सर्वक्लेशप्रहाणादर्हत्त्वं साक्षात्कृतम् । यद्भूयसा सा पर्षद्बुद्धनिम्ना धर्मप्रवणा संघप्राग्भारा व्यवस्थिता । सार्धं तत्र ब्राह्मणगृहपतिभिस्तस्मिन् प्रदेशे महः स्थापितः—तोयिका- 20 महस्तोयिकामह इति संज्ञा संवृत्ता ॥

इति तोयिकामहावदानमेकत्रिंशत्तमम् ॥



## ३२ रूपावत्यवदानम् ।

एवं मया श्रुतम् । एकस्मिन् समये भगवान् श्रावस्त्यां विहरति स्म जेतवनेऽनाथपिण्डदस्यारामे महता भिक्षुसंघेन सार्धमर्धत्रयोदशभिर्भिक्षुशतैः । सत्कृतो भगवान् गुरुकृतो मानितः पूजितो भिक्षुभिक्षुण्युपासकोपासिकै राज्ञा राजमात्रैर्नानावणिक्छ्रमणब्राह्मणपरिव्राजकनैगमजनपदैर्नागैर्यक्षैर्गन्धर्वैरसुरगरुडकिन्नरमहोरगैः । लाभी च भगवान् प्रभूतानां प्रणीतानां 5 C 470 चीवरपिण्डपातशयनासनग्लानप्रत्ययभैषज्यपरिष्कारणां दिव्यानां च मनुष्याणां च, तैश्च भगवाननुपलिप्तः पद्ममिव वारिणा । तेन खलु पुनः समयेन अयमेव भगवतोऽनुरूप उदारः कल्याणकीर्तिशब्दश्लोकोऽभ्युद्गतः—इत्यपि स भगवांस्तथागतोऽर्हन् सम्यक्संबुद्धो विद्याचरणसंपन्नः सुगतो लोकविदनुत्तरः पुरुषदम्यसारथिः शास्ता देवानां च मनुष्याणां च बुद्धो भगवान् । स इमां सदेवकं समारकं सब्रह्मकं सश्रमणब्राह्मणीं प्रजां सदेवमानुषीं स्वयमभि- 10 ज्ञाय साक्षात्कृत्वोपसंपद्य विहरति । स धर्मं देशयत्यादौ कल्याणं मध्ये कल्याणं पर्यवसाने कल्याणम् । स्वर्थं सुव्यञ्जनं केवलं परिपूर्णं परिशुद्धं पर्यवदातं ब्रह्मचर्यं संप्रकाशयति स्म । तत्र भगवान् भिक्षूनामन्त्रयते स्म—एवं च भिक्षवः सत्त्वा जानीयुः—दानं दानफलं दानसंविभागस्य च विपाकम्, अपीदानीं योऽसौ चरमः कवलः पश्चिम आलोपः, तमपि नासंविभज्य परेष्वात्मना वा परिभुञ्जीरन्, न चोत्पन्नं मात्सर्यं चित्तं पर्यादाय तिष्ठेयुः । 15 यस्मात्तर्हि भिक्षवः सत्त्वा न जानन्ति दानस्य फलं दानसंविभागस्य च फलविपाकं यथाहं जाने दानस्य फलं दानसंविभागस्य च फलविपाकम्, तस्मात्सत्त्वा योऽसौ चरमः कवलः पश्चिम आलोपः, तमेवादत्त्वा इममसंविभज्य परेष्वात्मना वा परिभुञ्जते, उत्पन्नं चैषां मात्सर्यमलं चित्तं पर्यादाय तिष्ठति ॥

भिक्षवः सर्वसंशयजाताः सर्वसंशयानां छेत्तारं बुद्धं भगवन्तमपृच्छन्—आश्चर्यं भदन्त 20 यावच्च भगवत एतर्हि याचकाः प्रियाः । न भिक्षव एतर्हि मम, यथा अतीतेऽप्यध्वनि याचनकाः प्रियाः । तच्छ्रूयताम् ॥

भूतपूर्वं भिक्षवोऽतीतेऽध्वन्युत्तरापथेषु जनपदेषु उत्पलावती नाम नगरी राजधानी C 471 बभूव ऋद्धा च स्फीता च क्षेमा च आकीर्णबहुजनमनुष्या च । अथापरेण समयेन उत्पलावत्यां नगरराजधान्यां दुर्भिक्षमभूद् दुर्जीवं दुर्लभपिण्डं नसुकरमपताने प्रग्रहणे यापयितुम् । 25 तेन खलु समयेनोत्पलावत्यां राजधान्यां रूपावती नाम स्त्री बभूव अभिरूपा दर्शनीया प्रासादिका शुभवर्णपुष्कलनया समन्वागता । अथ रूपावती स्त्री स्वान्निवेशनान्निष्क्रम्य उत्पलावत्यां राजधान्यां जङ्घाविहारमनुक्रामति । अन्यतरदपवरकं प्राविशत् । तस्मिन् खलु समये तस्मिन्नपवरके स्त्री प्रसूता, दारकं प्रजाता अभिरूपं दर्शनीयं प्रासादिकं शुभवर्णपुष्कलतया समन्वागतम् । तं सा स्त्री क्षुत्क्षामपरीता रौक्षचित्ता दारकं गृह्णाति, 30 इच्छति च स्वानि पुत्रमांसानि भक्षयितुम् । तां दृष्ट्वा रूपावती स्त्री एतदवोचत्—किमिदं भगिनि कर्तुकामासि ? सा आह—जिघत्सितास्मि भगिनि । इच्छामि स्वकानि पुत्रमांसानि

भक्षयितुम् । रूपावती आह—तेन भगिनि निवेशने किंचित्संविद्यतेऽन्नं वा पानं वा भोजनं वा खादनीयं वा लेह्यं वा ? दुर्लभः पुत्रशब्दो लोकस्य । न मे भगिनि किंचित्संविद्यते निवेशने अन्नं वा पानं वा खाद्यं वा भोजनं वा खादनीयं वा लेह्यं वा । दुर्लभं जीवितं लोकस्य । रूपावत्याह—तेन हि भगिनि मुहूर्तमागमय, यावदहं निवेशनं गत्वा तवार्थाय 5 भोजनमानयिष्यामि । सा आह—यत्खलु भगिनि जानीयाः—कुक्षिर्मे लुप्यति, पृथिवी मे स्फुटति, हृदयं मे धूमायति, दिशो मे न प्रतिभान्ति । न तावत्त्वं द्वारशालाया निर्गता भविष्यसि यावन्मे वायव आक्रमिष्यन्ति । यथा रूपावत्या एतदभवत्—यदि दारकं गृहीत्वा गमिष्यामि, एषा स्त्री क्षुत्क्षामपरीता कालं करिष्यति । अथ दारकमपहाय यास्यामि, नियतं दारकं भक्षयिष्यति । यथाकथं पुनर्मम कुर्वन्त्या द्वयोर्जीवितलाभः स्यात् ? तस्या एत- 10 दभवत्—अनपराध्याशयवति संसारे बहूनि दुःखान्यनुभूतानि असकृन्नरकेष्वसकृत्तिर्यक्ष्वसकृद् यमलोकेऽसकृन्मनुष्यलोकेषु हस्तच्छेदाः पादच्छेदाः कर्णच्छेदा नासाच्छेदाः कर्णनासाच्छेदा अङ्गप्रत्यङ्गच्छेदास्तथान्यानि विविधानि बहूनि दुःखान्यनुभूतानि । को मया तेनार्थोऽनुप्राप्तो यदा अहमात्मनः स्थामं च बलं च वीर्यं च संजनयित्वा इमां स्त्रियं स्वेन रुधिरेण मांसेन संतर्प्य इमं दारकं परिमोचयेयम् । रूपावती पृच्छति—अस्ति ते भगिनि निवेशने शस्त्रम् ? 15 सा स्त्री आह—अस्तीति । तेन हि यत्र भवति, तदुपदर्शय । सा तं प्रदेशमुपदर्शयामास । ततो रूपावत्या स्वयमेव शस्त्रं तीक्ष्णं गृहीत्वा तौ स्तनौ छित्त्वा तां स्त्रियं स्वकेन मांसरुधि- रेण संतर्पयति स्म । संतर्प्य च तां स्त्रियमेतदवोचत्—यत्खलु भगिनि जानीयाः—अयं दारको मया स्वकेन मांसरुधिरेण क्रीतः । साहं तव निक्षेपमनुप्रयच्छामि—मा भूयो दारकं भक्षयि- ष्यसि, यावदहं निवेशनं गत्वा तवार्थाय भोजनमानयिष्यामि । सा आह—अद्य तावन्न 20 भूयः । अथ रूपावती स्त्री रुधिरेणोद्धरता प्रघरता येन स्वं निवेशनं तेनोपसंक्रान्ता । अद्राक्षीद्रूपावत्याः स्त्रियाः स्वामी रूपावतीं स्त्रीं रुधिरेणोद्धरता प्रघरता दूरत एवागच्छन्तीम् । दृष्ट्वा च पुना रूपावतीमेतदवोचत्—केनेदमेवंरूपं रूपावति विप्रकारं कृतम् ? सैतां प्रकृतिं विस्तरेणारोचयति स्म । आरोचयित्वा एतदवोचत्—प्रज्ञपय आर्यपुत्र तस्या स्त्रिया भक्तम् । स आह—प्रज्ञपय आर्यदुहितस्तस्या भक्तम् । अपि तु सत्यवचनं तावत्करिष्यामि । येनार्य- 25 दुहितः सत्येन सत्यवचनेन अयमेवंरूप आश्चर्याद्भुतो धर्मो न कदाचिद् दृष्टो वा श्रुतो वा, तेन सत्येन सत्यवचनेन उभौ तत्र स्तनौ यथापौराणौ प्रादुर्भवेताम् । सहकृतेनास्मिन्नेवंरूपे सत्यवचने तस्या अस्मिन्नेव क्षणे उभौ स्तनौ यथापौराणौ प्रादुर्भूतौ ॥

C 472

अथ शक्रस्य देवानामिन्द्रस्यैतदभवत्—अतित्यागोऽतित्यागगौरवता या रूपावत्या स्त्रिया कृतः । मा हैव सा रूपावती स्त्री अतः शक्रभवनाच्च्यावयेत् । यन्न्वहमेनां मीमांसेयम् । 30 अथ शक्रो देवेन्द्र उदारब्राह्मणरूपमात्मानमभिनिर्माय सौवर्णदण्डकमण्डलुमादाय सुवर्ण- दण्डेन मणिवालव्यजनेन वीज्यमानस्तद्यथा बलवान् पुरुषः संमिञ्जितं बाहुं प्रसारयेत् प्रसारितं संमिञ्जयेत्, एवमेव शक्रो देवानामिन्द्रो देवेषु त्रायस्त्रिंशेष्वन्तर्हित उत्पलावत्यां

C 473

राजधान्यां प्रत्यस्थात् । अथ शक्रो देवानामिन्द्र उत्पलावत्यां राजधान्यां भैक्ष्यमन्वाहिण्डन् येन रूपावत्याः स्त्रिया निवेशनं तेनोपसंक्रम्य द्वारि स्थित्वा भैक्ष्यमुत्क्रोशते । ततो रूपावती स्त्री भैक्षमादाय येन स ब्राह्मणवेषधरः शक्रः, तेनोपसंक्रम्य भैक्षमुपनामयते । अथ स शक्रो देवानामिन्द्रो रूपावतीं स्त्रियमेतदवोचत्—सत्यं ते रूपावति दारकस्यार्थायोभौ स्तनौ परित्यक्तौ ? सा आह—आर्य ब्राह्मण सत्यम् । स तामाह—एवं ते रूपावती उभौ स्तनौ 5 परित्यजामीति परित्यजन्त्याः परित्यज्य वा अभूच्चित्तस्य विप्रतिसारः ? सा आह—न मे उभौ स्तनौ परित्यजन्त्या अभूच्चित्तस्य विप्रतिसारः । शक्र आह—अत्र कः श्रद्धास्यति ? रूपावत्याह—तेन हिं ब्राह्मण सत्यवचनं करिष्यामि । येन सत्येन ब्रह्मन् सत्यवचनेनोभौ स्तनौ परित्यजामीति परित्यजन्त्याः परित्यज्य वा नाभूच्चित्तस्यान्यथात्वम्, नाभूच्चित्तस्य विप्रतिसारः, अपि च ब्रह्मन् येन सत्येन मया दारकस्यार्थायोभौ स्तनौ परित्यक्तौ, न राज्यार्थं 10 न भोगार्थं न स्वर्गार्थं न शक्रार्थं न राज्ञां चक्रवर्तिनां विषयार्थं नान्यत्राहमनुत्तरां सम्यक्संबोधिमभिसंबुध्य अदान्तान् दमयेयम्, अमुक्तान् मोचयेयम्, अनाश्वस्तानाश्वासयेयम्, अपरिनिर्वृतान् परिनिर्वापयेयम्, तेन सत्येन सत्यवचनेन मम स्त्रीन्द्रियमन्तर्धाय पुरुषेन्द्रियं प्रादुर्भवेत् । तस्यास्तस्मिन्नेव क्षणे स्त्रीन्द्रियमन्तर्हितम्, पुरुषेन्द्रियं प्रादुर्भूतम् । अथ खलु C 474 शक्रो देवेन्द्रस्तुष्ट उदग्र आत्तमनाः प्रमुदितः प्रीतिसौमनस्यजातः तत एव ऋद्ध्या वैहायसम्युद्गम्योदानमुदानयति -रूपावत्याः स्त्रीन्द्रियमन्तर्हितम्, पुरुषेन्द्रियं प्रादुर्भूतम् । रूपावत्याः 15 स्त्रियः रूपावतः कुमार इति संज्ञा उत्पादिता ॥

अथापरेण समयेनोत्पलावत्यां राजधान्यां नगर्यां राजा अपुत्रः कालगतः । तत्र पण्डितजातीयानां महामात्राणामेतदभूत्—यन्नु वयमुत्पलावत्यां राजधान्यां राजानं स्थापयेम । तेषामेतदभूत्—नान्यत्र रूपावतकुमारात्कृतपुण्यात्कृतकुशलात् । ते रूपावतं कुमारमुत्पलावत्यां 20 राजधान्यां राजानं स्थापयन्ति । अथ स षष्टिवर्षाणि राज्यं कारयति । धर्मेण राज्यं कारयित्वा कालमकार्षीत् । कायस्य भेदात्तस्यामेवोत्पलावत्यां राजधान्यामन्यतमस्य श्रेष्ठिनो गृहपतेरग्रमहिष्याः कुक्षावुपपन्नः । सा पूर्णानामष्टानां वा नवानां वा मासानामत्ययाद्दारकं जनयति अभिरूपं दर्शनीयं प्रासादिकं शुभवर्णपुष्कलतया समन्वागतम् । तस्य जातमात्रस्य तादृशी कायात्प्रभा मुक्ता, यया प्रभया चन्द्रस्य प्रभा निष्प्रभीकृता । अथान्यतरा स्त्री येन स श्रेष्ठी गृहपतिस्तेनोप- 25 संक्रान्ता । उपसंक्रम्य श्रेष्ठिनं गृहपतिमेतदवोचत्—यत्खलु गृहपते जानीयाः—ते दारको जातोऽभिरूपो दर्शनीयः प्रासादिकः शुभया वर्णपुष्कलतया समन्वागतः । तस्य जातमात्रस्य तादृशी कायात्प्रभा प्रमुक्ता, यया चन्द्रस्य प्रभा निष्प्रभीकृता । अथ स श्रेष्ठी गृहपतिस्तुष्ट उदग्र आत्तमनाः प्रीतिसौमनस्यजातः तस्या एव रात्र्या अत्ययाद्ये जानन्ति ब्राह्मणा लक्षण्या नैमित्तिका वैपञ्चिका भूम्यन्तरिक्षमन्त्रकुशला नक्षत्रशुक्रग्रहचरितज्ञाः, स तान् संनिपात्य दारक- 30 मुपदर्शयति—यत्खलु ब्राह्मणा जानीध्वम्—अयमग्रमहिष्या दारको जातोऽभिरूपो दर्शनीयः C 475 प्रासादिकः शुभया वर्णपुष्कलतया समन्वागतः । एतस्य जातमात्रस्य तादृशी कायात्प्रभा मुक्ता, यया चन्द्रस्य प्रभा निष्प्रभीकृता । तदस्य ब्राह्मणा दारकस्य लक्षणानि प्रेक्ष्य

नाम अवस्थापयत। तस्ये त ब्राह्मणा लक्षणनैमित्तिका विपश्चिका भूम्यन्तरीक्षमन्त्रकुशला नक्षत्रशुक्रग्रहचरितेषु कोविदा दारकमुपगताः। ते संलक्ष्य वदन्ति—अयं ते गृहपते दारको जातोऽभिरूपो दर्शनीयः प्रासादिकः शुभया वर्णपुष्कलतया समन्वागतः। अस्य जातमात्रस्य तादृशी कायात्प्रभा मुक्ता यया चन्द्रप्रभा निष्प्रभीकृता। तद्भवत्वस्य चन्द्रप्रभ 5 इति नाम। अथ श्रेष्ठी गृहपतिस्तान् ब्राह्मणान् भोजयित्वा विसर्ज्य चन्द्रप्रभस्य दारकस्य चतस्रो धात्रीरनुप्रयच्छति अङ्कधात्री मलधात्री स्तनधात्री क्रीडापणिका धात्री। अङ्कधात्रीत्युच्यते या दारकमङ्केन परिकर्षयति, अङ्गप्रत्यङ्गानि च संस्थापयति। मलधात्रीत्युच्यते या दारकं स्नपयति, चीवरकान्मलं प्रपातयति। स्तन्यधात्र्युच्यते या दारकं स्तन्यं पाययति। क्रीडापनिका धात्र्युच्यते यानि तानि दारकाणां दक्षकाणां तरुणकानां क्रीडापनिकानि भवन्ति, 10 तद्यथा—अकायिका सकायिका वित्कोटिका(?) स्यपेटारिका अघरिका वंशघटिका संधावणिका हस्तिविग्रहा अश्वविग्रहा बलीवर्दविग्रहाः कथयन्ति धनुर्ग्रहाः काण्डकटच्छुपूरकूर्चभैषज्यस्थविकाश्च पुरतः परिकृष्यन्ते। स आभिश्चतसृभिरुन्नीयते वर्ध्यते महता श्रीसौभाग्येन। यदा चन्द्रप्रभो दारकोऽष्टवर्षो जात्या संवृत्तः, तदैनं मातापितरौ सुस्नातं सुविलिप्तं सर्वालंकारविभूषितं कृत्वा संबहुलैर्दारकैः परिवृतं लिपिं प्रापयन्ते। तेन खलु समयेन तस्यां लिपिशालायां पञ्च- 15 मात्रकदारकशतानि लिपिं शिक्षन्ति। अथ चन्द्रप्रभो दारकस्तान् दारकानेतदवोचत्—एतद्दारका वयं सर्वेऽनुत्तरां सम्यक्संबोधिमभिसंबोधौ चित्तमुत्पादयेम। ते आहुः—किं चन्द्रप्रभ बोधिसत्त्वेन करणीयम्? स आह—षट् पारमिताः परिपूरयितव्याः। कतमाः षट्? तद्यथा—दानपारमिता शीलपारमिता क्षान्तिपारमिता वीर्यपारमिता ध्यानपारमिता प्रज्ञापारमिता। तदहं दानं ददामि, यन्न्वहं तिर्यग्योनिगतेभ्योऽपि दानं दद्याम्। स तीक्ष्णं शस्त्रमादाय मधुसर्पिश्च 20 येनान्यतरं महाश्मशानं तेनोपसंक्रान्तः। शस्त्रेणात्मनः कायं क्षणित्वा मधुसर्पिषा म्रक्षयित्वा तस्मिन् स महाश्मशाने आत्मानं वधायोत्सृजति। तेन च समयेन तस्मिन् महाश्मशाने उच्चंगमः पक्षी प्रतिवसति। स चन्द्रप्रभस्य दारकस्याङ्गे स्थित्वा दक्षिणं नयनं गृहीत्वा उत्पाटयति, पुनर्मुञ्चति। द्विरपि त्रिरपि उच्चंगमः प्राणी चन्द्रप्रभस्य दारकस्य दक्षिणं नयनं गृहीत्वा उत्पाटयित्वा पुनर्मुञ्चति। अथ चन्द्रप्रभो दारक उच्चंगमं पक्षिणमिदमवोचत्— 25 किमिदं पक्षि मम नयनं गृहीत्वा उत्पाटयित्वा पुनः प्रमुञ्चसि? स आह—न मम चन्द्रप्रभ किंचिदेवमिष्ये(?) यथा मनुष्याक्षि। तं मन्ये चन्द्रप्रभ वारयिष्यसि? चन्द्रप्रभ आह—सचेन्मम पक्षी सहस्रकृत्वो नयनं गृहीत्वा उत्पाटयतु, पुनर्मुञ्च (तु), न त्वेवाहं वारयेयम्। इत्युक्त्वा तावन्तः पक्षिणः संनिपतिताः। येन चन्द्रप्रभो निर्मांसोऽस्थिशकलीकृतः। स कालमकार्षीत्। तस्यामेवोत्पलावत्यां राजधान्यामन्यतरस्य ब्राह्मणमहाशाल- 30 स्याग्रमहिष्याः कुक्षौ उपपन्नः। सा पूर्णानां नवानां मासानामत्ययाद्दारकं जनयति, अभिरूपं दर्शनीयं प्रासादिकं शुभया वर्णपुष्कलतया समन्वागतम्। तस्य सहजातमात्रस्य तादृशी कायात्प्रभा मुक्ता, यया ब्रह्मप्रभा निष्प्रभीकृता। तस्य मातापितरौ ब्रह्मप्रभ इति नाम स्थापितवन्तौ। यदा ब्रह्मप्रभो नाम माणवकोऽष्टवर्षजातीयः संवृत्तः, तेन सर्वे ब्राह्मणका

C 476

मन्त्रा अधीताः। यदा ब्रह्मप्रभो माणवको द्वादशवर्षजातीयः संवृत्तः, स पञ्चमात्राणि माणवकानि स्वयमेव मन्त्रान् वाचयति। यदा ब्रह्मप्रभो माणवकः षोडशवर्षो जात्या संवृत्तः, तदैनं मातापितरौ आहतुः—ब्रह्मप्रभ, तवार्थाय निवेशनं करिष्यावः। स आह—अम्ब तात, न तावन्मम निवेशनेन प्रयोजनम्। तौ आहतुः—किं पुनस्त्वं ब्रह्मप्रभ करिष्यसि? स आह—इच्छाम्यहं सत्त्वानामर्थाय तपस्तप्तुं दुष्करं चरितुम्। तौ आहतुः—यस्येदानीं ब्रह्मप्रभ कालं मन्यसे। ब्रह्मप्रभमाणवको मातापित्रोः पादौ शिरसा वन्दित्वा त्रिष्कृत्वः प्रदक्षिणीकृत्य उत्पलावत्या राजधान्या निष्क्रम्य येनान्यतरद्वनषण्डं तेनोपसंक्रान्तः। तेन खलु समयेन तस्मिन् वनषण्डे द्वौ ब्राह्मणर्षी प्रतिवसतः। अपश्यतां तौ ब्राह्मणर्षी ब्रह्मप्रभं माणवकं दूरत एवागच्छन्तम्। दृष्ट्वा च ब्रह्मप्रभं माणवकमेतदवोचत्—एहि ब्रह्मप्रभ, स्वागतम्, मा श्रान्तोऽसि, मा क्लान्तः। किमर्थमिदं वनषण्डमभ्यागतः? स आह—इच्छाम्यहं सर्वसत्त्वानामर्थाय तपस्तप्तुं दुष्करं चरितुम्। तौ आहतुः—एवमस्तु, भवतु, ऋद्ध्यन्तां संकल्पाः, परिपूर्यन्तां मनोरथाः॥

अथ ब्रह्मप्रभो माणवकोऽन्यतरस्मिन् प्रदेशे कुटीं कारयित्वा चंक्रमं प्रतिष्ठाप्य सत्त्वानामर्थाय तपस्तप्तवान्। अथापरेण समयेन ब्रह्मप्रभस्य कुट्या नातिदूरे व्याघ्री गुर्विणी वासमुपगता। तां ब्रह्मप्रभो माणवकोऽद्राक्षीत्। तां दृष्ट्वा च येन पुनस्तौ द्वौ ब्रह्मर्षी तेनोपसंक्रान्तः। उपसंक्रम्य तौ च ब्रह्मर्षी एतदवोचत्—यत्खलु ऋषी जानीताम्—इह मे कुट्या नातिदूरे व्याघ्री गुर्विणी वासमुपगता। तस्याः क उत्सहते भक्तं दातुम्? तौ आहतुः—आवां तस्या भक्तं दास्यावः। अथापरेण समयेन व्याघ्री प्रसूता क्षुत्क्षामपरीता इच्छति स्वकौ पोतकौ भक्षयितुम्। एकं पोतकं गृह्णाति द्वितीयं मुञ्चति, न भक्षयति। तां ब्रह्मप्रभो माणवकोऽपश्यत्। दृष्ट्वा च पुनर्येन तौ ब्रह्मर्षी तेनोपसंक्रान्तः। उपसंक्रम्य पुनर्येन तौ द्वौ ब्रह्मर्षी तेनोपसंक्रान्तः। उपसंक्रम्य द्वौ ब्रह्मर्षी एतदवोचत्—यत्खलु ब्राह्मणौ जानीताम्—सा व्याघ्री प्रसूता क्षुत्क्षामपरीता स्वकौ पोतकौ भक्षयितुमिच्छति। एकं पोतकं गृहीत्वा द्वितीयं मुञ्चति न भक्षयति। तस्याः क उत्सहते भक्तं दातुम्? तौ आहतुः—आवां तस्या भक्तं दास्यावः। अथ तौ ब्रह्मर्षी येन सा व्याघ्री तेनोपसंक्रान्तौ। अपश्यत्सा व्याघ्री ब्रह्मर्षी दूरत एवागच्छन्तौ। दृष्ट्वा च क्षुत्क्षामपरीता अभिद्रवितुकामा। तयोरेतदभूत्—क उत्सहते तिर्यग्योनिगतस्यार्थाय जीवितं परित्यक्तुमिति? तौ तत एव ऋद्ध्या वैहायसमभिनिर्गतौ। ब्रह्मप्रभो माणवकोऽद्राक्षीत्। दृष्ट्वा च पुनस्तौ ब्रह्मर्षी एतदवोचत्—ननु ब्राह्मणौ, युवाभ्यामेतदुक्तम्—आवामस्या भक्तं दास्याव इति। एतत्खलु ब्राह्मणौ युवयोर्ब्राह्मणजात्योः सत्यम्? तौ आहतुः—क उत्सहते तिर्यग्योनिगतस्यार्थाय जीवितं परित्यक्तुम्? ब्रह्मप्रभो माणवक आह—अहमुत्सहे तिर्यग्योनिगतस्यार्थाय जीवितं परित्यक्तुम्। अथ स ब्रह्मप्रभो माणवको येन सा व्याघ्री तेनोपसंक्रान्तः। तस्या व्याघ्र्याः पुरत आत्मानमवसृजति स्म। ब्रह्मप्रभो माणवो मैत्रीविहारी बभूव। सा तं न शक्ताभिद्रोतु(ग्धु)म्। अथ ब्रह्मप्रभस्य माणवस्यैतदभवत्—इयं मम व्याघ्री सविज्ञानकं कायं न भक्षयति। स इतश्चेतश्च विलोकितवान्। ततस्तीक्ष्णं च वेणुपेशीं तीक्ष्णां गृहीत्वा इदमेवं रूपं सत्यवचनमकरोत्—समन्वाहरन्तु मे येऽस्मिन् वनषण्डेऽध्युषिता

उदारा देवा नागा यक्षा असुरा गरुडाः किन्नरा महोरगाः, तेऽपि सर्वे समन्वाहरन्तु । अयमहं त्यागं करिष्यामि, अतित्यागं त्यागातित्यागं स्वयं गलपरित्यागम् । अपि तु येनाहं सत्येन सत्यवचनेन परित्यजामि, न राज्यार्थं न भोगार्थं न शक्रार्थं न राजचक्रवर्तिविषयार्थम्, अन्यत्र कथमहमनुत्तरां सम्यक्संबोधिमभिसंबुध्य अदान्तान् दमयेयम्, अतीर्णान् 5 तारयेयम्, अमुक्तान् मोचयेयम्, अनाश्वस्तानाश्वासयेयम्, अपरिनिर्वृतान् परिनिर्वापयेयम्, तेन सत्येन सत्यवचनेन मा मे परित्यागो निष्फलो भूदिति कृत्वा स्वयमेव गलं छित्त्वा तस्या व्याघ्र्याः पुरत उपनिक्षिपति ।

C 479 व्याघ्रीनखावलिविलासविलुप्यमाना
वक्षःस्थली क्षणमलक्ष्यत वीक्षतारा (?) ।
10 रोमाञ्चचर्चिततनोस्तुहिनांशुशुभ्र-
सत्त्वा प्रकाशकिरणाङ्कुरपूरितेव ॥ १ ॥
तस्यामिषाहरणशोणितपानमत्तां
व्याघ्रीं सहस्रमवलोकयतश्चकार ।
दीर्घप्रवाससमयाकुलिता मुहूर्तं
15 कण्ठावलम्बनधृतिं निजजीववृत्तिः ॥ २ ॥

सहपरित्यक्ते खलु भिक्षवो ब्रह्मप्रभेण माणवेन स्वके गले, अयं त्रिसाहस्रमहासाहस्रो लोकधातुः कम्पति संकम्पति संप्रकम्पति, चलति संचलति संप्रचलति, वेधति संवेधति संप्रवेधति, पूर्वा दिगुन्नमति पश्चिमा अवनमति, पश्चिमा दिगुन्नमति पूर्वा दिगवनमति, दक्षिणा दिगुन्नमति उत्तरा दिगवनमति, उत्तरा दिगुन्नमति दक्षिणा दिगवनमति, मध्यमुन्नमति, अन्तोऽ-20 वनमति, अन्त उन्नमति, मध्यमवनमति, सूर्यचन्द्रमसौ न तपतो न भासतो न विराजतः ॥

स्याद्युष्माकं भिक्षवोऽन्या सा तेन समयेनोत्तरापथेषु जनपदेषूत्पलावतीनाम नगरी राजधानी बभूव । न ह्येवं द्रष्टव्यम् । पुष्कलावतं तेन कालेन तेन समयेनोत्पलावतं नाम नगरं राजधानी बभूव । स्याद्भिक्षवो युष्माकं काङ्क्षा विमतिर्वा—अन्यः स तेन कालेन तेन समयेनोत्पलावते नगरे राजधान्यां रूपावती स्त्री बभूव । न ह्येवं द्रष्टव्यम् । अहं स तेन 25 कालेन तेन समयेन रूपावती नाम स्त्री बभूव । स्याद्भिक्षवो युष्माकं काङ्क्षा वा विमतिर्वा—अन्या सा तेन कालेन तेन समयेनापवरके स्त्री प्रसूता । न चैवं द्रष्टव्यम् । चन्द्रप्रभमाणविका तेन कालेन तेन समयेनापवरके स्त्री प्रसूता । स्याद्युष्माकं भिक्षवः काङ्क्षा वा विमतिर्वा—C 480 अन्यस्तेन कालेन तेन समयेन दारको बभूव । न ह्येवं द्रष्टव्यम् । राहुलः कुमारः स तेन कालेन तेन समयेन दारकोऽभूत् । स्याद्युष्माकं भिक्षवः काङ्क्षा वा विमतिर्वा—अन्यः स तेन कालेन 30 तेन समयेन चन्द्रप्रभो नाम दारको बभूव । न ह्येवं द्रष्टव्यम् । अहमेव स तेन कालेन तेन समयेन चन्द्रप्रभो नाम दारको बभूव । स्याद्युष्माकं भिक्षवः काङ्क्षा वा विमतिर्वा—अन्यः स तेन कालेन तेन समयेन पञ्चमात्राणि दारकशतान्यभूवन् । न ह्येवं द्रष्टव्यम् । इमानि तानि पञ्च एतद्भद्रिकशतानि तेन कालेन तेन समयेन पञ्चमात्राणि दारकशतानि

अभूवन्। स्याद्युष्माकं भिक्षवः काङ्क्षा वा विमतिर्वा—अन्यः स तेन कालेन तेन समयेन तस्मिन् महाश्मशाने उच्चंगमो नाम पक्षी बभूव। न ह्येवं द्रष्टव्यम्। कौण्डिन्यो भिक्षुस्तेन कालेन तेन समयेनोच्चंगमो नाम पक्षी बभूव। स्याद्युष्माकं भिक्षवः काङ्क्षा वा विमतिर्वा-अन्यः स तेन कालेन तेन समयेन ब्रह्मप्रभो नाम माणवोऽभूत्। न हैवं द्रष्टव्यम्। अहमेव स तेन कालेन तेन समयेन ब्रह्मप्रभो नाम माणवोऽभूत्। स्याद्युष्माकं भिक्षवः 5 काङ्क्षा वा विमतिर्वा—अन्यौ तौ तेन कालेन तेन समयेन ब्रह्मप्रभस्य माणवस्य मातापितरौ अभूताम्। न हैवं द्रष्टव्यम्। राजा शुद्धोदनो मायादेवी तेन कालेन तेन समयेन ब्रह्मप्रभस्य माणवस्य मातापितरौ अभूवताम्। स्याद्युष्माकं भिक्षवः काङ्क्षा वा विमतिर्वा—अन्यः स तेन कालेन तेन समयेन वनमभूत्।....[1]स्याद्भिक्षवो युष्माकं काङ्क्षा वा विमतिर्वा— अन्यौ तौ तेन कालेन तेन समयेन द्वौ ब्रह्मर्षी अभूताम्। न हैवं द्रष्टव्यम्। मैत्रेयो बोधिसत्त्वः 10 सुप्रभश्च बुद्धस्तेन कालेन तेन समयेन तस्मिन् वनषण्डे द्वौ ब्रह्मर्षी अभूताम्। स्याद्युष्माकं भिक्षवः काङ्क्षा वा विमतिर्वा—अन्यः स तेन कालेन तेन समयेन व्याघ्री बभूव। न हैवं द्रष्टव्यम्। कौण्डिन्यो भिक्षुः स तेन कालेन तेन समयेन [ व्याघ्री ] बभूव। स्याद्युष्माकं भिक्षवः काङ्क्षा वा विमतिर्वा—अन्यौ पोतौ तेन कालेन तेन समयेन द्वौ व्याघ्रपोतौ बभूवतुः। C 481
न हैवं द्रष्टव्यम्। नन्दो भिक्षुः राहुलश्च तेन कालेन तेन समयेन व्याघ्रपोतकौ अभूताम्। 15 तदा मे भिक्षवश्चत्वारिंशत्कल्पसंप्रस्थितो मैत्रेयो बोधिसत्त्व एकेन गलपरित्यागेन पश्चान्मुखीकृतः। तदनेन भिक्षवः पर्यायेण वेदितव्यम्। एवं सचेत् सर्वे सत्त्वा जानीयुः—दानस्य फलं दानसंविभागस्य च विपाकं यथा अहं जानामि दानस्य फलं दानसंविभागस्य च विपाकम्, योऽसौ चरमः कवलः पश्चिम आलोपः, तमपि नादत्त्वा नासंविभज्यापरेष्वात्मना नोपभुञ्जीरन्, नाप्युत्पन्नं मात्सर्यं चित्तं पर्यादाय तिष्ठेत्। यस्मात्तर्हि भिक्षवः सत्त्वा न जानन्ति दानस्य फलं 20 दानसंविभागस्य च विपाकम्, तस्मात्सत्त्वा योऽसौ चरमः कवलः पश्चिम आलोपः, तमप्यदत्त्वा असंविभज्य अपरेषामात्मना परिभुञ्जते, उत्पन्नश्चैषां मात्सर्यमलश्चित्तं पर्यादाय तिष्ठति॥

पुराकृतं न पश्यति नो शुभाशुभं न सेवितम्।
न पश्यति पण्डिते जने न नाशमेत्यार्यगणे॥ ३॥

शुभाशुभं कृतं कृतज्ञेषु न जातु नश्यति। 25
सुकृतं शोभनं कर्म दुष्कृतं चाप्यशोभनम्।
उभयस्य विपाकोऽस्ति ह्यवश्यं दास्यते फलम्॥ ४॥

इदमवोचद्भगवान्। आत्तमनसो भिक्षवो भिक्षुण्य उपासका उपासिका देवनागयक्षासुरगरुडकिन्नरमहोरगाः सर्वावती च परिषद्भगवतो भाषितमभ्यनन्दन्॥

रूपावत्यवदानं द्वात्रिंशत्तमम्॥ 30

---

[1] There seems to be a break in the text such as न ह्येवं द्रष्टव्यम्।

# ३३ शार्दूलकर्णावदानम् ।

M 1

एवं[1] मया श्रुतम् । एकस्मिन् समये भगवान् श्रावस्त्यां विहरति स्म जेतवनेऽनाथ-
पिण्डदस्यारामे । अथायुष्मानानन्दः पूर्वाह्णे निवास्य पात्रचीवरमादाय श्रावस्तीं महानगरीं
पिण्डाय प्राविक्षत् । अथायुष्मानानन्दः श्रावस्तीं पिण्डाय चरित्वा कृतभक्तकृत्यो येनान्य-
5 तममुदपानं तेनोपसंक्रान्तः । तेन खलु समयेन तस्मिन्नुदपाने प्रकृतिर्नाम मातङ्गदारिका
उदकमुद्धरते स्म । अथायुष्मानानन्दः प्रकृतिं मातङ्गदारिकामेतदवोचत्—देहि मे भगिनि
पानीयम्, पास्यामि । एवमुक्ते प्रकृतिर्मातङ्गदारिका आयुष्मन्तमानन्दमिदमवोचत्—मातङ्ग-
दारिकाहमस्मि भदन्त आनन्द । नाहं ते भगिनि कुलं वा जातिं वा पृच्छामि । अपि तु
सचेत्ते परित्यक्तं पानीयम्, देहि, पास्यामि । अथ प्रकृतिर्मातङ्गदारिका आयुष्मत आनन्दाय
10 पानीयमदात् । अथायुष्मानानन्दः पानीयं पीत्वा प्रक्रान्तः ॥

M 2

अथ प्रकृतिर्मातङ्गदारिका आयुष्मत आनन्दस्य शरीरे मुखे स्वरे च साधु च सुष्ठु
च निमित्तमुद्गृहीत्वा योनिशोमनसिकारेणाविष्टा संरागचित्तमुत्पादयति स्म—आर्यो मे आनन्दः
स्वामी स्यादिति । माता च मे महाविद्याधरी । सा शक्ष्यत्यार्यमानन्दमानयितुम् । अथ
प्रकृतिर्मातङ्गदारिका पानीयघटमादाय येन चण्डालगृहं तेनोपसंक्रम्य पानीयघटमेकान्ते
15 निक्षिप्य स्वां जननीमिदमवोचत्—यत्खलु एवमम्ब जानीयाः—आनन्दो नाम श्रमणो महा-
श्रमणगौतमस्य श्रावक उपस्थायकः। तमहं स्वामिनमिच्छामि। शक्ष्यसि तमम्ब आनयितुम्?
सा तामवोचत्—शक्ताहं पुत्रि आनन्दमानयितुं स्थापयित्वा यो मृतः स्याद्यो वा वीतरागः ।
अपि च । राजा प्रसेनजित् कौशलः श्रमणगौतममतीव सेवते भजते पर्युपासते । यदि
जानीयात्, सोऽयं चण्डालकुलस्यानर्थाय प्रतिपद्येत । श्रमणश्च गौतमो वीतरागः श्रूयते ।
20 वीतरागस्य [ मन्त्राः ] पुनः सर्वमन्त्रानभिभवन्ति । एवमुक्ता प्रकृतिर्मातङ्गदारिका मातरमिद-
मवोचत्—सचेदम्ब श्रमणो गौतमो वीतरागः, तस्यान्तिकाच्छ्रमणमानन्दं न प्रतिलप्स्ये, जीवितं
परित्यजेयम् । सचेत्प्रतिलप्स्ये, जीवामि । मा ते पुत्रि जीवितं परित्यजसि । आनयामि
श्रमणमानन्दम् ॥

अथ प्रकृतेर्मातङ्गदारिकाया माता मध्ये गृहाङ्गनस्य गोमयेनोपलेपनं कृत्वा वेदी-
25 मालिप्य दर्भान् संस्तीर्य अग्निं प्रज्वाल्य अष्टशतमर्कपुष्पाणां गृहीत्वा मन्त्रानावर्तयमाना
एकैकमर्कपुष्पं परिजप्य अग्नौ प्रतिक्षिपति स्म । तत्रेयं विद्या भवति—

M 3

अमले विमले कुङ्कुमे सुमने । येन बद्धासि विद्युत् । इच्छया देवो वर्षति विद्योतति
गर्जति । विस्मयं महाराजस्य समभिवर्धयितुं देवेभ्यो मनुष्येभ्यो गन्धर्वेभ्यः शिखिग्रहा देवा
विशिखिग्रहा देवा आनन्दस्यागमनाय संगमनाय क्रमणाय ग्रहणाय जुहोमि स्वाहा ॥

---

१ some Mss. read ॐ नमो रत्नत्रयाय before एवं; while T reads सर्व बुद्धबोधि-
सत्त्वेभ्यो नमः.

अथायुष्मत आनन्दस्य चित्तमाक्षिप्तम्। स विहारान्निष्क्रम्य येन चण्डालगृहं तेनोपसंक्रामति स्म। अद्राक्षीच्चण्डाली आयुष्मन्तमानन्दं दूरादेवागच्छन्तम्। दृष्ट्वा च पुनः प्रकृतिं दुहितरमिदमवोचत्—अयमसौ पुत्रि श्रमण आनन्द आगच्छति। शयनं प्रज्ञपय। अथ प्रकृतिर्मातङ्गदारिका हृष्टतुष्टा प्रमुदितमना आयुष्मत आनन्दस्य शय्यां प्रज्ञपयति स्म॥

अथायुष्मानानन्दो येन चण्डालगृहं तेनोपसंक्रान्तः। उपसंक्रम्य वेदीमुपनिश्रित्यास्थात्। 5 एकान्तस्थितः स पुनरायुष्मानानन्दः प्रारोदीत्। अश्रूणि प्रवर्तयमान एवमाह—व्यसनप्राप्तोऽहमस्मि। न च मे भगवान् समन्वाहरति। अथ भगवानायुष्मन्तमानन्दं समन्वाहरति स्म। समन्वाहृत्य संबुद्धमन्त्रैश्चण्डालमन्त्रान् प्रतिहन्ति स्म। तत्रेयं विद्या—

स्थितिरच्युतिः सुनीतिः। स्वस्ति सर्वप्राणिभ्यः॥
सरः प्रसन्नं निर्दोषं प्रशान्तं सर्वतोऽभयम्। 10 M 4
ईतयो यत्र शाम्यन्ति भयानि चलितानि च॥ १॥
तद्वै देवा नमस्यन्ति सर्वसिद्धाश्च योगिनः।
एतेन सत्यवाक्येन स्वस्त्यानन्दाय भिक्षवे॥ २॥

अथायुष्मानानन्दः प्रतिहतचण्डालमन्त्रश्चण्डालगृहान्निष्क्रम्य येन स्वको विहारस्तेनोपसंक्रमितुमारब्धः॥ 15

अद्राक्षीत्प्रकृतिर्मातङ्गदारिका आनन्दमायुष्मन्तं प्रतिगच्छन्तम्। दृष्ट्वा च पुनः स्वां जननीमिदमवोचत्—अयमसौ मातः श्रमण आनन्दः प्रतिगच्छति। तामाह माता—नियतं पुत्रि श्रमणेन गौतमेन समन्वाहृतो भविष्यति। तेन मम मन्त्राः प्रतिहता भविष्यन्ति। प्रकृतिराह—किं पुनरम्ब बलवत्तराः श्रमणस्य गौतमस्य मन्त्रा नास्माकम्? तामाह माता—बलवत्तराः श्रमणस्य गौतमस्य मन्त्रा नास्माकम्। ये पुत्रि मन्त्राः सर्वलोकस्य प्रभवन्ति, तान् मन्त्रान् श्रमणो 20 गौतम आकाङ्क्षमाणः प्रतिहन्ति। न पुनर्लोकः प्रभवति श्रमणस्य गौतमस्य मन्त्रान् प्रतिहन्तुम्। एवं बलवत्तराः श्रमणस्य गौतमस्य मन्त्राः॥

अथायुष्मानानन्दो येन भगवांस्तेनोपसंक्रान्तः। उपसंक्रम्य भगवतः पादौ शिरसा वन्दित्वैकान्तेऽस्थात्। एकान्तस्थितमायुष्मन्तमानन्दं भगवानिदमवोचत्—उद्गृह्ण त्वमानन्द इमां षडक्षरीविद्याम्। धारय वाचय पर्यवाप्नुहि आत्मनो हिताय सुखाय भिक्षूणां भिक्षुणीना- 25 मुपासकानामुपासिकानां हिताय सुखाय। इयमानन्द षडक्षरीविद्या षड्भिः सम्यक्संबुद्धैर्भाषिता, चतुर्भिश्च महाराजैः, शक्रेण देवानामिन्द्रेण, ब्रह्मणा च सहापतिना। मया चैतर्हि शाक्यमुनिना सम्यक्संबुद्धेन भाषिता। त्वमप्येतर्हि आनन्द तां धारय वाचय पर्यवाप्नुहि। यदुत तद्यथा—

अण्डरे पाण्डरे कारण्डे केयूरेऽर्चिहस्ते खरग्रीवे बन्धुमति वीरमति धर विध 30 M 5 चिलिमिले विलोडय विषाणि लोके। विष चल चल। गोलमति गण्डविले चिलिमिले सातिनिम्ने यथासंविभक्ते गोलमति गण्डविलायै स्वाहा॥

यः कश्चिदानन्द षडक्षर्या विद्यया परित्राणं स्वस्त्ययनं कुर्यात्, स यदि वधार्हो भवेत्, दण्डेन मुच्यते, दण्डार्हः प्रहारेण, प्रहारार्हः परिभाषणया, परिभाषणार्हो रोमहर्षणेन, रोमहर्षणार्हः पुनरेव मुच्यते । नाहमानन्द तं समनुपश्यामि सदेवलोके समारलोके सब्रह्मलोके सश्रमणब्राह्मणिकायां प्रजायां सदेवमानुषिकायां सासुरायां यस्त्वनया षडक्षर्या
5 विद्यया रक्षायां कृतायां रक्षासूत्रे बाहौ बद्धे स्वस्त्ययने कृते अभिभवितुं शक्नोति वर्जयित्वा पौराणं कर्मविपाकम् ॥

M 6 अथ प्रकृतिर्मातङ्गदारिका तस्या एव रात्र्या अत्ययात् शिरःस्नाता अनाहतदूष्यप्रावृता मुक्तामाल्याभरणा येन श्रावस्ती नगरी तेनोपसंक्रम्य नगरद्वारे कपाटमूले निश्रित्यास्थादायुष्मन्तमानन्दमागमयमाना—नियतमनेन मार्गेण आनन्दो भिक्षुरागमिष्यतीति । ददर्शा-
10 युष्मानानन्दः प्रकृतिं मातङ्गदारिकां पृष्ठतः पृष्ठतः समनुबद्धाम् । दृष्ट्वा च पुनर्जेह्रीयमाणरूपोऽप्रगल्भायमानरूपो दुःखी दुर्मनाः शीघ्रं शीघ्रं श्रावस्त्या विनिर्गम्य येन जेतवनं तेनोपसंक्रान्तः । उपसंक्रम्य भगवतः पादौ शिरसा वन्दित्वैकान्तेऽस्थात् । एकान्तस्थित आयुष्मानानन्दो भगवन्तमिदमवोचत्—इयं मे भगवन् प्रकृतिर्मातङ्गदारिका पृष्ठतः पृष्ठतः समनुबद्धा गच्छन्तमनु गच्छति, तिष्ठन्तमनु तिष्ठति । यद्यदेव कुलं पिण्डाय प्रविशामि,
15 तस्य तस्यैव द्वारे तूष्णीभूता तिष्ठति । त्राहि मे भगवन्, त्राहि मे सुगत । एवमुक्ते भगवानायुष्मन्तमानन्दमिदमवोचत्—किं ते प्रकृते मातङ्गदारिके आनन्देन भिक्षुणा ? प्रकृतिराह—स्वामिनं भदन्त आनन्दमिच्छामि । भगवानाह—अनुज्ञातासि प्रकृते मातापितृभ्या-
M 7 मानन्दाय ? अनुज्ञातास्मि भगवन्, अनुज्ञातास्मि सुगत । भगवानाह—तेन हि संमुखं ममानुज्ञापय त्वम् । अथ प्रकृतिर्मातङ्गदारिका भगवतः प्रतिश्रुत्य भगवतः पादौ शिरसा
20 वन्दित्वा भगवन्तं त्रिः प्रदक्षिणीकृत्य भगवतोऽन्तिकात् प्रक्रान्ता । येन स्वकौ मातापितरौ तेनोपसंक्रान्ता । उपसंक्रम्य मातापित्रोः पादान् शिरसा वन्दित्वा एकान्तेऽस्थात् । एकान्तस्थिता स्वकौ मातापितराविदमवोचत्—संमुखं मे अम्ब तात श्रमणस्य गौतमस्य आनन्दाय उत्सृजतम् । अथ प्रकृतेर्मातङ्गदारिकाया मातापितरौ प्रकृतिमादाय येन भगवांस्तेनोपसंक्रान्तौ । उपसंक्रम्य भगवतः पादौ शिरसा वन्दित्वा एकान्ते न्यषीदताम् । अथ प्रकृति-
25 र्मातङ्गदारिका भगवतः पादौ शिरसा वन्दित्वा एकान्तेऽस्थात् । एकान्तस्थिता भगवन्तमेतदवोचत्—इमौ तौ भगवन् मातापितरावागतौ । अथ भगवान् प्रकृतेर्मातङ्गदारिकाया मातापितराविदमवोचत्—अनुज्ञाता युवाभ्यां प्रकृतिर्मातङ्गदारिका आनन्दायेति ? तावाहतुः—अनुज्ञाता भगवन्, अनुज्ञाता सुगत । तेन हि यूयं प्रकृतिमपहाय गच्छत स्वगृहम् । अथ प्रकृतेर्मातङ्गदारिकाया मातापितरौ भगवतः पादौ शिरसा वन्दित्वा भगवन्तं त्रिः प्रदक्षिणी-
30 कृत्य भगवतोऽन्तिकात्प्रक्रान्तौ ॥

अथ प्रकृतेर्मातङ्गदारिकाया मातापितरावचिरप्रक्रान्तौ विदित्वा भगवान् प्रकृतिं मातङ्गदारिकामिदमवोचत्—अर्थिकासि प्रकृते आनन्देन भिक्षुणा ? प्रकृतिराह—अर्थिकास्मि भगवन्,

अर्थिकास्मि सुगत। तेन हि प्रकृते य आनन्दस्य वेषः, स त्वया धारयितव्यः। सा आह—धारयामि भगवन्, धारयामि सुगत। प्रव्राजयतु मां सुगत, प्रव्राजयतु मां भगवान्। अथ भगवान् प्रकृतिं मातङ्गदारिकामिदमवोचत्—एहि त्वं भिक्षुणि, चर ब्रह्मचर्यम्। एवमुक्ते प्रकृतिर्मातङ्गदारिका भगवता मुण्डा काषायप्रावृता। अथ भगवान् प्रकृतिं मातङ्गदारिकामेहिभिक्षुणीवादेन प्रव्राजयित्वा धर्म्यया कथया संदर्शयति स्म, समादापयति स्म, समुत्तेजयति स्म, संप्रहर्षयति स्म। येयं कथा दीर्घरात्रं संसारसमापन्नानां प्रतिकूला श्रवणीया, तद्यथा—दानकथा शीलकथा स्वर्गकथा कामेष्वादीनवं निःसरणं भयं संक्लेशव्यवदानम्, बोधिपक्षांस्तान् धर्मान् भगवान् प्रकृत्यै भिक्षुण्यै संप्रकाशयति स्म। अथ प्रकृतिर्भिक्षुणी भगवता धर्म्यया कथया संदर्शिता समादापिता समुत्तेजिता संप्रहर्षिता हृष्टचित्ता कल्याणचित्ता मुदितचित्ता विनीवरणचित्ता ऋजुचित्ताखिलचित्ता भव्या धर्मदेशितमाज्ञातुम्। यदा च भगवान् ज्ञातः प्रकृतिं भिक्षुणीं हृष्टचित्तां कल्याणचित्तां मुदितचित्तां विनीवरणचित्तां भव्यां प्रतिबलां सामुत्कर्षिकीं धर्मदेशनामाज्ञातुम्, तदा येयं भगवतां बुद्धानां चतुरार्यसत्यप्रतिवेधिकी धर्मदेशना, यदुत दुःखं समुदयो निरोधो मार्गः, तां भगवान् प्रकृतेर्भिक्षुण्या विस्तरेण संप्रकाशयति स्म। अथ प्रकृतिर्भिक्षुणी तस्मिन्नेवासने निषण्णा चतुरार्यसत्यान्यभिज्ञातासीत्, दुःखं समुदयं निरोधं मार्गम्। तद्यथा वस्त्रमपगतकालकं रजनोपगतं रङ्गोदके प्रक्षिप्तं सम्यगेव रङ्गं प्रतिगृह्णीयात्, एवमेव प्रकृतिर्भिक्षुणी तस्मिन्नेवासने निषण्णा चतुरार्यसत्यानि अभिसमयति स्म, तद्यथा—दुःखं समुदयं निरोधं मार्गम्॥

M 8 M 9

अथ प्रकृतिर्भिक्षुणी दृष्टधर्मा प्राप्तधर्मा विदितधर्मा अकोप्यधर्मा पर्यवसितधर्मा अधिगतार्थलाभसंवृत्ता तीर्णकाङ्क्षाविचिकित्सा विगतकथंकथा वैशारद्यप्राप्ता अपरप्रत्यया अनन्यनेया शास्तुः शासने अनुधर्मचारिणी आजानेयमाना धर्मेषु भगवतः पादयोः शिरसा निपत्य भगवन्तमिदमवोचत्—अत्ययो मे भगवन्, अत्ययो मे सुगत। यथा बाला यथा मूढा यथा अव्यक्ता यथा अकुशला दुष्प्रज्ञजातीया, याहमानन्दं भिक्षुं स्वामिवादेन समुदाचार्षम्। साहं भदन्त अत्ययमत्ययतः पश्यामि। अत्ययमत्ययतो दृष्ट्वा देशयामि। अत्ययमत्ययत आविष्करोमि। आयत्यां संवरमापद्ये। अतस्तस्या मम भगवन् अत्ययमत्ययतो जानातु प्रतिगृह्णातु अनुकम्पामुपादाय। भगवानाह—आयत्यां संवराय स्थित्वा त्वं प्रकृते अत्ययमत्ययतोऽध्यागमः। यथा बाला यथा मूढा यथा अव्यक्ता यथा अकुशला दुष्प्रज्ञजातीया त्वमानन्दं भिक्षुं स्वामिवादेन समुदाचरसीति। यतश्च त्वं प्रकृते अत्ययं जानासि, अत्ययं पश्यसि, आयत्यां च संवरमापद्यसे, अहमपि तेऽत्ययमत्ययतो गृह्णामि। वृद्धिरेव ते प्रकृते प्रतिकाङ्क्षितव्या कुशलानां धर्माणाम्, न हानिः। अथ प्रकृतिर्भिक्षुणी भगवताभिनन्दितानुशिष्टा एका व्यपकृष्टा अप्रमत्ता आतापिनी स्मृतिमती संप्रजाना प्रहितानि विविक्तानि विहरति स्म। यदर्थं कुलदुहितरः केशानवतार्य काषायाणि वस्त्राण्याच्छाद्य सम्यगेव श्रद्धया अगारादनागारिकां प्रव्रजन्ति, तदनुत्तरब्रह्मचर्यपर्यवसानं दृष्ट एव धर्मे स्वयमभिज्ञाय साक्षा-

M 10

कृत्योपसंपद्य प्रवेदयते स्म—क्षीणा मे जातिः, उषितं ब्रह्मचर्यम्, कृतं करणीयम्, नापरमस्माद्भवं प्रजानामीति ॥

अश्रौषुः श्रावस्तेयका ब्राह्मणगृहपतयः—भगवता किल चण्डालदारिका प्रव्राजितेति। श्रुत्वा च पुनरवध्यायन्ति—कथं हि नाम चण्डालदारिका भिक्षूणां सम्यक्चर्यां चरिष्यति? 5 भिक्षुणीनामुपासकानामुपासिकानां सम्यक्चर्यां चरिष्यति? कथं हि नाम चण्डालदारिका ब्रह्मक्षत्रियगृहपतिमहाशालकुलेषु प्रवेक्ष्यति?

M 11 अश्रौषीद्राजा प्रसेनजित्कौशलः—भगवता चण्डालदारिका प्रव्राजितेति। श्रुत्वा च पुनरवध्यायति—कथं हि नाम चण्डालदारिका भिक्षूणां सम्यक्चर्यां चरिष्यति? भिक्षुणीनामुपासकानामुपासिकानां सम्यक्चर्यां चरिष्यति? कथं ब्राह्मणक्षत्रियगृहपतिमहाशालकुलेषु 10 प्रवेक्ष्यति? विमृश्य च भद्रं यानं योजयित्वा भद्रं यानमभिरुह्य संबहुलैश्च श्रावस्तेयैर्ब्राह्मणगृहपतिभिः परिवृतः पुरस्कृतः श्रावस्त्या निर्याति स्म। येन जेतवनमनाथपिण्डदस्यारामः, तेनोपसंक्रान्तः। तस्य खलु यावती यानस्य भूमिः, तावद्यानेन गत्वा स यानादवतीर्य पत्तिकायपरिवृतः पत्तिकायपुरस्कृतः पद्भ्यामेवारामं प्राविक्षत्। प्रविश्य येन भगवांस्तेनोपसंक्रान्तः। उपसंक्रम्य भगवतः पादौ शिरसा वन्दित्वा एकान्ते निषण्णः। तेऽपि संबहुलाः 15 श्रावस्तेयका ब्राह्मणक्षत्रियगृहपतयो भगवतः पादौ शिरसा वन्दित्वा एकान्ते निषण्णाः। अप्यैकत्या भगवता सार्धं संमुखं संरञ्जनीं संमोदिनीं विविधां कथां व्यतिसार्य एकान्ते निषण्णाः। अप्यैकत्या भगवतः पुरतः स्वकस्वकानि मातापैतृकाणि नामगोत्राणि अनुश्राव्य एकान्ते निषण्णाः। अप्यैकत्या येन भगवांस्तेनाञ्जलिं प्रणम्य एकान्ते निषण्णाः। अप्यैकत्यास्तूष्णींभूता एकान्ते निषण्णाः ॥

20 अथ भगवान् राजानं प्रसेनजितं कौशलमारभ्य तेषां च संबहुलानां श्रावस्तेयकानां ब्राह्मणक्षत्रियगृहपतीनां चेतसा चित्तमाज्ञाय प्रकृतेर्भिक्षुण्याः पूर्वनिवासमारभ्य भिक्षूनामन्त्रयते स्म—इच्छथ यूयं भिक्षवस्तथागतस्य संमुखं प्रकृतेर्भिक्षुण्याः पूर्वनिवासमारभ्य धर्मकथां श्रोतुम्? भिक्षवो भगवन्तमाहुः—एतस्य भगवन् कालः, एतस्य सुगत समयः, यद्भगवान् M 12 प्रकृतेर्भिक्षुण्याः पूर्वनिवासमारभ्य धर्मकथां कथयेत्, यद्भगवतः श्रुत्वा भिक्षवो धारयिष्यन्ति। 25 भगवानाह—तेन हि भिक्षवः शृणुत, साधु च सुष्ठु च मनसिकुरुत, भाषिष्ये। एवं साधु भगवन्निति ते भिक्षवो भगवतः प्रत्यश्रौषुः। भगवांस्तानिदमवोचत्—

भूतपूर्वं भिक्षवोऽतीतेऽध्वनि गङ्गातटे अतिमुक्तकदलीपाटलकामलकीवनगहनप्रदेशे तत्र त्रिशङ्कुर्नाम मातङ्गराजः प्रतिवसति स्म संबहुलैश्च मातङ्गसहस्रैः सार्धम्। स पुनर्भिक्षवस्त्रिशङ्कुर्मातङ्गराजः पूर्वजन्माधीतान् वेदान् समनुस्मरति स्म साङ्गोपाङ्गान् सरहस्यान् 30 सनिघण्टकैटभान् साक्षरप्रभेदानितिहासपञ्चमान्, अन्यानि च शास्त्राणि पदको[शो?] वैयाकरणो लोकायते यज्ञमन्त्रे महापुरुषलक्षणे निष्णातो निष्काङ्क्षः। भाष्यं च यथाधर्मं वेदव्रतपदान्यनुश्रुतं च भाषते स्म। तस्य त्रिशङ्कोर्मातङ्गराजस्य शार्दूलकर्णो नाम कुमारोऽभूदुत्पन्नः।

रूपतश्च कुलतश्च शीलतश्च गुणतश्च सर्वगुणैश्चोपेतोऽभिरूपो दर्शनीयः प्रासादिकः परमया शुभवर्णपुष्कलतया समन्वागतः। अथ त्रिशङ्कुर्मातङ्गराजः शार्दूलकर्णं कुमारं पूर्वजन्माधीतान् वेदानध्यापयति स्म यदुत साङ्गोपाङ्गान् सरहस्यान् सनिघण्टकैटभान् साक्षरप्रभेदानितिहासपञ्चमान्, अन्यानि च शास्त्राणि, भाष्यं च यथाधर्मं वेदव्रतपदानि ॥

अथ त्रिशङ्कोर्मातङ्गराजस्यैतदभवत्—अयं मम पुत्रः शार्दूलकर्णो नाम कुमारः उपेतो 5 रूपतश्च कुलतश्च शीलतश्च गुणतश्च, सर्वगुणोपेतोऽभिरूपो दर्शनीयः प्रासादिकः, परमया च वर्णपुष्कलतया समन्वागतः। चीर्णव्रतोऽधीतमन्त्रो वेदपारगः। समयोऽयं यन्न्वहमस्य निवेशनधर्मं करिष्ये। तत्कुतो न्वहं शार्दूलकर्णस्य पुत्रस्य शीलवतीं गुणवतीं रूपवतीं प्रतिरूपां प्रजावतीं लभेयमिति?

M 13

तस्मिन् खलु समये पुष्करसारी नाम ब्राह्मण उत्कूटं नाम द्रोणमुखं परिभुङ्क्ते स्म 10 ससप्तोत्सदं सतृणकाष्ठोदकं धान्यसहगतं राज्ञाग्निदत्तेन ब्रह्मदेयं दत्तम्। पुष्करसारी पुनर्ब्राह्मण उपेतो मातृतः पितृतः संशुद्धो गृहिण्यामना[ कुले जात्यां वा ]क्षिप्तो जातिवादेन गोत्रवादेन यावदासप्तममातामहपितामहम्। युगपदुपाध्यायोऽध्यापको मन्त्रधरस्त्रयाणां वेदानां पारगः साङ्गोपाङ्गानां सरहस्यानां सनिघण्टकैटभानां साक्षरप्रभेदानामितिहासपञ्चमानां पदको-[ शो ] वैयाकरणः। लोकायतयज्ञमन्त्रमहापुरुषलक्षणेषु पारगः। स्फीतमुत्कूटं नाम द्रोणमुखं 15 परिभुङ्क्ते। पुष्करसारिणो ब्राह्मणस्य प्रकृतिर्नाम माणविका दुहिता भूता। उपेता रूपतश्च कुलतश्च शीलतश्च गुणतश्च, सर्वगुणोपेता अभिरूपा दर्शनीया प्रासादिका परमया वर्णपुष्कलतया समन्वागता शीलवती गुणवती ॥

अथ त्रिशङ्कोर्मातङ्गराजस्यैतदभवत्—अस्त्युत्तरपूर्वेणोत्कूटो नाम द्रोणमुखः। तत्र पुष्करसारो नाम ब्राह्मणः प्रतिवसति। उपेतो मातृतः पितृतो यावत् त्रैवेदिके प्रवचने 20 विस्तरेण। स चोत्कूटं द्रोणमुखं परिभुङ्क्ते ससप्तोत्सदं सतृणकाष्ठोदकं धान्यभोगैः सहगतं राज्ञाग्निदत्तेन ब्रह्मदेयं दत्तम्। तस्य पुष्करसारिणो ब्राह्मणस्य प्रकृतिर्नाम माणविका दुहिता उपेता रूपतश्च कुलतश्च शीलतश्च सर्वगुणोपेता अभिरूपा दर्शनीया प्रासादिका परमया वर्णपुष्कलतया समन्वागता शीलवती गुणवती पुत्रस्य मे शार्दूलकर्णस्य प्रतिरूपा पत्नी भविष्यतीति। अथ त्रिशङ्कुर्मातङ्गराज एतमेवार्थं बहुलं रात्रौ चिन्तयित्वा वितर्क्य तस्या एव 25 रात्र्या अत्ययात् प्रत्यूषकालसमये सर्वश्वेतं वडवारथमभिरुह्य महता श्वपाकगणेन अमात्यगणेन परिवृतश्चण्डालनगरान्निष्क्रम्योत्तरेण प्रागच्छद्येनोत्कूटं द्रोणमुखम्। अथ त्रिशङ्कुर्मातङ्गराज उत्कूटस्योत्तरपूर्वेण सुमनस्कं नामोद्यानं नानावृक्षसंछन्नं नानावृक्षकुसुमितं नानाद्विजनिकूजितं नन्दनमिव देवानां तदुपसंक्रान्तः। उपसंक्रम्य ब्राह्मणं पुष्करसारिणमागमयमानोऽस्थात्—ब्राह्मणः पुष्करसारी माणवकान् मन्त्रान् वाचयितुमिहागमिष्यतीति ॥ 30

M 14

अथ ब्राह्मणः पुष्करसारी तस्या एव रात्र्या अत्ययात् सर्वश्वेतं वडवारथमभिरुह्य शिष्यगणपरिवृतः पञ्चमात्रैर्माणवकशतैः पुरस्कृत उत्कूटान्निर्याति स्म ब्राह्मणान् मन्त्रान्

M 15

वाचयितुम् । अद्राक्षीत्त्रिशङ्कुर्मातङ्गराजो ब्राह्मणं पुष्करसारिणं सूर्यमिवोदयन्तं तेजसा, ज्वलन्तमिव हुतवहम्, यज्ञमिव ब्राह्मणपरिवृतम्, शक्रमिव देवगणपरिवृतम्, हैमवन्तमिवौषधिभिः, समुद्रमिव रत्नैः, चन्द्रमिव नक्षत्रैः, वैश्रवणमिव यक्षगणैः, ब्रह्माणमिव देवर्षिगणैः परिवृतं शोभमानम् । दूरत एवागच्छन्तं दृष्ट्वा च एनं प्रत्युद्गम्य यथाधर्मं कृत्वेद-
5 मवोचत्—हं भोः पुष्करसारिन्, स्वागतम्, आयाहि । कार्यं च ते वक्ष्यामि, तच्छ्रूयताम् । एवमुक्ते ब्राह्मणः पुष्करसारी त्रिशङ्कुं मातङ्गराजमिदमवोचत्—न हि भोस्त्रिशङ्को शक्यं ब्राह्मणेन सह भोःकारं कर्तुम् ।-अहं भोः पुष्करसारिन् शक्नोमि भोःकारं कर्तुम् । यच्छक्यं मे कर्तुं भवति, नैव तच्छक्यं ते कर्तुम् । अपि तु चत्वारो भोः पुष्करसारिन् पुरुषस्य कार्यसमारम्भाः पूर्वसमारब्धा भवन्ति यदुत आत्मार्थं वा परार्थं वा आत्मीयार्थं वा सर्व- M 16
10 भूतसंग्रहार्थं वा । इदं चात्र महत्तरं कार्यम् । यत्ते व्याख्यास्यामि, तच्छ्रूयताम् । पुत्राय मे शार्दूलकर्णाय प्रकृतिं दुहितरमुत्सृज भार्यार्थाय । यावन्तं कुलशुल्कं मन्यसे, तावन्तं दास्यामि ॥

इदं च खलु पुनर्वचनं श्रुत्वा त्रिशङ्कोर्मातङ्गराजस्य भृशं ब्राह्मणः पुष्करसारी अभिषक्तः कुपितश्चण्डीभूतोऽनात्तमनाः कोपं च द्वेषं च म्रक्षं च तत्प्रत्ययात्संजनित्वा ललाटे
15 त्रिशिखां भृकुटीं कृत्वा कण्ठं धमयित्वा अक्षिणी परिवर्त्य नकुलपिङ्गलां दृष्टिमुत्पाद्य त्रिशङ्कुं मातङ्गराजमिदमवोचत्—धिग् ग्राम्यविषय चण्डाल, नेदं श्वपाकवचनं युक्तम्, यस्त्वं ब्राह्मणं वेदपारगं हीनश्चण्डालयोनिजो भूत्वा इच्छस्यवमर्दितुम् । भो दुर्मते—

प्रकृतिं त्वं न जानासि आत्मानं चाभिमन्यसे ।
बालाग्रे सर्षपं मा भोः स्थापय [ मा ] क्लेशमागमः ।
20 मा प्रार्थयाप्रार्थनीयां वायुं पाशेन बन्धय ॥ ३ ॥
M 17 न हि चामीकरं मूढ भवेद्भस्म कदाचन ।
प्रकाशे वान्धकारे किं विशेषो नोपलभ्यते ॥ ४ ॥
चण्डालयोनिजस्त्वं हि द्विजातिः पुनरप्यहम् ।
हीनः श्रेष्ठेन संबन्धं मूढ प्रार्थयसे कथम् ॥ ५ ॥
25 चण्डालयोनिभूतस्त्वमहमस्मि द्विजातिजः ।
न हि श्रेष्ठः प्रहीनेन संबन्धं कर्तुमिच्छति ।
श्रेष्ठाः श्रेष्ठैर्हि संबन्धं कुर्वन्तीह द्विजातयः ॥ ६ ॥
विद्यया ये तु संपन्नाः संशुद्धाश्चरणेन च ।
जात्या चैवानभिक्षिप्ता मन्त्रैः परमतां गताः ॥ ७ ॥
30 अध्यापका मन्त्रधरास्त्रिषु वेदेषु पारगाः ।
निघण्टकैटभान् वेदान् ब्राह्मणा ये ह्यधीयते ।
तैस्तादृशैर्हि संबन्धं कुर्वन्तीह द्विजातयः ॥ ८ ॥

न हि श्रेष्ठो हि हीनेन संबन्धं कर्तुमिच्छति।
प्रार्थयसेऽप्रार्थनीयां वायुं पाशेन बन्धितुम्।
यदस्माभिश्च संबन्धमिह त्वं कर्तुमिच्छसि॥ ९॥
जुगुप्सितः सर्वलोके कृपणः पुरुषाधमः।
गच्छ त्वं वृषल क्षिप्रं किमस्मानवमन्यसे॥ १०॥ 5
चण्डालाः सह चण्डालैः पुक्कसाः सह पुक्कसैः। M 18
कुर्वन्तीहैव संबन्धं जातिभिर्जातिरेव च॥ ११॥
ब्राह्मणा ब्राह्मणैः सार्धं क्षत्रियाः क्षत्रियैः सह।
सार्धं वैश्यास्तथा वैश्यैः शूद्राः शूद्रैस्तथा सह॥ १२॥
सदृशाः सदृशैः सार्धमावहन्ति परस्परम्। 10
न हि कुर्वन्ति चण्डालाः संबन्धं ब्राह्मणैः सह॥ १३॥
सर्वजातिविहीनोऽसि सर्ववर्णजुगुप्सितः।
कथं हीनश्च श्रेष्ठेन संबन्धं कर्तुमिच्छसि॥ १४॥

इदं पुनर्वचनं श्रुत्वा ब्राह्मणस्य पुष्करसारिणः त्रिशङ्कुर्मातङ्गराज इदमवोचत्—

यथा भस्मनि सौवर्णे विशेष उपलभ्यते। 15
ब्राह्मणे वान्यजातौ वा न विशेषोऽस्ति वै तथा॥ १५॥
यथा प्रकाशतमसोर्विशेष उपलभ्यते।
ब्राह्मणे वान्यजातौ वा न विशेषोऽस्ति वै तथा॥ १६॥
न हि ब्राह्मण आकाशान्मरुतो वा समुत्थितः।
भित्त्वा वा पृथिवीं जातो जातवेदा यथारणेः॥ १७॥ 20
ब्राह्मणा योनितो जाताश्चण्डाला अपि योनितः।
श्रेष्ठत्वे वृषलत्वे च किं वा पश्यसि कारणम्॥ १८॥
ब्राह्मणोऽपि मृतोत्सृष्टो जुगुप्स्योऽशुचिरुच्यते।
वर्णास्तथैव चाप्यन्ये का नु तत्र विशेषता॥ १९॥
यत्किंचित्पापकं कर्म किल्बिषं कलिरेव च। 25 M 19
सत्त्वानामुपघाताय ब्राह्मणैस्तत्प्रकाशितम्॥ २०॥
इति कर्माणि चैतानि प्रकाशितानि ब्राह्मणैः।
कर्मभिर्दारुणैश्चापि "पुण्योऽहं" ब्रुवते द्विजाः॥ २१॥
मांसं खादितुकामैस्तु ब्राह्मणैरुपकल्पितम्।
मन्त्रैर्हि प्रोक्षिताः सन्तः स्वर्गं गच्छन्त्यजैडकाः॥ २२॥ 30

यद्येष मार्गः स्वर्गाय कस्मान्न ब्राह्मणा ह्यमी।
आत्मानमथवा बन्धून्मन्त्रैः संप्रोक्षयन्ति वै ॥ २३ ॥

मातरं पितरं चैव भ्रातरं भगिनीं तथा।
पुत्र दुहितरं भार्यां द्विजा न प्रोक्षयन्त्यमी ॥ २४ ॥

5 मित्रं ज्ञातिं सखीं वापि ये वा विषयवासिनः।
प्रोक्षितास्तेऽपि वा मन्त्रैः सर्वे यास्यन्ति सद्गतिम् ॥ २५ ॥

सर्वे यज्ञैः समाहूता गमिष्यन्ति सतां गतिम्।
पशुभिः किं नु भो यष्टैरात्मानं किं न यक्ष्यसे ॥ २६ ॥

न प्रोक्षणैर्न मन्त्रैश्च स्वर्गं गच्छन्त्यजैडकाः।
10 न ह्येष मार्गः स्वर्गाय मिथ्याप्रोक्षणमुच्यते ॥ २७ ॥

ब्राह्मणै रौद्रचित्तैस्तु पर्यायो ह्येष चिन्तितः।
मांसं खादितुकामैस्तु प्रोक्षणं कल्पितं पशोः ॥ २८ ॥

अन्यच्चाहं प्रवक्ष्यामि ब्राह्मणैर्यत् प्रकल्पितम्।
पातका हि समाख्याता ब्राह्मणेषु चतुर्विधाः ॥ २९ ॥

M 20 15 सुवर्णचौर्यं मद्यं च गुरुदाराभिमर्दनम्।
ब्रह्मघ्नता च चत्वारः पातका ब्राह्मणेष्वमी ॥ ३० ॥

सुवर्णहरणं वर्ज्यं स्तेयमन्यन्न विद्यते।
सुवर्णं यो हरेद्विप्रः स तेनाऽब्राह्मणो भवेत् ॥ ३१ ॥

सुरापानं न पातव्यमन्नपानं यथेष्टतः।
20 सुरां तु यः पिबेद्विप्रः स तेनाब्राह्मणो भवेत् ॥ ३२ ॥

गुरुदारा न गन्तव्या अन्यदारा यथेष्टतः।
गुरुदारां तु यो गच्छेत्स तेनाब्राह्मणो भवेत् ॥ ३३ ॥

न हन्याद् ब्राह्मणं ह्येकं हन्यादन्याननेकशः।
हन्यात्तु ब्राह्मणं यो वै स तेनाब्राह्मणो भवेत् ॥ ३४ ॥

25 इत्येते पातका ह्युक्ता ब्राह्मणेषु चतुर्विधाः।
भवन्त्यब्राह्मणा येन ततोऽन्येऽपातकाः स्मृताः ॥ ३५ ॥

कृत्वा चतुर्णामेकैकं भवेदब्राह्मणस्तु सः।
लभते न च सामीचीं ब्राह्मणानां समागमे।
आसनं चोदकं चैव व्युत्थानं स न चार्हति ॥ ३६ ॥

30 तस्य निःसरणं दृष्टं ब्राह्मणैः पतितस्य तु।
व्रतं वै स समादाय पुनर्ब्राह्मणतां व्रजेत् ॥ ३७ ॥

असौ द्वादशवर्षाणि धारयित्वा खराजिनम् ।
खट्वाङ्गमुच्छ्रितं कृत्वा मृतशीर्षे च भोजनम् ॥ ३८ ॥
एतद्व्रतं समादाय निश्चयेन निरन्तरम् । M 21
पूर्णे द्वादशमे वर्षे पुनर्ब्राह्मणतां व्रजेत् ॥ ३९ ॥
इति निःसरणं दृष्टं ब्राह्मणैस्तु तपस्विभिः । 5
कुमार्गगामिभिर्मूढैरनिःसरणदर्शिभिः ॥ ४० ॥

तदिदं ब्राह्मण ते ब्रवीमि—संज्ञामात्रकमिदं लोकस्य यदिदमुच्यते ब्राह्मण इति वा क्षत्रिय इति वा वैश्य इति वा शूद्र इति वा । सर्वमिदमेकमेवेति विज्ञाय पुत्राय मे शार्दूलकर्णाय प्रकृतिं माणविकामनुप्रयच्छ भार्यार्थाय । यावन्तं कुलशुल्कं मन्यसे तावन्तमनुप्रदास्यामि ॥ इदं च खलु पुनर्वचनं श्रुत्वा त्रिशङ्कोर्मातङ्गराजस्य ब्राह्मणः पुष्करसारी अभिषक्तः 10 कुपितश्चण्डीभूतोऽनात्तमनाः कोपं च द्वेषं च तत्प्रत्ययं जनयित्वा ललाटे त्रिशिखां भ्रूकुटिं कृत्वा M 22 कण्ठं धमयित्वा अक्षिणी परिवर्त्य नकुलपिङ्गलां दृष्टिमुत्पाद्य त्रिशङ्कुं मातङ्गराजमिदमवोचत्—

असमीक्ष्यैतत्त्वया हि कृता संज्ञेयमीदृशी ।
एकैव जातिर्लोकेऽस्मिन् सामान्या न पृथग्विधा ॥ ४१ ॥
कथं श्वपाकजातीयो ब्राह्मणं वेदपारगम् । 15
निहीनयोनिजो भूत्वा विमर्दितुमिहेच्छसि ॥ ४२ ॥

राजानः खलु वृषल प्रति[ वि ]भागज्ञा भवन्ति । तद्यथा देशधर्मे वा नगरधर्मे वा ग्रामधर्मे वा निगमधर्मे वा शुल्कधर्मे वा आवाहधर्मे वा विवाहधर्मे वा पूर्वकर्मसु वा । चत्वार इमे वृषल वर्णाः। यदुत ब्राह्मणः क्षत्रियो वैश्यः शूद्र इति । तेषां विवाहधर्मेषु चतस्रो भार्या ब्राह्मणस्य भवन्ति । तद्यथा ब्राह्मणी क्षत्रिया वैश्या शूद्री चेति । तिस्रः क्षत्रियस्य 20 भार्या भवन्ति । क्षत्रिया वैश्या शूद्री चेति । वैश्यस्य द्वे भार्ये भवतः । वैश्या शूद्री चेति । शूद्रस्य त्वेका भार्या भवति शूद्री एव । एवं ब्राह्मणस्य वृषल चत्वारः पुत्रा भवन्ति । तद्यथा ब्राह्मणः क्षत्रियो वैश्यः शूद्रश्चेति । क्षत्रियस्य त्रयः पुत्राः, क्षत्रियो वैश्यः शूद्र इति । वैश्यस्य द्वौ पुत्रौ, वैश्यः शूद्र इति । शूद्रस्य त्वेक एव पुत्रो भवति यदुत शूद्र एव । ते ब्राह्मणाः पुनर्वृषल ब्रह्मणः पुत्राः । औरसा मुखतो जाताः । उरस्तो बाहुतः क्षत्रियाः । 25 नाभितो वैश्याः । पद्भ्यां शूद्राः । ब्रह्मणायं खलु वृषल लोकः सर्वभूतानि निर्मितानि ।

तस्य ज्येष्ठा वयं पुत्राः क्षत्रियास्तदनन्तरम् । M 23
वैश्यास्तृतीयका वर्णाः शूद्रनाम्ना चतुर्थकः ॥ ४३ ॥ इति ॥

स त्वं वृषल चतुर्थेऽपि वर्णे न संदृश्यसे । अहं चाग्रे वर्णे श्रेष्ठे वर्णे परमे वर्णे प्रवरे वर्णे । परमार्थं च संयोगमाकाङ्क्षसि । प्रणश्य त्वं वृषल क्षिप्रम् । मा चास्माकमवमंस्थाः ॥ 30

इदं पुनर्वचनं श्रुत्वा ब्राह्मणस्य पुष्करसारिणस्त्रिशङ्कुर्मातङ्गराज इदमवोचत्—इदमत्र ब्राह्मण शृणु यद् ब्रवीमि । ब्रह्मणायं लोकः, सर्वभूतानि निर्मितानि ।

तस्य ज्येष्ठा वयं पुत्राः क्षत्रियास्तदनन्तरम्।
वैश्यास्तृतीयका वर्णाः शूद्रनाम्ना चतुर्थकः ॥ ४४ ॥ इति ॥

सपादजङ्घाः सनखाः समांसाः
सपार्श्वपृष्ठाश्च नरा भवन्ति।
5 एकांशतो नास्ति यतो विशेषो
वर्णाश्च चत्वार इतो न सन्ति ॥ ४५ ॥
अथो विशेषः प्रवरोऽस्ति कश्चि-
त्तद् ब्रूहि यच्चानुमतं यथा ते।
अथो विशेषः प्रवरो हि नास्ति
10 वर्णाश्च चत्वार इतो न सन्ति ॥ ४६ ॥
M 24 यथा हि दारका बालाः क्रीडमाना महापथे।
पांशुपुञ्जानि संपिण्ड्य स्वयं नामानि कुर्वते ॥ ४७ ॥
इदं क्षीरमिदं दधि इदं मांसमिदं घृतम्।
न च बालस्य वचनात्पांशवोऽन्नं भवन्ति हि ॥ ४८ ॥
15 वर्णास्तथैव चत्वारो यथा ब्राह्मण भाषसे।
पांशुपुञ्जाभिधानेन योगोऽ[ यः को ]प्येष न विद्यते ॥ ४९ ॥
न केशेन न कर्णाभ्यां न शीर्षेण न चक्षुषा।
न मुखेन न नासया न ग्रीवया न बाहुना ॥ ५० ॥
नोरसाप्यथ पार्श्वाभ्यां न पृष्ठेनोदरेण च।
20 नोरुभ्यामथ जङ्घाभ्यां पाणिपादनखेन च ॥ ५१ ॥
न स्वरेण न वर्णेन न सर्वांशैर्न मैथुनैः।
नानाविशेषः सर्वेषु मनुष्येषु हि विद्यते ॥ ५२ ॥
यथा हि जातिष्वन्यासु लिङ्गं योनिः पृथक् पृथक्।
सामान्यं कारणं तत्र किं वा जातिषु मन्यसे ॥ ५३ ॥
25 सशीर्षकाश्चाथ नरास्थियुक्ताः
सचर्मकाः सेन्द्रियसोदराश्च।
एकांशतो नास्ति यतो विशेषो
वर्णा न युक्ताश्चतुरोऽभिधातुम् ॥ ५४ ॥
M 25 दोषो ह्ययं चात्र भवेदयुक्तो
30 यद्यत्त्वया चाभिहितं निदाने।
श्रुत्वा तु मत्तः प्रतिपद्य सौम्य
यच्चात्र मन्ये शृणु चोद्यमानम् ॥ ५५ ॥

यच्चात्र युक्तं विषमं समं वा
तत्ते प्रवक्ष्यामि नियुज्यमानः।
दोषो हि यश्चापि भवेदयुक्तो
वक्ष्यामि ते ह्युत्तरतोत्तरं च।
श्रुत्वा तु मत्तः प्रतिपद्य सौम्य 5
कर्माधिपत्यप्रभवा मनुष्याः॥ ५६॥

अनुमानमपि ते ब्राह्मण यदि प्रमाणम्, तत्र यद् ब्रवीषि—ब्रह्मा एक इति तस्मात्प्रजा अपि एकजात्या एव। वयमप्येकजात्या भवामः। यच्च ब्रवीषि—ब्रह्मणायं लोकः सर्वभूतानि च निर्मितानीति। सचेत्ते ब्राह्मण इदं प्रमाणं, तदिदं ते ब्राह्मण अयुक्तं यद् ब्रवीषि चत्वारो वर्णाः—ब्राह्मणाः क्षत्रिया वैश्या शूद्राश्चेति। अपि तु ब्राह्मण मिथ्या मम वचो भवेत्, यदि ब्राह्मण संवादेन मनुष्यजातेर्नानाकरणं प्रज्ञायते। यदुत शीर्षतो वा मुखतो वा कर्णतो 10 वा नासिकातो वा भ्रूतो वा रूपतो वा संस्थानतो वा वर्णतो वा आकारतो वा योनितो M 26 वा आहारतो वा संभवतो वा नानाकरणं प्रज्ञायते॥

तद्यथापि भोः पुष्करसारिन् गवाश्वगर्दभोष्ट्रमृगपक्ष्यजैडकानामण्डजजरायुजसंस्वेद-जौपपादुकानां नानाकरणं प्रज्ञायते। यदुत पादतोऽपि मुखतोऽपि वर्णतोऽपि संस्थानतोऽपि आहारतोऽपि योनिसंभवतोऽपि नानाकरणं प्रज्ञायते। न चैवं तेषां चतुर्णां वर्णानां 15 नानाकरणं प्रज्ञायते। तत्तस्मात्सर्वमिदमेकमिति॥

अपि च ब्राह्मण अमीषां फल्गुवृक्षाणामाम्रातकजम्बुखर्जूरपनसदालावनतिन्दुकमृद्वीक-बीजपूरककपित्थाक्षोडनारिकेलतिनिशकरञ्जादीनां नानाकरणं प्रज्ञायते। यदुत मूलतश्च स्कन्धतश्च त्वग्भागतश्च सारतश्च पत्रतश्च पुष्पतश्च फलतश्च नानाकरणं प्रज्ञायते। न चैवं M 27 चतुर्णां वर्णानां नानाकरणं प्रज्ञायते॥ 20

तद्यथा ब्राह्मण अमीषां स्थलजानां वृक्षाणां सारतमालनक्तमालकर्णिकारसप्तपर्णशिरीष-कोविदारस्यन्दनचन्दनशिंशपैरण्डखदिरादीनां नानाकरणं प्रज्ञायते। यदुत मूलतश्च स्कन्धतश्च त्वग्भागतश्च गुल्मतश्च सारतश्च पत्रतश्च पुष्पतश्च फलतश्च विशेष उपलभ्यते। न चैवं चतुर्णां वर्णानां नानाकरणं प्रज्ञायते॥

तद्यथा भोः पुष्करसारिन्, अमीषां क्षीरवृक्षाणामुदुम्बरप्लक्षाश्वत्थन्यग्रोधवल्गुकेत्येवमादीनां 25 नानाकरणं प्रज्ञायते। यदुत मूलतश्च स्कन्धतश्च त्वग्भागतश्च सारतश्च पत्रतश्च पुष्पतश्च फलतश्च नानाकरणं प्रज्ञायते। न त्वेव चतुर्णां वर्णानां नानाकरणं प्रज्ञायते॥

तद्यथा पुष्करसारिन्, अमीषामपि फलभैषज्यवृक्षाणामामलकीहरीतकीविभीतकीफर-सकादीनामन्यासामपि विविधानामोषधीनां ग्रामजानां पार्वतीयानां तृणवनस्पतीनां नानाकरणं प्रज्ञायते। यदुत मूलतश्च स्कन्धतश्च गुल्मतश्च सारतश्च पत्रतश्च पुष्पतश्च फलतश्च 30 नानाकरणं प्रज्ञायते। न त्वेव चतुर्णां वर्णानां नानाकरणं प्रज्ञायते॥

तद्यथा स्थलजानां पुष्पवृक्षाणामतिमुक्तकचम्पकपाटलानां सुमनावार्षिकाधनुष्कारिकादीनां नानाकरणं प्रज्ञायते । यदुत रूपतोऽपि वर्णतोऽपि गन्धतोऽपि संस्थानतोऽपि नानाकरणं प्रज्ञायते । न त्वेव चतुर्णां वर्णानां नानाकरणं प्रज्ञायते ॥

तद्यथा ब्राह्मण अमीषामपि जलजानां पुष्पाणां पद्मोत्पलसौगन्धिकमृदुगन्धिकादीनां 5 नानाकरणं प्रज्ञायते । यदुत रूपतश्च गन्धतश्च संस्थानतश्च वर्णतश्च नानाकरणं प्रज्ञायते । न त्वेव चतुर्णां वर्णानां नानाकरणं प्रज्ञायते । तद्यथा पुष्करसारिन् अमी ब्राह्मणा इति क्षत्रिया इति वैश्या इति शूद्रा इति । तस्मादेकमेवेदं सर्वमिति ॥

अप्यन्यत्ते प्रवक्ष्यामि ब्राह्मणैः कल्पितं यथा ।
शिरः सतारं गगनमाकाशमुदरं तथा ॥ ५७ ॥

10 पर्वताश्चाप्युभावूरू पादौ च धरणीतलम् ।
सूर्याचन्द्रमसौ नेत्रे रोम तृणवनस्पती ॥ ५८ ॥

अश्रूण्यवोचद्वर्षास्य नद्यः प्रस्रावमेव च ।
सागराश्चाप्यमेध्यं वै एवं ब्रह्मा प्रजापतिः ॥ ५९ ॥

M 28 परीक्षस्व त्वं ब्रह्मणः स्वलक्षणम् । यस्माद् ब्रह्मणो ब्राह्मणा उत्पन्नाः, तस्मात्क्षत्रिया 15 अपि वैश्या अपि शूद्रा अप्युत्पन्नाः ॥

एवं प्रसूतिर्यदि तत्त्वतः स्या-
त्ततो हि स्याद्वर्णकृतो विशेषः ।
यदि ब्राह्मणा ब्रह्मलोकं व्रजेयु-
स्त्रयश्च वर्णा न व्रजेयुः स्वर्गम् ।
20 एवं भवेद्वर्णकृतो विशेषो
न चेन्न चत्वारो भवन्ति वर्णाः ॥ ६० ॥

यस्माद्धि वर्णश्चतुर्थ एवं
प्रयाति स्वर्गं स्वकृतेन कर्मणा ।
यतस्तपश्चार्षमिह प्रशस्तं
25 तस्माद् द्विजातेर्न विशेषणं स्याद् ॥ ६१ ॥

यदि ब्राह्मणः स्यादिहैक एव
द्विजिह्वश्चतुःश्रवणस्तथैव ।
चतुर्विषाणो बहुपाद् द्विशीर्ष
एवं कृते वर्णकृतो विशेषः ॥ ६२ ॥

M 29

रागैश्च नाम परघातनं च
एवंप्रकारं च विहेठनं च।
सत्त्वस्य वै कर्मणो ध्वंसनं च
एतान्यकल्याणकृतानि विप्रैः ॥ ६३ ॥

युद्धं विवादं कलहान्यभीक्ष्णं 5
गोप्रोक्षणं चिन्तितं ब्राह्मणैर्हि।
अथर्वणः कर्मणा त्रासनं च
एतानि मन्त्राणि कृतानि विप्रैः ॥ ६४ ॥

पापेच्छता बहुजनवञ्चनं च
शाठ्यं च धौर्त्यं च तथैव कल्पम्। 10
एवं परेषामहितं विचिन्त्य
कदा च ते स्वर्गमितो व्रजेयुः ॥ ६५ ॥

ये ब्राह्मणा उग्रतपा विनीता
व्रतेन शीलेन सदा ह्युपेताः।
अहिंसका ये दमसंयमे रता- 15
स्ते ब्राह्मणा ब्रह्मपुरं व्रजन्ति ॥ ६६ ॥

सहास्थिमांसः सनखः सचर्मा
दुःखं सुखं मूत्रपुरीषमेकम्।
पञ्चेन्द्रियैर्नास्ति यतो विशेष-
स्तस्मान्न वै वर्णचतुष्क एषः ॥ ६७ ॥ 20

तद्यथा नाम ब्राह्मण कस्यचित्पुरुषस्य चत्वारः पुत्रा भवेयुः। स तेषां नामानि कुर्यात्—नन्दक इति वा जीवक इति वा अशोक इति वा शतायुरिति वा। इष्टाश्च पुनर्भो एतस्य पुरुषस्य पुत्रा भवेयुः। तत्र यो नन्दकः स नन्देत्। यो जीवकः स जीवेत्। योऽशोकः स न शोचेत्। यः शतायुः स वर्षशतं जीवेत् ॥ (M 30)

नामतः पुनर्ब्राह्मण तेषां नानाकरणं प्रज्ञायते न जातितः। तत्कस्य हेतोः? इह 25 खलु पुनर्ब्राह्मण पितृतः पुत्रो जायते। तस्माच्च तत्रेदं व्याकरणं भवति—

माता भस्त्रा पितुः पुत्रो येन जातः स एव सः।
यद्येवं भो विजानासि न ते (पुत्रा) परभूताः क्वचित् ॥ ६८ ॥

परीक्षस्व ब्राह्मण सम्यगेव—कोऽत्र ब्राह्मणः क्षत्रियो वैश्यः शूद्र इति।

सर्वे काणाश्च कुब्जाश्च सर्वेऽपस्मारिणोऽपि वा। 30
किलासिनः कुष्ठिनश्च गौराः कृष्णाः पृथक् पृथक् ॥ ६९ ॥

प्रतिष्ठिताः ॥

समम‍ज्ञानखत्वचपार्श्वोदरवक्त्राः प्रजा हि ताः स्वकर्मणा ।
एवं गते ब्राह्मण नैव भवति विशेषः को जातिकृतो विशेषः ।
M 31 यस्मान्न जातेर्विशेषणोऽस्ति तस्मान्न वै वर्णचतुष्क एव ॥ ६९ ॥ (अ)

5 तस्मात्ते ब्राह्मण ब्रवीमि—संज्ञामात्रमिदं लोकस्य यदिदं ब्राह्मण इति वा क्षत्रिय इति वा वैश्य इति वा शूद्र इति वा चण्डाल इति वा । एकमिदं सर्वमिदमेकम् । पुत्राय मे शार्दूलकर्णाय प्रकृतिं दुहितरमुत्सृज भार्यार्थाय । यावन्तं कुलशुल्कं मन्यसे तावन्तमनुप्रदास्यामि॥

इदं पुनर्वचनं श्रुत्वा त्रिशङ्कोर्मातङ्गराजस्य ब्राह्मणः पुष्करसारी इदमवोचत्—किं पुनर्भवता ऋग्वेदोऽधीतः, यजुर्वेदोऽधीतः, सामवेदोऽधीतः, अथर्ववेदोऽधीतः, आयुर्वेदोऽधीतः, 10 कल्पाध्यायोऽपि, अध्यात्ममपि, मृगचक्रं वा, नक्षत्रगणो वा, तिथिक्रमगणो वा त्वयाधीतः ? कर्मचक्रं वा त्वयाधिगतम् ? अथवा अङ्गविद्या वा वस्त्रविद्या वा शिवाविद्या शकुनिविद्या वा त्वयाधीता ? अथवा राहुचरितं वा शुक्रचरितं वा ग्रहचरितं वा त्वयाधीतम् ? अथवा लोकायतं भवता भाष्यप्रवचनं वा पक्षाध्यायो वा न्यायो वा त्वयाधीतः ?

M 32

एवमुक्ते त्रिशङ्कुर्मातङ्गराजः पुष्करसारिणं ब्राह्मणमेतदवोचत्—एतच्च मया ब्राह्मणा 15 अधीतं भूयश्चोत्तरम् । यदपि ते ब्राह्मण एवं स्यात्—अहमस्मि मन्त्रेषु पारं प्राप्त इति, तत्र ते ब्राह्मण सह धर्मेणानुमानं प्रवक्ष्यामि । न खल्वेवं ब्राह्मण प्राथमकल्पिकानां सत्त्वानामेतदभवत्—यदुत ब्राह्मण इति वा क्षत्रिय इति वा वैश्य इति वा शूद्र इति वा । एकमिदं सर्वमिदमेकम् ॥

अथ ब्राह्मण सत्त्वानामसदृशानां चोभयथा सदृशानां ततोऽन्ये सत्त्वाः शालिक्षेत्राणि 20 केलायन्ति गोपायन्ति वापयन्ति वा, तेऽमी क्षत्रिया इति संज्ञा उदपादि । अथात्र ब्राह्मण तदन्यतमानां सत्त्वानामेतदभवत्—परिग्रहो रोगः परिग्रहो गण्डः परिग्रहः शल्यः । यन्नु वयं स्वपरिग्रहमपहाय अरण्यायतनं गत्वा तृणकाष्ठशाखापर्णपलाशकानुपसंहृत्य तृणकुटिकां वा पर्णकुटिकां वा कृत्वा प्रविश्य ध्यायेम इति । अथ ते सत्त्वास्तं स्वकं परिग्रहमपहाया अरण्यायतनं गत्वा तृणकाष्ठशाखापत्रपर्णपलाशकैस्तृणकुटिं वा पर्णकुटिकां वा कृत्वा तत्रैव 25 प्रविश्य ध्यायन्ति स्म । ते तत्र सायमासनहेतोः प्रान्तवाटिकां प्रातरशनहेतोश्च ग्रामं पिण्डाय प्रविशन्ति स्म ॥

अथ तेषां ग्रामवासिनां सत्वानामेतदभवत्—दुष्करकारका बत भोः सत्त्वा ये स्वकं परिग्रहमुत्सृज्य ग्रामनिगमजनपदेभ्यो बहिर्निर्गताः । तेषां बहिर्मनस्का ब्राह्मणा इति संज्ञा उदपादि । ते च पुनर्ग्रामवासिनः सत्त्वास्तानतीव सत्कुर्वन्ति स्म । तेषां च दातव्यं 30 मन्यन्ते स्म ॥

अथ तेषामेव सत्त्वानामन्यतमे सत्त्वास्तानि ध्यानान्यसंभावयन्तो ग्रामेष्ववतीर्य मन्त्रपदान् स्वाध्यायन्ति स्म। तांस्ते ग्रामनिवासिन आहुः—न केवलमिमे सत्त्वाः, इमेऽध्यापकाः, तेषामध्यापका इति लोके संज्ञा उदपादि। अयं हेतुरयं प्रत्ययो ब्राह्मणानां लोके प्रादुर्भावाय ॥ M 33

अथान्यतमे सत्त्वा विवेककालप्रतिसंयुक्तान् कर्मान्तान् विविधानर्थप्रतिसंयुक्तान् कुर्वन्ति स्म। तेषां वैश्या इति संज्ञा उदपादि ॥ 5

अथान्यतमे सत्त्वाः क्षुद्रेण कर्मणा जीविकां कल्पयन्ति स्म। तेषां शूद्रा इति संज्ञा उदपादि ॥

भूतपूर्वं ब्राह्मण अन्यतमः सत्त्वो वधूमादाय रथमारुह्य अन्यतमस्मिन्नरण्यप्रदेशे गतः। तत्र च रथो भग्नः। तस्मान्मातङ्गम [ मा त्वं गमः ] इति संज्ञा उदपादि ॥ 10

क्षेत्रं कर्षन्ति ये तेषां कर्षका इति संज्ञा प्रवृत्ता ॥

भाष्येण च पर्षदं रञ्जयति धर्मेण शीलव्रतसमाचारेण सम्यक्, तस्य राजा इति संज्ञाभूत् ॥

ततोऽन्ये सत्त्वा वाणिज्यया जीविकां कल्पयन्ति, तेषां वणिज इति संज्ञा उदपादि ॥ M 34

ततश्चान्ये सत्त्वाः प्रव्रजन्ति स्म। प्रव्रजित्वा परान् जयन्ति क्लेशान् जयन्तीति तेषां प्रव्रजिता इति लोके संज्ञा उदपादि ॥ 15

अपि तु ब्राह्मण एकैव संज्ञा लोक उदपादि। तां ते प्रवक्ष्यामि—

ब्रह्मा लोकेंऽस्मिन् इमान् वेदान् वाचयति। ब्रह्मा देवानां परमतापसः। इन्द्रस्य कौशिकस्य वेदान् वाचयति स्म। इन्द्रः कौशिकोऽरणेमि-गौतमं वेदान् वाचयति। अरणेमि-गौतमः श्वेतकेतुं वेदान् वाचयति। श्वेतकेतुः शुकं पण्डितं वेदान् वाचयति। शुकः पण्डितश्च वेदान् विभजति स्म। तद्यथा पुष्यो बह्वृचानां पङ्क्तिश्छन्दोगानामेकविंशतिरध्वर्यवः। क्रतुरथर्वणिकानाम्। ब ृचानामेते ब्राह्मणाः। सर्वे ते व्याख्यायन्ते। पुष्य एको भूत्वा पञ्चविंशतिधा भिन्नः। तद्यथा शुक्ला वल्कला माण्डव्या इति। तत्र दश शुक्लाः। अष्टौ वल्कलाः। सप्त माण्डव्याः। इतीयं ब्राह्मण बह्वृचानां शाखा। पुष्य एको भूत्वा पञ्चविंशतिधा भिन्नः ॥ M 35 20 25

अनुमानमपि ब्राह्मण प्रमाणं छन्दोगानाम्। ब्राह्मणाः सर्व एते छन्दोगाः। पङ्क्तिरित्येका भूत्वा साशीतिसहस्रधा भिन्ना। तद्यथा शीलवल्का अरणेमिका लौकाक्षाः कौथुमा ब्रह्मसमा महासमा महायागिकाः सात्यमुग्राः समन्तवेदाः ॥

तत्र शीलवल्का विंशतिः। अरणेमिका विंशतिः। लौकाक्षाश्चत्वारिंशत्। कौथुमानां शतम्। ब्रह्मसमानां शतम्। महासमानां पञ्चशतानि। महायागिकानां शतम्। सात्यमुग्राणां शतम्। समन्तवेदानां शतम्। इतीयं ब्राह्मण छन्दोगानां शाखा। पङ्क्तिरित्येका भूत्वा साशीतिसहस्रधा भिन्ना ॥ M 36 30

अनुमानमपि प्रमाणमध्वर्यूणाम्। एते ब्राह्मणा एकविंशत्यध्वर्यवो भूत्वा एकोत्तरशतधा भिन्नाः। तद्यथा कठाः कणिमा वाजसनेयिनो जातुकर्णाः प्रोष्ठपदा ऋषयः। तत्र दश कठाः। दश कणिमाः। एकादश वाजसनेयिनः। त्रयोदश जातुकर्णाः। षोडश षोष्ठपदाः। एकचत्वारिंशदृषयः। इतीयं ब्राह्मण अध्वर्यूणां शाखा। एकविंशत्यध्वर्यवो 5 भूत्वा एकोत्तरशतधा भिन्नाः॥

अनुमानमपि ब्राह्मण प्रमाणमथर्वणिकानाम्। एते मन्त्राः सर्वे तेऽथर्वणिकाः। ऋतुरेको भूत्वा द्विधा भिन्नः। द्विधा भूत्वा चतुर्धा भिन्नः। चतुर्धा भूत्वा अष्टधा भिन्नः। अष्टधा भूत्वा [ नव- ]दशधा भिन्नः। इतीयं ब्राह्मण अथर्वणिकानां शाखा। ऋतुरेकः षोडशोत्तरद्वादशशतधा भिन्नः॥

10 अनुमानमपि ब्राह्मण प्रमाणं प्रतीत्य एतानि द्वादशभेदशतानि षोडशभेदाश्च ये M 37 ब्राह्मणैः पौराणैः सम्यग् दृष्टाः। छन्दसि वा व्याकरणे वा लोकायते वा पदमीमांसायां वा। न चैषामूहापोहः प्रज्ञायते। यदुत एकजात्यो नामेति विदित्वा बन्धुर्भवितुमर्हति। तत्ते ब्राह्मण ब्रवीमि—संज्ञामात्रकमेतल्लोकस्य यदुत ब्राह्मण इति वा क्षत्रिय इति वा वैश्य इति वा शूद्र इति वा। एकमिदं सर्वमिदमेकम्। पुत्राय मे शार्दूलकर्णाय प्रकृतिं दुहितरमुत्सृज 15 भार्यार्थाय। यावन्तं कुलशुल्कं मन्यसे तावन्तमनुप्रदास्यामि॥

इदं पुनर्वचनं श्रुत्वा त्रिशङ्कोर्मातङ्गराजस्य ब्राह्मणः पुष्करसारी तूष्णींभूतो मद्गुभूतः स्रस्तस्कन्धोऽधोमुखो निष्प्रतिभः प्रध्यानपरोऽस्थात्॥

ददर्श त्रिशङ्कुर्मातङ्गराजो ब्राह्मणं पुष्करसारिणं तूष्णींभूतं मद्गुभूतं स्रस्तस्कन्धमधोमुखं निष्प्रतिभं प्रध्यानपरं स्थितम्। दृष्ट्वा च पुनरिदमब्रवीत्—यदपि ते ब्राह्मण एवं 20 स्यादसदृशेन सह संबन्धो भविष्यतीति। न पुनस्त्वया ब्राह्मण एवं द्रष्टव्यम्। तत्कस्य M 38 हेतोः? ये प्रमाणश्रुतिशीलप्रज्ञादयो गुणा अग्र्या लोकस्य ते मम पुत्रस्य शार्दूलकर्णस्य संविद्यन्ते। यदपि ते ब्राह्मण एवं स्यात्—ये वाजपेयं यज्ञं यजन्ति, अश्वमेधं पुरुषमेधं शाम्यप्राशं निरर्गडं यज्ञं यजन्ति, सर्वे ते कायस्य भेदात्सुगतौ स्वर्गलोके देवेषूपपद्यन्त इति। न पुनर्ब्राह्मण त्वयैवं द्रष्टव्यम्। तत्कस्य हेतोः? वाजपेयं ब्राह्मण यज्ञं यजमाना 25 अश्वमेधं पुरुषमेधं शाम्यप्राशं निरर्गडं यज्ञं च यजमाना बहुधा मन्त्रान् प्रवर्तयन्तः प्राणिहिंसां च प्रवर्तयन्ति। तस्मात्ते ब्राह्मण ब्रवीमि—न ह्येष मार्गः स्वर्गाय। अहं ते ब्राह्मण मार्गं स्वर्गाय व्याख्यामि। तच्छृणु—

शीलं रक्षेत मेधावी प्रार्थयानः सुखत्रयम्।
प्रशंसां वित्तलाभं च प्रेत्य स्वर्गे च मोदनम्॥ ७०॥

30 यैर्ब्राह्मण इतः पूर्वं वाजपेयो यज्ञ इष्टः, यैरश्वमेधो यैः पुरुषमेधो यैः शाम्यप्राशो यैर्निरर्गडो यज्ञ इष्टः, परिगृहीतस्तैर्निरर्गलं च कामैः कामः। इतो नाकः पर्येष्यते। ये

ब्राह्मण इतः पश्चाद्वाजपेयं यज्ञं यक्ष्यन्ति, येऽश्वमेधं पुरुषमेधं ये शाम्यप्राशं निरर्गडं यज्ञं यक्ष्यन्ति, ते निरर्थकं महाविघातं संयोक्ष्यन्ति। तस्मात्ते ब्राह्मण ब्रवीमि–एहि त्वं मया सार्धं संबन्धं योजयस्व। तत्कस्य हेतोः? धर्मेण हि चण्डाला अजुगुप्सनीया भवन्ति। अपि च।

श्रद्धा शीलं तपस्त्यागः श्रुतिर्ज्ञानं दयैव च। 5 M 39
दर्शनं सर्ववेदानां स्वर्गव्रतपदानि वै॥ ७१॥

प्रमाणमष्टप्रकारं स्वर्गाय। तदेभिरष्टाभिः प्रकारैः स्वर्गगमनमिष्यते। ये प्रायेण जानन्ति विशेषेण खल्वप्यनेकैर्विविधैर्यज्ञैः। अष्टौ चेमा ब्राह्मण निर्दिष्टा मातृतुल्या भगिन्यो लोके प्रवर्तन्ते। तद्यथा–अदितिर्देवानां माता। दितिर्दानवानाम्। मनुर्मानवानाम्। सुरभिः सौरभेयानाम्। विनता सुपर्णानाम्। कद्रुर्नागानाम्। पृथिवी भूतानां माता 10 सर्वबीजानाम्। मरुतां महामहः। महाकाश्यपं मनसा विदन्ति ऋषयः॥

अथ खलु भोः पुष्करसारिन् ब्राह्मणानां सप्त गोत्राणि व्याख्यास्यामि, तानि श्रूयन्ताम्– तद्यथा गौतमा वात्स्याः कौत्साः कौशिकाः काश्यपा वासिष्ठा माण्डव्या इत्येतानि ब्राह्मण सप्त गोत्राणि। एषामेकैकं गोत्रं सप्तधा भिन्नम्। अत्र ये गौतमास्ते कौथुमास्ते गर्गास्ते भारद्वाजास्त आर्ष्टिषेणास्ते वैखानसास्ते वज्रपादाः। तत्र ये वात्स्यास्त आत्रेयास्ते मैत्रेयास्ते 15 M 40 भार्गवास्ते सावर्ण्यास्ते सलीलास्ते बहुजाताः। तत्र ये कौत्सास्ते मौद्गल्यायनास्ते गौणायनास्ते लाङ्गलास्ते लग्नास्ते दण्डलग्नास्ते सोमभुवाः[वः]। तत्र ये कौशिकास्ते कात्यायनास्ते दर्भ-कात्यायनास्ते वल्कलिनस्ते पक्षिणस्ते लौकाक्षास्ते लोहितायनाः (लोहित्यायनाः)। तत्र ये काश्यपास्ते मण्डनास्त इष्टास्ते शौण्डायनास्ते रोचनेयास्तेऽनपेक्षास्तेऽग्निवेश्याः। तत्र ये वासिष्ठास्ते जातुकर्ण्यास्ते धान्यायनास्ते पाराशरास्ते व्याघ्रनखास्त आण्डायनास्त औप- 20 मन्यवाः। तत्र ये माण्डव्यास्ते भाण्डायनास्ते धौम्रायणास्ते कात्यायनास्ते खल्ववाहनास्ते सुगन्धारायणास्ते कापिष्ठलायनाः। इत्येतानि ब्राह्मण एवमेकोनपञ्चाशद्गोत्राणि ब्राह्मणैः पौराणैः सम्यग् दृष्टानि छन्दसि व्याकरणे पदमीमांसायाम्। अन्यानि च गोत्राणि विस्तरतो मया वाचितानि। तानि अन्यैर्न ज्ञायन्ते॥

यदुतैकत्वमिति विदित्वा भवान् बन्धुर्भवितुमर्हति। तस्मात्ते ब्राह्मण ब्रवीमि सामान्यं 25 संज्ञामात्रकमिदं लोकस्य यदुत ब्राह्मण इति वा क्षत्रिय इति वा वैश्य इति वा शूद्र इति वा। एकमिदं सर्वमिदमेकम्। पुत्राय मे शार्दूलकर्णाय प्रकृतिं दुहितरमुत्सृज भार्यार्थाय। यावन्तं कुलशुल्कं मन्यसे तावन्तमनुप्रदास्यामि॥

इदं पुनर्वचनं श्रुत्वा त्रिशङ्कोर्मातङ्गराजस्य ब्राह्मणः पुष्करसारी तूष्णींभूतो मद्गुभूतः M 41 स्रस्तस्कन्धोऽधोमुखो निष्प्रतिभः प्रध्यानपरः स्थितोऽभूत्। अद्राक्षीत् त्रिशङ्कुर्मातङ्गराजः 30

पुष्करसारिणं ब्राह्मणं तूष्णींभूतं मद्गुभूतं स्रस्तस्कन्धमधोमुखं निष्प्रतिभं प्रध्यानपरं स्थितम्। दृष्ट्वा च पुनरिदमवोचत्—

यादृशं वाप्यते बीजं तादृशं लभ्यते फलम्।
प्रजापतेर्हि चैकत्वे निर्विशेषो भवत्यतः॥ ७२॥

5 न चेन्द्रियाणां नानात्वं क्रियाभेदश्च दृश्यते।
ब्राह्मणे वान्यजातौ वा नैषां किंचिद्विशिष्यते॥ ७३॥

न ह्यात्मनः समुत्कर्षः श्रेष्ठत्वमिह युज्यते।
शुक्रशोणितसंभूतं योनितो ह्युभयं समम्॥ ७४॥

चातुर्वर्ण्यं प्रवक्ष्यामि पशुधर्मकथां तव।
10 भवेत्ते भगिनी भार्या नैतद् ब्राह्मण युज्यते॥ ७५॥

यदि तावदयं लोको ब्रह्मणा जनितः स्वयम्।
ब्राह्मणी ब्राह्मणस्वसा क्षत्रिया क्षत्रियस्वसा॥ ७६॥

अथ वैश्यस्य वैश्या वै शूद्रा शूद्रस्य वा पुनः।
न भार्या भगिनी युक्ता ब्रह्मणा जनिता यदि॥ ७७॥

15 न सत्त्वा ब्रह्मणो जाताः क्लेशजाः कर्मजास्त्वमी।
नीचैश्चोच्चैश्च दृश्यन्ते सत्त्वा नानाश्रयाः पृथक्॥ ७८॥

तेषां च जातिसामान्याद् ब्राह्मणे क्षत्रिये तथा।
अथ वैश्ये च शूद्रे च समं ज्ञानं प्रवर्तते॥ ७९॥

M 42 ऋग्वेदोऽथ यजुर्वेदः सामवेदोऽप्यथर्वणम्।
20 इतिहासो निघण्टश्च कुतश्छन्दो निरर्थकम्॥ ८०॥

अस्माकमप्यध्ययने मैत्री विद्या तथा शिखी।
संक्रामणी प्रक्रामणी स्तम्भनी कामरूपिणी॥ ८१॥

मनोजवा च गान्धारी घोरी विद्या वशंकरी।
काकवाणी च मन्त्रं च इन्द्रजालं च भञ्जनी॥ ८२॥

25 अस्माकमासीत्पुरुषा विद्यास्वाख्यातपण्डिताः।
मणिपुष्पाश्च ऋषयो भास्वराश्च महर्षयः॥ ८३॥

संप्राप्ता देवताऋद्धिं किं चिकित्ससि विद्यया।
अशिक्षिताश्च चण्डाला ब्राह्मणा वेदपारगाः॥ ८४॥

कपिंजलाद्यो जनितो मन्त्राणां पारमिं गतः।
30 न ह्यसौ ब्राह्मणीपुत्रः किं वा ब्राह्मण मन्यसे॥ ८५॥

निषाद्यजनयत्काली पुत्रं द्वैपायनं मुनिम्। M 43
उग्रं तेजस्विनं भीष्मं पञ्चाभिज्ञं महातपम्।
न ह्यसौ ब्राह्मणीपुत्रः किं वा ब्राह्मण वक्ष्यसि ॥ ८६॥
क्षत्रिया रेणुका नाम जज्ञे रामं महामुनिम्।
पण्डितं च विनीतं च सर्वशास्त्रविशारदम्। 5
न ह्यसौ ब्राह्मणीपुत्रः किं वा ब्राह्मण वक्ष्यसि ॥ ८७॥
ये च ते मनुजा आसन् तेजसा तपसा युताः।
पण्डिताश्च विनीताश्च लोके च ऋषिसंमताः।
न हि ते ब्राह्मणीपुत्राः किं वा ब्राह्मण वक्ष्यसि ॥ ८८॥
संज्ञा कृतेयं लोकस्य ब्राह्मणाः क्षत्रियास्तथा। 10
वैश्याश्चैव तथा शूद्राः संज्ञेयं संप्रकीर्तिता ॥ ८९॥

तस्मात्ते ब्राह्मण ब्रवीमि संज्ञामात्रकमिदं लोकस्य यदुत ब्राह्मण इति वा क्षत्रिय इति वा वैश्य इति वा शूद्र इति वा। एकमिदं सर्वमिदमेकम्। पुत्राय मे शार्दूलकर्णाय प्रकृतिं M 44 दुहितरमनुप्रयच्छ भार्यार्थाय। यावन्तं कुलशुल्कं मन्यसे तावन्तमनुप्रदास्यामि॥

इदं च पुनर्वचनं श्रुत्वा त्रिशङ्कोर्मातङ्गराजस्य ब्राह्मणः पुष्करसारी त्रिशङ्कुं मातङ्ग- 15 राजमिदमवोचत्—किंगोत्रो भवान्? आह—आत्रेयगोत्रोऽस्मि। किंपूर्वः? आह—आत्रेयः। किंचरणः? आह—कालेय—मैत्रायणीयः। कति प्रवराः? आह—त्रयः प्रवराः। तद्यथा वात्स्याः कौत्स्या भरद्वाजाश्च। के भवन्तः सब्रह्मचारिणः? छन्दोगाः। कति छन्दोगानां भेदाः? षट्। ते कतमे? आह—तद्यथा। कौथुमाः। चारायणीयाः। लाङ्गलाः। सौवर्चसाः। कापिंजलेयाः। आर्ष्टिषेणा इति॥ 20

किं भवतो मातृजं गोत्रम्? आह—पाराशरीयम्। पठतु भवान् सावित्रीम्। कथं भवति? कत्यक्षरा सावित्री? कतिगण्डा? कतिपदा?

चतुर्विंशत्यक्षरा सावित्री। त्रिगण्डा। अष्टाक्षरपदा। उच्चारयतु भवान् सावित्रीम्। अथ खलु भोः पुष्करसारिन्, सोत्पत्तिकां सावित्रीं प्रवक्ष्यामि। तच्छ्रूयताम्। कथयतु भवान्।

भूतपूर्वं ब्राह्मण अतीतेऽध्वनि वसुर्नाम ऋषिर्बभूव। पञ्चाभिज्ञ उग्रतेजा महानुभावो 25 ध्यानानां लाभी। तेन तत्र तक्षकदुहिता कपिला नाम आसादिता भार्यार्थम्। स तत्र संरक्तचित्तस्तया कन्यया सार्धं मैथुनमगच्छत्। स ऋषिर्ऋद्ध्या भ्रष्टो ध्यानेभ्यो वञ्चितः। M 45 ऋद्धिपरिहीनः स विप्रतिसारी आत्मनो दुश्चरितं विगर्हमाणस्तस्यां वेलायां सावित्रीं भाषते स्म। तद्यथा—

ॐ भूर्भुवः स्वः। तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि। धियो यो नः प्रचोदयात्। 30

इति हि ब्राह्मण अज्ञानशोधनार्थमिममेव मन्त्रं स ब्राह्मणो दिवारात्रं जपति स्म। इयं ब्राह्मणानां सावित्री। पूर्वजः प्रजापतिः—

जटिलस्तापसो भूत्वा गहनं वनमाश्रितः।
गम्भीरावभासे तत्र ह्यात्मारामस्तपोरतः॥ ९० ॥

देवस्य श्रेष्ठकं भोजनमुपनाम्योपविष्ट इमं मन्त्रमजपत्। इयं क्षत्रियाणां सावित्री।
M 46 ॐ चित्रं हि वैश्यकन्यका। अथ सा कन्या अर्थतः प्रवीणा। इयं वैश्यानां सावित्री।
5 ॐ अतपः सुतपः। जीवेम शरदां शतम्। पश्येम शरदां शतम्। इयं शूद्राणां सावित्री।
ॐ भूर्भुवः स्वः।

कामा हि लोके परमाः प्रजानां
क्लेशप्रहाणे भूता अन्तरायाः।
तस्माद्भवन्तः प्रजहन्तु कामान्
10 ततोऽतुलं प्राप्स्यथ ब्रह्मलोकम्॥ ९१ ॥

इतीयं ब्राह्मण ब्रह्मणा सहापतिना सावित्री भाषिता, पूर्वकैश्च सम्यक्संबुद्धैरभ्यनुमोदिता॥

पठ भोस्त्रिशङ्को नक्षत्रवंशम्। अथ किम्? भोः कथयतु भवान्। श्रूयताम्। भोः पुष्करसारिन्, नक्षत्रवंशं कथयिष्यामि। तद्यथा—

15 कृत्तिका रोहिणी मृगशिरा आर्द्रा पुनर्वसुः पुष्यः आश्लेषा मघा पूर्वफल्गुनी उत्तरफल्गुनी हस्ता चित्रा स्वाती विशाखा अनुराधा ज्येष्ठा मूला पूर्वाषाढा उत्तराषाढा अभिजित् श्रवणा धनिष्ठा शतभिषा पूर्वभाद्रपदा उत्तरभाद्रपदा रेवती अश्विनी भरणी। इत्येतानि भोः पुष्करसारिन् अष्टाविंशतिनक्षत्राणि॥

कतितारकाणि कतिसंस्थानानि कतिमुहूर्तयोगानि किमाहाराणि किंदैवतानि
20 किंगोत्राणि?

M 47 कृत्तिका भोः पुष्करसारिन् नक्षत्रं षट्तारं क्षुरसंस्थानं त्रिंशन्मुहूर्तयोगं दध्याहारमग्निदैवतं वैश्यायनीयं गोत्रेण। रोहिणीनक्षत्रं पञ्चतारकं शकटाकृतिसंस्थानं पञ्चचत्वारिंशन्मुहूर्तयोगं मृगमांसाहारं प्रजापतिदैवतं भारद्वाजं गोत्रेण। मृगशिरानक्षत्रं त्रितारं मृगशीर्षसंस्थानं त्रिंशन्मुहूर्तयोगं फलमूलाहारं सोमदैवतं मृगायणीयं गोत्रेण। आर्द्रानक्षत्र-
25 मेकतारं तिलकसंस्थानं पञ्चदशमुहूर्तयोगं सर्पिर्मण्डाहारं सूर्यदैवतं हारीतायनीयं गोत्रेण। पुनर्वसुनक्षत्रं द्वितारं पदसंस्थानं पञ्चचत्वारिंशन्मुहूर्तयोगं मध्याहारं अदितिदैवतं वासिष्ठं गोत्रेण। पुष्यनक्षत्रं त्रितारं वर्धमानसंस्थानं त्रिंशन्मुहूर्तयोगं मधुमण्डाहारं बृहस्पतिदैवतम् औपमन्यवीयं गोत्रेण। आश्लेषानक्षत्रमेकतारं तिलकसंस्थानं पञ्चदशमुहूर्तयोगं पायसभोजनं सर्पदैवतं मैत्रायणीयं गोत्रेण। इतीमानि भोः पुष्करसारिन् सप्त नक्षत्राणि
30 पूर्वद्वारकाणि॥

M 48 मघानक्षत्रं पञ्चतारं नदीकुब्जसंस्थानं त्रिंशन्मुहूर्तयोगं तिलकृसराहारं पितृदैवतं

पिङ्गलायनीयं गोत्रेण। पूर्वफल्गुनीनक्षत्रं द्वितारं पदकसंस्थानं त्रिंशन्मुहूर्तयोगं बिल्वभोजनं भवदैवतं गौतमीयं गोत्रेण। उत्तरफल्गुनीनक्षत्रं द्वितारं पदकसंस्थानं पञ्चचत्वारिंशन्मुहूर्तयोगं गोधूममत्स्याहारमर्यमादैवतं कौशिकं गोत्रेण। हस्तनक्षत्रं पञ्चतारं हस्तसंस्थानं त्रिंशन्मुहूर्तयोगं श्यामाकभोजनं सूर्यदैवतं काश्यपं गोत्रेण। चित्रानक्षत्रमेकतारं तिलकसंस्थानं त्रिंशन्मुहूर्तयोगं मुद्गक्रसरघृतपूपाहारं त्वष्टृदैवतं कात्यायनीयं गोत्रेण। स्वातीनक्षत्रमेकतारं तिलकसंस्थानं पञ्चदशमुहूर्तयोगं मुद्गक्रसरफलाहारं वायुदैवतं कात्यायनीयं गोत्रेण। विशाखानक्षत्रं द्वितारं विषाणसंस्थानं पञ्चचत्वारिंशन्मुहूर्तयोगं तिलपुष्पाहारमिन्द्राग्निदैवतं शाखायनीयं गोत्रेण। इत्येतानि भोः पुष्करसारिन् सप्तनक्षत्राणि दक्षिणद्वारकाणि॥ 5 M 49

अनुराधानक्षत्रं चतुस्तारं रत्नावलीसंस्थानं त्रिंशन्मुहूर्तयोगं सुरामांसाहारं मित्रदैवतमालम्बायनीयं गोत्रेण। ज्येष्ठानक्षत्रं त्रितारं यवमध्यसंस्थानं पञ्चदशमुहूर्तयोगं शालियवागूभोजनमिन्द्रदैवतं दीर्घकात्यायनीयं गोत्रेण। मूलनक्षत्रं सप्ततारं वृश्चिकसस्थानं त्रिंशन्मुहूर्तयोगं मूलफलाहारं नैर्ऋतिदैवतं कात्यायनीयं गोत्रेण। पूर्वाषाढानक्षत्रं चतुस्तारं गोविक्रमसंस्थानं त्रिंशन्मुहूर्तयोगं न्यग्रोधकषायाहारं तोयदैवतं दर्भकात्यायनीयं गोत्रेण। उत्तराषाढानक्षत्रं चतुस्तारं गजविक्रमसंस्थानं पञ्चचत्वारिंशन्मुहूर्तयोगं मधुलाजाहारं विश्वदैवतं मौद्गलायनीयं गोत्रेण। अभिजिन्नक्षत्रं त्रितारं गोशीर्षसंस्थानं षण्मुहूर्तयोगं वाय्वाहारं ब्रह्मदैवतं ब्रह्मावतीयं गोत्रेण। श्रवणानक्षत्रं त्रितारं यवमध्यसंस्थानं त्रिंशन्मुहूर्तयोगं पक्षिमांसाहारं विष्णुदैवतं कात्यायनीयं गोत्रेण। इत्येतानि भोः पुष्करसारिन् सप्त नक्षत्राणि पश्चिमद्वारकाणि॥ 10 15 M 50

धनिष्ठानक्षत्रं चतुस्तारं शकुनसंस्थानं त्रिंशन्मुहूर्तयोगं कुलत्थपूपाहारं वसुदैवतं कौण्डिन्यायनीयं गोत्रेण। शतभिषानक्षत्रमेकतारं तिलकसंस्थानं पञ्चदशमुहूर्तयोगं यवागुभोजनं वरुणदैवतं ताण्ड्यायनीयं गोत्रेण। पूर्वभाद्रपदानक्षत्रं द्वितारं पदकसंस्थानं त्रिंशन्मुहूर्तयोगं मांसरुधिराहारमहिर्बुध्न्यदैवतं जातूकर्ण्यं गोत्रेण। उत्तरभाद्रपदानक्षत्रं द्वितारं पदकसंस्थानं पञ्चचत्वारिंशन्मुहूर्तयोगं मांसाहारं अर्यमादैवतं ध्यानद्राह्यायणीयं गोत्रेण। रेवतीनक्षत्रमेकतारं तिलकसंस्थानं त्रिंशन्मुहूर्तयोगं दध्याहारं पूषदैवतमष्टभगिनीयं गोत्रेण। अश्विनीनक्षत्रं द्वितारं तुरगशीर्षसंस्थानं त्रिंशन्मुहूर्तयोगं मधुपायसभोजनं गन्धर्वदैवतं मैत्रायणीयं गोत्रेण। भरणीनक्षत्रं त्रितारं भगसंस्थानं त्रिंशन्मुहूर्तयोगं तिलतण्डुलाहारं यमदैवतं भार्गवीयं गोत्रेण। इत्येतानि भोः पुष्करसारिन् सप्त नक्षत्राणि उत्तरद्वारकाणि॥ 20 M 51 25

अमीषां भोः पुष्करसारिन् अष्टाविंशतीनां नक्षत्राणां षण्नक्षत्राणि पञ्चचत्वारिंशन्मुहूर्तयोगानि। तद्यथा—रोहिणी पुनर्वसु उत्तरफल्गुनी विशाखा उत्तराषाढा उत्तरभाद्रपदा चेति। पञ्चनक्षत्राणि पञ्चदशमुहूर्तयोगानि। तद्यथा—आर्द्रा आश्लेषा स्वाती ज्येष्ठा शतभिषा चेति। एकोऽभिजित् षण्मुहूर्तयोगः। अवशिष्टानि त्रिंशन्मुहूर्तयोगानि॥ 30

अमीषां भोः पुष्करसारिन् सप्तानां नक्षत्राणां पूर्वद्वारिकाणां कृत्तिका प्रथमा नामा, आश्लेषा पश्चिमा नाम । अमीषां सप्तानां नक्षत्राणां दक्षिणद्वारिकाणां मघा प्रथमा नाम, विशाखा पश्चिमा नाम । अमीषां पश्चिमद्वारिकाणां सप्तानां नक्षत्राणामनुराधा प्रथमा नाम, श्रवणा पश्चिमा नाम । अमीषां सप्तानां नक्षत्राणामुत्तरद्वारिकाणां धनिष्ठा प्रथमा नाम, भरणी 5 पश्चिमा नाम ॥

M 52 अमीषां भोः पुष्करसारिन् अष्टाविंशतीनां नक्षत्राणां सप्त बलानि । कतमानि सप्त ? यदुत त्रीणि पूर्वाणि विशाखानुराधा पुनर्वसुः स्वातिश्च । त्रीणि दारुणानि । आर्द्रा आश्लेषा भरणी चेति । चत्वारि संमाननीयानि । यदुत त्रीणि उत्तराणि रोहिणी चेति । पञ्च मृदुकानि । श्रवणा धनिष्ठा शतभिषा ज्येष्ठा मूला इति । पञ्च धारणीयानि । हस्ता चित्रा आश्लेषा 10 मघा अभिजिच्चेति । चत्वारि क्षिप्रकरणीयानि । यदुत कृत्तिका मृगशिरा पुष्या अश्विनी चेति ॥

अमीषां भोः पुष्करसारिन् अष्टाविंशतीनां नक्षत्राणां त्रयो योगा भवन्ति—ऋषभानुसारी योगः । वत्सानुसारी योगः । युगनद्धो योगः । तत्र नक्षत्रं यदि पुरस्ताद्गच्छति चन्द्रश्च पृष्ठतः, अयमुच्यते ऋषभानुसारी योग इति । यदुत चन्द्रः पुरस्ताद् गच्छति नक्षत्रं च पृष्ठतः, तदा भवति वत्सानुसारी योगः । यदि पुनश्चन्द्रो नक्षत्रं चोभौ समौ युगपद् 15 गच्छतः, तदायमुच्यते युगनद्धो योग इति ॥

M 53 अथ खलु भोः पुष्करसारिन् ग्रहान् प्रवक्ष्यामि । तच्छ्रूयताम् । तद्यथा शुक्रो बृहस्पतिः शनैश्चरो बुधोऽङ्गारकः सूर्यस्ताराधिपतिश्चेति ॥

एवं विपरिवर्तमाने लोके नक्षत्रेषु प्रविभक्तेषु कथं रात्रिदिवसानां ह्रासो वृद्धिश्च भवति ? तदुच्यते । हेमन्तानां द्वितीये मासि रोहिण्यामष्टभ्यां द्वादशमुहूर्तो दिवसो भवति । 20 अष्टादशमुहूर्ता रात्रिः । ग्रीष्माणां पश्चिमे मासे रोहिण्यामष्टम्यामष्टादशमुहूर्तो दिवसो भवति । द्वादशमुहूर्ता रात्रिः । वर्षाणां पश्चिमे मासे रोहिण्यामष्टम्यां चतुर्दशमुहूर्तो दिवसो भवति । षोडशमुहूर्ता रात्रिः ॥

M 54 किं भोस्त्रिशङ्को रात्रिदिवसानां प्रस्थानम् ? दिवसानुदिवसम् । किं पक्षस्य प्रस्थानम् ? प्रतिपद् । किं संवत्सरस्य प्रस्थानम् ? पौषः । किमृतूनां प्रस्थानम् ? प्रावृट् ॥

25 किं भोस्त्रिशङ्को क्षणस्य परिमाणम् ? किं लवस्य ? किं मुहूर्तस्य ? तद्यथा भोः पुष्करसारिन् स्त्रिया नातिदीर्घह्रस्वः कर्तिन्याः सूत्रोद्यामः । एवं दीर्घस्तत्क्षणः । विंशत्यधिकं तत्क्षणशतमेकः क्षणः । षष्टिक्षणा एको लवः । त्रिंशल्लवा एको मुहूर्तः । एतेन क्रमसंबन्धेन त्रिंशन्मुहूर्तमेकं रात्रिदिवसमनुमीयते । तेषां मुहूर्तानामिमानि नामानि भवन्ति—

आदित्य उदयति षण्णवतिपौरुषायां छायायां चतुरोजा नाम मुहूर्तो भवति । षष्टि- 30 पौरुषायां छायायां श्वेतो नाम मुहूर्तो भवति । द्वादशपौरुषायां छायायां समृद्धो नाम मुहूर्तो भवति । षट्पौरुषायां छायायां शरपथो नाम मुहूर्तो भवति । पञ्चपौरुषायां छायाया—

मतिसमृद्धो नाम मुहूर्तो भवति। चतुःपौरुषायां छायायामुद्गतो नाम मुहूर्तो भवति। त्रिपौरुषायां छायायां सुमुखो नाम मुहूर्तो भवति। स्थिते मध्याह्ने वज्रको नाम मुहूर्तो भवति। परिवृत्ते मध्याह्ने त्रिपुरुषायां छायायां रोहितो नाम मुहूर्तो भवति। चतुःपौरुषायां छायायां बलो नाम मुहूर्तो भवति। पञ्चपौरुषायां छायायां विजयो नाम मुहूर्तः। षट्पौरुषायां छायायां सर्वरसो नाम मुहूर्तः। द्वादशपौरुषायां छायायां वसुर्नाम मुहूर्तः। षष्टिपौरुषायां 5 छायायां सुन्दरो नाम मुहूर्तः। अवतरमाण आदित्ये षण्णवतिपौरुषायां छायायां परभयो नाम मुहूर्तो भवति। इत्येतानि दिवसस्य मुहूर्तानि॥ M 55

अथ खलु भोः पुष्करसारिन् रात्र्या मुहूर्तानि व्याख्यास्यामि। अस्तंगत आदित्ये रौद्रो नाम मुहूर्तः। ततस्तारावचरो नाम मुहूर्तः। संयमो नाम मुहूर्तः। सांप्रैयको नाम मुहूर्तः। अनन्तो नाम मुहूर्तः। गर्दभो नाम मुहूर्तः। राक्षसो नाम मुहूर्तः। स्थितेऽर्धरात्रे- 10 ऽवयवो नाम मुहूर्तः। अतिक्रान्तेऽर्धरात्रे ब्रह्मा नाम मुहूर्तः। दितिर्नाम मुहूर्तः। अर्को नाम मुहूर्तः। विधमनो नाम मुहूर्तः। आग्नेयो नाम मुहूर्तः। आतपाग्निर्नाम मुहूर्तः। अभिजिन्नाम मुहूर्तः। इत्येतानि रात्रेर्मुहूर्तनामानि। इति भोः पुष्करसारिन् इमानि त्रिंशन्मुहूर्तानि यैरहोरात्रं प्रज्ञायते॥ M 56

तत्क्षणः क्षणो लवो मुहूर्तः। तत्र त्रिंशतितमो भागो मुहूर्तस्य लवः। षष्टितमो 15 भागो लवस्य क्षणः। विंशत्युत्तरभागशतं क्षणस्य तत्क्षणः। तद्यथा स्त्रिया नातिदीर्घह्रस्वः कर्तिन्याः सूत्रोद्यामः। एवं दीर्घस्तत्क्षणः। विंशत्युत्तरक्षणशतं तत्क्षणस्यैकः क्षणः। षष्टिः क्षणा एको लवः। त्रिंशल्लवा एको मुहूर्तः। एतेन क्रमयोगेन त्रिंशन्मुहूर्तमेकमहोरात्रम्। त्रिंशदहोरात्राण्येको मासः। द्वादश मासाः संवत्सरः। चतुरोजाः श्वेतः समृद्धः शरपथोऽति- समृद्ध उद्गतः सुमुखो वज्रको रोहितो बलो विजयः सर्वरसो वसुः सुन्दरः परभयः। रौद्र- 20 स्तारावचरः संयमः सांप्रैयकोऽनन्तो गर्दभो राक्षसोऽवयवो ब्रह्मा दितिरर्को विधमनो आग्नेय आतपाग्निरभिजित्। इतीमानि मुहूर्तानां नामानि॥ M 57

कालोत्पत्तिमपि ते ब्राह्मण वक्ष्यामि, शृणु—

कालस्य किं प्रमाणमिति तदुच्यते। द्वावक्षिनिमेषावेको लवः। अष्टौ लवा एका काष्ठा। षोडश काष्ठा एका कला। कलानां त्रिंशदेका नाडिका। तत्र द्वे नाडिके एको मुहूर्तः॥ 25

नाडिकायाः पुनः किं प्रमाणम्? तदुच्यते—

द्रोणं सलिलस्यैकम्। तद्धरणतो द्वे पलशते भवतः। नालिकाछिद्रस्य किं प्रमाणम्? सुवर्णमात्रम्। उपरि चतुरङ्गुला सुवर्णशलाका कर्तव्या। वृत्तपरिमण्डला समन्ताच्चतुरस्रा आयता। यदा चैवं शीर्येत तत् तोयं घटस्य तदैका नाडिका। एतेन नाडिकाप्रमाणेन विभक्ते द्वे नाडिके एको मुहूर्तः। एतेन भो ब्राह्मण त्रिंशन्मुहूर्ताः, यै रात्रिदिवसा अनुमीयन्त इति॥ 30 M 58

ततः षोडश निमेषा एका काष्ठा। षोडश काष्ठा एका कला। षष्टिः कला एको मुहूर्तः। त्रिंशन्मुहूर्ता एकमहोरात्रम्। त्रिंशदहोरात्राण्येको मासः। द्वादश मासाः संवत्सरः॥

एतेन पुनरक्षिनिमेषेण षोडशकोट्योऽष्टपञ्चाशच्च शतसहस्राणि अष्टाशीतिसहस्राणि स एवं मापितः। तच्च ब्राह्मण कालोत्पत्तिर्व्याख्याता॥

5 शृणु ब्राह्मण क्रोशयोजनानामुत्पत्तिम्। सप्त परमाणव एकोऽणुर्भवति। सप्ताणवः सर्वसूक्ष्मं दृश्यते। तदेकं वातायनरजः। वातायनरजांसि सप्त, शशकरजः। सप्त शशकरजांसि एडकरजः। सप्त एडकरजांसि एकं गोरजः। सप्त गोरजांसि एका यूका। सप्त यूका एका लिक्षा। सप्त लिक्षा एको यवः। सप्त यवा एकाङ्गुलिः। द्वादशाङ्गुल्यो वितस्तिः। द्वे वितस्ती एको हस्तः। चत्वारो हस्ता एकं धनुः। धनुःसहस्रमेकः क्रोशः। चत्वारः क्रोशा 10 एको मागधयोजनः। योजनस्य प्रमाणं पिण्डितम्। परमाणूनां कोटिशतसहस्राणि चतुर्विंशतिश्चैकोनत्रिंशत्कोटिसहस्राणि द्वादश च शतसहस्राणि। एवं मापितं योजनमिति॥ M 59

शृणु ब्राह्मण सुवर्णस्य परिमाणोत्पत्तिम्। तत्कथयतु भवान्—

द्वादश यवा माषकः। षोडश माषका एकः कर्षः। सुवर्णस्य परिमाणं पिण्डितमिति। द्वे कोटी पञ्चविंशतिश्च सहस्राणि पञ्चशतान्यष्टौ च परमाणवः। एवं मापिता ब्राह्मण 15 सुवर्णस्य परिमाणोत्पत्तिः॥

शृणु ब्राह्मण पलप्रमाणम्। चतुःषष्टिमाषकाः पलं मागधकम्। मागधकया तुल्या पलस्य परिमाणं पिण्डितम्। परमाणूनामष्टकोटयः सप्तचत्वारिंशच्च शतसहस्राणि सप्त च सहस्राणि द्वे शते अशीतिश्च परमाणवः। एवं मापितं ब्राह्मण पलस्य परिमाणमिति।

शृणु ब्राह्मण रसपरिमाणस्योत्पत्तिम्। चतुर्विंशतिपलानि मागधकः प्रस्थः। तत् 20 रसपरिमाणम्। मागधकया तुल्या प्रस्थस्य परिमाणं पिण्डितम्। द्वे कोटिशते तिस्रश्च कोटय एकोनत्रिंशच्च शतसहस्राणि चतुःसप्ततिसहस्राणि सप्त च शतानि विंशतिश्च परमाणवः। एवं मापिता ब्राह्मण रसमानस्योत्पत्तिरिति॥ M 60

शृणु ब्राह्मण धान्यपरिमाणस्योत्पत्तिम्। एकोनत्रिंशतिपलान्येककर्षेणोनानि मागधः प्रस्थः। मापितं धान्यपरिमाणम्। मागधकया तुल्या प्रस्थस्य परिमाणं पिण्डितम्। कोटि- 25 शतमष्टपञ्चाशच्च कोटयो द्विरशीतिश्च शतसहस्राणि एकषष्टिश्च सहस्राणि पञ्चशतानि त्रिंशच्च परमाणवः। एवं मापितं ब्राह्मण धान्यस्य परिमाणमिति॥

पठ भोस्त्रिशङ्को नक्षत्रव्याकरणं नामाध्यायम्। अथ खलु भो ब्राह्मण नक्षत्रव्याकरणं नामाध्यायं व्याख्यास्यामि तच्छ्रूयताम्। कथयतु भवान्—

M 61 कृत्तिकासु जातो मानवो यशस्वी भवति। रोहिण्यां जातः सुभगो भवति 30 भोगवांश्च। मृगशिरसि जातो युद्धार्थी भवति। आर्द्रायां जात उत्सोऽन्नपानानां भवति। पुनर्वसौ जातः कृषिमान् भवति गोरक्षश्च। पुष्ये जातः शीलवान् भवति। आश्लेषायां

जातः कामुको भवति । मघायां जातो मतिमान् भवति, महात्मा च । पूर्वफल्गुन्यां जातोऽल्पायुष्को भवति । उत्तरफल्गुन्यां जात उपवासशीलो भवति, स्वर्गपरायणश्च । हस्ते जातश्चौरो भवति । चित्रायां जातो नृत्यगीतकुशलो भवति, आभरणविधिज्ञश्च । स्वात्यां जातो गणको भवति, गणकमहामात्रो वा । विशाखायां जातो राजभटो भवति । अनुराधायां जातो वाणिजको भवति सार्थिकः । ज्येष्ठायां जातोऽल्पायुष्को भवति, अल्पभोगश्च । मूले जातः पुत्रवान् भवति, यशस्वी च । पूर्वाषाढायां जातो योगाचारो भवति । उत्तराषाढायां जातो भक्तेश्वरः कुलीनश्च भवति । अभिजिति जातः कीर्तिमान् पुरुषो भवति । श्रवणे जातो राजपूजितो भवति । धनिष्ठायां जातो धनाढ्यो भवति । शतभिषायां जातो मूलिको भवति । पूर्वभाद्रपदायां जातश्चौरसेनापतिर्भवति । उत्तरभाद्रपदायां जातो गन्धिको भवति, गन्धर्वश्च । रेवत्यां जातो नाविको भवति । अश्विन्यां जातोऽश्ववाणिजको भवति । भरण्यां जातो वध्यघातको भवति । अयं भोः पुष्करसारिन् नक्षत्रव्याकरणो नाम ॥

पठ भोस्त्रिशङ्को नक्षत्रनिर्देशं नामाध्यायम् । अथ भोः पुष्करसारिन् नक्षत्रनिर्देशं नामाध्यायं व्याख्यास्यामि । तच्छ्रूयताम् । कथयतु भवान्—

कृत्तिकासु निविष्टं वै नगरं ज्वलति श्रिया ।
प्रभूतरत्नोज्ज्वलं चैव तन्नगरं विनिर्दिशेत् ॥ ९२ ॥
रोहिण्यां तु निविष्टं वै नगरं तद् विनिर्दिशेत् ।
धार्मिकोऽत्र जनो भूयात्प्रभूतधनसंचयः ।
विद्याप्रकृतिसंपन्नः स्वदाराभिरतोऽपि च ॥ ९३ ॥
मृगशीर्षे निविष्टं तु स्त्रीभिर्गोभिर्धनैस्तथा ।
माल्यभोगैश्च संकीर्णमद्भुतैश्च पुरस्कृतम् ॥ ९४ ॥
आर्द्रायां मत्स्यमांसानि भक्ष्यभोज्यधनानि च ।
भवन्ति क्रूरपुरुषा मूर्खप्रकृतयः पुरे ॥ ९५ ॥
पुनर्वसौ निविष्टे तु नगरं दीप्यते श्रिया ।
प्रभूतधनधान्यं च भूत्वा चापि विनश्यति ॥ ९६ ॥
श्रीमत्पुष्ये निविष्टे तु प्रजा दुष्टा प्रसीदति ।
युक्ताः श्रिया च धर्मिष्ठास्तथैव चिरजीविनः ॥ ९७ ॥
तेजस्विनश्च दीर्घायुर्धनधान्यरसान्विताः ।
वनस्पतिस्तथा क्षिप्रं पुष्येत्तत्र पुनः पुनः ॥ ९८ ॥
आश्लेषायां निविष्टे तु दुर्भगाः कलहप्रियाः ।
दुःशीला दुःखभाजश्च निवसन्ति नराधमाः ॥ ९९ ॥
मघायां च निविष्टे तु विद्यावन्तो महाधनाः ।
स्वदाराभिरता मर्त्या जायन्ते सुपराक्रमाः ॥ १०० ॥

M 64

फाल्गुन्यां तु स्त्रियो माल्यं भोजनाच्छादनं शुभम् ।
गन्धोपेतानि धान्यानि निविष्टे नगरे भवेत् ॥ १०१ ॥

उत्तरायां तु फाल्गुन्यां धान्यानि च धनानि च ।
मूर्खा जना जिताः स्त्रीभिर्निविष्टे नगरे भवेत् ॥ १०२ ॥

5 हस्ते च विनिविष्टे तु विद्यावन्तो महाधनाः ।
परस्परं च रुचितं शयनं नगरे भवेत् ॥ १०३ ॥

चित्रायां च निविष्टे तु स्त्रीजिताः सर्वमानवाः ।
श्रीमत्कान्तं च नगरं ज्वलन्तं तद्विनिर्दिशेत् ॥ १०४ ॥

स्वात्यां पुरे निविष्टे तु प्रभूतधनसंचयाः ।
10 लुब्धाः क्रूराश्च मूर्खाश्च प्रभूता नगरे भवेत् ॥ १०५ ॥

विशाखायां निविष्टं तु नगरं ज्वलति श्रिया ।
यायजूकजनाकीर्णं शस्त्रान्तं च विनिर्दिशेत् ॥ १०६ ॥

अनुराधानिविष्टे तु धर्मशीला जितेन्द्रियाः ।
स्वदारनिरताः पुण्या जपहोमपरायणाः ॥ १०७ ॥

M 65 15 ज्येष्ठायां संनिविष्टं तु बहुरत्नधनान्वितैः ।
सत्त्वैर्वेदविदैः पूर्णं शश्वत्समभिवर्धते ॥ १०८ ॥

मूलेन संनिविष्टं तु पुरं धान्यधनान्वितम् ।
दुःशीलजनसंकीर्णं पांसुना च विनश्यति ॥ १०९ ॥

पूर्वाषाढानिविष्टं तु पुरं स्याद्धनधान्यभाक् ।
20 लुब्धाः क्रूराश्च मूर्खाश्च निवसन्ति नराधमाः ॥ ११० ॥

निविष्टे तूत्तरायां च धनधान्यसमुच्चयः ।
विद्याप्रकृतिसंपन्नो जनश्च कलहप्रियः ॥ १११ ॥

अभिजिति निविष्टे तु नगरे तत्र मोदिताः ।
नराः सर्वे सदा हृष्टाः परस्परानुरागिणः ॥ ११२ ॥

25 श्रवणायां निविष्टं तु पुरं धान्यधनान्वितम् ।
अरोगिजनभूयिष्ठसहितं तद्विनिर्दिशेत् ॥ ११३ ॥

धनिष्ठायां निविष्टं तु स्त्रीजितं पुरमादिशेत् ।
प्रभूतवस्त्रमाल्यं च कामभोगविवर्जितम् ॥ ११४ ॥

पुरे शतभिषायुक्ते मूर्खशाठ्यप्रिया जनाः ।
30 स्त्रीषु पानेषु संसक्ताः सलिलेन विनश्यति ॥ ११५ ॥

M 66

पुरे प्रोष्ठपदाध्यक्षे नरास्तत्र सुखप्रियाः।
परोपतापिनो मूर्खा मानकामविवर्जिताः॥ ११६॥
उत्तरायां निविष्टे तु शश्वद्वृद्धिरनुत्तरा।
पूर्णं च धनधान्याभ्यां रत्नाढ्यं च विनिर्दिशेत्॥ ११७॥
पुरे निविष्टे रेवत्यां सुन्दरी जनता भवेत्। 5
खरोष्ट्रं चैव गावश्च प्रभूतधनधान्यता॥ ११८॥
अश्विन्यां विनिविष्टं तु नगरं शिवमादिशेत्।
अरोगिजनसंपूर्णं दर्शनीयजनाकुलम्॥ ११९॥
भरण्यां संनिविष्टे तु दुर्भगाः कलहप्रियाः।
दुःशीला दुःखभाजश्च वसन्ति पुरुषाधमाः॥ १२०॥ 10
पुराणि राष्ट्राणि तथा गृहाणि
नक्षत्रयोगं प्रसमीक्ष्य विद्वान्।
इष्टे प्रशस्ते च निवेशयेत्तु
पूर्वे च जन्मेऽधिगतं मयेदम्॥ १२१॥

अयं भोः पुष्करसारिन्नक्षत्रनिर्देशो नामाध्यायः॥ 15 M 67

अथ खलु भोः पुष्करसारिन् अष्टाविंशतीनां नक्षत्राणां स्थाननिर्देशं नामाध्यायं प्रवक्ष्यामि। तच्छ्रूयताम्। कथयतु भगवान्—

कृत्तिका भोः पुष्करसारिन् नक्षत्रं कलिङ्गमगधानाम्। रोहिणी सर्वप्रजायाः। मृगशिरा विदेहानां राजोपसेवकानां च। एवमार्द्रा क्षत्रियाणां ब्राह्मणानां च। पुनर्वसुः सौपर्णानाम्। पुष्यनक्षत्रं सर्वेषामवदातवसनानां राजपदसेवकानां च। आश्लेषा नागानां 20 हैमवतानां च। मघानक्षत्रं गौडिकानाम्। पूर्वफल्गुनी चौराणाम्। उत्तरफल्गुनी अवन्तीनाम्। हस्ता सौराष्ट्रिकाणाम्। चित्रा पक्षिणां द्विपदानाम्। स्वाती सर्वेषां प्रव्रज्यासमापन्नानाम्। विशाखा औदकानाम्। अनुराधा वाणिजकानां शाकटिकानां च। ज्येष्ठा दौवालिकानाम्। मूला पथिकानाम्। पूर्वाषाढा बाह्लीकानां च। उत्तराषाढा काम्बोजानाम्। M 68 अभिजित्सर्वेषां दक्षिणापथिकानां ताम्रपर्णिकानां च। श्रवणा घातकानां चौराणां च। धनिष्ठा 25 कुरुपाञ्चालानाम्। शतभिषा मौलिकानामाथर्वणिकानां च। पूर्वभाद्रपदा गन्धिकानां यवनकाम्बोजानां च। उत्तरभाद्रपदा गन्धर्वाणाम्। रेवती नाविकानां च। अश्विनी अश्ववाणिजानां च। भरणी भद्रपदकर्मणां भद्रकायकानां च॥ अयं भोः पुष्करसारिन् नक्षत्राणां स्थाननिर्देशव्याकरणो नामाध्यायः॥

पठ भोस्त्रिशङ्को ऋतुवष नामाध्यायम्। तदहं वक्ष्ये श्रूयताम्। कथयतु भगवान्— 30

कृत्तिकासु ग्रीष्माणां पश्चिमे मासे यद्यत्र देवः प्रवर्षति, चतुःषष्ट्याढकानि प्रवर्षति। वर्षो दशरात्रिकः। श्रवणायुक्तप्रोष्ठपदायाम् अग्रोदको वर्षारात्रो भवति। पश्चाद्वर्षं संजनयति। हेमन्ते ग्रीष्मे त्रीणि चात्र भयप्रग्रहाणि भवन्ति। अग्निभयं शस्त्रभयं चोदकभयं च भवति। उक्तं कृत्तिकासु॥

M 69

5 रोहिण्यां ग्रीष्माणां पश्चिमे मासे यद्यत्र देवः प्रवर्षति, एकविंशत्याढकानि प्रवर्षति। तत्र निम्नानि कृषिकर्तव्यानि। स्थलानि परिवर्जयितव्यानि। एष च वर्षारात्रः सारोपरोधः सस्यं च संपादयति। द्वौ चात्र रोगौ प्रबलौ भवतः। कुक्षिरोगश्चक्षूरोगश्च। चौरबहुलाश्चात्र दिशो भवन्ति। उक्तं च रोहिण्याम्॥

मृगशीर्षे ग्रीष्माणां पश्चिमे मासे यद्यत्र देवः प्रवर्षति, चतुःषष्ट्याढकानि प्रवर्षति। 10 सारोपरोधो वर्षारात्रः। पश्चाद्वर्षं संजनयति। निक्षिप्तशस्त्राश्चात्र राजानो भवन्ति। क्षेमिणः सुनीतिकाश्च दिशो भवन्ति। मुदिताश्चात्र जनपदा भवन्ति। उक्तं मृगशिरसि॥

M 70

आर्द्रायां ग्रीष्माणां पश्चिमे मासे यद्यत्र देवः प्रवर्षति, अष्टादशाढकानि प्रवर्षति। तत्र निम्नानि कृषिकर्तव्यानि। स्थलानि परिवर्जयितव्यानि। निधयश्च रक्षयितव्याः। चौरबहुलाश्चात्र दिशो भवन्ति। निक्षिप्तशस्त्राश्च राजानो भवन्ति। त्रयश्चात्र रोगाः प्रबला 15 भवन्ति—ज्वरः श्वासो गलग्रहश्च। बालानां दारकदारिकाणां च मरणं भवति। इत्युक्तमार्द्रायाम्॥

पुनर्वसौ ग्रीष्माणां पश्चिमे मासे यद्यत्र देवः प्रवर्षति, नवत्याढकानि प्रवर्षति। महामेघानुत्पादयति। आषाढायां प्रविष्टायां मृदूनि प्रवर्षति। अनन्तरं च निरन्तरेण प्रवर्षति। निक्षिप्तशस्त्राश्चात्र राजानो भवन्ति। उक्तं पुनर्वसौ॥

M 71

पुष्ये ग्रीष्माणां पश्चिमे मासे यद्यत्र देवः प्रवर्षति, द्वात्रिंशदाढकानि प्रवर्षति। अत्र 20 निम्नानि कृषिकर्तव्यानि। स्थलानि परिवर्जयितव्यानि। व्यक्तं प्रधानवर्षाणि भवन्ति। सस्यं च निष्पादयति। ब्राह्मणक्षत्रियाणां च विरोधो भवति। दंष्ट्रिणश्चात्र प्रबला भवन्ति। तत्र त्रयो रोगाश्च भवन्ति—गण्डाः पिटकाः पामानि च। इत्युक्तं पुष्ये॥

आश्लेषायां ग्रीष्माणां पश्चिमे मासे यद्यत्र देवः प्रवर्षति, एकविंशत्याढकानि प्रवर्षति। तत्र निम्नानि कृषिकर्तव्यानि। स्थलानि परिवर्जयितव्यानि। विषमाश्च वायवो वान्ति। 25 संविग्नाश्चात्र ज्ञानिनो राजानश्च भवन्ति। एषो वर्षः सर्वसस्यानि संपादयति। जायापतिकानां राजामात्यानां च विरोधो भवति। उक्तमाश्लेषायाम्॥

M 72

मघायां ग्रीष्माणां पश्चिमे मासे यद्यत्र देवः प्रवर्षति चतुःषष्ट्याढकानि प्रवर्षति। एषो वर्षः सर्वसस्यानि संपादयति। मृगपक्षिपशुमनुष्याणां चात्र गर्भा विनश्यन्ति। जनमरणं चात्र भविष्यतीति। उक्तं मघायाम्॥

30 पूर्वफल्गुन्यां ग्रीष्माणां पश्चिमे मासे यद्यत्र देवः प्रवर्षति, चतुःषष्ट्याढकानि प्रवर्षति। एषो वर्षः सर्वसस्यानि संपादयति। तच्च सस्यं जनयित्वा परचक्रपीडिता मनुष्या न सुखेनोपभुञ्जते। पशूनां मनुष्याणां चात्र गर्भाः सुखिनो भवन्ति। उक्तं पूर्वफल्गुन्याम्॥

उत्तरफल्गुन्यां ग्रीष्माणां पश्चिमे मासे यद्यत्र देवः प्रवर्षति, अशीत्याढकानि प्रवर्षति। एको वर्षः सर्वसस्यानि च संपादयति। निक्षिप्तशस्त्राश्चात्र राजानो भवन्ति। ब्रह्मक्षत्रिययोश्च विरोधो भवति। क्षिप्रं च अनीतिकाः प्रजा विनश्यन्ति। उक्तमुत्तर-फल्गुन्याम्॥

हस्ते ग्रीष्माणां पश्चिमे मासे यद्यत्र देवः प्रवर्षति, एकोनपञ्चाशदाढकानि प्रवर्षति। 5 देवश्च तद्यथा परिक्षिपति। पतितानि च सस्यानि जनस्यारसाग्राणि अनुदग्राणि अल्प-सारण्यल्पोदकानि। दुर्भिक्षश्चात्र भविष्यति। उक्तं हस्ते॥ M 73

चित्रायां ग्रीष्माणां पश्चिमे मासे यद्यत्र देवः प्रवर्षति, चतुःषष्ठ्याढकानि प्रवर्षति। सारोपरोधस्ततः पश्चाद्वर्षं संजनयति। निक्षिप्तशस्त्राश्च राजानो भवन्ति। मुदिताश्चात्र जनपदा भवन्ति। उक्तं चित्रायाम्॥ 10

स्वात्यां ग्रीष्माणां पश्चिमे मासे यद्यत्र देवः प्रवर्षति, एकविंशत्याढकानि प्रवर्षति। निक्षिप्तशस्त्राश्च राजानो भवन्ति। चौराश्चात्र बलवत्तरा भवन्ति। उक्तं स्वात्याम्॥

विशाखायां ग्रीष्माणां पश्चिमे मासे यद्यत्र देवः प्रवर्षति, अशीत्याढकानि प्रवर्षति। एको वर्षः सर्वसस्यानि संपादयति। राजानश्चात्र छिद्रयुक्ता भवन्ति। अग्निदाहाश्चात्र प्रबला भवन्ति। दंष्ट्रिणश्चात्र बलवन्तोऽपि क्षयं गच्छन्ति। उक्तं विशाखायाम्॥ M 74 15

अनुराधायां ग्रीष्माणां पश्चिमे मासे यद्यत्र देवः प्रवर्षति, षष्ठ्याढकानि प्रवर्षति। एको वर्षः सस्यं संपादयति। मित्राणि चात्र दृढानि भवन्ति। उक्तमनुराधायाम्॥

ज्येष्ठायां ग्रीष्माणां पश्चिमे मासे यद्यत्र देवः प्रवर्षति, षोडशाढकानि प्रवर्षति। तत्र कृषिकर्मान्तानि प्रतिसंहर्तव्यानि। युगवरत्राणि वर्जयितव्यानि। स्वधान्यानि उपसंहर्त-व्यानि। अग्नयः प्रतिसंहर्तव्याः। लाङ्गलानि प्रतिसंहर्तव्यानि। अवश्यमनेन जनपदेन 20 विनष्टव्यं भवति। परचक्रपीडितो भवति। उक्तं ज्येष्ठायाम्॥

मूले ग्रीष्माणां पश्चिमे मासे यद्यत्र देवः प्रवर्षति, चतुःषष्ठ्याढकानि प्रवर्षति। एकः सस्यं संपादयति। चौरबहुलाश्चात्र दिशो भवन्ति। त्रयश्चात्र व्याधयो बलवन्तो भवन्ति—वातगण्डः पार्श्वशूलमक्षिरोगश्च। पुष्पफलानि चात्र समृद्धानि भवन्ति। निक्षिप्तशस्त्राश्चात्र राजानो भवन्ति। उक्तं मूले॥ M 75 25

पूर्वस्यामाषाढायां ग्रीष्माणां पश्चिमे मासे यद्यत्र देवः प्रवर्षति, षष्ठ्याढकानि प्रवर्षति। द्वौ चात्र ग्राहौ भवतः। प्रोष्ठपदे वा आश्वयुजौ वा पक्षे। एको वर्षः सर्वसस्यानि संपादयति। द्वौ चात्र रोगौ प्रबलौ भवतः—कुक्षिरोगोऽक्षिरोगश्च। उक्तं पूर्वाषाढायाम्॥

उत्तरस्यामाषाढायां ग्रीष्माणां पश्चिमे मासे यद्यत्र देवः प्रवर्षति, पूर्णमाढकशतं प्रवर्षति। तत्र स्थलानि कृषिकर्तव्यानि। निम्नानि परिवर्जयितव्यानि। महास्रोतांसि 30 चात्र प्रवहन्ति। अग्रोदका चात्र वर्षा भवन्ति। सर्वसस्यानि निष्पादयति। त्रयश्चात्र रोगाः प्रबला भवन्ति—गण्डः कच्छः कण्ठरोग इति। उक्तमुत्तराषाढायाम्॥

अभिजिति ग्रीष्माणां पश्चिमे मासे यद्यत्र देवः प्रवर्षति, चतुःषष्ठ्याढकानि प्रवर्षति। M 76 मण्डलवर्षं च देवः प्रवर्षति। पश्चाद् वर्षः सस्यं जनयति। औदकानां भूतानामुत्सर्गो भवति। उक्तमभिजिति॥

श्रवणे तु ग्रीष्माणां पश्चिमे मासे यद्यत्र देवः प्रवर्षति, चतुःषष्ठ्याढकानि प्रवर्षति। 5 मण्डलवर्षं च देवो वर्षति। पश्चाद् वर्षा सस्यं संपादयति। औदकानां भूतानामुत्सर्गो भवति। व्याधिबहुलाश्च नरा भवन्ति। राजानश्च तीव्रदण्डा भवन्ति। उक्तं श्रवणे॥

धनिष्ठायां ग्रीष्माणां पश्चिमे मासे यद्यत्र देवः प्रवर्षति, एकपञ्चाशदाढकानि प्रवर्षति। विभक्ताश्चात्र वर्षा भवन्ति। तत्र निम्नानि कृषिकर्तव्यानि। स्थलानि परिवर्जयितव्यानि। दुर्मुखो रात्रौ वर्षो भवति। सस्यानि संपादयति। एकश्चात्र रोगो भवति—गण्डविकारः। 10 शस्त्रसमादानाश्च राजानो भवन्ति। उक्तं धनिष्ठायाम्॥

M 77 शतभिषायां ग्रीष्माणां पश्चिमे मासे यद्यत्र देवः प्रवर्षति, षोडशाढकानि प्रवर्षति। तत्र निम्नानि कृषिकर्तव्यानि। स्थलानि परिवर्जयितव्यानि। एको वर्षः सर्वसस्यानि संपादयति। चक्रसमारूढा जनपदा भवन्ति। मनुष्या दारकदारिकाश्च स्कन्धे कृत्वा देशान्तरं गच्छन्ति। उक्तं शतभिषायाम्॥

15 पूर्वस्यां भाद्रपदायां ग्रीष्माणां पश्चिमे मासे यद्यत्र देवः प्रवर्षति, चतुःषष्ठ्याढकानि प्रवर्षति। वर्षामुखे चात्र एकोनत्रिंशतिरात्रिकोऽवग्रहो भवति। पुष्पसस्यं च नाशयति। एताश्च वर्षा बहुचौरा भवन्ति। द्वौ चात्र महाव्याधी भवतः—प्रथमं पित्ततापज्वरो भवति, पश्चाद् बलवान् महाग्रहो भवति। मर्त्यानां नारीणां च मरणं भवति। उक्तं पूर्वभाद्रपदायाम्॥

20 उत्तरस्यां भाद्रपदायां ग्रीष्माणां पश्चिमे मासे यद्यत्र देवः प्रवर्षति, पूर्णमाढकशतं प्रवर्षति। महास्रोतांसि प्रवहन्ति। ग्रामनगरनिगमाः स्रोतसा उह्यन्ते। चत्वारश्चात्र M 78 व्याधयः प्रबला भवन्ति। तद्यथा—कुक्षिरोगोऽक्षिरोगः कासो ज्वरश्चेति। बालानां दारकदारिकाणां मरणं भवति। अत्र स्थलानि कृषिकर्तव्यानि। निम्नानि परिवर्जयितव्यानि। एताश्च वर्षाः पुष्पाणि फलानि च संपादयन्ति। उक्तमुत्तरभाद्रपदायाम्॥

25 रेवत्यां ग्रीष्माणां पश्चिमे मासे यद्यत्र देवो प्रवर्षति, एकषष्ट्याढकानि प्रवर्षति। तत्र निम्नानि कृषिकर्तव्यानि। स्थलानि परिवर्जयितव्यानि। एका च वर्षा सर्वसस्यानि संपादयति। तच्च सस्यं मित्रबान्धवा मनुष्याश्च परिभुञ्जते। निक्षिप्तशस्त्रदण्डाश्च राजानो भवन्ति। अनुद्विग्नाश्च जनपदा भवन्ति। उद्विग्नाश्च दानपतयो भवन्ति। देवनक्षत्रसमायुक्ताश्च जनपदा भवन्ति। मित्राणि समायुक्तानि भवन्ति। उक्तं रेवत्याम्॥

30 अश्विन्यां ग्रीष्माणां पश्चिमे मासे यद्यत्र देवः प्रवर्षति, अष्टचत्वारिंशदाढकानि M 79 प्रवर्षति। यच्च मध्ये वर्षा भवति, तत्र निम्नानि कृषिकर्तव्यानि। स्थलानि परिवर्जयितव्यानि। एका वर्षा सर्वसस्यानि संपादयति। भयसमायुक्ताश्च जनपदा भवन्ति। चौराश्च प्रबला भवन्ति। उक्तमश्विन्याम्॥

भरण्यां ग्रीष्माणां पश्चिमे मासे यद्यत्र देवः प्रवर्षति, पूर्णमाढकशतं प्रवर्षति। तत्र स्थलानि कृषिकर्तव्यानि। निम्नानि परिवर्जयितव्यानि। दुर्भिक्षश्चात्र भवति। जरामरणं जनानां भवति। राजानश्चात्र अन्योन्यघातका भवन्ति। पुत्रपौत्राणां च कलहो भवति। उक्तं भरण्याम्॥

अयं भोः पुष्करसारिन्नक्षत्रर्तुवर्षाध्यायः॥ 5

अमीषां भोः पुष्करसारिन् अष्टाविंशतीनां नक्षत्राणां राहुग्रहे फलविपाकं व्याख्यास्यामि।

कृत्तिकासु भोः पुष्करसारिन् यदि चन्द्रग्रहो भवति, कलिङ्गमगधानामुपपीडा भवति। यदि रोहिण्यां चन्द्रग्रहो भवति, प्रजानामुपपीडा भवति। यदि मृगशिरसि चन्द्रग्रहो भवति, विदेहानां जनपदानामुपपीडा भवति राजोपसेवकानां च। एवमार्द्रायां पुनर्वसौ पुष्ये च वक्तव्यम्। आश्लेषायां यदि चन्द्रग्रहो भवति, नागानां हैमवतानां च 10 पीडा भवति। यदि मघासु चन्द्रग्रहो भवति, गौडिकानामुपपीडा भवति। यदि पूर्वफल्गुन्यां सोमो गृह्यते, चौराणामुपपीडा भवति। यद्युत्तरफल्गुन्यां सोमो गृह्यते, अवन्तीनामुपपीडा (M 80) भवति। यदि हस्तेषु सोमो गृह्यते, सौराष्ट्रिकाणामुपपीडा भवति। यदि चित्रायां सोमो गृह्यते, पक्षिणां द्विपदानां च पीडा भवति। यदि स्वात्यां सोमो गृह्यते, सर्वेषां प्रव्रज्यासमापन्नानामुपपीडा भवति। यदि विशाखायां सोमो गृह्यते, औदकानां सत्त्वानामुप- 15 पीडा भवति। यद्यनुराधासु सोमो गृह्यते, वणिजानामुपपीडा भवति शाकटिकानां च। यदि ज्येष्ठायां सोमो गृह्यते, दौवालिकानां पीडा भवति। यदि मूले सोमो गृह्यते, अध्वगानां पीडा भवति। यदि पूर्वाषाढायां सोमो गृह्यते, अवन्तीनां पीडा भवति। यद्युत्तराषाढायां सोमो गृह्यते, काम्बोजकानां पीडा भवति वाह्लीकानां च। यद्यभिजिति सोमो गृह्यते, दक्षिणापथिकानां पीडा भवति ताम्रपर्णिकानां च। यदि श्रवणेषु सोमो 20 गृह्यते, चौराणां घातकानां चोपपीडा भवति। यदि धनिष्ठायां सोमो गृह्यते, कुरुपाञ्चालानां पीडा भवति। यदि शतभिषायां सोमो गृह्यते, मौलिकानामाथर्वणिकानां च पीडा भवति। यदि पूर्वभाद्रपदायां सोमो गृह्यते, गान्धिकानां यवनकाम्बोजकानां च पीडा भवति। यद्युत्तरभाद्रपदायां सोमो गृह्यते, गन्धर्वाणां पीडा भवति। यदि रेवत्यां सोमो गृह्यते, (M 81) नाविकानां पीडा भवति। यद्यश्विन्यां सोमो गृह्यते, अश्ववणिजानां पीडा भवति। यदि 25 भरण्यां सोमो गृह्यते, भरुकच्छानां पीडा भवति॥

एवं भोः पुष्करसारिन् यस्मिन्नक्षत्रे चन्द्रग्रहो भवति तस्य तस्य देशस्य पीडा भवति। इत्युक्तो राहुग्रहफलविपाकाध्यायः॥

प्रतिनक्षत्रवंशशास्त्रे यथोक्तं कर्म तच्छृणु।
उच्यमानमिदं विप्र ऋषीणां वचनं यथा॥ १२२॥ 30
षट्तारां कृत्तिकां विद्यादाश्रयं तासु कारयेत्।
अग्न्याधानं पाकयज्ञः समृद्धिप्रसवश्च यः॥ १२२ अ॥

सर्पिर्विलोडयेत्तत्र गवां वेश्म च कारयेत्।
अजैडकाश्च क्रेतव्या गवां च वृषमुत्सृजेत्॥ १२३॥
अश्मसारमयं भाण्डं सर्वमत्र तु कारयेत्।
हिरण्यकारकर्मान्तमिष्वस्त्रं चोपकारयेत्॥ १२४॥
5 मेतृको मापयेदत्र कुटिकाग्निनिवेशनम्।
पीतलोहितपुष्पाणां बीजान्यत्र तु वापयेत्॥ १२५॥
M 82 गृहं च मापयेदत्र तथावासं प्रकल्पयेत्।
नवं च छादयेद्वस्त्रं ऋयणं नात्र कारयेत्॥ १२६॥
क्रूरकर्माणि सिध्यन्ति युद्धसंरोधबन्धनम्।
10 परपीडामथात्रैव विद्वान्नैव प्रयोजयेत्॥ १२७॥
शस्त्राणिं क्षुरकर्माणि सर्वाण्यत्र तु कारयेत्।
तैजसानि च भाण्डानि कारयेच्च क्रीणीत च॥ १२८॥
आयुष्यं च शिरःस्नानं स्त्रीणां विष्कम्भणानि च।
प्रवर्षणं चेद् देवस्य नात्र वैरं प्रशाम्यति॥ १२९॥
15 क्रोधनो हर्षणः शूरस्तेजस्वी साहसप्रियः।
आयुष्मांश्च यशस्वी च यज्ञशीलोऽत्र जायते॥ १३०॥ कृत्तिकासु॥
सर्वं कृषिपदं कर्म रोहिण्यां संप्रयोजयेत्।
क्षेत्रवस्तुविहारांश्च नवं वेश्म च कारयेत्॥ १३१॥
प्रयोजयेच्चक्रान् वारान् दासांश्चैव गृहे पशून्।
20 वापयेत्सर्वबीजानि ध्रुवं वासांसि कारयेत्॥ १३२॥
M 83 ऋणं न दद्यात्तत्रैव वैरमत्र तु वर्धते।
संग्रामं च सुरायोगं द्वयमेव विवर्जयेत्॥ १३३॥
प्रवर्षणं च देवस्य जन्म चात्र प्रशस्यते।
सानुक्रोशः क्षमायुक्तः स्त्रीकामो भक्षलोलुपः।
25 आयुष्मान् पशुमान् धन्यो महाभोगोऽत्र जायते॥ १३४॥ रोहिण्याम्॥
सौम्यं मृगशिरो विद्याद् ऋजु तिस्रश्च तारकाः।
मृदूनि यानि कर्माणि तानि सर्वाणि कारयेत्।
यानि कर्माणि रोहिण्यां तानि सर्वाणि कारयेत्॥ १३५॥
सक्षीरान् वापयेद् वृक्षान् बीजानि क्षीरवन्ति च।
30 राजप्रासादवलभीछत्राण्यपि च कारयेत्॥ १३६॥
सर्वकर्मकथाः कुर्यात् चर्यावासान्न कारयेत्।
उष्ट्रांश्च बलीवर्दांश्च दमयेदपि कृष्टये॥ १३७॥

आच्छादयेन्नवं वासश्चालंकारं च कारयेत्।
द्विजातीनां तु कर्माणि सर्वाण्येवात्र कारयेत्॥ १३८॥
प्रवर्षणं च देवस्य सुवृष्टिं चात्र निर्दिशेत्।
स्वप्नशीलस्तथा त्रासी मेधावी स च जायते॥ १३९॥ मृगशिरसि॥
आर्द्रायां मृगयेदर्थान् भद्रं कर्म च कारयेत्। 5 M 84
क्रूरकर्माणि सिध्यन्ति तानि विद्वान् विवर्जयेत्॥ १४०॥
उदपानपरीखांश्च तडागान्यत्र कारयेत्।
ऊहेत (उहयेत्) प्रथमां वृष्टिं विक्रीणीयाच्च नात्र गाम्।
तिलपीडानि कर्माणि शौण्डिकानां तथापणम्॥ १४१॥
पीडयेदिक्षुदण्डानि इक्षुबीजानि वापयेत्। 10
प्रवर्षणं च देवस्य विद्याद्बहुपरिस्रवम्।
क्रोधनो मृगयाशीलो मांसकामोऽत्र जायते॥ १४२॥ आर्द्रायाम्॥
पुनर्वसौ तु युक्तेऽत्र कुर्याद्वै व्रतधारणम्।
गोदानं चोपनायनं सर्वमत्र प्रसिध्यति॥ १४३॥
प्रजायमानां प्रमदां गृहीत्वा गृहमानयेत्। 15
पुनः पुनर्यदीच्छेत तत्र कर्माणि कारयेत्॥ १४४॥
चिकित्सनं न कुर्वीत यदीच्छेन्न पराभवम्। M 85
प्रवर्षणं च देवस्य जन्म चात्र प्रशस्यते॥ १४५॥
अलोलश्चात्र जायेत स्त्रीलोलश्चापि मानवः।
चित्रशीलश्च नैकत्रार्पितचित्तः स उच्यते॥ १४६॥ पुनर्वसौ॥ 20
धन्यं यशस्यमायुष्यं पुष्ये नित्यं प्रयोजयेत्।
सर्वेषां च द्विजातीनां सर्वकर्माणि कारयेत्॥ १४७॥
राजामात्यं प्रयुञ्जीत शुश्रूषां विनयं चरेत्।
राजानमभिषिञ्चेच्च अलंकुर्यात्स्वकां तनुम्॥ १४८॥
श्मश्रुकर्माणि कुर्याच्च वपनं नखलोमतः। 25
पुरोहितं च कुर्वीत ध्वजाग्रं च प्रकारयेत्॥ १४९॥
प्रवर्षणं च देवस्य मन्दवर्षं समादिशेत्।
न च रोगो न चौरश्च क्षेमं चात्र सदा भवेत्॥ १५०॥
पुष्येण नित्ययुक्तः सन् सर्वकर्माणि साधयेत्।
वैरेणात्रोपनाहैश्च ये जनास्तान् विवर्जयेत्। 30
आयुष्मांश्च यशस्वी च महाभोगः प्रजायते॥ १५१॥ पुष्ये॥

M 86 सिध्यते दारुणं कर्म आश्लेषायां च कारयेत्।
कुर्यादाभरणान्यत्र प्राकारमुपकल्पयेत् ॥ १५२ ॥
देहबन्धं नदीबन्धं संधिकर्म च कारयेत्।
प्रभूतदंशमशकं वर्षं मन्दं च वर्षति।
5 क्रोधनः स्वप्नशीलश्च कुहकश्चात्र जायते ॥ १५३ ॥ आश्लेषायाम् ॥
मघासु सर्वधान्यानि वापयेत्संहरेदपि।
संघातकर्म कुर्वीत सुमुखं चात्र कारयेत् ॥ १५४ ॥
कोष्ठागाराणि कुर्वीत फलं चात्र निवेशयेत्।
सर्वदा पितृदेवेभ्यः श्राद्धं चैवात्र कारयेत् ॥ १५५ ॥
10 सस्यानां बहुलीभावो यदि देवोऽत्र वर्षति।
सुहृच्च द्वारिकश्चैव रसकामश्च जायते।
आयुष्मान् बहुपुत्रश्च स्त्रीकामो भक्तलोलुपः ॥ १५६ ॥
संग्रामं जीयते तत्र यदि पूर्वं प्रवर्तते।
दारुणानि च कर्माणि तानि विद्वान् विवर्जयेत् ॥ १५७ ॥ मघासु ॥
M 87 15 फल्गुनीषु च पूर्वासु सौभाग्यार्थानि कारयेत्।
विशेषादामलक्यादिफलानामुपकारयेत् ॥ १५८ ॥
कुमारीमङ्गलार्थानि स्नापनानि च कारयेत्।
कन्याप्रवहनार्थाय विहारं चैव कारयेत् ॥ १५९ ॥
वेश्मानि कारयेत्तत्र वैद्यमत्र प्रयोजयेत्।
20 भागं ये चोपजीवन्ति तेषां कर्म प्रयोजयेत् ॥ १६० ॥
अव्यक्तकेशोऽकेशः सुभगश्चात्र जायते।
प्रवर्षणं च देवस्य सुवृष्टिमभिनिर्दिशेत्।
नष्टं विद्धं कृतं चापि न तदस्तीति निर्दिशेत् ॥ १६१ ॥ पूर्वफल्गुन्याम् ॥
उत्तरायां तु फल्गुन्यां सर्वकर्माणि कारयेत्।
25 मेधावी दर्शनीयश्च यशस्वी चात्र जायते ॥ १६२ ॥
अथात्र नष्टं दग्धं वा सर्वमस्तीति निर्दिशेत्।
प्रवर्षणं च देवस्य विद्यात्संपदनुत्तमाम् ॥ १६३ ॥ उत्तरफल्गुन्याम् ॥
M 88 हस्तेन लघुकर्माणि सर्वाण्येव प्रयोजयेत्।
सर्वेषां च द्विजातीनां सर्वकर्माणि कारयेत् ॥ १६४ ॥
हस्त्यारोहं महामात्रं पुष्करिणीं च कारयेत्।
30 चौर्यं च सिध्यते तत्र तच्च विद्वान् विवर्जयेत् ॥ १६५ ॥

प्रवर्षणं च देवस्य वर्षा विश्रावणी भवेत्।
अथात्र जातं जानीयाच्छूरं चौरं विचक्षणम्।
कुशलं सर्वविद्यासु अरोगं चिरजीविनम्॥ १६६॥ हस्ते॥
चित्रायामहतं वस्त्रं भूषणानि च कारयेत्।
राजानं भूषितं पश्येत् सेनाव्यूहं च दर्शयेत्॥ १६७॥ 5
हिरण्यं रजतं द्रव्यं नगराणि च मापयेत्।
अलंकुर्यात्तथात्मानं गन्धमाल्यविलेपनैः॥ १६८॥
गणकानां च विद्यां च वाद्यं नर्तनगायनम्।
पूर्विकां रूपकारांश्च रथकारांश्च शिक्षयेत्।
चित्रकारांश्च लेखकान् पुस्तकर्म च कारयेत्॥ १६९॥ 10
प्रवर्षणं च देवस्य चित्रवर्षं विनिर्दिशेत्। M 89
मेधावी दर्शनीयश्च चित्राक्षो भक्तलोलुपः॥ १७०॥
मृदुशीलश्च भीरुश्च चलचित्तः कुतूहली।
आयुष्मान् सुभगश्चैव स्त्रीलोलश्चात्र जायते॥ १७१॥ चित्रायाम्॥
स्वात्यां प्रयोजयेद्योधान् अश्वानश्वतरीं खरान्। 15
क्षिप्रं गमनीयं भक्ष्यं लङ्घकानध्वमानिकान्॥ १७२॥
भेरीमृदङ्गपणवान् मुरजांश्चोपनाहयेत्।
आवांह्याश्च विवाहांश्च सौहृद्यं चात्र कारयेत्॥ १७३॥
निर्वासनममित्राणां स्वयं न प्रवसेद्गृहात्।
प्रवर्षणं च देवस्य वातवृष्टिरभीक्ष्णशः। 20
मेधावी रोगबहुलश्चलचित्तश्च जायते॥ १७४॥ स्वातौ॥
लाङ्गलानि विशाखासु कर्षणं च प्रयोजयेत्।
यवगोधूमकर्मान्तान् शमीधान्यं च वर्जयेत्॥ १७५॥
शालयस्तिलमाषाश्च ये च वृक्षाः सुशाखिनः।
रोपयेत्तान् विशाखासु गृहकर्म च कारयेत्। 25 M 90
शिरःस्नानानि कुर्वीत मेध्यं प्रायश्च कारयेत्॥ १७६॥
प्रवर्षणं च देवस्य विद्यात्कल्पपरिस्रवम्।
मनस्वी दर्शनीयश्च मेधावी चात्र जायते।
क्रोधनोऽल्पसुतश्चैव दुर्भगो भक्तलोलुपः॥ १७७॥ विशाखासु॥
अनुराधासु कुर्वीत मित्रैः सद्भिश्च संगतिम्। 30
सर्वाणि मृदुकर्माणि माधुर्यं चात्र कारयेत्॥ १७८॥

क्षौरं च कारयेदत्र शस्त्रकर्माणि कारयेत्।
संयुक्तान्तप्रयोगांश्च संधिं कुर्याच्च नित्यशः।
नष्टं पर्युपतप्तं वा स्वल्पायासेन निर्दिशेत्॥ १७९॥
सुहृन्मित्रकृतश्चात्र धर्मशीलश्च जायते।
5 प्रवर्षणं च देवस्य सुवृष्टिमभिनिर्दिशेत्॥ १८०॥ अनुराधायाम्॥
ज्येष्ठायां पूर्वकारी स्याद्राजानं चाभिषिञ्चयेत्।
नगरं निगमं ग्रामं मापयेदारभेत च।
क्षत्रियाणां च राज्ञां च सर्वकर्माणि कारयेत्॥ १८१॥
M 91 भ्रातॄणां भवति ज्येष्ठो ज्येष्ठायां योऽभिजायते।
10 आयुष्मांश्च यशस्वी च विद्वत्सु च कुतूहली॥ १८२॥
प्रासादमारोहेच्चात्र गजमश्वं रथं तथा।
ग्रामनिगमराष्ट्रेषु स्थापयेच्छ्रेष्ठिनां बलम्॥ १८३॥
नष्टं पर्युपतप्तं वा क्लेशेनैवेति निर्दिशेत्।
दारुणान्यत्र सिध्यन्ति तानि विद्वान् विवर्जयेत्।
15 प्रवर्षणं च देवस्य सुवृष्टिमभिनिर्दिशेत्॥ १८४॥ ज्येष्ठायाम्॥
मूले तु मूलजातानि मूलकन्दालुकान्यपि।
मूलाद्यानि च सर्वाणि बीजान्यत्र प्रयोजयेत्॥ १८५॥
ऋणं वै यत्पुराणं स्यादर्थो वास्याग्रतः स्थितः।
मूले सिद्ध्यर्थमारभ्यं तथा सर्वं वराङ्गकम्॥ १८६॥
20 चिकित्सितानि यानीह स्त्रीणां दारककन्ययोः।
नदीषु स्नपनं चैव मूले सर्वान् प्रयोजयेत्॥ १८७॥
M 92 दारुणान्यत्र सिध्यन्ति मङ्गलानि च कारयेत्।
किण्वयोगान् सुरायोगान्न कुर्याच्छत्रुभिः सह॥ १८८॥
धनवान् बहुपुत्रश्च मूलवानत्र जायते।
25 अथात्र नष्टं दग्धं वा नैतदस्तीति निर्दिशेत्।
प्रवर्षणं च देवस्य सुवृष्टिमभिनिर्दिशेत्॥ १८९॥ मूले॥
आषाढायां च पूर्वस्यां सरितश्च सरांसि च।
वापीकूपप्रपाश्चैव तडागानि च कारयेत्॥ १९०॥
उत्पाद्यानि च पुष्पाणि तथा मूलफलानि च।
30 आरामांश्च प्रकुर्वीत भैक्षकांश्च प्रयोजयेत्।
यानि चोग्राणि कर्माणि सिध्यन्त्यत्र तु तानि च॥ १९१॥

नष्टं पर्युपतप्तं वा नैतदस्तीति निर्दिशेत्।
आयुष्मान् पुण्यशीलश्च दर्शनीयोऽत्र जायते ॥ १९२ ॥ पूर्वाषाढायाम् ॥

उत्तरस्यामाषाढायां वैराणि न समाचरेत्।
वाययेत्सर्ववासांसि नवं नाच्छादयेदिति ॥ १९३ ॥

न संहरेद्भेदयेद्वा वास्तुकर्म न सिध्यति। 5 M 93
शालाकर्म गवादीनां ग्रामे ग्रामणिनस्तथा।
श्रेणीबन्धं च राजा तु समयं चात्र कारयेत् ॥ १९४ ॥

प्रगल्भश्च सभाशीलः कृती चात्र प्रजायते।
सुहृदामभियोगी च मन्त्रभाष्ये विचक्षणः ॥ १९५ ॥

नष्टं वाप्युपतप्तं वा अस्तीत्येवं विनिर्दिशेत्। 10
प्रवर्षणं च देवस्य सुवृष्टिमभिनिर्दिशेत् ॥ १९६ ॥ उत्तराषाढायाम् ॥
अभिजिति न कुर्वीत ब्रह्मदेवस्य ह्यर्चनम् ॥ १९७ ॥ अभिजिति ॥

श्रवणे न च कुर्वीत सर्वाः संग्रामिकाः क्रियाः।
गीतशिक्षाध्ययनं च न चिरेण हि सिध्यति ॥ १९८ ॥

कर्णयोर्वेधनं कुर्याद्राजानं चाभिषिञ्चयेत्। 15
द्विजातीनां तु कर्माणि सर्वाण्येव प्रयोजयेत् ॥ १९९ ॥

बलिकृत्यानि कुर्वीत दर्शयेच्च बलान्यपि। M 94
मेधाव्यरोगी बलवान् यज्ञशीलोऽत्र जायते ॥ २०० ॥

प्रवर्षणं च देवस्य सुवृष्टिमभिनिर्दिशेत्।
नष्टं च लभ्यते तत्र श्रवणस्थे निशाकरे ॥ २०१ ॥ श्रवणे ॥ 20

धनिष्ठा लघुनक्षत्रं सर्वकर्मसु पूजितम्।
अधीत्य ब्राह्मणः स्नायाद्राजानमभिषिञ्चयेत् ॥ २०२ ॥

सर्वेषां च द्विजातीनां सर्वकर्माणि कारयेत्।
श्रेष्ठिनं स्थापयेद् देशे गणाध्यक्षं गणेष्वपि ॥ २०३ ॥

मेधावी च यशस्वी च महाभोगी महाधनः। 25
बह्वपत्यो मृदुर्दान्तो महात्मा चात्र जायते ॥ २०४ ॥

नष्टं दग्धं प्रविद्धं वा क्लेशेनैवात्र लभ्यते।
प्रवर्षणं च देवस्य विद्याच्चात्र सुवृष्टिताम् ॥ २०५ ॥ धनिष्ठायाम् ॥

नित्यं शतभिषायोगे भैषज्यानि प्रयोजयेत्।
कीर्तिकर्म च कुर्वीत सिध्यन्त्याथर्वणानि च ॥ २०६ ॥ 30

प्रसारयेच्च पण्यानि शौण्डिकं च प्रयोजयेत्।
उदधिं खानयेत्तत्र तिलमाषांश्च वापयेत्॥ २०७॥

M 95 सामुद्रिकाणि पण्यानि नाविनश्च प्रयोजयेत्।
आदेयं च तदादद्याद् व्ययं चात्र न कारयेत्॥ २०८॥

5 संधिपालान् द्वारपालाँल्लेखकांश्च प्रयोजयेत्।
भिषक्कर्म च कुर्वीत भैषज्यानि च संहरेत्॥ २०९॥

निधिं वा खानयेत्तत्र निदध्यादपि वा निधिम्।
धनं चात्र प्रयुञ्जीत भिषक्कर्म च शिक्षयेत्॥ २१०॥

अथात्र मृगयेन्नष्टं लभ्यते तच्चिरादपि।
10 अरोगी क्रोधनश्चात्र स्वप्नशीलश्च जायते।
प्रवर्षणं च देवस्य सुवृष्टिमभिनिर्दिशेत्॥ २११॥ शतभिषायाम्॥

पूर्वभाद्रपदायोगे क्रूराणां सिद्धिरुच्यते।
नष्टविद्धोपतप्तं वा नैतदस्तीति निर्दिशेत्॥ २१२॥

दीर्घश्रोत्रो महाभोगो ज्ञातीनां च सदा प्रियः।
15 महाधनोऽक्रूरकर्मा निःक्रोधश्चात्र जायते।
प्रवर्षणं च देवस्य चण्डां वृष्टिं समादिशेत्॥ २१३॥ पूर्वभाद्रपदे॥

M 96 उत्तरस्यां तु कुर्वीत आयुष्यं पुष्टिकर्म च।
न च दक्षिणतो गच्छेत्पुरं चात्र प्रदापयेत्॥ २१४॥

आयुष्मांश्च यशस्वी च धनवांश्चात्र जायते।
20 अत्रापि त्रिगुणं विन्देदादानं यदि वा व्ययम्।
प्रवर्षणं च देवस्य सुवृष्टिमभिनिर्दिशेत्॥ २१५॥ उत्तरभाद्रपदे॥

रेवत्यां रत्नरजतं धनधान्यं प्रयोजयेत्।
कोष्ठागाराणि कुर्वीत किण्वं चात्र न कारयेत्॥ २१६॥

सुराकर्म च कुर्वीत हिरण्यं गोत्रजानि च।
25 गोसंघं स्थापयेच्चात्र गोशालां चात्र कारयेत्।
आच्छादयेन्नवं वस्त्रं हिरण्यमपि धारयेत्॥ २१७॥

भिक्षुको दानशीलश्च दरिद्रश्चानसूयकः।
ज्ञातीनां सेवको नित्यं धर्मज्ञश्चात्र जायते।
सुवृष्टिं नष्टलाभं च रेवत्यामभिनिर्दिशेत्॥ २१८॥ रेवत्याम्॥

M 97 स्त्रीपुंसमश्विना युञ्जादश्वशालां च कारयेत्।
30 अश्वान् प्रयोजयेदत्र रथं चात्र प्रयोजयेत्॥ २१९॥

ऋणप्रयोगः कर्तव्यो बीजान्यत्र प्रवापयेत्।
यानानि च हयान् दम्यान् दन्तिनश्च प्रयोजयेत्॥ २२०॥
भैषज्यं भोजयेदत्र भिषक्कर्म च कारयेत्।
मधावी दर्शनीयश्च राजयोग्यश्च संपदा॥ २२१॥
अरोगी बलवाँच्छूरः सुभगो ह्यत्र जायते। 5
सुवृष्टिं नष्टलाभं च अश्विन्यामभिनिर्दिशेत्॥ २२२॥ अश्विन्याम्॥
त्रितारां भरणीं विद्यात्क्रूरकर्माणि साधयेत्।
भृत्यांश्च भृतकांश्चापि वृणुयाद्दर्शयेत्तथा॥ २२३॥
भृतिं चोपनयेदत्र भार्यां च न विवाहयेत्।
उत्कुट्टको वञ्चनकः कूटसाक्षी च तन्द्विजः॥ २२४॥ 10
विधिज्ञः पापचारित्रः कदर्यश्चात्र जायते। M 98
जायते चात्र दुःशीलो गुरूणामभ्यसूयकः।
परोपतापी लुब्धश्च परव्याहारगोचरः॥ २२५॥ भरण्याम्॥
सप्तविंशतिनक्षत्रे कृत्तिकादि यदा भवेत्।
भरण्यन्तानि ऋक्षाणीमां प्रतिपादयेत्क्रियाम्॥ २२६॥ 15
तेषां मध्ये यदा सर्वे शस्यान्योषधयोऽपि च।
वनस्पतयश्च पीड्यन्ते यत्रासौ तिष्ठते ग्रहः।
सर्वं प्रतिपादयितव्यमुक्तनक्षत्रकर्मसु॥ २२७॥

उक्तो नक्षत्रकर्मनिर्देशो नामाध्यायः॥

चत्वारि भोः पुष्करसारिन् नक्षत्राणि ध्रुवानि भवन्ति। तानि व्याख्यास्यामि। तच्छृणु। 20 तद्यथा—त्रीणि उत्तराणि रोहिणी च। क्षेमेऽध्यावसेत्। बीजानि चात्र रोपयेत्। निवेशनं M 99 चात्र कल्पयेत्। राजानं चाभिषिञ्चयेत्। यानि चान्यानि उक्तानि कर्माणि तानि कारयेत्।

अथ नष्टं दग्धं वा विद्धं चापि हृतं च वा।
एवमभिनिर्दिष्टं वा स्वस्ति क्षिप्रं भविष्यति॥ २२८॥
अथात्र जातो धन्योऽसौ विद्यात्मा च यशस्वी च। 25
मङ्गलीयो महाभोगी महायोगी भविष्यति॥ २२९॥

चत्वारि भोः पुष्करसारिन् नक्षत्राणि क्षिप्राणि भवन्ति। तद्यथा—पुष्यो हस्ताभिजिदश्विनी चेति। एषु क्षिप्राणि कर्माणि कारयेच्च विचक्षणः। स्वाध्यायं मन्त्रसमारम्भं प्रवासप्रस्थानं गाश्च तुरङ्गानप्यत्र योजयेत्। धूर्याणि युक्तकर्माणि चोपधीकर्माणि च। भैषज्यानि सर्वाण्यत्र प्रयोजयेत्॥ 30

तत्र यज्ञसमारम्भं चातुर्मास्यं च कारयेत्। अथात्र नष्टं दग्धं वा विद्धं वा, स्वस्ति भविष्यतीति वक्तव्यम्॥

अथात्र जातकं विद्यान्मङ्गलीयं यशस्विनम्।
महाभोगं च राजानं महायोगिनमीश्वरम् ॥ २३० ॥
महाधनं महाभोगं तथा च महदुत्तमम्।
क्षत्रियं दानशीलं च ब्राह्मणं च पुरोहितम् ॥ २३१ ॥ इति ॥

5 पञ्च खलु भोः पुष्करसारिन् नक्षत्राणि दारुणानि भवन्ति। तद्यथा—
मघा त्रीणि च पूर्वाणि भरणी चेति पञ्चमी।
अथात्र दग्धं नष्टं वा विद्धं वा न भविष्यति ॥ २३२ ॥

इति वक्तव्यम्। अर्धरात्रिकाणि षट्। तद्यथा—आर्द्रा आश्लेषा स्वाती ज्येष्ठा
M 100 शतभिषा भरणी चेति। नवांशाः षड्ग्रासा द्विक्षेत्राणि। रोहिणी पुनर्वसुर्विशाखा च।
10 त्रीणि उत्तराणि चेति उभयतोविभागानि। पञ्चदश क्षेत्राणि। कृत्तिका च मघा मूला त्रीणि पूर्वाणि। इमानि षट् पूर्वभागिकानि। मृगशिरा पुष्या हस्ता चित्रा अनुराधा श्रवणा धनिष्ठा रेवती अश्विनी चेति इमानि नव नक्षत्राणि पश्चाद्भागीयानि त्रिंशन्मुहूर्त-योगानि क्षेत्राणि च ॥

अपि च ब्राह्मण शुभाश्च मुहूर्ता भवन्ति, अशुभाश्च मुहूर्ता भवन्ति, शुभाशुभाश्च
15 मुहूर्ता भवन्ति। संप्रयुक्तनक्षत्रेषु सर्वेषु यदा शुभमुहूर्तसमापत्तयो भवन्ति, तदा शोभना भवन्ति। यदा अशुभमुहूर्तसमापत्तयो भवन्ति, तदा न शोभना भवन्ति। यदा तु पुनः शुभाश्चाशुभाश्च समापत्तयो भवन्ति, तदा साधारणा भवन्ति ॥

अथात्र कथं रात्रिदिवसानां ह्रासो वृद्धिर्वा भवतीति तदुच्यते। वर्षाणां प्रथमे मासे पुष्यनक्षत्रममावास्यां भवति, श्रवणा पूर्णमास्याम्। अष्टादशमुहूर्तो दिवसो भवति।
20 द्वादशमुहूर्ता रात्रिः। षोडशाङ्गुलकाष्ठस्य मध्याह्नेऽर्धाङ्गुलायां छायायामादित्यः परिवर्तते। आषाढा रात्रिं नयति। मृगशिरसि आदित्यो गतो भवति। वर्षाणां द्वितीये मासे मघा अमावास्यायां भवति, भाद्रपदा पूर्णमास्याम्। सप्तदशमुहूर्तो दिवसो भवति। त्रयोदशमुहूर्ता
M 101 रात्रिः। द्व्यङ्गुलायां छायायामादित्यः परिवर्तते। श्रवणा रात्रिं नयति। पुष्य आदित्यो गतो भवति। वर्षाणां तृतीये मासे फल्गुन्यमावास्यायां भवति, अश्विनी पूर्णमास्याम्।
25 षोडशमुहूर्तो दिवसो भवति। चतुर्दशमुहूर्ता रात्रिः। चतुरङ्गुलायां छायायामादित्यः परिवर्तते। पूर्वभाद्रपदा रात्रिं नयति। मघायामादित्यो गतो भवति। वर्षाणां चतुर्थे मासे चित्रा अमावास्यायां भवति, कृत्तिका पूर्णमास्याम्। पञ्चदशमुहूर्तो भवति दिवसः। पञ्चदश-मुहूर्ता रात्रिः। षडङ्गुलायां छायायामादित्यः परिवर्तते। अश्विनी रात्रिं नयति। फल्गुन्या-मादित्यो गतो भवति ॥

30 हेमन्तानां प्रथमे मासेऽनुराधा अमावास्यायां भवति, मृगशिरा पूर्णमास्याम्। चतुर्दश-मुहूर्तो दिवसो भवति। षोडशमुहूर्ता रात्रिः। अष्टाङ्गुलायां छायायामादित्यः परिवर्तते।

कृत्तिका रात्रिं नयति। चित्रायामादित्यो गतो भवति। हेमन्तानां द्वितीये मासे अमावास्यायां ज्येष्ठा भवति, पुष्यः पूर्णमास्याम्। त्रयोदशमुहूर्तो दिवसो भवति। सप्तदशमुहूर्ता रात्रिः। दशाङ्गुलायां छायायामादित्यः परिवर्तते। मृगशिरा रात्रिं नयति। विशाखायामादित्यो गतो भवति। हेमन्तानां तृतीये मासे पूर्वाषाढा अमावास्यायां भवति, मघा पूर्णमास्याम्। द्वादशमुहूर्तो दिवसो भवति। अष्टादशमुहूर्ता रात्रिः। द्वादशाङ्गुलायां छायायामादित्यः परिवर्तते। पुष्यो रात्रिं नयति। ज्येष्ठायामादित्यो गतो भवति। हेमन्तानां चतुर्थे मासे श्रवणा अमावास्यायां भवति। फल्गुनी पूर्णमास्याम्। त्रयोदशमुहूर्तो दिवसो भवति। सप्तदशमुहूर्ता रात्रिः। दशाङ्गुलायां छायायामादित्यः परिवर्तते। मघा रात्रिं नयति। आषाढायामादित्यो गतो भवति॥ M 102 5

ग्रीष्माणां प्रथमे मासे उत्तरभाद्रपदा अमावास्यायां भवति, चित्रा पूर्णमास्याम्। चतुर्दशमुहूर्तो दिवसो भवति। षोडशमुहूर्ता रात्रिः। अष्टाङ्गुलायां छायायामादित्यः परिवर्तते। फल्गुनी रात्रिं नयति। श्रवणायामादित्यो गतो भवति। ग्रीष्माणां द्वितीये मासेऽश्विनी अमावास्यायां भवति। विशाखा पूर्णमास्याम्। पञ्चदशमुहूर्तो दिवसो भवति। पञ्चदशमुहूर्ता रात्रिः। षडङ्गुलायां छायागामादित्यः परिवर्तते। चित्रा रात्रिं नयति। उत्तरायां भाद्रपदायामादित्यो गतो भवति। ग्रीष्माणां तृतीये मासे कृत्तिका अमावास्यायां भवति, ज्येष्ठा पूर्णमास्याम्। षोडशमुहूर्तो दिवसो भवति। चतुर्दशमुहूर्ता रात्रिः। चतुरङ्गुलायां छायायामादित्यः परिवर्तते। विशाखा रात्रिं नयति। कृत्तिकायामादित्यो गतो भवति। ग्रीष्माणां चतुर्थे मासे मृगशिरा अमावास्यायां भवति, उत्तराषाढा पूर्णमास्याम्। सप्तदशमुहूर्तो दिवसो भवति। त्रयोदशमुहूर्ता रात्रिः। मध्याह्ने द्व्यङ्गुलायां छायायामादित्यः परिवर्तते। ज्येष्ठा रात्रिं नयति। पुष्य आदित्यो गतो भवति॥ 10 M 103 15 20

संवत्सरमन्वेषणतो मुहूर्तविशेषणैः सर्वाणि चैतानि (नक्षत्राणि) भागानुभागेन अमावास्यायां पूर्णमास्यां च युज्यन्ते। ऊनरात्रस्य पूर्णरात्रस्य च ग्रहीतव्यम्। तत्र तृतीये वर्षेऽधिको मासो युज्यते। षण्णां मासानामहोरात्राणि समानि भवन्ति। अतः षण्मासाद् दिवसो वर्धते। षण्मासाद्रात्रिर्वर्धते। षण्मासाद्दिवसो मासे मासे सममेव हीयते। षण्मासाद्रात्रिर्मासे मासे परिहीयते॥ M 104 25

षण्मासादादित्यः परिवर्तते। उत्तरां दिशं संचरति। षण्मासाद्दक्षिणां दिशम्। षण्मासात्समुद्रे उदकपरिमाणस्य ह्रासो वृद्धिश्च भवति। सूर्यगत्या चन्द्रगत्या च समुद्रोदकवेलाभिवृद्धिर्भवति। अत्र गणनाप्रतिजागरणास्मरमित्येवम्। एष संवत्सरो व्याख्यातो भवति।

चन्द्र आदित्यः शुक्रो बृहस्पतिः शनैश्चरोऽङ्गारको बुधश्च इमे ग्रहाः। एषां ग्रहाणां बृहस्पतिः संवत्सरस्थायी। एवं शनैश्चरो बुधोऽङ्गारकः शुक्रश्चेमे मण्डलचारिणः॥ 30

भरणी कृत्तिका रोहिणी मृगशिरा एतत्साधारणं प्रथमं मण्डलम्। आर्द्रा पुनर्वसुः पुष्योऽश्लेषा एतत्साधारणं द्वितीयं मण्डलम्। मघा अथ फल्गुनद्वयं हस्ता चित्रा एतत्साधारणं

तृतीयं मण्डलम् । स्वाती विशाखा अनुराधा एतत्साधारणं चतुर्थं मण्डलम् । ज्येष्ठा M 105 मूलाषाढा द्वयमत्र सर्वाणि महाभयानि भवन्ति । इदं पञ्चमं मण्डलम् । अभिजिच्छ्रवणा धनिष्ठा शतभिषा उभे भाद्रपदे चैतत्साधारणं षष्ठं मण्डलम् । रेवती अश्विनी चैतत्साधारणं सप्तमं मण्डलम् । संवत्सरमेतेषु यद्यन्नक्षत्रमण्डलं पीडयति, तस्य तस्य जनपदस्य सत्त्वस्य 5 वा पीडा निर्देष्टव्या ॥

द्वादश मुहूर्तानि दिवसे ध्रुवाणि, द्वादश रात्रौ । षण्मुहूर्ताः संचारिणः । कतमे षट् ? नैर्ऋतो वरुणो वायव्यो भर्गोदेवो रौद्रो विचारी च । इतीमे संचारिणः षट् ॥

अथात्र श्रावणे मासे पूर्णेऽष्टादशमुहूर्ते दिवसे सूर्योदये च चतुरोजा नाम मुहूर्तो भवति । रोहितस्य च मुहूर्तस्य बलस्य चान्तरे मध्याह्नो भवति । सूर्यावतारे तु विचारी 10 नाम मुहूर्तो भवति । द्वादशमुहूर्तायां रात्राववतीर्णे सूर्ये षष्ठे मुहूर्ते नयमनो नाम मुहूर्तो भवति । आतपाग्निरेवं नाम मुहूर्तो रात्र्यवसाने भवति । भाद्रपदे मासे पूर्णे सप्तदशमुहूर्ते M 106 दिवसे सूर्योदये च चतुरोजा एवं नाम मुहूर्तो भवति । मध्याह्नेऽभिजितो नाम मुहूर्तो भवति । सूर्यावतारे रौद्रो नाम मुहूर्तो भवति । त्रयोदशमुहूर्तायां रात्राववतीर्णे सूर्ये विचारी नाम मुहूर्तो भवति । अर्धरात्रे महाभयो वायव्यो नाम मुहूर्तो भवति ॥

15 रात्र्यवसाने आतपाग्निरेवं नाम मुहूर्तो भवति । आश्वयुजे मासे पूर्णे षोडशमुहूर्तो दिवसो भवति । सूर्योदये चतुरोजा नाम मुहूर्तो भवति । समुद्गतस्य च मुहूर्तस्य अभिजितस्य त्वन्तरे मध्याह्नो भवति । सूर्यावतारे भर्गोदेवो नाम मुहूर्तो भवति ॥

चतुर्दशमुहूर्तायां रात्राववतीर्णे सूर्ये रौद्रो नाम मुहूर्तो भवति । अभिजितस्य च मुहूर्तस्य भीषमाणस्य च मुहूर्तस्य अन्तरेणार्धरात्रं भवति । रात्र्यवसाने आतपाग्निरेवं नाम 20 मुहूर्तो भवति ॥

कार्तिके मासे पूर्णे दिवसः समरात्रिर्भवति । पञ्चदशमुहूर्तो दिवसो भवति, पञ्चदशमुहूर्ता रात्रिः । समानेऽहोरात्रे सूर्योदये चतुरोजा एवं नाम मुहूर्तो भवति । संमुखो M 107 नाम मुहूर्तो भवति मध्याह्ने । संततो नाम मुहूर्तः सूर्यावतारे । रात्राववतीर्णमात्रे सूर्ये भर्गोदेवो नाम मुहूर्तो भवति । अर्धरात्रेऽभिजिन्मुहूर्तो भवति । रात्र्यवसाने आतपाग्निरेवं 25 नाम मुहूर्तो भवति ॥

मार्गशीर्षे मासे च पूर्णे चतुर्दशमुहूर्ते दिवसे सूर्योदये चतुरोजा एवं नाम मुहूर्तो भवति । विरतस्य संमुखस्य च मुहूर्तस्यान्तरे मध्याह्नो भवति । सूर्यावतारे वरुणो नाम मुहूर्तो भवति । षोडशमुहूर्तायां रात्राववतीर्णमात्रे सूर्ये संतापनः संयमो नाम मुहूर्तो भवति । राक्षसस्याभिजितस्य च मुहूर्तस्यान्तरेऽर्धरात्रं भवति । रात्र्यवसाने आतपाग्निरेवं नाम 30 मुहूर्तो भवतिं ॥

पौषमासे पूर्णे त्रयोदशमुहूर्ते दिवसे सूर्योदये चतुरोजा एवं नाम मुहूर्तो भवति। मध्याह्ने विरतो नाम मुहूर्तो भवति। सूर्यावतारे नैर्ऋतो नाम मुहूर्तो भवति। सप्तदशमुहूर्तायां रात्रावतीर्णमात्रे सूर्ये वरुणो नाम मुहूर्तो भवति। अर्धरात्रे राक्षसो नाम मुहूर्तो भवति। रात्र्यवसाने आतपाग्निरेवं नाम मुहूर्तो भवति ॥

माघमासे पूर्णे द्वादशमुहूर्ते दिवसे सूर्योदये चतुरोजा नाम मुहूर्तो भवति। सावित्रस्य च विरतस्य च मुहूर्तस्यान्तरेण मध्याह्नो भवति। सूर्यावतारे विजयो नाम मुहूर्तो भवति। अष्टादशमुहूर्तायां रात्रावतीर्णमात्रे सूर्ये नैर्ऋतो नाम मुहूर्तो भवति। गर्दभस्य मुहूर्तस्य च राक्षसस्य चान्तरमर्धरात्रं भवति। रात्र्यवसाने आतपाग्निरेवं नाम मुहूर्तो भवति ॥ 5

यथा श्रावणे तथा माघे। यथा भाद्रपदे तथा फाल्गुने। यथा आश्वयुजे तथा चैत्रे। यथा कार्तिके तथा वैशाखे। यथा मार्गशीर्षे तथा ज्येष्ठे। यथा पौषे तथा आषाढे। एवमेतेषां नक्षत्राणां मुहूर्तानां चरितं विचरितं च ज्ञातव्यम् ॥ नक्षत्रविचरणं नाम प्रथमोऽध्यायः ॥ M 108 10

यथामध्यं नक्षत्राणां रात्रिवशेन दिवसवशेन चोत्कर्षापकर्षौ कर्तव्यौ। हीयमाने वर्धमाने वा दिवसे वा मासे वा पूर्णेऽर्धमासे वा। द्वितीया षष्ठी नवमी द्वादशी चतुर्दशी अत्रान्तरे दिवसे कला वर्धते, रात्रौ कला हीयते ॥

चत्वारो महाराजानो ध्रियते यैर्वसुंधरा। 15
अतिवृद्धिर्विशुद्धश्च वर्धमानः पृथक्श्रवाः ॥ २३३ ॥
महाभूतानि चत्वारि कम्पयन्ति वसुंधराम्।
आप इन्द्रश्च वायुश्च तथाग्निर्भगवानपि ॥ २३४ ॥
त्रयस्तु ते यत्र भवन्ति पक्षे
षडेकमासे तु भवन्ति वेगाः। 20
परस्य चक्रस्य निदर्शनं स्या-
त्प्रकम्पते यत्र मही त्वभीक्ष्णम् ॥ २३५ ॥
विशाखा दशरात्री स्याज्जेष्ठा द्वादशरात्रिका। M 109
पञ्चविंशतिराषाढा श्रवणा पञ्चसप्ततिः ॥ २३६ ॥
रात्रिशतं भाद्रपदे ऋतुरश्वयुजे स्मृतः। 25
अध्यर्धं कार्तिके मासे ऋतुर्मार्गशिरे स्मृतः ॥ २३७ ॥
पौषे तु पञ्चपञ्चाशन्माघे रात्रिशतं स्मृतम्।
अध्यर्धं फल्गुने मासे चैत्रे त्रिंशत्तु रात्रयः।
विपाको भूमिवेगानामतः कम्पः प्रवर्तते ॥ २३८ ॥
यदा सर्वेषु मासेषु सततं कम्पते मही। 30
वृक्षास्तथा चलन्ति स्म जलं वा यदि कम्पते।
पर्वतः पर्णवत्कम्पेद् भयमत्र विनिर्दिशेत् ॥ २३९ ॥

M 110 नगराण्यथ वा ग्रामा घोषा ये चात्र संश्रिताः।
शीघ्रं भवन्ति विजनारण्यभूता मृगाश्रयाः॥ २४०॥

अटव्यः संप्रवर्तन्ते दश वर्षाणि पञ्च च।
अनावासा दिशो विद्याद् भूमिचालविचालिताः॥ २४१॥

5 कृत्तिकासु चलेद् भूमिर्ग्रामेषु नगरेषु वा।
अभीक्ष्णं मुच्यते ह्यग्निर्दहते स तृणालयान्॥ २४२॥

कृष्णाग्निरशनेः पातः कर्मारा आहिताश्रयाः।
अगाराश्च निवर्तन्ते संवर्तेनेव धातवः॥ २४३॥

ये जाता ये च संवृद्धा ये च तं ग्राममाश्रिताः।
10 एते व्यसनमर्च्छन्ति भूमिचालविचालिताः॥ २४४॥

रोहिण्यां चलिता भूमिः सर्वबीजविनाशनम्।
प्रोप्तं शस्यं न रोहेत भवेत् फलस्य कृच्छ्रता॥ २४५॥

M 111 गुर्विणीनां च नारीणां गर्भो निपीड्यते भृशम्।
दुर्भिक्षव्यसनाक्रान्ता त्रिभागे तिष्ठति प्रजा॥ २४६॥

15 महात्मानश्च राजानः श्रीमन्तश्च नरोत्तमाः।
एते व्यसनमर्च्छन्ति भूमिचालविचालिताः॥ २४७॥

मृगशीर्षे चलेद्भूमिरोषधीनां विनाशनम्।
चिकित्सकाः श्रोत्रियाश्च घटकाः सोमयाजकाः॥ २४८॥

सोमपीताश्च ये विप्रा वानप्रस्थाश्च तापसाः।
20 एते व्यसनमर्च्छन्ति भूमिचालविचालिताः॥ २४९॥

आर्द्रायां चलिता भूमिर्वृक्षा नश्यन्ति क्षीरिणः।
अन्नपानानि नश्यन्ति पथिका दंष्ट्रिपालिकाः॥ २५०॥

कूपखाः परिखाखाश्च पापका ये च तस्कराः।
एते व्यसनमर्च्छन्ति भूमिचालविचालिताः॥ २५१॥

25 पुनर्वसौ चलेद्भूमिर्मण्डलं कुण्डिकापि च।
वागुरिकाः कारण्डवाश्चक्रिणः शुकसारिकाः॥ २५२॥

अर्भका भ्रमकाराश्च मांसिकाः शङ्खवाणिजाः।
एते व्यसनमर्च्छन्ति भूमिचालविचालिताः॥ २५३॥

M 112 पुष्येण च चलेद् भूमिर्ब्राह्मणा नायकास्तथा।
30 दूरंगमा वाणिजकाः सार्थवाहाश्च ये नराः॥ २५४॥

पार्थिवाः पार्वतीयाश्च ये च तद्भक्तिगोचराः।
एते व्यसनमर्च्छन्ति भूमिचालविचालिताः।
शिलावर्षं प्रवर्षन्ति शस्यानामनयो महान् ॥ २५५ ॥

आश्लेषायां चलेद्भूमिर्नागाः सर्वे सरीसृपाः।
कीटाः पिपीलिकाः श्वाना एकखुराश्च ये मृगाः ॥ २५६ ॥ 5
वैद्या विषकराश्चापि ये च सत्त्वा दरीश्रयाः।
एते व्यसनमर्च्छन्ति भूमिचालविचालिताः ॥ २५७ ॥

मघासु चलिता भूमिर्महाराजोऽत्र तप्यते।
ये च श्राद्धा निवर्तन्ते समाजा उत्सवास्तथा।
यज्ञाश्च देवकृत्यं च सर्वमत्र निवर्तते ॥ २५८ ॥ 10
ये जाता ये च संवृद्धा ये चान्येऽप्यग्रपण्डिताः।
गन्धर्वाश्च विनश्यन्ति नरा ये च महाकुलाः।
एते व्यसनमर्च्छन्ति भूमिचालविचालिताः ॥ २५९ ॥

फल्गुन्यां चलिता भूमिर्ऋतुर्व्यावर्तते तदा।
तिर्यग्वातश्चैव वाति कृतं नश्यति शाश्वतम्। 15
पथिकाश्चोपतप्यन्ति माषयाच्योपजीविकाः ॥ २६० ॥

धर्मे रता आसनिका ये च शुल्कोपजीविनः। M 113
एते व्यसनमर्च्छन्ति भूमिचालविचालिताः ॥ २६१ ॥

चलत्युत्तरफल्गुन्यां वणिजा द्वीपयात्रिकाः।
सार्थवाहा आसनिका ये च शिल्पोपजीविनः ॥ २६२ ॥ 20
अङ्गा विदेहमगधा नैर्ऋताः स्त्रीपरिग्रहाः।
एते व्यसनमर्च्छन्ति भूमिचालविचालिताः ॥ २६३ ॥

हस्तेन चलिता भूमिः कुम्भकारचिकित्सकाः।
गणमुख्या महामात्राः सेनाध्यक्षाश्च ये नराः ॥ २६४ ॥

तारमका (?) नारपटा (?) विप्सरः (?) कौटिका अपि। 25
एते व्यसनमर्च्छन्ति भूमिचालविचालिताः ॥ २६५ ॥

चित्रायां चलिता भूमिः कारुका उपकल्पकाः।
कुमार्यः सर्वरत्नं च सस्यानां बीजकैः सह ॥ २६६ ॥
वङ्गा दशार्णकुरवश्चेदिमाहिषकास्तथा।
एते व्यसनमर्च्छन्ति भूमिचालविचालिताः ॥ २६७ ॥ 30

स्वातौ प्रचलिता भूमिश्चौरा ये च कुशीलकाः ।
हिंसका ये च तत्कर्मरताऽभ्यर्थितमूषकाः ॥ २६८ ॥

हिमवत उत्तरेण वायुभक्षास्तपस्विनः ।
एते व्यसनमर्च्छन्ति भूमिचालविचालिताः ॥ २६९ ॥

M 114 5 विशाखायां चलेद् भूमिर्महाशैलक्षयो भवेत् ।
उग्रा वाताः प्रवान्त्यत्र अश्मकैरकुशलिनः ॥ २७० ॥

अनुराधे चलेद् भूमिर्दस्यूनामनयो महान् ।
विटा द्यूतकराश्चैव ग्रन्थिभेदाश्च ये नराः ॥ २७१ ॥

अन्ध्राः पुण्ड्राः पुलिन्दाश्च भये तिष्ठन्त्यनाश्रिताः ।
10 मित्रभेदश्च बलवान् तदा जगति जायते ॥ २७२ ॥

ज्येष्ठायां चलिता भूमिर्महाराज प्रतप्यते ।
वायसा वृषभा व्याडास्तथा चण्डमृगाश्च ये ॥ २७३ ॥

कुरवः शूरसेनाश्च मल्ला वाह्लीकनिग्रहाः ।
प्रत्यर्थिकेन शीघ्रेण ये च तद्भक्तिभाजनाः ।
15 एते व्यसनमर्च्छन्ति भूमिचालविचालिताः ॥ २७४ ॥

मूलेन चलिता भूमिश्चतुष्पद्द्विपदास्तथा ।
ग्रहाश्रयाः पिशाचाश्च ये च सत्त्वा दरीश्रयाः ।
एते व्यसनमर्च्छन्ति भूमिचालविचालिताः ॥ २७५ ॥

M 115 दुर्भिक्षं च करोत्याशु धान्यमल्पोदकं भवेत् ।
20 दरीपर्वतमूलानि गच्छन्ति च तदा भुवि ॥ २७६ ॥

पूर्वाषाढे चलेद् भूमिर्जलजा मत्स्यशुक्तिकाः ।
शिशुमारा उद्रकाश्च नक्रा मकरकच्छपाः ॥ २७७ ॥

जातिगोत्रप्रधानाश्च धनिनोऽथ विचक्षणाः ।
द्वितीयाभिजाताश्च महाविद्याकराश्च ये ।
25 एते व्यसनमर्च्छन्ति भूमिचालविचालिताः ॥ २७८ ॥

उत्तरस्यां चलेद् भूमिः शिल्पिनामनयो महान् ।
अयस्काराः स्थपतयस्त्रपुकाराश्च तक्षकाः ॥ २७९ ॥

दरिद्रा धनिनश्चापि शिल्पिनो विविधा अपि ।
एते व्यसनमर्च्छन्ति भूमिचालविचालिताः ।
30 ग्रामकूटानि च घ्नन्ति सचलस्थावराणि च ॥ २८० ॥

वैष्णवे चलिता भूमिस्तदेति यदनीप्सितम्।
अध्यापकाः शास्त्रविदः कवयो मन्त्रपारगाः। M 116
युगंधराः शूरसेना अभिराजाः पटच्चराः॥ २८१॥
कुशण्डाः शरदण्डाश्च ये नरा राजपूजिताः।
एते व्यसनमर्च्छन्ति भूमिचालविचालिताः॥ २८२॥ 5
धनिष्ठायां चलेद् भूमिर्धनिनामनयो महान्।
महेश्वरास्तथा महानागराः श्रेष्ठिनस्तथा॥ २८३॥
प्रचण्डाः स्वस्तिमन्तश्च भद्रकारा युगंधराः।
पारिकूलाश्च भोज्याश्च ह्यन्ये सन्नागरा अपि।
एते व्यसनमर्च्छन्ति भूमिचालविचालिताः॥ २८४॥ 10
वारुण्ये चलिता भूमिरौदकेष्वनयो महान्।
हस्तिनोऽश्वखरोष्ट्राश्च स्पर्शमर्च्छन्ति दारुणम्॥ २८५॥
तदासौ वीरकान् मद्रान् बाह्लीकान् केकयानपि।
अनाश्रयांश्चक्रवाकान् जनस्थानपि पीडयेत्॥ २८६॥
साजेन चलिता भूमी राक्षसान् घातकांस्तथा। 15 M 117
औरभ्रिकान् सौकरिकान् सौवीरांश्च निपातयेत्॥ २८७॥
वणिज्यजीविनो वैश्यान् शूद्रांश्च करीतीनपि।
यवनान् मालवाद्यांश्च गन्थिभेदांश्च नाशयेत्॥ २८८॥
अहिर्बुध्न्ये चलेद् भूमिर्वणिजामनयो महान्।
धर्मे रताश्च ये सिद्धा ये च शौक्तिककर्मिणः॥ २८९॥ 20
शिबीन् वत्सान् तथा वात्स्यान् क्षत्रियानार्जुनायनान्।
सिन्धुराजधनुष्पाणीन् सर्वानर्दयतेऽचिरात्॥ २९०॥
रेवत्यां चलिता भूमिः संग्रामः स्यात्सुदारुणः।
ग्रामघाताश्च वर्तन्ते ग्रामो ग्रामं च हिंसति॥ २९१॥
नौचरानुदकाजीवान् रमठान् भरुकच्छकान्। 25
सुधन्वानभिसारांश्च सर्वसेनांश्च निर्दहेत्॥ २९२॥
अश्विन्यां चलिता भूमिरश्वानामनयो महान्। M 118
ग्रामघाताश्च वर्तन्ते भ्राता भ्रातॄन् जिघांसति॥ २९३॥
या चात्र गर्भमाधत्ते ये च जाताश्च तानिह।
त्रीणि वर्षाण्यतो दुःखमुपैति च निरन्तरम्॥ २९४॥ 30

सहिताश्चित्रगर्भाश्च ये ह्यन्ये चाङ्गनाजनाः।
आर्जुनायना राजन्याः सुष्ठु त्रींश्चापि हिंसति॥ २९५॥

भरण्यां चलिता भूमिश्चौराणामनयो महान्।
विटा द्यूतकराश्चैव ग्रन्थिभेदाश्च ये नराः॥ २९६॥

5 आदर्शचक्राटा धूर्तास्तथा बन्धनरक्षकाः।
अन्तावशायिनः पापाश्चरन्ति ये तु दुर्जनाः।
तेऽपि तत्र विपद्यन्ते भूमिचालविचालिताः॥ २९७॥

वेपितायां तु मेदिन्यां भवेद्रूपमनन्तरम्।
सप्ताहाभ्यन्तरात्तत्र मेघो भवति प्रार्थितः॥ २९८॥

M 119 10 स्निग्धो ह्यञ्जनसंकाशो महापर्वतसन्निभः।
इन्द्रश्च वर्षते तत्र महर्षेर्वचनं यथा।
[एव निगदितं नाथैरिन्द्रश्चात्र प्रवर्षति॥ २९९॥]
स्वस्तिकाकारसंकाशा इन्द्रवज्रध्वजोपमाः।
दृश्यन्तेऽभ्रा हि संध्यायां ग्रस्त्वा चन्द्रदिवाकरौ॥ ३००॥

15 तदा नभसि जायन्ते मेघा दाडिमसंनिभाः।
लक्षणं तादृशं दृष्ट्वा विद्यात्तानिन्द्रकम्पितान्।
स निर्देशो भवेत्तत्र महर्षेर्वचनं यथा॥ ३०१॥

अतीव तत्र विश्वस्तः सर्वबीजानि वापयेत्।
व्यवहारांश्च कुर्वीरन्निर्भयास्तत्र वाणिजाः।
20 सर्वेषां भूमिकम्पानां प्रशस्ता इन्द्रकम्पिताः॥ ३०२॥

वेपितायां तु मेदिन्यां भवेद्रूपमनन्तरम्।
सप्ताहाभ्यन्तरे तत्र मेघः संछादयेन्नभः॥ ३०३॥

M 120 ततोऽनुबद्धा जायन्ते अभ्राः कौशेयसंनिभाः।
अनुलोमं च संयान्ति चरन्तः पश्चिमां दिशम्॥ ३०४॥

25 शिशुमार-उद्रकाणां मत्स्यमकरसन्निभाः।
दृश्यन्तेऽभ्राश्च संध्यायां ग्रस्त्वा चन्द्रदिवाकरौ॥ ३०५॥

लक्षणं तादृशं दृष्ट्वा विद्यात्ताञ्जलकम्पितान्।
स निर्देशो भवेत्तत्र महर्षेर्वचनं यथा॥ ३०६॥

स्थलेषु गिरिकूटेषु क्षेत्रेषूपवनेषु च।
30 स्थाप्यन्ते तत्र बीजानि निम्ने नश्यन्ति वै तदा॥ ३०७॥

पङ्केनापि जलेनापि नश्येयू रजसापि वा ।
एतेषां भूमिकम्पानां प्रशस्ता जलकम्पिताः ॥ ३०८ ॥
वेपितायां तु मेदिन्यां भवेद्रूपमनन्तरम् ।
सप्ताहाभ्यन्तरे तत्र वाता वान्ति सुदारुणाः ॥ ३०९ ॥
दृश्यते कपिला संध्या चन्द्रसूर्यौ तु लोहितौ । 5
लक्षणं तादृशं दृष्ट्वा जानीयाद्वायुकम्पितान् ॥ ३१० ॥
ततो भवति निर्देशो महर्षेर्वचनं यथा । M 121
न तत्र प्रवसेत्प्राज्ञ आत्मानं चात्र गोपयेत् ॥ ३११ ॥
गुह्यमावरणं कुर्यात्प्राकारपरिखां खनेत् ।
प्रातिसीमा विरुध्यन्ते नराणां जायते भयम् ॥ ३१२ ॥ 10
एतेषां भूमिकम्पानां सर्वेषां कीर्तिता गुणाः ।
विशेषेण मनुष्याणां निर्मिता वायुकम्पिताः ॥ ३१३ ॥
कम्पितायां तु मेदिन्यां भवेद्रूपमनन्तरम् ।
सप्ताहाभ्यन्तरात्तत्र उल्कापाताः सुदारुणाः ॥ ३१४ ॥
संध्या च लोहिता भाति चन्द्रसूर्यौ तु लोहितौ । 15
लक्षणं तादृशं दृष्ट्वा विज्ञेया अग्निकम्पिताः ॥ ३१५ ॥
अग्निर्दहति काष्ठानि रक्षितानि धनानि च ।
दृश्यन्ते धूमशिखराः शस्त्रं च खिद्यते भृशम् ॥ ३१६ ॥
वीणाश्च दिवि दृश्यन्ते नव मासान्न वर्षति ।
एतेषां भूमिकम्पानां जघन्या अग्निकम्पिताः ॥ ३१७ ॥ 20

जयति अहनि पूर्वे क्षत्रियान् पार्थिवांश्च
हयगजरथमुख्यान् मन्त्रिणो मध्यमाह्ने ।
व्यथयति अपराह्णे गोपशून् वैश्यशूद्रान् M 122
प्रदहति निशिसंध्या तस्करानन्तवासान् ॥ ३१८ ॥
रजनिमिह प्रदोषे हिंसते म्लेच्छसंघान् 25
स्त्रियमपि च नपुंसश्चार्धरात्रेष्वनन्तान् ।
कृषिवणिगुपजीव्यान् हन्ति यामे तृतीये
व्यथयति सुरपक्षं रौद्रकर्मान्तकृण्णे ॥ ३१९ ॥
प्रदहति शशिपक्षे याज्ञिकं ब्रह्मक्षत्र
श्रपयति शुचिवृत्तानेव धर्मे प्रधानान् । 30
विदुषि च मृदुभावं विन्दते यो ह्यधीते
स भवति नृपपूज्यो ब्राह्मणो वेददर्शी ॥ ३२० ॥

M 123

बृहस्पतेश्च चत्वारि समानि शुभकर्मणा ।
चत्वारि सूर्यकर्माणि तुल्यानि शुक्रकर्मणा ।
सोमकर्माणि चत्वारि ब्रह्मकर्म च तत्समम् ॥ ३२१ ॥

अयं भोः पुष्करसारिन् भूमिकम्पनिर्देशो नामाध्यायः ॥

5 अथ भोः पुष्करसारिन् अमीषामष्टाविंशतीनां नक्षत्राणां रोगोत्पत्तिं नामाध्यायं व्याख्यामि । तच्छ्रूयताम् । कथयतु भगवान्—

कृत्तिकासूत्थितो व्याधिः स्त्रिया वा पुरुषस्य वा ।
चतूरात्रं भवेद् व्याधिस्ततश्चोर्ध्वं विमुच्यते ॥ ३२२ ॥
अग्निर्हि देवता तत्र दध्ना ह्यस्य बलिं हरेत् ।
10 अनेन बलिकर्मेण तस्माद्रोगाद्विमुच्यते ॥ ३२३ ॥
रोहिण्यामुत्थितो व्याधिः स्त्रिया वा पुरुषस्य वा ।
पञ्चरात्रं भवेद्व्याधिस्ततश्चोर्ध्वं विमुच्यते ॥ ३२४ ॥
देवः प्रजापतिस्तत्र शुद्धमाल्यैर्बलिं हरेत् ।
अनेन बलिकर्मेण तस्माद्रोगाद्विमुच्यते ॥ ३२५ ॥
15 व्याधिर्मृगशिरोभूतः स्त्रिया वा पुरुषस्य वा ।
अष्टरात्रं भवेद् व्याधिस्ततश्चोर्ध्वं विमुच्यते ॥ ३२६ ॥
सोमो हि देवता तत्र मण्डेन तु बलिं हरेत् ।
अनेन बलिदानेन तस्माद्रोगाद्विमुच्यते ॥ ३२७ ॥

M 124

आर्द्रायामुत्थितो व्याधिः स्त्रिया वा पुरुषस्य वा ।
20 दशरात्रं भवेद् व्याधिस्ततश्चोर्ध्वं विमुच्यते ॥ ३२८ ॥
रुद्रो हि देवता तत्र पायसेन बलिं हरेत् ।
अनेन बलिकर्मेण तस्माद्रोगाद्विमुच्यते ॥ ३२९ ॥
पुनर्वसौ भवेद् व्याधिः स्त्रिया वा पुरुषस्य वा ।
अष्टरात्रं भवेद् व्याधिस्ततश्चोर्ध्वं विमुच्यते ॥ ३३० ॥
25 आदित्यो देवता तत्र गन्धमाल्यैर्बलिं हरेत् ।
अनेन बलिकर्मेण तस्माद्रोगाद्विमुच्यते ॥ ३३१ ॥
पुष्ये समुत्थितो व्याधिः स्त्रिया वा पुरुषस्य वा ।
स्तोककालं भवेत्तस्य पञ्चरात्राद्विमुच्यते ॥ ३३२ ॥
देवो बृहस्पतिस्तत्र गन्धमाल्यैर्बलिं हरेत् ।
30 अनेन बलिकर्मेण तस्माद्रोगाद्विमुच्यते ॥ ३३३ ॥

आश्लेषायां भवेद् व्याधिः स्त्रिया वा पुरुषस्य वा।
न तं वैद्याश्चिकित्सन्तु सर्पस्तत्र तु दैवतः॥ ३३४॥

मघासमुत्थितो व्याधिः स्त्रिया वा पुरुषस्य वा।
अष्टरात्रं भवेद् व्याधिस्ततश्चोर्ध्वं विमुच्यते॥ ३३५॥

पितरो देवतास्तत्र कृसरेण बलिं हरेत्। 5
अनेन बलिकर्मेण तस्माद्रोगाद्विमुच्यते॥ ३३६॥

पूर्वफाल्गुनिजो व्याधिः स्त्रिया वा पुरुषस्य वा।
सप्तरात्रं भवेद् व्याधिस्ततश्चोर्ध्वं विमुच्यते॥ ३३७॥

अर्यमा देवता तत्र गन्धमाल्यैर्बलिं हरेत्। M 125
अनेन बलिकर्मेण तस्माद्रोगाद्विमुच्यते॥ ३३८॥ 10

उत्तरायां भवेद् व्याधिः स्त्रिया वा पुरुषस्य वा।
न तं वैद्याश्चिकित्सन्तु भगोऽप्यत्र तु देवता॥ ३३९॥

हस्तेनाप्युत्थितो व्याधिः स्त्रिया वा पुरुषस्य वा।
पञ्चरात्रं भवेद् व्याधिस्ततश्चोर्ध्वं विमुच्यते॥ ३४०॥

रविर्हि देवता तत्र गन्धपुष्पैर्बलिं हरेत्। 15
अनेन बलिकर्मेण तस्माद्रोगाद्विमुच्यते॥ ३४१॥

चित्रायामुत्थितो व्याधिः स्त्रिया वा पुरुषस्य वा।
अष्टरात्रं भवेद् व्याधिस्ततश्चोर्ध्वं विमुच्यते॥ ३४२॥

त्वष्टा हि देवता तत्र घृतमुद्गैर्बलिं हरेत्।
अनेन बलिकर्मेण तस्माद्रोगाद्विमुच्यते॥ ३४३॥ 20

स्वात्यां समुत्थितो व्याधिः स्त्रिया वा पुरुषस्य।
क्लेशितो हि भवेद् व्याधिः पञ्चविंशतिरात्रिकः॥ ३४४॥

देवतात्र भवेद् वायुश्चित्रमाल्यैर्बलिं हरेत्।
अनेन बलिकर्मेण तस्माद्रोगाद्विमुच्यते॥ ३४५॥

विशाखायां भवेद् व्याधिः स्त्रिया वा पुरुषस्य वा। 25
गुरुकोऽसौ भवेद् व्याधिरहान्येकोनविंशतिः॥ ३४६॥

इन्द्राग्नी देवता तत्र गन्धमाल्यैर्बलिं हरेत्। M 126
अनेन बलिकर्मेण तस्माद्रोगाद्विमुच्यते॥ ३४७॥

अनुराधोत्थितो व्याधिः स्त्रिया वा पुरुषस्य वा।
अर्धमासं भवेद् व्याधिस्ततश्चोर्ध्वं विमुच्यते॥ ३४८॥ 30

मित्रो हि देवता तत्र घृतपात्रं बलिं हरेत्।
अनेन बलिकर्मेण तस्माद्रोगाद्विमुच्यते ॥ ३४९ ॥

ज्येष्ठायामुत्थितो व्याधिः स्त्रिया वा पुरुषस्य वा।
क्लेशिको हि भवेद् व्याधिरहोरात्रत्रयोदश ॥ ३५० ॥

5 इन्द्रो हि देवता तत्र गन्धमाल्यैर्बलिं हरेत्।
अनेन बलिकर्मेण तस्माद्रोगाद्विमुच्यते ॥ ३५१ ॥

मूले समुत्थितो व्याधिः स्त्रिया वा पुरुषस्य वा।
मासिको हि भवेद् व्याधिस्ततश्चोर्ध्वं विमुच्यते ॥ ३५२ ॥

नैऋतिर्देवता तत्र मद्यमांसैर्बलिं हरेत्।
10 अनेन बलिकर्मेण तस्माद्रोगाद्विमुच्यते ॥ ३५३ ॥

पूर्वाषाढे भवेद् व्याधिः स्त्रिया वा पुरुषस्य वा।
सांक्लेशिको भवेद् व्याधिरष्टौ मासान्न संशयः ॥ ३५४ ॥

आपो हि देवतास्तत्र कृसरेण बलिं हरेत्।
अनेन बलिंकर्मेण तस्माद्रोगाद्विमुच्यते ॥ ३५५ ॥

15 उत्तरायां भवेद् व्याधिः स्त्रिया वा पुरुषस्य वा।
सप्तरात्रं भवेत् व्याधिस्ततश्चोर्ध्वं विमुच्यते ॥ ३५६ ॥

विश्वो हि देवता तत्र पायसेन बलिं हरेत्।
अनेन बलिकर्मेण तस्माद्रोगाद्विमुच्यते ॥ ३५७ ॥

M 127 अभिजिदुत्थितो व्याधिः स्त्रिया वा पुरुषस्य वा।
20 षण्मासान् संभवेद् व्याधिस्ततश्चोर्ध्वं विमुच्यते ॥ ३५८ ॥

विष्णुश्च देवता तत्र दधिमण्डं बलिं हरेत्।
अनेन बलिकर्मेण तस्माद्रोगाद्विमुच्यते ॥ ३५९ ॥

श्रवणेनोत्थितो व्याधिः स्त्रिया वा पुरुषस्य वा।
गुरुको हि भवेद् व्याधिः पूर्णं द्वादशमासिकम् ॥ ३६० ॥

25 विष्णुर्हि देवता तत्र गन्धमाल्यैर्बलिं हरेत्।
अनेन बलिकर्मेण तस्माद्रोगाद्विमुच्यते ॥ ३६१ ॥

धनिष्ठायां भवेद् व्याधिः स्त्रिया वा पुरुषस्य वा।
त्रयोदशदिवस्तत्र ततश्चोर्ध्वं विमुच्यते ॥ ३६२ ॥

वरुणो देवता तत्र पायसेन बलिं हरेत्।
30 अनेन बलिकर्मेण तस्माद्रोगाद्विमुच्यते ॥ ३६३ ॥

पूर्वभद्रोत्थितो व्याधिः स्त्रिया वा पुरुषस्य वा ।
न तं वैद्याश्चिकित्सन्तु अहिर्बुध्न्योऽत्र दैवतः ॥ ३६४ ॥
उत्तराभाद्रजो व्याधिः स्त्रिया वा पुरुषस्य वा ।
सप्तरात्रं भवेद् व्याधिस्ततश्चोर्ध्वं विमुच्यते ॥ ३६५ ॥
अर्यमा देवता तत्र गन्धमाल्यैर्बलिं हरेत् । 5
अनेन बलिकर्मेण तस्माद्रोगाद्विमुच्यते ॥ ३६६ ॥
रेवत्यामुत्थितो व्याधिः स्त्रिया वा पुरुषस्य वा । M 128
मृदुको हि भवेद् व्याधिरष्टाविंशतिरात्रिकः ॥ ३६७ ॥
पूषा हि देवता तत्र गन्धमाल्यैर्बलिं हरेत् ।
अनेन बलिकर्मेण तस्माद्रोगाद्विमुच्यते ॥ ३६८ ॥ 10
अश्विन्यामुत्थितो व्याधिः स्त्रिया वा पुरुषस्य वा ।
सांक्लेशिको भवेद् व्याधिः पञ्चविंशतिरात्रिकः ॥ ३६९ ॥
गन्धर्वो देवता तत्र यावकेन बलिं हरेत् ।
अनेन बलिकर्मेण तस्माद्रोगाद्विमुच्यते ॥ ३७० ॥
भरण्यामुत्थितो व्याधिः स्त्रिया वा पुरुषस्य वा । 15
न तं वैद्याश्चिकित्सन्तु यमस्तत्र तु दैवतः ।
शीलं रक्षतु मेधावी ततः स्वर्गं गमिष्यति ॥ ३७१ ॥

अयं भोः पुष्करसारिन् व्याधिसमुत्थानो नामाध्यायः ॥

अथ खलु भोः पुष्करसारिन् बन्धननिर्मोक्षं नामाध्यायं व्याख्यास्यामि। तच्छ्रूयताम्। कथयतु भगवान्— 20

कृत्तिकासु भोः पुष्करसारिन् बद्धो वा रुद्धो वा त्रिरात्रेण मोक्ष्यतीति वक्तव्यः। रोहिण्यां बद्धो वा रुद्धो वा त्रिरात्रेण मोक्ष्यतीति । मृगशिरसि बद्धो वा रुद्धो वा एकविंशतिरात्रेण मोक्ष्यतीति । आर्द्रायां बद्धो वा रुद्धो वा अर्धमासेन मोक्ष्यतीति । पुनर्वसौ रुद्धो वा बद्धो वा सप्तरात्रेण । पुष्ये त्रिरात्रेण । आश्लेषायां त्रिंशद्रात्रेण । मघासु षोडशरात्रेण । पूर्वफाल्गुनीषु दशरात्रेण । उत्तरफाल्गुनीषु सप्तरात्रेण । हस्ते पञ्चरात्रेण । चित्रायां सप्तरात्रेण । 25 स्वात्यां दशरात्रेण । विशाखायां षड्विंशद्रात्रेण । अनुराधायामेकत्रिंशद्रात्रेण । ज्येष्ठायामष्टादशरात्रेण । मूले षट्त्रिंशद्रात्रेण । पूर्वाषाढायां चतुर्दशरात्रेण । उत्तराषाढायां चतुर्दशरात्रेण । अभिजिति षड्रात्रेण । श्रवणे धनिष्ठायां शतभिषायां पूर्वभाद्रपदे उत्तरभाद्रपदे रेवत्यां चतुर्दशरात्रेण । अश्विन्यां त्रिरात्रेणं । भरण्यां बद्धो वा रुद्धो वा परिक्लेशमवाप्स्यतीति वक्तव्यः ॥ 30

M 129

अयं भोः पुष्करसारिन् बन्धननिर्मोक्षो नामाध्यायः ॥

अथ भोः पुष्करसारिन् तिलकाध्यायं व्याख्यास्यामि । तच्छ्रूयताम् । कथयतु भगवान्—

मूर्ध्नि तु यस्यास्तिलकोऽस्ति सूक्ष्मः
स्निग्धो भवेत् पद्मसमानवर्णः ।
राजा तु तस्या भवतीह भर्ता
स्तनोपरिष्टात्प्रतिबिम्बमाहुः ॥ ३७२ ॥

M 130 5 शीर्षे तु यस्यास्तिलकालकः स्यात्
सूक्ष्मो भवेदञ्जनचूर्णवर्णः ।
सेनापतिस्तस्या भवेद्धि भर्ता
स्तनान्तरेऽस्याः प्रतिबिम्बकं स्यात् ॥ ३७३ ॥

भ्रुवोन्तरेऽस्यास्तिलकालकः स्याद्
10 दुश्चारिणीं तां प्रमदां वदन्ति ।
पञ्चैव तस्याः पतयो भवन्ति
बह्वन्नपानं लभते च नारी ॥ ३७४ ॥

गण्डस्य नासादिकमध्यदेशे
M 131 भवेच्च बिम्बं तिलकस्य यस्याः ।
15 तां शोकभाजं प्रमदां वदन्ति
रोमप्रदेशे प्रतिबिम्बमाहुः ॥ ३७५ ॥

कर्णे तु यस्यास्तिलकालकः स्याद्
बहुश्रुतां तां प्रमदां वदन्ति ।
बहुश्रुतां तां श्रुतिधारिणीं च
20 त्रिके तु यस्याः प्रतिबिम्बकं स्यात् ॥ ३७६ ॥

यस्योत्तरोष्ठे तिलकालकः स्या-
त्तां भिन्नसत्यां प्रमदां वदन्ति ।
कृच्छ्रेण सा वै लभते हि वृत्ति-
मूरौ तु तस्यास्तिलबिम्बमाहुः ॥ ३७७ ॥

25 यस्याधरोष्ठे तिलकालकः स्याद्
M 132 दुश्चारिणीं तां प्रमदां वदन्ति ।
मिष्टान्नपानं बहु ऋच्छते सा
तथा हि गुह्ये प्रतिबिम्बकं स्यात् ॥ ३७८ ॥

चिबुके तु यस्यास्तिलकालकः स्याद्
30 दुश्चारिणीं तां प्रमदां वदन्ति ।
मिष्टान्नपानं बहु सा लभेत
गुह्ये द्वितीयं प्रतिबिम्बकं स्यात् ॥ ३७९ ॥

अयं भो पुष्करसारिंस्तिलकाध्यायो नामाध्यायः ॥

अथ खलु भोः पुष्करसारिन् नक्षत्रजन्मगुणं नामाध्यायं व्याख्यास्यामि। तच्छ्रूयताम्। कथयतु भवान् त्रिशङ्को—

कृत्तिकासु नरो जातस्तेजस्वी प्रियसाहसः।
भवेच्छूरस्तथा चण्डः प्रियवादी च मानवः॥ ३८०॥
रोहिण्यां पुरुषो जातो धनवान् धार्मिकस्तथा। 5
व्यवसायी स्थिरः शूरो ध्रुवं चास्य सदा सुखम्॥ ३८१॥
जातो मृगशिरे यस्तु मृदुः सौम्यस्तु मानवः। M 133
दर्शनीयो भवेच्चासौ स्त्रीकान्तस्तु विशेषतः॥ ३८२॥
आर्द्राजातस्तु हिंसात्मा चण्डः परमजल्पकः।
रौद्रकर्मा भवेच्चासावीश्वरश्च शतैर्महान्॥ ३८३॥ 10
जातः पुनर्वसौ यस्तु ह्यलोलो बुद्धिमान्नरः।
धर्मशीलो भवेच्चासौ जातक्रोधश्च मानवः॥ ३८४॥
पुष्येण पुरुषो जातस्तेजस्वी ब्राह्मणो भवेत्।
क्षत्रियश्च भवेद्राजा वैश्यशूद्रौ च पूजितौ॥ ३८५॥
श्वसनः क्रोधनः क्रूरो ह्याश्लेषासंभवो नरः। 15
दुर्मनुष्यश्च चण्डश्च इति सर्वमिहादिशेत्॥ ३८६॥
बहुप्रज्ञः श्राद्धकरो बहुभाग्यस्तथैव च।
धनवान् धान्यवान् भोगी मघासु पुरुषो भवेत्॥ ३८७॥
पूर्वफाल्गुनीजातस्तु यः कश्चित्पुरुषो भवेत्।
अधर्मबुद्धिशीलश्च गुरुदाराभिमर्दकः॥ ३८८॥ 20
उत्तरायां तु फाल्गुन्यां जातो भवति भोगवान्।
दिव्यज्ञानश्च विज्ञाने पुरुषः सुभगो भवेत्॥ ३८९॥
हस्ते जातश्च शुद्धात्मा विक्रान्तो मृदुभोजनः।
सेनापत्यं च कुरुतेऽस्तेयकर्मा भवेदसौ॥ ३९०॥
चित्रासु जातश्चित्राक्षस्तथा चित्रकथाकरः। 25
दर्शनीयो बहुस्त्रीकश्चित्रशीलो भवेन्नरः॥ ३९१॥
स्वात्यां च पुरुषो जातो बन्धुश्लाघी विचक्षणः। M 134
मृदुकः पानशौण्डश्च मित्रकारी विचारवान्॥ ३९२॥
विशाखासु नरो जातस्तेजस्वी द्रव्यवान् महान्।
शूरो विक्रमवान् दक्षः सुभगश्च भवेदसौ॥ ३९३॥ 30
अनुराधोद्भवो मर्त्यो मित्रवान् संग्रही नरः।
शुचिश्चैव कृतज्ञश्च धर्मात्मा च भवेच्च सः॥ ३९४॥

ज्येष्ठासु पुरुषो जातो मित्रवानभिजायते।
धनुर्वेदाभिरामश्च नारीषु कुरुते मनः॥ ३९५॥
मूलेषु पुरुषो जातोऽकृतज्ञः स्यादधार्मिकः।
दृढो वीरो भवेच्चासौ किल्बिषी च स मानवः॥ ३९६॥
5 आषाढासु च पूर्वासु मत्सरी चलितेन्द्रियः।
मत्स्यमांसप्रियश्चापि घातकः स्यात्स मानवः॥ ३९७॥
सानुक्रोशश्च दाता च विद्यानिष्ठः सुहृज्जनः।
विश्वदैवे नरो जातो भवेदपि च निश्चितः॥ ३९८॥
आचार्यः शास्त्रकर्ता च विश्वासी च क्रियापरः।
10 श्रवणे जात आयुष्मान् श्रीमांश्च पुरुषो भवेत्॥ ३९९॥
अनवस्थितचित्तश्च चित्रद्रव्यश्च मानवः।
धनिष्ठासु भवेज्जातः पुरुषः सर्वशङ्कितः॥ ४००॥
M 135 वारुणे यदि नक्षत्रे जातो भवति मानवः।
पुरुषो द्वेषशीलश्च परिवादी च सर्वशः॥ ४०१॥
15 जातो भाद्रपदायां तु पूर्वस्यामिह मानवः।
चारित्रगुणयुक्तश्च कृतज्ञो मुखरस्तथा॥ ४०२॥
उत्तरस्यां नरो जातो भविष्यति विचक्षणः।
मेधावी बहुपत्नश्च धर्मशीलो महाधनः॥ ४०३॥
रेवत्यां पुरुषो जातो धर्मात्मा ज्ञातिसेवकः।
20 दरिद्रोऽल्पधनो नित्यं दायको नानसूयकः॥ ४०४॥
अश्विन्यां पुरुषो जातो भवत्यतिविचक्षणः।
महाजनप्रियश्चापि शूरश्च सुभगश्च सः॥ ४०५॥
भरण्यां पुरुषो जातः पापाचारोऽविचक्षणः।
कन्दर्पे दातुकामश्च परतश्चोपजीवकः॥ ४०६॥

25 अयं भोः पुष्करसारिन् नक्षत्रजन्मगुणो नामाध्यायः॥



पठ भोस्विशङ्को उत्पातचक्रं नामाध्यायम् । कथयति च– M 136

## उत्पातचक्रनिर्देशः[1] ।

अष्टाविंशतिपर्यन्तकृत्स्ने नक्षत्रमण्डले ।
दिव्या विकारा दृश्यन्ते सूर्यचन्द्रग्रहादिषु ॥ ४०७ ॥
माघस्य प्रथमे पक्षे शैलो वा पार्थिवो यदि ।
धूमवृष्टिर्हि आदित्ये उदयति प्रदृश्यते । 5
विद्युतो वाथ दृश्यन्ते तदा विद्याज्जनक्षयम् ॥ ४०८ ॥
अश्विन्यामर्कतो धूमो निर्गच्छन्नपि छादयेत् ।
अनावृष्टिं तदा विद्यात्पूर्णवर्षाणि द्वादश ॥ ४०९ ॥
भरण्यां माघमासे तु पीतसूर्योऽथ दृश्यते ।
समन्ताद्वध्यते राष्ट्रं मध्ये दुर्भिक्षमादिशेत् ॥ ४१० ॥ 10
फाल्गुने कृत्तिकायां तु आदित्ये परिखो यदि ।
नश्यन्ति कर्वटास्तत्र यदि देवो न वर्षति ॥ ४११ ॥
चैत्रमासे यदा पुष्ये सूर्ये कृष्णं प्रदृश्यते ।
अचिरोदयकाले तु क्षितिपालोऽवरुध्यते ॥ ४१२ ॥
वैशाखमासे चार्द्रायामादित्यः प्रतिसूर्यकः । 15
संग्रामं तत्र जानीयादुभौ घात्येते पार्थिवौ ॥ ४१३ ॥
गृह्येतां चन्द्रसूर्यौ वा ज्यैष्ठे भरणिज्येष्ठयोः ।
सामात्यो वध्यते राजा राष्ट्रे दुर्भिक्षमादिशेत् ॥ ४१४ ॥
आषाढे च यदादित्ये पूर्वभाद्रपदे स्थिते ।
सायाह्ने दृश्यतेऽत्यर्थं लोहितो मण्डले व्रणः ॥ ४१५ ॥ 20
परचक्रेण तद्राष्ट्रं षण्मासान् पीड्यते तदा ।
क्षितिपालश्च सामात्यः पुत्रदारेण वध्यते ॥ ४१६ ॥
पूर्वायां चोत्तराषाढायामाषाढे गृह्यते शशी ।
विद्याद् दुर्भिक्षकलहरोगांश्चात्र विनिर्दिशेत् ॥ ४१७ ॥
मासेऽथ श्रावणे मूले चन्द्रसूर्यौ न भासतः । 25
स्फुलिङ्गाश्चात्र दृश्यन्ते विद्याद्रोगभयं महत् ॥ ४१८ ॥ M 137
मासेऽश्वयुजि गृह्येतामेकपक्षेन्दुभास्करौ ।
राजपुत्रसहस्राणां तदा जायेत संक्षयः ॥ ४१९ ॥
अलक्षणो निःप्रकाशः पूर्णमास्यां तु कार्तिके ।
चन्द्रसूर्यावग्निवर्णौ रक्तवर्णे नभस्तले ॥ ४२० ॥ 30

---

१ Both Chinese and Tibetan translations omit chapters from उत्पातचक्रनिर्देश up to the end of तिथिकर्मनिर्देश.

रविवद्भाति तद्राष्ट्रं विनश्येत पुनः पुनः ।
राज्ञां विद्याद्धतानां वै भूमिः पास्यति शोणितम् ॥ ४२१ ॥
भरण्यां माघमासे तु कृष्णो वायुः समुत्थितः ।
छादयेच्चन्द्रसूर्यौ तु शीघ्रं राष्ट्रं विनश्यति ॥ ४२२ ॥
5 मासे तु फाल्गुने वायुः पांशुवर्षं सविद्युतम् ।
वध्यन्ते पूर्वराजानः प्रतिष्ठन्ते तथापरे ॥ ४२३ ॥
सहादित्येन चन्द्रेऽथ यदा कश्चिद् ग्रहश्चरेत् ।
वायुर्वा विषमो वाति विद्याद्राजवधं तदा ॥ ४२४ ॥
अशन्युल्के तु वैशाखे आदित्येन सहोत्थिते ।
10 षण्मासाभ्यन्तरेणाथ राष्ट्रे व्यसनमादिशेत् ॥ ४२५ ॥
ज्येष्ठमासे यदादित्यो ग्रहतो निर्गतो भवेत् ।
आदित्यस्योपघातेन ग्रहाः सर्वेऽथ पीडिताः ॥ ४२६ ॥
ज्येष्ठे च पांशुर्वर्षेत आदित्यः परिविष्यते ।
क्षितिपालसहस्राणामेक एकस्तु वध्यते ॥ ४२७ ॥
15 आषाढे वायवो वान्ति गच्छन्तो भरणीस्थिताः ।
उदपानानि शुष्यन्ते सर्वशस्यं च पुष्यति ॥ ४२८ ॥
श्रावणे वायवः पीताः सदा कृष्णं नभस्तलम् ।
भयं तत्र विजानीयात्समन्तात् समुपस्थितम् ॥ ४२९ ॥
श्रावणे वर्षते ह्यग्निः पूर्वभाद्रपदे दिवा ।
20 मेघाः शब्दमुकुर्वन्ति रोगदुर्भिक्षमादिशेत् ॥ ४३० ॥
M 138 यदा भाद्रपदे मासे नभः स्याच्छन्नगर्जितम् ।
परचक्रं तदा राष्ट्रे हरते धनसंचयम् ॥ ४३१ ॥
अश्वयुजि वातवृष्टिः स्यादागत्योत्तरां दिशम् ।
पातयेच्चैवमाघातं कृत्स्नं राष्ट्रं विनश्यति ॥ ४३२ ॥
25 कार्तिके शुक्लत्रयोदश्यां यदा चन्द्रे धनुर्भवेत् ।
समन्तान्नश्यते राष्ट्रं मध्ये दुर्भिक्षमादिशेत् ॥ ४३३ ॥
उल्कापाता ह्यशनयो माघमासे भवन्ति वा ।
अश्विन्यां विषये तत्र प्रजा श्वासेन वध्यते ॥ ४३४ ॥
मासे तु फाल्गुने यत्र अग्निवर्षं नभस्तलात् ।
30 भवेच्छब्दस्तदाकाशे तद्राष्ट्रं नश्यते लघु ॥ ४३५ ॥
स्वात्यां चैत्रे यदा वर्षं निरुद्धं वातवर्षितम् ।
दृश्यतेन्द्रधनुः क्षिप्रं नगरं तद्विनश्यति ॥ ४३६ ॥

भरण्यां ज्येष्ठमासे तु शब्द उत्तरतो भवेत् ।
पीतवर्णं तदाकाशं परचक्रभयं भवेत् ॥ ४३७ ॥
आषाढे मासि पुण्येऽथ दृश्यन्ते व्योम्नि विद्युतः ।
सतृणोदकवृष्टिभिस्त्रिभागं मुच्यते प्रजा ॥ ४३८ ॥
श्रावणे तु यदा मूले बहु देवः प्रवर्षति । 5
दृश्यतेन्द्रधनुस्तत्र क्षत्रियाणां महद्भयम् ॥ ४३९ ॥
मासे भाद्रपदे यत्र निर्घातः पतति क्षितौ ।
सुकृच्छ्रा वायवो वान्ति महद्रोगभयं तदा ॥ ४४० ॥
मासे भाद्रपदे पुष्ये विदिग्भ्यो निश्चरेद् ध्वनिः ।
क्षत्रियः कुप्यते क्षिप्रं विपक्षा तु तदा प्रजा ॥ ४४१ ॥ 10
भरण्यामश्वयुजे शब्द उपरिष्टाद्भवेद्यदि ।
सतृणं चोत्सृजेत्पांशु तापसानां महद्भयम् ॥ ४४२ ॥
कार्तिके तु यदार्द्रायां शब्दः श्रूयेत भैरवः ।
चतुष्पदः कार्षकाणां मृत्युं तत्र विनिर्दिशेत् ॥ ४४३ ॥
मार्गशीर्षे धनिष्ठायां तूर्यशब्दोऽम्बरे भवेत् । 15 M 139
वातातुरस्तदा राष्ट्रे व्याधिर्भवति दारुणः ॥ ४४४ ॥
पौषमासे यदा स्वात्यां शब्दो भवति भैरवः ।
अभीक्ष्णं विंद्युदाकाशे पण्डितानां महद्भयम् ॥ ४४५ ॥
माघे शुक्ले तु निर्घातो नित्यं शाम्येद्वसुंधराम् ।
जानीयात्तृतीये वर्षे सकलं राष्ट्रविभ्रमम् ॥ ४४६ ॥ 20
ज्येष्ठायां फाल्गुने मासे कृष्णवायुः समाकुलः ।
अभीक्ष्णं कम्पते भूमिर्ब्रह्मचारिभयं तदा ॥ ४४७ ॥
पूर्वभाद्रपदायां तु चैत्रे कम्पेत्क्षितिर्दिवा ।
तस्मिन् वर्षे च तद्राष्ट्रे परसैन्यान्महद्भयम् ॥ ४४८ ॥
पूर्वायां चेदाषाढायां रात्रौ चैत्रे च निश्चलेत् । 25
असिभिर्हन्यते राजा हन्यते च महाजनः ॥ ४४९ ॥
वैशाखे कम्पिता भूमिः कृष्णपक्षे ह्यभीक्ष्णशः ।
अनावृष्ट्या तु दुर्भिक्षं मासान् षट् तत्र निर्दिशेत् ॥ ४५० ॥
ज्येष्ठे मासे भरण्यां तु दिवा कम्पेद्वसुंधरा ।
विद्याघोषसहस्राणां मही पास्यति शोणितम् ॥ ४५१ ॥ 30
ज्येष्ठे मासे यदा मूले रात्रौ भूमिः प्रकम्पते ।
प्रत्यन्तो वध्यते राजा राष्ट्रे बलिं समादिशेत् ॥ ४५२ ॥

आषाढे कम्पते भूमिः पुष्यनक्षत्रसंस्थिते ।
शस्यं विनश्यते तत्र कलिकर्म च जायते ॥ ४५३ ॥
प्रकम्पन्ते यदा चैत्या आर्द्रायां वा मघासु वा ।
ज्वलेयुः प्रपतेयुर्वा नश्येद्राष्ट्रं तदा लघु ॥ ४५४ ॥
5 चैत्या यत्र प्रकम्पन्ते हसन्ति च नमन्ति च ।
सराष्ट्रः क्षितिपस्तत्र नचिरान्नाशमर्च्छति ॥ ४५५ ॥
M 140 श्रावणे कम्पते भूमिः पूर्वभाद्रपदास्थिते ।
सदा पराजितो राजा चौरै राष्ट्रे च वध्यते ॥ ४५६ ॥
कार्तिके क्षितिकम्पेन यदा चैत्यं विशीर्यते ।
10 द्वारं वा नगरस्याथ भूयिष्ठं नश्यते प्रजा ॥ ४५७ ॥
वामे वा दक्षिणे चेन्दोः शृङ्गे तिष्ठेद् बृहस्पतिः ।
महाभोगा विनश्येयुः प्रकाशाः पृथिवीश्वराः ॥ ४५८ ॥
सूर्याचन्द्रमसोः शृङ्गे लोहिताङ्गो यदारुहेत् ।
क्रूराक्षमन्त्रिकात्पीडां प्रत्यन्तानां विनिर्दिशेत् ॥ ४५९ ॥
15 शनैश्चरो यदा शृङ्गे सोमस्याभिरुहेत्तदा ।
ज्ञेयं रोगभयं घोरं दुर्भिक्षं चात्र निर्दिशेत् ॥ ४६० ॥
राहुणा निगृहीतस्तु चोल्कया हन्यते शशी ।
षण्मासाभ्यन्तरात्तत्र राज्ञो व्यसनमादिशेत् ॥ ४६१ ॥
यस्य चैवाथ नक्षत्रे शशी सूर्यो विगृह्यते ।
20 राहुणा क्षितिपो राज्यैः सह पीडामवाप्नुयात् ॥ ४६२ ॥
राज्ञो वै चाथ नक्षत्रे चन्द्रं केतुर्यदा विशेत् ।
प्रत्यन्तराजभिः सार्धं शस्त्रमूर्च्छां विनिर्दिशेत् ॥ ४६३ ॥
चन्द्रमध्यगतः शुक्रः फाल्गुन्याथ मघा यदा ।
सर्वधान्यानि शुष्येयुस्तदा रोगं विनिर्दिशेत् ॥ ४६४ ॥
25 बृहस्पतिश्च शुक्रश्च लोहिताङ्गः शनैश्चरः ।
लिख्यन्ति सोमशृङ्गस्य तदा विद्यान्महद्भयम् ॥ ४६५ ॥
धूमकेतुर्महाभागः पुष्यमारुह्य तिष्ठति ।
चतुर्दिशं तदा विद्यात्परचक्रैः पराभवम् ॥ ४६६ ॥
मघायां लोहिताङ्गो वा श्रवणे वा बृहस्पतिः ।
30 तिष्ठेत्संवत्सरस्त्रीणि भयं विद्यात्समागतम् ॥ ४६७ ॥
तिष्ठेच्छुक्रोऽथ रोहिण्यां ज्येष्ठे मासे कथंचन ।
व्याकुर्यान्नियतमत्र क्षत्रियाणां महद्भयम् ॥ ४६८ ॥

विशाखायां समीपस्थौ बृहस्पतिशनैश्चरौ ।　　M 141
सोमो वा रविणा सार्धं परचक्रभयं तदा ॥ ४६९ ॥

काकाः श्येनाश्च गृध्राश्च वसेयुः सहिता मुदा ।
मैथुनं वारितं वेयुः परैः सह रणस्तदा ॥ ४७० ॥

श्येनो हस्तिनिवासे वा अभिरोहेत्पुनः पुनः ।　　5
परचक्रेण युद्धं तु भवेच्चापि पुनः पुनः ॥ ४७१ ॥

कन्या प्रसूयते यत्र चतुर्हस्ता चतुःस्तनी ।
स्त्रीणामेव भवेत्तत्र मरणं ह्यतिदारुणम् ॥ ४७२ ॥

गर्भस्था दारका यत्र हसन्ति च वदन्ति च ।
तस्य देशस्य जानीयाद्विनाशं समुपस्थितम् ॥ ४७३ ॥　　10

एकपादांस्त्रिपादांश्च चतुरङ्गांस्तथैव च ।
नार्यो यत्र प्रसूयन्ते राज्ञो व्यसनमादिशेत् ॥ ४७४ ॥

सूयन्ते विकृतान् गर्भान् संतानान् भयव्यञ्जनान् ।
प्रमदा यत्र देशे तु राजा तत्र विनश्यति ॥ ४७५ ॥

लघुहस्तशीर्षमुखान् मानुषं कायमाश्रितान् ।　　15
प्रमदा यत्र सूयन्ते राष्ट्रं तत्र विनश्यति ॥ ४७६ ॥

खराश्च महिषाश्चापि पशवोऽथ तथाविधाः ।
द्वित्रिशीर्षाः प्रसूयन्ते देशे यत्र स नश्यति ॥ ४७७ ॥

शृगालश्वानमकरहयरूपाश्च मानवाः ।
जायन्ते यत्र देशे तु स देशो लघु नश्यति ॥ ४७८ ॥　　20

पादावुभौ यदा वैश्या गुर्विणी संप्रसूयते ।
देशस्य विलयं ब्रूयात्परचक्रेण दारुणम् ॥ ४७९ ॥

पूर्वार्धः पक्षिनरयोर्गर्भो यत्र प्रसूयते ।
राजा वा राजामात्यो वा सह देशेन नश्यति ॥ ४८० ॥

कुम्भाण्डो जायते यत्र द्विमुखोऽथ चतुर्मुखः ।　　25　　M 142
त्रिनेत्रस्त्रिमुखो वापि विद्यात्तत्र महद्भयम् ॥ ४८१ ॥

सौकरेण तु वक्त्रेण शरीरं मानुषं यदि ।
सूतं चतुर्दिशं राष्ट्रं हन्यात्तत्र न संशयः ॥ ४८२ ॥

आदित्यस्य तु रूपेण मानुषो यत्र जायते ।
विभ्रमात्सकलं राष्ट्रं विनाशमुपगच्छति ॥ ४८३ ॥　　30

उत्तानशायी बालस्तु देशे यत्र द्विजोत्तमः ।
दृष्टः प्रव्याहरन् वेदान् क्षिप्रं देशो विनश्यति ॥ ४८४ ॥

कुक्षिं भित्त्वा यदा बालो गर्भान्निष्क्रमते स्वयम् ।
अत्राणां मातरं कृत्वा स देशो नश्यते लघु ॥ ४८५ ॥

5 गर्भस्थाः सूकरा उष्ट्राः सर्पाश्च शकुनिस्तथा ।
स्त्रीणां गर्भात्प्रसूयन्ते देशे तु भयमादिशेत् ॥ ४८६ ॥

पौरुषं गार्दभं चाथ सौकरं चार्थविग्रहम् ।
गावो यत्र प्रसूयन्ते निर्दिशेद्भयमागतम् ॥ ४८७ ॥

नारी गृह्णाति गर्भं वा अदृष्टस्तनरूपिणी ।
10 विनाशं तस्य देशस्य सनृपस्य विनिर्दिशेत् ॥ ४८८ ॥

जटी दीर्घनखो यत्र सुकृष्णः परुषच्छविः ।
स जनो जायते यत्र राष्ट्रं साधिपतिं दहेत् ॥ ४८९ ॥

अग्रीवा दन्तसहिता जायन्ते यत्र बालकाः ।
शुष्येत सकलं शस्यं जनश्च विलयं व्रजेत् ॥ ४९० ॥

15 एकबाहुरशीर्षोऽथ गर्भो यत्र प्रसूयते ।
स्वयं क्षुभ्येत तद्राष्ट्रं विनश्येत न संशयः ॥ ४९१ ॥

फले फलं यदा पश्येत्पुष्पे वा पुष्पमाश्रितम् ।
गर्भाः स्रवेयुर्नारीणां युवराजश्च वध्यते ॥ ४९२ ॥

M 143 अकाले पादपा यत्र पुष्प्यन्ति च फलन्ति च ।
20 लता गुल्मोऽथ वल्ली वा देशे तत्र भयं भवेत् ॥ ४९३ ॥

वृक्षोपरिष्टात्पश्येद्वा स्रवन्तमात्मशोणितम् ।
कूजमानं पतङ्गं वा तदा विद्यान्महद्भयम् ॥ ४९४ ॥

वृक्षाणां मण्डपानां वा छाया न परिवर्तते ।
चतुर्वर्णभयं तत्र कलिकर्म च जायते ॥ ४९५ ॥

25 पुष्प्येयुः पादपा यत्र विविधाः पुष्पजातयः ।
कल्पवृक्षप्रकृतयस्ततो विद्यान्महद्भयम् ॥ ४९६ ॥

अनावर्तं यदा पुष्पं फलं चापि प्रदृश्यते ।
विनाशं तस्य देशस्य दुर्भिक्षं कलहं वदेत् ॥ ४९७ ॥

स्थानास्थानं गता वृक्षा दृश्येयुर्यत्र कुत्रचित् ।
30 पूर्वप्रतिष्ठितो राजा नचिरेण विचाल्यते ॥ ४९८ ॥

देवासुरं च संग्रामं पश्येदद्भुतदर्शनम्।
शस्त्रं मूर्च्छयते तत्र तस्करैश्चापि पूर्ववत्॥ ४९९॥

कम्पते रुदते शास्ता गच्छन् वा यत्र दृश्यते।
परचक्रात्तदा विद्यादत्यर्थं तत्पराजयम्॥ ५००॥

देवता यत्र देशे तु नृत्यन्ति च हसन्ति च। 5
अश्रूणि पातयेयुर्वा तदा विद्यान्महद्भयम्॥ ५०१॥

देवता यत्र क्रीडन्ति ज्वलन्ति निमिषन्ति वा।
चलेयुरथवा यत्र क्षितिपोऽन्यो भवेत्तदा॥ ५०२॥

शिवलिङ्गं यदा कम्पेद्गगने वाथ दृश्यते।
निमज्जते धरण्यां वा ध्रुवं राजवधो भवेत्॥ ५०३॥ 10

प्रतिमाः परिवर्तन्ते धूमायन्ते रुदन्ति च।
प्रस्विद्येयुः प्रधावेयुरन्यो राजा भविष्यति॥ ५०४॥

अचलो वा चलेत्स्थानाच्चलं वाप्यचलं भवेत्।
अमात्यो हन्ति राजानं कलहं चात्र निर्दिशेत्॥ ५०५॥

वमन्ति रुधिरं कन्या नमन्ते वा दिशो दश। 15 M 144
अयुक्ता वा प्रवर्तन्ते क्षत्रियाणां महद्भयम्॥ ५०६॥

वर्षते कुसुमं यत्र रक्तबिन्दुमथापि वा।
प्राणिनो विविधान् वापि विद्याच्चौरभयं तदा॥ ५०७॥

यूपाः पुराणा निगमा देवागाराणि चेतियाः।
नगराण्यथ धूम्यन्ते क्षिप्रं राजा विनश्यति॥ ५०८॥ 20

इन्दुर्वा दीपवृक्षो वा दीपो यत्र न दीप्यते।
राज्यकामः कुमारो वा क्षुभ्येद्द्विटपकोऽपि वा॥ ५०९॥

अन्तःपुरे यदा नीडं कुर्वते मधुमक्षिकाः।
अस्त्रं वापि गृहं दद्याद् राज्ञो व्यसनमादिशेत्॥ ५१०॥

पतेदन्तःपुरे विद्युद् वृक्षो वाप्याश्रमे तथा। 25
पुरि चैत्यच्छायायां वा राजार्थे पतिता हि सा॥ ५११॥

प्राकारे वायुधागारे गोपुरास्थानकेषु वा।
वायसः कुरुते नीडं सामात्यो ध्वंसते नृपः॥ ५१२॥

अनाहतेभ्यस्तूर्येभ्यः स्वयं शब्दो विनिश्चरेत्।
स्वचक्रक्षोभदोषेण सर्वं राष्ट्रं विलुप्यते॥ ५१३॥ 30

मांसशोणितवर्षं वा पत्रपुष्पफलानि वा ।
यदाभिवर्षेत्तद्वर्षं चक्रै राष्ट्रं विलुप्यते ॥ ५१४ ॥

मधुफाणितपुष्पाणि गन्धवर्षाण्यथापि वा ।
दिशो दाहाश्च दृश्येयुर्मारदुर्भिक्षलक्षणम् ॥ ५१५ ॥

5 मेघः समन्ततो गर्जेदुपवर्षेत्सचातकम् ।
शोणितं सकरकं स्यात्तदा विद्यात्पराद्भयम् ॥ ५१६ ॥

विद्युच्च पतते घोरा करकाणां च वर्षणम् ।
गन्धर्वनगरं चाथ दृष्ट्वा विद्यान्महद्भयम् ॥ ५१७ ॥

M 145 शशी शोणितसंकाशो मध्ये कृष्णो विवर्णवान् ।
10 सामन्तकेन पीड्यते विद्याद्राष्ट्रे महद्भयम् ॥ ५१८ ॥

प्रदीपिताग्निसंकाशो यदा दृश्येत चन्द्रमाः ।
गगनं दह्यते तत्र लोकपीडा ज्वरेण च ॥ ५१९ ॥

यदा गैरिकसंकाशः क्षिप्रमेवोपशाम्यति ।
वर्षणस्यागमो विद्याद्यदि वायुः प्रवायते ॥ ५२० ॥

15 संध्यायां धूम्रवर्णायां दृश्येतेन्दुश्च भास्करः ।
विच्छिन्नो ब्रह्मरूपेण वर्षं तत्र विनिर्दिशेत् ॥ ५२१ ॥

नाप्सु मज्जति नाप्यग्नौ पूर्ववच्च न दृश्यते ।
अग्निरुत्पत्स्यते तत्र कोष्ठागारं दहेत सः ॥ ५२२ ॥

ध्वजाग्रे वायसो यत्र लम्बपक्षो विधावते ।
20 उदकं संहरेत्क्षिप्रमग्नितः सुमहद्भयम् ॥ ५२३ ॥

जलं जाज्वल्यमानं तु मत्स्यो निर्दहति स्वयम् ।
अनावृष्टिं तदा ब्रूयाद् दुर्भिक्षं च महद्भयम् ॥ ५२४ ॥

पुरद्वारे यदागच्छेत्स्वयमारण्यको मृगः ।
चक्रद्वयेऽपि दुर्भिक्षं राष्ट्रे रोगं च निर्दिशेत् ॥ ५२५ ॥

25 त्रिशीर्षः पञ्चशीर्षो वा यदा सर्पोऽथ दृश्यते ।
अनावृष्ट्या तदा विद्यात्सर्वशस्यं विनश्यति ॥ ५२६ ॥

कुशूलो यत्र दृश्येत कम्पयंस्तु वसुंधराम् ।
कोष्ठागाराणि नश्येयुर्ये चान्ये धनसंचयाः ॥ ५२७ ॥

सर्प उद्यतशीर्षस्तु युध्यते पुरुषैः सह ।
30 चक्रद्वयाद्रोगतश्च विद्यात्तत्र महद्भयम् ॥ ५२८ ॥

बिल एकत्र बहवः सर्पाः सुपरिवेष्टिताः।
शस्त्रमृत्युं तदा विद्यात् क्षत्रियाणां महद्भयम् ॥ ५२९ ॥
निश्चरन्त्यवधानेन खड्गाः प्रज्वलिता यदा।
ततस्तं नचिरात्पश्येत्संग्रामं प्रत्युपस्थितम् ॥ ५३० ॥
काकः श्येनश्च गृध्रो वा यस्य नीयेत मूर्धनि। 5 M 146
षण्मासाभ्यन्तरे राजा म्रियते सपुरोहितः ॥ ५३१ ॥
प्रासादाश्च प्रकम्पन्ते शरणानि गृहाणि च।
महाबलं च वध्येत राष्ट्रस्य राजपालकः ॥ ५३२ ॥
वज्रोद्धृता दिशः सर्वाः कृष्णपक्षे चतुर्दिशम्।
वर्षेयुः शोणितं यत्र क्षितिपालोऽत्र वध्यते ॥ ५३३ ॥ 10
सूर्यस्योदयकाले तु महोल्का निपतेद्यदा।
राजपुत्रसहस्राणां भूमिः पास्यति शोणितम् ॥ ५३४ ॥
वृक्षाः सर्पाः प्रकम्पेयुर्मुच्येयुस्त्वचो वा तथा।
सर्वस्मिन्नेव राष्ट्रे तु विद्याच्छत्रुभयं महत् ॥ ५३५ ॥
दिने ह्युल्काप्रयुक्तिर्वा ज्वलन्ती यदि दृश्यते। 15
रक्तोत्पादं तदा विद्यात्संग्रामं भीमदर्शनम् ॥ ५३६ ॥
असिं प्रज्वलितं पश्येत्तोमरं चक्रमेव च।
विद्यात्पश्यन्ति शस्त्राणि संग्रामं भीमदर्शनम् ॥ ५३७ ॥
दीर्घमुच्छ्वसते वाश्वः अश्रूणि च निपातयेत्।
पादेन कर्षते शीघ्रं युद्धे राजवधो ध्रुवम् ॥ ५३८ ॥ 20
काकश्चेद् गृहमारुह्य हा पुत्र इति वाशति।
सर्वः प्रणश्यते देशो नगरग्रामकर्वटः ॥ ५३९ ॥
अनग्नौ जायते धूमः स्थले पद्मानि वा यदा।
विनाशं तस्य देशस्य नियमाच्छीघ्रमादिशेत् ॥ ५४० ॥
आरवन्ति यदा घोरं मेघा वृकमृगास्तथा। 25
विनाशं तस्य देशस्य विद्याच्छीघ्रमुपस्थितम् ॥ ५४१ ॥
छिन्नस्रोता भवेन्नद्यश्चिरकालवहा अपि।
गृहाः शून्योदकेनापि शुष्कास्तत्र भयं भवेत् ॥ ५४२॥
प्रतिस्रोता यदा नद्यो वहन्त्यप्रतिवारिताः।
नित्योद्विग्ना जनपदा निर्दिशेच्च जनक्षयम् ॥ ५४३ ॥ 30

M 147 धनूंष्याकृष्यमाणानि धूमायन्ति ज्वलन्ति च ।
अन्यद्वापि प्रहरणं परेभ्यो जायते भयम् ॥ ५४४ ॥
मयूरग्रीवसंकाशः परिवेशो निशाकरे ।
विद्याद्राजसहस्राणां मही पास्यति शोणितम् ॥ ५४५ ॥
5 नराणां प्रमदानां च रतिहर्षो न जायते ।
सर्वत्र शोकचिन्ता वा महत्तत्र भयं भवेत् ॥ ५४६ ॥
निर्ग्रन्था ऋषयः सन्तो देशात्प्रक्रमेयुर्यतः ।
नदीं भित्त्वा निकुञ्जान् वा स देशो नश्यतेऽचिरात् ॥ ५४७ ॥
यत्रौषध्यश्च विरसा जलं च परिहीयते ।
10 विद्याद्देशं तमुत्सृष्टं देवता-ऋषिसाधुभिः ॥ ५४८ ॥
मत्स्याः कूर्माश्च सर्पाश्च म्रियन्ते यत्र जाङ्गलाः ।
धनस्कन्धः स्त्रियास्तत्र सपत्नैर्विप्रलोप्स्यते ॥ ५४९ ॥
अपूर्वाः पक्षिणो यत्र स्थले वारिणि एव वा ।
दृश्येयुः परचक्रेण धनस्कन्धो विलोप्स्यते ॥ ५५० ॥
15 महापथो यदा कक्षैः प्रसृतैरपथो भवेत् ।
सग्रामकर्वटं राष्ट्रं पुत्रेण सह नश्यति ॥ ५५१ ॥

## नानोत्पातचक्रनिर्देशो नामाध्यायः ।

पठ भोस्त्रिशङ्को पुरुषपिन्याध्यायम् । अथ किम् । कथयतु भगवान्—अथ खलु भोः पुष्करसारिन् पुरुषपिन्याध्यायं व्याख्यामि । तच्छ्रूयताम् । कथयतु भगवान्—

20 अष्टाविंशतिः पुष्करसारिन् नक्षत्राणि प्रकीर्तितानि, यानि चन्द्रसूर्यनिःसृतान्यनुवहन्ति । M 148 तत्र सुकुगृष्ट्या अष्टाङ्गुलप्रमाणया द्वादशाक्षगृष्टयः स्वशरीरं दैर्घ्येण ज्ञातव्यम् । एकाक्षगृष्टिः शीर्षमूर्ध्नि एकपादतलं भवेत् । चतुर्दशगृष्टयो नक्षत्राणां पदं यत्र संदृश्यन्ते, तदन्यथा न भवति । नक्षत्रे यत्र यो जातस्तत्र तत्र संदृश्यते ॥

## पुरुषपिन्यः ।

25 कृत्तिकायां हि जातस्य मुखे वै चतुरङ्गुलः ।
पिन्यो दक्षिणतो यस्य लोमशः कृष्णलोहितः ॥ ५५२ ॥
भोगवान् यशसा युक्तः पण्डितो ज्वलति श्रिया ।
कृत्तिकास्वथ जातस्य भवत्येतद्धि लक्षणम् ॥ ५५३ ॥
दृश्यते व्रण एवायं यस्य वै चतुरङ्गुलः ।
30 रोहिण्यां जातकः सोऽपि विद्वान् धर्मरतः सदा ॥ ५५४ ॥
मण्डितो भोगसंपन्नो ह्रीयुक्तश्चापि सर्वतः ।
शूरो विजयसंपन्नो नित्यं शत्रुप्रमर्दकः ॥ ५५५ ॥

ग्रीवायामर्धगृष्ट्या तु दाहो यस्य प्रदृश्यते ।
मृगशीर्षे ह्यसौ जातः शूरो भोगसमर्पितः ॥ ५५६ ॥

अर्धद्वितीयगृष्ट्या तु पिन्यो वामे हि यस्य तु ।
आर्द्रायां क्रोधनो जातो मूर्खो गोपतिकश्च सः ॥ ५५७ ॥

वामे कक्षे व्रणो यस्य कृष्णश्चैव पुनर्वसौ । 5
धनधान्यसमृद्धो हि जायते स्वल्पमेधसः ॥ ५५८ ॥

तथैव पुष्ये जातोऽसौ दृश्यते वरलक्षणः ।
चक्रमध्ये च हस्ते च सूर्यश्चन्द्रो विराजते ॥ ५५९ ॥

अर्धप्रदक्षिणावर्ताः केशाः सर्वे हि संस्थिताः । M 149
परिमण्डलश्च कायेन जितक्लेशोऽपि नायकः ॥ ५६० ॥ 10

हृदये यस्य दाहः स्यादाश्लेषायां कलिप्रियः ।
दुःशीलो दुःखसंवासो मैथुनाभिरतश्च सः ॥ ५६१ ॥

अथ उरसि पृष्ठे वा यस्य व्रणः प्रदृश्यते ।
मघायां धनवान् जातो महात्मा धार्मिको नरः ॥ ५६२ ॥

नाभ्यां दक्षिणवामाभ्यां व्रणो यस्य प्रदृश्यते । 15
पूर्वफाल्गुनीजातोऽसौ मत्सरी चाल्पजीवितः ॥ ५६३ ॥

चतुरङ्गुलतो नाभ्या यस्य पिन्यः प्रदृश्यते ।
उत्तरफाल्गुनीजातो भोगशीलः श्रुतोद्यतः ॥ ५६४ ॥

श्रोण्यामलोहितः पिन्यो हस्ते जातस्य दृश्यते ।
चौरः शठश्च मायावी मन्दपुण्योऽल्पमेधसः ॥ ५६५ ॥ 20

व्यञ्जने यस्य पिन्यस्तु दृश्यते नियमेन हि ।
चित्राजातः स चेद्रोगी नृत्यगीतरतस्तथा ॥ ५६६ ॥

व्यञ्जनेऽपि च ऊर्ध्वे वा पीतः पिन्यः प्रदृश्यते ।
जातः स्वात्यामसौ लुब्धो गुणद्विष्टो ह्यपण्डितः ॥ ५६७ ॥

कुगृष्ट्या यस्य ऊरुभ्यां पिन्यो लोहित एव हि । 25
आकीर्णो नरनारीभिर्विशाखायां भटोऽग्रणीः ॥ ५६८ ॥

विद्वान् शूरो जितामित्रो नित्यं सौख्यपरायणः ।
श्रिया धृत्या च संपन्नोऽच्युतः स्वरुपपद्यते ॥ ५६९ ॥

द्वितीयगृष्ट्यामूरुभ्यामङ्गे यस्य प्रदृश्यते ।
शीलवाननुराधायां धर्मभोगसमन्वितः ॥ ५७० ॥ 30

अधो यस्येह चोरुभ्यां पिन्यो ज्येष्ठे स जायते ।
अल्पायुरप्रियो दुःखी दुःशीलः कृपणस्तथा ॥ ५७१ ॥
M 150 जानुभ्यामूर्ध्वतः सूक्ष्मो व्रणो यस्येह दृश्यते ।
मूलेन भाग्यवान् जातः स्वगृहं नाशयेल्लघु ॥ ५७२ ॥
5 पूर्वाषाढासु जातस्य पिन्यः स्याज्जानुमण्डले ।
दायको धर्म आसज्ञ्यच्युतः स्वर्गपरायणः ॥ ५७३ ॥
उत्तरायामाषाढायां जातस्य तिलकस्त्रिके ।
यदि दृश्येत्स मेधावी भोगवान्स्याज्जनप्रियः ॥ ५७४ ॥
द्वितीयः पिन्यो दृश्येत धनवान् भोगवान् सदा ।
10 सत्यप्रियस्तथारोगोऽच्युतः स्वर्गं च गच्छति ॥ ५७५ ॥
धनिष्ठायां च जङ्घायां यस्य पिन्यः प्रदृश्यते ।
क्रोधनो मन्दरागश्च प्राज्ञो भोगविवर्जितः ॥ ५७६ ॥
द्विकुगृष्ट्या च जङ्घायां कृष्णः पिन्यः प्रदृश्यते ।
मूर्खः शतभिषायां तु म्रियते ह्युदकेन सः ॥ ५७७ ॥
15 अधो जङ्घां कुगृष्ट्या तु पूर्वभाद्रपदे व्रणः ।
परोपतापको मूर्खो दरिद्रश्चौर इत्यपि ॥ ५७८ ॥
कुगृष्ट्या यस्य पिन्यः स्याज्जातो भाद्रपदोत्तरे ।
दानशीलः स्मृतिप्राप्तो दयापन्नो विशारदः ॥ ५७९ ॥
उभयोः पादयोः सूक्ष्मः पिन्यो यस्य प्रदृश्यते ।
20 रेवत्यां जायते नीचो नापितः स भवत्यपि ॥ ५८० ॥
अङ्गुष्ठविवरे पिन्यो नीलो यस्य प्रदृश्यते ।
अरोगो बलवान्नित्यमश्विन्यां जात एव सः ॥ ५८१ ॥
अथ पाणितले पिन्यो भरण्यामक्षयः स्मृतः ।
वध्यघातश्च दुःशीलः स्यान्नरकपरायणः ॥ ५८२ ॥
25 नक्षत्राणां पदं ह्येतद्येन चर्या प्रजायते ।
एतद्धि लोकप्रज्ञानं लोको यत्र समाश्रितः ॥ ५८३ ॥
इति पिन्याध्यायः ॥

M 151 अथ खलु भोः पुष्करसारिन् पिटकाध्यायं नामाध्यायं व्याख्यास्यामि । तच्छ्रूयताम्। कथयतु भगवान् त्रिशङ्कुः—

30 ## पिटकाध्यायः ।

अत ऊर्ध्वं प्रवक्ष्यामि सर्वस्थानगतं पुनः ।
स्त्रीणां च पुरुषाणां च पिटकं सर्वकर्मकम् ॥ ५८४ ॥

लाभालाभं सुखं दुःखं जीवितं मरणं तथा।
प्राज्ञा येनाभिजानन्ति तं च सर्वं निबोधताम्॥ ५८५॥

तत्राभिघातदग्धा वा तिलास्तद्रूपका अपि।
विस्फोटवर्णभेदाश्च पिटकाभिहिताः स्मृताः॥ ५८६॥

श्वेतवर्णेन पिटको विप्राणां पूजितो भवेत्। 5
क्षतोपमः क्षत्रियाणां वैश्यानां पीतकः स्मृतः॥ ५८७॥

शूद्राणामसितः श्रेष्ठो विवर्णो म्लेच्छजातिषु।
यदा सवर्णपिटको मूर्ध्नि राजा महान् स्मृतः॥ ५८८॥

शीर्षे तु धनधान्याभ्यां कान्तये सुभगाय च।
उपघातं भ्रुवोर्विद्यात्स्त्रीलाभो भ्रुवसंगमे॥ ५८९॥ 10

अक्षिस्थाने तु पिटकः करोति प्रियदर्शनम्।
अक्षिभ्रूभागे शोकाय गण्डे पुत्रवधो ध्रुवम्॥ ५९०॥

अश्रुपातो ध्रुवं शोकः श्रवणे गोषु नाशकः।
कर्णपीठे विभूषाय नासावंशे तु जातये॥ ५९१॥

नासागण्डे पुत्रलाभं वस्त्रलाभं ध्रुवं वदेत्। 15
नासाग्रे जाते नाप्नोति गन्धभोगानभीप्सितान्॥ ५९२॥

उत्तरोष्ठे तथाधरे चान्नपानं शुभाशुभम्। M 152
चिबुके हनुदेशे च धनं गावः सतां श्रियः॥ ५९३॥

गले तु दानमाप्नोति पानमाभरणानि च।
शिरःसंधौ च ग्रीवायां शिरश्छेदनमादिशेत्॥ ५९४॥ 20

जातोऽयं शिरसो मूले हनुनि च धनक्षयः।
भैक्षचर्या भवेत्संधौ हृदये प्रियसंगमः॥ ५९५॥

पृष्ठे तु दुःखशय्यायै अन्नपानक्षयाय च।
पार्श्वे तु सुखशय्यायै स्तने तु सुतजन्यता॥ ५९६॥

जातेन शिवमाप्नोति न चाप्रियसमागमः। 25
बाह्वोः शत्रुविनाशाय युक्तं स्त्रीलाभ एव च॥ ५९७॥

ददात्याभरणं जातः प्रबाह्वोः कूर्परे क्षुधा।
मणिबन्धे नियमनमंसाभ्यां हर्ष एव च॥ ५९८॥

सौभगं धनलाभं च जातः पाणौ ददाति च।
पुष्पितो ह्येकदेशे तु दशनेषु नखेषु च॥ ५९९॥ 30

जातेन हृदि जानीयाद् भ्रातृपुत्रसमागमम्।
जठरे सोमदानाय नाभ्यां स्त्रीलाभमादिशेत्॥ ६००॥
जघने व्यसनं विद्यान्नार्या दौःशील्यमेव च।
पुत्रोत्पत्तिस्तु वृषणे लिङ्गे भार्या तु शोभना॥ ६०१॥
5 पृष्ठान्ते सुखभागित्वं स्फिचि चापि धनक्षयः।
ऊरुजाताश्च पिटका धनसौभाग्यदायकाः॥ ६०२॥
जानौ शत्रुभयं विद्यात्तथैव च धनक्षयम्।
जानुसंधौ विजानीयान्मेढ्रके ह्यथ जातकैः।
विजयं ज्ञानलाभं च पुत्रजन्म विनिर्दिशेत्॥ ६०३॥
10 स्त्रीलाभं वक्षसि चैव भवेदन्यो निरर्थकः।
जङ्घायां परसेवा तु परदेशात्तु भुज्यते॥ ६०४॥
M 153 मणिबन्धे तु पिटको बन्धनं निर्दिशेद् ध्रुवम्।
परिबाधं स लभते बन्धनं च न संशयः॥ ६०५॥
पार्श्वे गुल्फे च जानीयाच्छस्त्रेण मरणं ध्रुवम्।
15 अङ्गुलीषु ध्रुवं शोको व्याधिश्चाङ्गुलिपर्वसु।
प्रवासं प्रवसेन्नित्यं तथैवोत्तरपादके॥ ६०६॥
यस्य पादतले जातस्तथा हस्ततलेऽपि च।
धनं धान्यं सुता गावः स्त्रियो यानानि चाप्नुयात्॥ ६०७॥
स्निग्धं स्निग्धेषु विज्ञेयं चलेषु च चलं फलम्।
20 स्थानस्थे विपुलं दद्यात् फलं नृणां शुभोदयम्॥ ६०८॥
विवर्णो विपरीतश्च फलं सर्वं प्रयच्छति।
पुंसां मध्ये ये स्निग्धाश्च देशे दक्षिणतश्च ये।
तथा चाभ्यन्तरे चैव स्थाने तु प्रतिपूजिताः॥ ६०९॥
स्त्रीणां मृदुषु देशेषु वक्रान्तेषु च पर्वतः।
25 तत्त्वं विज्ञाय पिन्यानां स्थानं वर्णं च जन्म च॥ ६१०॥
स्थानास्थानं च मतिमान् विकारं गतिमेव च।
आदिशेत्तु नरः पश्चाद्यथैवं समुदाहृतम्॥ ६११॥
वामभागे तु नारीणां विज्ञेयाः पिटकाः शुभाः।
दक्षिणे तु मनुष्याणां भवन्ति ह्यर्थसाधकाः॥ ६१२॥
30 विपरीतास्तु पिटका मोघास्तु बहवः स्मृताः।
यथोक्तानां च संधिस्थाः सर्वे विफलदाः स्मृताः॥ ६१३॥

सिद्धा ध्रुवा व्रणा भिद्यास्तथा सद्यःकृताश्च ये।
धर्मकीलसमाश्चैव सर्वे ते पिटकाः स्मृताः ॥ ६१४ ॥
गुणदोषाश्च सर्वेषां तथाप्यन्ये प्रकीर्तिताः।
इत्याह भगवांस्त्रिशङ्कुः शिष्येभ्यो नित्यदर्शनम् ॥ ६१५ ॥
न नखेन न शस्त्रेण नायसेन कथंचन।    5    M 154
काञ्चनेन सुवर्णेन दहेद्विप्रांश्च भोजयेत् ॥ ६१६ ॥

अयं भोः पुष्करसारिन् पिटकाध्यायनामाध्यायः ॥

अथ खलु भोः पुष्करसारिन् स्वप्नाध्यायं व्याख्यास्यामि। तच्छ्रूयताम्। अथ किम्। कथयतु भगवान्—

## स्वप्नाध्यायः।    10

शुभाशुभं च स्वप्नानां यत्फलं समुदाहृतम्।
देवताब्राह्मणौ गावौ वह्निं प्रज्वलितं तथा।
यस्तु पश्यति स्वप्नान्ते कुटुम्बं तस्य वर्धते ॥ ६१७ ॥
यस्तु पश्यति स्वप्नान्ते राजानं कुञ्जरं हयम्।
सुवर्णं वृषभं चैव कुटुम्बं तस्य वर्धते ॥ ६१८ ॥    15
सारसांश्च शुकान् हंसान् क्रौञ्चान् श्वेतांश्च पक्षिणः।
यस्तु पश्यति स्वप्ने वै कुटुम्बं तस्य वर्धते ॥ ६१९ ॥
समृद्धानि च शस्यानि नवानि सुरभीणि च।
पद्मिनीं पुष्पितां चापि पूर्णकुम्भांस्तथैव च ॥ ६२० ॥
प्रसन्नमुदकं चैव पुष्पाणि विविधानि च।    20
यस्तु पश्यति स्वप्नान्ते कुटुम्बं तस्य वर्धते ॥ ६२१ ॥
पाणौ पादेऽथ वा जानौ शस्त्रेण धनुषापि वा।
प्रहारा यस्य दीयन्ते तस्याम्बरोऽभिवर्धते ॥ ६२२ ॥
ताराचन्द्रमसौ सूर्यं नक्षत्राणि ग्रहांस्तथा।
यस्तु पश्यति स्वप्नान्ते कुटुम्बं तस्य वर्धते ॥ ६२३ ॥    25
अश्वपृष्ठं गजस्कन्धं यानानि शयनानि च।
योऽभिरोहति स्वप्नान्ते महदैश्वर्यमाप्नुयात् ॥ ६२४ ॥
पतितश्चारुहेद् भूयस्तत्रस्थश्च विबुध्यते।    M 155
ऐश्वर्यधनलाभाय नष्टलाभाय निर्दिशेत् ॥ ६२५ ॥
गोयुतं च रथं स्वप्ने हयं वा योऽभिरोहति।    30
तत्रस्थश्च विबुध्येत ऐश्वर्यमधिगच्छति ॥ ६२६ ॥

प्रपातं पर्वतं चैव योऽभिरोहति मानवः।
तत्रस्थश्च विबुध्येत ऐश्वर्यमधिगच्छति ॥ ६२७ ॥
आसने शयने याने शरीरेऽथ गृहे क्षयः।
येषामारोहणं शस्तं तेषामारोहणात्क्षयः।
5 येषामारोहणाद्दोषास्तेषामारोहणाद् गुणाः ॥ ६२८ ॥
त्रिसाहस्रं भवेत्कण्ठे दश शीर्षस्य छेदने।
राज्यं शतसहस्रं वा लभते शीर्षभक्षणे ॥ ६२९ ॥
शुष्कां नदीं ह्रदं वापि शून्यागारप्रवेशनम्।
शुष्कोदपानं तु लभते स्वप्ने दृष्ट्वा ध्रुवं भयम् ॥ ६३० ॥
10 शृगालं मानुषं नग्नं गोधावृश्चिकसूकरम्।
अजां वा पश्यतः स्वप्ने व्याधिक्लेशं विनिर्दिशेत् ॥ ६३१ ॥
काकं श्येनमुलूकं वा गृध्रं वाप्यथ वर्तकम्।
मयूरं पश्यतः स्वप्ने तस्य व्यसनमादिशेत् ॥ ६३२ ॥
नग्नं पश्यति ह्यात्मानं पांशुना ध्वस्तमेव वा।
15 कर्दमेनोपलिप्तं वा व्याधिक्लेशमवाप्नुयात् ॥ ६३३ ॥
कुष्ठाः स्त्रियोऽथ संलोक्य चौरान् द्यूतकरांस्तथा।
कुशीलांश्चारणान् धूर्तान् स्वप्ने दृष्ट्वा ध्रुवं भयम् ॥ ६३४ ॥
वमिमूत्रपुरीषाणि विरेकं वसानो जनः।
उद्वर्तनं वा कुर्वाणः स्वप्नान्ते रोगमर्च्छति ॥ ६३५ ॥
20 ध्वजं छत्रं वितानं वा स्वप्नान्ते यस्य धार्यते।
तत्रस्थोऽपि विबुध्येत महदैश्वर्यमादिशेत् ॥ ६३६ ॥
M 156 अग्निस्तु यस्य नगरं समन्तात्परिवार्यते।
ग्रसते चन्द्रसूर्यौ तु महदैश्वर्यमादिशेत् ॥ ६३७ ॥
मनुष्यं भूमिभागं वा स्वप्नान्ते ग्रसते यदि।
25 ह्रदश्च वा समुद्रोऽयं महदैश्वर्यमाप्नुयात् ॥ ६३८ ॥
धनुः प्रहरणं शस्त्रं रक्तमाभरणं ध्वजम्।
कवचं वा लभेत्स्वप्ने धनलाभं विनिर्दिशेत् ॥ ६३९ ॥
प्रपातं पर्वतं तालं वृषभं कुञ्जरं हयम्।
तोरणं नगरं द्वारं चन्द्रादित्यौ सतारकौ।
30 स्वप्ने प्रपतितौ दृष्ट्वा राज्ञां व्यसनमादिशेत् ॥ ६४० ॥
उदयं चन्द्रसूर्याणां स्वप्ने दृष्टं प्रशस्यते।
तयोरस्तं गतं दृष्ट्वा राज्ञो व्यसनमादिशेत् ॥ ६४१ ॥

श्मशानवृक्षयूपं वा नरो यद्यभिरोहति।
वल्मीकं भस्मराशिं वा स्वप्ने व्यसनमादिशेत्॥ ६४२॥
कृष्णवस्त्रा तु या नारी काली कामयते नरम्।
करवीरस्रजा स्वप्ने तदन्तं तस्य जीवितम्॥ ६४३॥
तमसि प्रविशेत् स्वप्ने शम्भोर्वा चामरं तथा। 5
वृक्षाद्वा प्रपतेत् स्वप्ने मरणं तस्य निर्दिशेत्॥ ६४४॥
वृक्षं काष्ठं तृणं वापि विरुचं यस्तु पश्यति।
स्वप्ने शीर्षं शरीरं वा मरणं तस्य निर्दिशेत्॥ ६४५॥
देवो वा वर्षते यत्र यत्र चैवाशनिः पतेत्।
भूमिर्वा कम्पते यत्र स्वप्ने व्यसनमादिशेत्॥ ६४६॥ 10
चन्द्रादित्यौ यदि स्वप्ने खण्डौ भिन्नौ च पश्यति।
पतितौ पतमानौ वा चक्षुस्तस्य विनश्यति॥ ६४७॥
काषायप्रावृतां मुण्डां नारीं मलिनवाससम्।
नीलरक्ताम्बरां दृष्ट्वा आयासमधिगच्छति॥ ६४८॥
त्रपुसीसे अयस्ताम्रलोहरजतमञ्जनम्। 15 M 157
लब्ध्वा तु पुरुषः स्वप्ने धननाशं समर्च्छति॥ ६४९॥
गायन्ती वा हसन्ती वा नृत्यन्ती वा विबुध्यते।
वादित्रवाद्यमानैर्वा आयासं तत्र निर्दिशेत्॥ ६५०॥
कर्दमे यदि वा पङ्के सिकतास्ववसीदति।
तत्रस्थो वा विबुध्येत व्याधिं समधिगच्छति॥ ६५१॥ 20
अष्टापदैरथान्यैर्वा क्रीडेज्जयपराजये।
क्रीडेदकुशलाङ्कैर्वा स्वप्ने दृष्ट्वा ध्रुवं कलिः॥ ६५२॥
आसने शयने याने वस्त्रे साभरणे गृहे।
नष्टे भ्रष्टे विशीर्णे वा आयासमधिगच्छति॥ ६५३॥
सुरामैरेयपानानि शार्करमासवं मधु। 25
पिबते पुरुषः स्वप्ने आयासमधिगच्छति॥ ६५४॥
प्रसन्नेऽम्भसि चादर्शे छायां पश्यति नात्मनः।
उत्पद्यते ध्रुवं तस्य स्कन्धन्यासो न संशयः॥ ६५५॥
अभीक्ष्णं वर्षते देवो जलं पांशुमथापि वा।
अङ्गारं वापि वर्षेत मरणं तत्र निर्दिशेत्॥ ६५६॥ 30
जनघातं विजानीयात्तत्र देशे महाभयम्।
रज्जुजालेन वा स्वप्ने परचक्राद् विनिर्दिशेत्॥ ६५७॥

उदकेन समन्ताद्वै नगरं परिवार्यते ।
जालेनान्येन वा स्वप्ने परचक्रोद्गमो भवेत् ॥ ६५८ ॥
तैलकर्दमलिप्ताङ्गो रक्तकण्ठगुणो नरः ।
गायते हसते चैव प्रहारं तस्य निर्दिशेत् ॥ ६५९ ॥
5 यं कृष्णवसना नारी आर्द्रा वा मलिनाथ वा ।
परिष्वजेन्नरं स्वप्ने बन्धनं तस्य निर्दिशेत् ॥ ६६० ॥
कृष्णसर्पो यदि स्वप्ने ह्यभिरोहति यं नरम् ।
गात्राणि वेष्टयेद्वापि बन्धनं तस्य निर्दिशेत् ॥ ६६१ ॥
M 158 लताभिः स्थाणुवृन्दैर्वा यन्त्रैर्वा परिवार्यते ।
10 स्वप्नान्ते पुरुषो यस्तु बन्धनं तस्य निर्दिशेत् ॥ ६६२ ॥
यन्त्राणि यदि सर्वाणि वागुराबन्धनानि वा ।
यस्य छिद्येरन् स्वप्नान्ते बन्धनात्स विमुच्यते ॥ ६६३ ॥
विषमाणि च निम्नानि पर्वतान्नगराणि च ।
यस्तु पश्यति स्वप्नान्ते क्षिप्रं क्लेशाद्विमुच्यते ॥ ६६४ ॥
15 पूतना वा पिशाचा वा दुश्चला मलिनाथ वा ।
एवंरूपाणि रूपाणि दृष्ट्वा स्वप्ने ध्रुवं कलिः ॥ ६६५ ॥
सुस्नातं च सुवेशं च सुगन्धं शुक्लवाससम् ।
पुरुषं वाथ नारीं वा दृष्ट्वा स्वप्ने महत्सुखम् ॥ ६६६ ॥
तृणं वृक्षमथो काष्ठं विरूढं यत्र दृश्यते ।
20 गृहे वा यदि वा क्षेत्रे क्षिप्रं द्रव्यक्षयो भवेत् ॥ ६६७ ॥
भद्रासने वाभ्यासीनो शयने वा सुसंस्कृते ।
नरो वा लभते नारीं नारी वा लभते नरम् ॥ ६६८ ॥
नरः शुक्लमथो वस्त्रं शुक्लगन्धानुलेपितम् ।
स्वप्नान्ते यस्तु पश्येत स्त्रीलाभं तस्य निर्दिशेत् ॥ ६६९ ॥
25 यस्तु ह्यन्नानि पश्येत भूषणं निगडैस्तथा ।
नरस्तु लभते भार्यां नारी वा लभते पतिम् ॥ ६७० ॥
मेखलां कर्णिकां मालां स्त्रीणामाभरणानि च ।
लब्ध्वा नरो लभेद् भार्यां नारी च लभते पतिम् ॥ ६७१ ॥
कुञ्जरं वृषभं नागं चन्द्रादित्यौ सतारकौ ।
30 अभिवन्देत या नारी पतिं सा लभतेऽचिरात् ॥ ६७२ ॥
एषामन्यतमः कुक्षौ प्रविशेच्च यदि स्त्रियाः ।
सा काले सर्वपूर्णाङ्गं श्रीमत्पुत्रं प्रसूयते ॥ ६७३ ॥

फलानि च समग्राणि वनानि हरितानि च।
स्वप्नान्ते लभते नारी श्रीमत्पुत्रं प्रसूयते ॥ ६७४ ॥
उत्पलं कुमुदं पद्मं पुण्डरीकं सकुड्मलम्।
लब्ध्वा नारी तु स्वप्नान्ते श्रीमत्पुत्रं प्रसूयते ॥ ६७५ ॥ M 159
उपायनसूत्रयोरन्तः सज्जं तत्र तु पिण्डकम्। 5
स्वप्ने या लभते नारी सापि पुत्रं प्रसूयते।
यमं तु भाजनं चापि यमं तु सा प्रसूयते ॥ ६७६ ॥
म्लायन्तीमथ ग्रीष्मान्ते तरुणीमात्मिकामपि।
शुष्कां दृष्ट्वा तथा स्वप्ने स्वपक्षमरणं भवेत् ॥ ६७७ ॥
बाहवो यस्य वर्धन्ते चक्षुरङ्गुल्योपि वा। 10
ज्ञातयस्तस्य वर्धन्ते शत्रूणां मरणं भवेत् ॥ ६७८ ॥
बध्यन्ते बाहवो यस्य चक्षुश्च व्याकुलं भवेत्।
बाहुर्वा प्रपतेद्यस्य स्वपक्षमरणं भवेत् ॥ ६७९ ॥
देवो वा यदि वा प्रेतो नार्या वस्त्रं फलानि वा।
स्वप्ने प्रयच्छते यस्याः पुत्रस्तस्याः प्रजायते ॥ ६८० ॥ 15
अपकृष्टो रुदन् यो वा नग्नोऽथ मलिनः कृशः।
क्रोधं वा..................विनिर्दिशेत् ॥ ६८१ ॥
चर्म यन्त्रं गणितं वा कीलं वाथ किलाटकम्।
स्वप्ने लब्ध्वा च प्राप्नु[जानी]याद् ध्रुवं वस्त्रागमो भवेत् ॥ ६८२ ॥
अमानुषोऽथ राजा वा देवः प्रेतोऽथ ब्राह्मणः। 20
स्वप्ने यथा ते जल्पन्ति स तथार्थो भविष्यति ॥ ६८३ ॥
..................पूर्वविचिन्तितम्।
यच्चानुस्मरते दृष्ट्वा यच्चापि बहु पश्यति ॥ ६८४ ॥
अभ्युत्थितो यथा मार्गे स्वप्नान्ते प्रतिबुध्यते।
विषमं वा तथाध्वानं छिद्रं वा प्रतिपद्यते ॥ ६८५ ॥ 25
अग्निं प्रज्वलितं तप्तं शमित्वा तु प्रशस्यते। M 160
गृहाणां करणं शस्तं भेदनं न प्रशस्यते ॥ ६८६ ॥
निर्मलं गगनं शस्तं समेघं न प्रशस्यते।
प्रसन्नमुदकं शस्तं कलुषं न प्रशस्यते ॥ ६८७ ॥
अध्वानं गमनं शस्तं न क्वचित्संनिवर्तनम्। 30
सुवर्णदर्शनं शस्तं धारणं न प्रशस्यते ॥ ६८८ ॥

मांसस्य दर्शनं साधु भक्षणं न प्रशस्यते ।
मद्यस्य दर्शनं शस्तं पानं तु न प्रशस्यते ॥ ६८९ ॥

पृथिवी हरिता शस्ता विवर्णा न प्रशस्यते ।
यानस्यारोहणं शस्तं पतनं न प्रशस्यते ॥ ६९० ॥

5 स्वप्नेषु रुदितं शस्तं हसितं न प्रशस्यते ।
प्रच्छन्नदर्शनं शस्तं नग्नं नैव प्रशस्यते ॥ ६९१ ॥

माल्यस्य दर्शनं शस्तं धारणं न प्रशस्यते ।
गात्रं विकर्तितं साधु प्रोक्षितं न प्रशस्यते ॥ ६९२ ॥

मृदुः प्रशस्यते वातो नातिवातः प्रशस्यते ।
10 व्याधितो मलिनः शस्तो भूषितो न प्रशस्यते ।
पर्वतारोहणं शस्तं न तु तत्रावतारणम् ॥ ६९३ ॥

धूम्रा घना दुन्दुभिशङ्खशब्दो
वातोऽभ्रवृष्टिश्च तथा समन्तात् ।
सर्वस्थिराणां च चलश्च यः स्या-
15 द्ये चान्तरे दोषकृता विकाराः ॥ ६९४ ॥

पूर्वेषु रूपेषु यथावदिष्टा
राजर्षयो देवगणाश्च सर्वे ।
यद् ब्राह्मण गात्रविकर्तनं च
एतानि सर्वाण्यपि शोभनानि ॥ ६९५ ॥

20 यत्पूर्वरूपेषु भवेत्प्रशस्तं
दुःस्वप्नमेतानि शमं नयन्ति ।
गावः प्रदानं द्विजपूजनं च
दुःस्वप्नमेतेन पराजितं स्यात् ॥ ६९६ ॥

M 161 देवं च यं भक्तिगतो मनुष्य-
25 स्तं तु परांश्चार्चयितुं यतेत ।
स्वप्नं तु दृष्ट्वा प्रथमे प्रदोषे
संवत्सरान्तेऽस्य विपाकमाहुः ॥ ६९७ ॥

षण्मासिकं यच्च भवेद् द्वितीये
षट्पाक्षिकं यत्तु भवेत् तृतीये ।
30 अध्यर्धमासेतरमेव यत्स्यात्
फलेच्चतुर्थे रजनीप्रभाते ॥ ६९८ ॥

द्विजोत्तमे वा तिलपात्रदानं
शान्तिक्रियाः स्वस्त्ययनप्रयोगाः।
पूजा गुरूणां परिमिष्टमन्नं
दुःस्वप्नमेतानि विनाशयन्ति ॥ ६९९ ॥

अयं भोः पुष्करसारिन् स्वप्नाध्यायनामाध्यायः ॥ 5

अथ खलु भो पुष्करसारिन् अपरमपि स्वप्नाध्यायं व्याख्यास्यामि। तच्छ्रूयताम्। अथ किम्। कथयतु भगवांस्त्रिशङ्कुः—

## अपरः स्वप्नाध्यायः।

शुभाशुभानां स्वप्नानां यत्फलं समुदाहृतम्।
निमित्तं यादृशं यस्य शृणु वक्ष्यामि तत्त्वतः ॥ ७०० ॥ 10
जाग्रतो यदि वा त्रस्तो दिवा स्वप्नानि पश्यति।
न तु भयं भवेत्तस्य जानीयादेव बुद्धिमान् ॥ ७०१ ॥
यस्य तु यो भवेच्छत्रुर्यस्य विधेयमिच्छति।
स्वप्ने तु कलहं दृष्ट्वा क्षिप्रं प्रीतिर्भविष्यति ॥ ७०२ ॥
रजन्यां पुरिमे यामे योऽद्राक्षीत्सुखदुःखदम्। 15
अध्वानं चिरकालेन तथा ह्येष निवर्तते ॥ ७०३ ॥
मध्यमे भवते नैव क्षिप्रं भवति पश्चिमे।
वैमार्गं त्वरितं दृष्ट्वा स्त्रीलाभमभिनिर्दिशेत् ॥ ७०४ ॥
दृष्ट्वा जलचरान् मत्स्यानेवं जानीत बुद्धिमान्।
यत्किंचिदारभिष्यामि क्षिप्रमेव भविष्यति ॥ ७०५ ॥ 20
चम्पायां वृषणं हस्ते घृषेत्स्वप्नान्तरेषु वा।
प्रतिबुद्धो विजानीयाद् वर्णमेवं भविष्यति ॥ ७०६ ॥
सर्वाणि खलु पानानि मधुराणि सुखानि च।
यस्तु पिबति स्वप्नान्ते स च लाभैः प्रयुज्यते ॥ ७०७ ॥
श्वशृगालैर्भक्ष्यतेऽत्र स्वप्ने संपरिवार्यते। 25 M 162
प्रतिबुद्धस्तु जानीयात् शत्रुरेव प्रमूर्च्छति ॥ ७०८ ॥
उपरि काका गृध्राश्च धावन्त्युपरि यान्ति च।
प्रतिबुद्धो विजानीयाच्छत्रुर्मा वधयिष्यति ॥ ७०९ ॥
यस्य परगृहश्वानो द्वारे मूत्रं प्रकुर्वते।
प्रतिबुद्धो विजानीयाद्भार्या मे जारमिच्छति ॥ ७१० ॥ 30
एकश्च धरणौ पादो द्वितीयः शिरसि स्थितः।
प्रतिबुद्धो विजानीयाद्राज्यलाभो भविष्यति ॥ ७११ ॥

समुद्रं यदि पश्येद्वा पातुमिच्छति तज्जलम्।
प्रतिबुद्धो विजानीयाद्राज्यलाभो भविष्यति ॥ ७१२ ॥
वृक्षं पर्वतमारुह्य नागं च तुरगं तथा।
प्रतिबुद्धो विजानीयाद्राज्यलाभो भविष्यति ॥ ७१३ ॥
5 यस्तु स्वप्नान्तरे पश्येत् पितॄन् यानिह चान्यथा।
तथा माता पिता चैव तस्य जीवन्ति ते चिरम् ॥ ७१४ ॥
यस्तु स्वप्नान्तरे पश्येत्केशश्मश्रु विकर्तितम्।
प्रतिबुद्धो विजानीयादर्थसिद्धिर्भविष्यति ॥ ७१५ ॥
आननं चोदके दृष्ट्वा मध्येऽग्नौ च विधावितम्।
10 प्रतिबुद्धो विजानीयात् कुलवृद्धिर्भविष्यति ॥ ७१६ ॥
धावनं लङ्घनं चैव ग्रामाणां परिवर्तनम्।
प्रतिबुद्धो विजानीयादात्मानं शाततमिति ॥ ७१७ ॥
चौराणामपि सामग्रीं स्वप्नान्ते यस्तु पश्यति।
प्रतिबुद्धो विजानीयादात्मानं शाततमिति ॥ ७१८ ॥
15 कृष्णसर्पगृहीतं तु स्वप्नान्ते यस्तु पश्यति।
प्रतिबुद्धो विजानीयाच्छत्रुपीडा भविष्यति ॥ ७१९ ॥
M 163 कटकान् कर्णिकाश्चैव हंसकेयूरकुण्डलम्।
यस्तु चाभरणं पश्येद् बन्धुवर्गो भविष्यति ॥ ७२० ॥
कुड्ये च गृहप्राकारे धावतीह परस्परम्।
20 नाविके धनसंयोगे अङ्गते क्षणयं(?) खजः ॥ ७२१ ॥
यस्तु स्वप्नान्तरे पश्येचात्मानमग्नितापितम्।
प्रतिबुद्धो विजानीयाज्ज्वरं क्षिप्रं भविष्यति ॥ ७२२ ॥
राजानं कुपितं दृष्ट्वा आत्मानं मलिनीकृतम्।
प्रतिबुद्धो विजानीयात्कुटुम्बं तस्य नश्यति ॥ ७२३ ॥
25 काष्ठभारं तृणं चैव बहुभारमभीक्ष्णशः।
आत्मनः शिरसो दृष्ट्वा गुरुव्याधिर्भविष्यति ॥ ७२४ ॥
यस्तु वानरयुक्तेन गच्छते पुरिमां दिशम्।
प्रतिबुद्धो विजानीयाद्रात्रिरेषा ह्यपश्चिमा ॥ ७२५ ॥
चन्द्रसूर्यौ च संगृह्य पाणिना परिमार्जति।
30 प्रतिबुद्धो विजानीयादायधर्मागमो हि सः ॥ ७२६ ॥
सुमनां वार्षिकं[कीं] चैव कुमुदान्युत्पलानि च।
यस्तु पश्यति स्वप्नान्ते दक्षिणीयसमागमः ॥ ७२७ ॥

ब्राह्मणं श्रमणं दृष्ट्वा क्षपणं सुरनायकम्।
प्रतिबुद्धो विजानीयाद्यक्षा मे ह्यनुकम्पकाः ॥ ७२८ ॥
रुधिरेण विलुप्तस्य स्नात्वा चैवात्मलोहितैः।
प्रतिबुद्धो विजानीयादैश्वर्याधिसमागमः ॥ ७२९ ॥
मुद्गमाषयवांश्चैव धान्यं ज्वलनदर्शनम्। 5
यस्तु स्वप्नान्तरे पश्येत्सुभिक्षं तत्र निर्दिशेत् ॥ ७३० ॥
सुवर्णं च तथा रूप्यं मुक्ताहारं तथैव च।
यस्तु स्वप्नान्तरे पश्येन्निधिं तत्र विनिर्दिशेत् ॥ ७३१ ॥
बन्धनं बहु दृष्ट्वा तु छेदनं कुट्टनं तथा।
प्रतिबुद्धो विजानीयादर्थसिद्धिर्भविष्यति ॥ ७३२ ॥ 10

अयं भोः पुष्करसारिन्नपरः स्वप्नाध्यायः ॥ M 164

अथ खलु भोः पुष्करसारिन् मासपरीक्षानामाध्यायं व्याख्यास्यामि। तच्छ्रूयताम्। कथयतु भगवांस्त्रिशङ्कुः—

## मासपरीक्षा।

यदि फाल्गुने मासे निर्घोष उपरि भवेत्, मनुष्याणां मरणं चोदयति। नवचन्द्रो 15 लोहिताभासो दृश्यते, सर्वसस्यानुत्पत्तिं चोदयति। यदि देवो गर्जति, प्रथमं महासस्यानि भवन्ति। पश्चिमसस्यं न भवेत्। कलहं चोदयति ॥

यदि चैत्रे मासे देवो गर्जति, तदा सर्वसस्यमुत्पत्तिं चोदयति। यदि चन्द्रग्रहो भवति, महान् संनिपातो भवति। शून्यानि ग्रामक्षेत्राणि भविष्यन्ति। यदि नीहारं भूमिं छादयति, सुभिक्षं चोदयति ॥ 20

यदि वैशाखे मासे देवो गर्जति, सुभिक्षं चोदयति। यदि पूर्वे पश्चिमे शङ्के चन्द्रग्रहो भवति, क्षेमं चोदयति। यदि चोल्कापातो भवति, यस्मिंश्च जनपदे निपतति, तत्र देशे प्रधानपुरुषस्य विनाशो भवति। यदि भूमिचालो भवति, सुभिक्षं चोदयति ॥

यदि ज्येष्ठे मासे देवो गर्जति, रोगं चोदयति। यदि सूर्यग्रहो भवति, मनुष्याणां विनाशं चोदयति। पूर्वे पश्चिमे वा शङ्के यदि चन्द्रस्य सूर्यस्य किंचिन्निमित्तं लक्ष्यते, तदा 25 क्षेमं चोदयति। यदि मध्यरात्रौ चन्द्रग्रहो भवति, मनुष्याणामन्योन्यघातं चोदयति। यदि चोपरि निर्घोषो भवति, अध्यक्षपुरुषस्य पीडां चोदयति, परचक्रागमं चेति ॥

आषाढे मासे यदि सूर्यग्रहो रुचिराभासो भवति, सुभिक्षं चोदयति। यदि चन्द्रग्रहो भवति, रोगं चोदयति। यदि विद्युन्निश्चरति, कल्याणं चोदयति। यदि नीहारं भूमिं छादयति, सुभिक्षं चोदयति ॥ 30

श्रावणमासे यदि सूर्यग्रहो भवति, राज्यं परिवर्तते। यदि चन्द्रग्रहो भवति, प्रथमे मासे दुर्भिक्षं चोदयति। शरभैः शोभनशस्यनाशो भविष्यति। यदि तारका यत्र देशे पतन्ति, M 165

तत्र युद्धं चोदयति। यदि चातिशयं भूमिचालो भवति, रोगं चोदयति। यदि निर्घोषो भवति, तत्र गृहे यो गृहस्वामी भवति तस्य विनाशं चोदयति। अत्र च मासेऽभिनवं प्रावरणं न प्रावरितव्यम्। आवाहो विवाहो न कर्तव्यः। परिभूतो भवति॥

यद्याश्वयुजे मासे देवो गर्जति, मनुष्याणां विनाशनं चोदयति। यदि सूर्योपरागो 5 भवति, महापुरुषविनाशं चोदयति। यदि पूर्वे यामे चन्द्रस्य निमित्तं दृश्यते, सुभिक्षं चोदयति। यदि भूमिचालो भवति, आकुलं चोदयति। परराजा देशं हनिष्यति। तत्र च मनुष्या अन्योन्यं वधयिष्यन्तीति चोदयति॥

यदि कार्तिके मासे देवो वर्षति, महदाकुलं चोदयति। प्राणकाश्च धान्यं खादिष्यन्ति। यद्येकान्तरूपं वातो वाति, तत्र च मनुष्या जलेन विभ्रमिष्यन्ति। महात्मनः 10 पुरुषस्य विनाशं चोदयति। यदि पूर्वे यामे उत्पातो भवति, महावर्षं भवति। महापुरुषस्य च मरणं भवति। यदि निर्घोषो भवति रोगं चोदयति॥

यदि मार्गशीर्षे मासि देवो गर्जति, शस्यविनाशो भवति। अन्यश्च तत्र स्वामी भवति। यदि चाकाशे निर्घोषो भवति, यत्पूर्वभागीया मनुष्यास्तेषामामयं चोदयति। यदि भूमिचालो भवति, यस्तत्र जनपदे प्रधानपुरुषः स वधान्मोक्ष्यति॥

15 यदि पौषे मासे देवो गर्जति, प्रथमे यामे जनपदनाशो भवति। द्वितीये महात्मनः पुरुषस्य बन्धनं चोदयति। प्रथमे यामे च यदि चन्द्रोपरागो भवति लोहितवर्णश्च दृश्यते, उदकागमं चोदयति। महात्ममनुष्यं चोदयति। यदि सूर्यग्रहो भवति, शुद्धपुरुषाणां रणम्। यदि तारकाः पतन्त्यो विदृश्यन्ते, तत्र जनपदे आकुलं चोदयति। यद्याकाशे निर्घोषो भवति, मनुष्याणां मरणं चोदयति। यदि द्वितीये निर्घोषो भवति, मनुष्याश्चौरैर्हन्यन्ते। 20 यद्यत्रैव मासे तारका उत्सृष्टा न चन्द्रो दृश्यते, सस्यं संचोदयति। यदि भूमिचालो भवति, महामनुष्यस्य मरणं भवति। अत्रैव मासे देवस्थानं कर्तव्यम्। वृक्षा रोपयितव्याः। मूलवास्तु प्रतिष्ठापयितव्यम्॥

M 166 अयं भोः पुष्करसारिन् मासपरीक्षानामाध्यायः॥

अथ खलु भोः पुष्करसारिन् खञ्जरीटकज्ञानं नामाध्यायं व्याख्यास्यामि। तच्छ्रूय- 25 ताम्। अथ किम्। कथयतु भगवान् त्रिशङ्कुः—

## खञ्जरीटकज्ञानम्।

खञ्जरीटकशास्त्रं वै पर्वते गन्धमादने।
कुचरैर्दृश्यते सौम्य कुचरस्य महाभयम्॥ ७३३॥
यानि तानि निमित्तानि दर्शयेत्खञ्जरीटकः।
30 प्रचरतो भवेद् दृष्ट्वा पञ्चोत्तरपदो द्विजः॥ ७३४॥

तत्र सर्वे प्रवर्तेयुर्यत्र येषु भवेद्भवेत्।
शाद्वले बहुचेलत्वं गोमयेषु प्रबन्धता ॥ ७३५ ॥

कङ्कारे बहुचेलत्वं कर्दमे बहुभक्षता।
कुकरे स्वल्पचेलत्वं पुरीषे तु कृशं श्रवः ॥ ७३६ ॥

भस्मे विवादमफलं वालुकायां तु संभ्रमः। 5
देवद्वारे तु संमानं पद्मेषु बहुवित्तता।
फलेऽर्थानुगुणं प्रोक्तं पुष्पेषु प्रियसंगमः ॥ ७३७ ॥

भयं प्राकारशृङ्गेषु कटकेष्वरिदर्शनम्।
पक्षया चरते व्याधिः पतितो मृत्युमादिशेत् ॥ ७३८ ॥

सुगन्धतैलभूतानि मैथुने निधिदर्शनम्। 10
वृक्षाग्रे विद्यते पानं गृहेष्वथ........लसः ॥ ७३९ ॥

देशभङ्गप्रवादे च बन्धनं विग्रहीकृते।
अमृतं च स्थितं दृष्ट्वा ओदनं नात्र संशयः ॥ ७४० ॥

गवां पृष्ठे ध्रुवं सिद्धिरश्वपृष्ठे ध्रुवं जयः।
अविकानामजानां च पृष्ठे सर्वत्र शस्यते ॥ ७४१ ॥ 15

उष्ट्रपृष्ठे ध्रुवं क्लेशः श्वानपृष्ठे च विद्रवः। M 167
पृष्ठे च गर्दभस्येह मरणं नात्र संशयः ॥ ७४२ ॥

कीले तु मरणं विद्याद् यूपाग्रे च न संशयः।
कुम्भस्थाने श्मशाने वा मृतो वा यत्र दृश्यते ॥ ७४३ ॥

अन्तरीक्षे प्रडीनं तु अफलं तु विनिर्दिशेत्। 20
दृष्ट्वा समागतं वासं प्रहृष्टं खञ्जरीटकम्।
यथास्थानं यथावर्णं मनुष्याणां विनिर्दिशेत् ॥ ७४४ ॥

विषमे स्वल्पकक्षेषु प्रसक्तः कलहो भवेत्।
समेषु समके क्षेत्रे समान् वर्णान् विनिर्दिशेत्।
नद्यां तु शैलवाहिन्यां प्रवासमभिनिर्दिशेत् ॥ ७४५ ॥ 25

काष्ठेषु नातिका चिन्ता तथास्थिषु धनक्षयः।
यां दिशं समुदागच्छत् पद्मोत्तरपदः खगः।
तां दिशं गमनं विद्याद्यथा तस्य तथा पुनः ॥ ७४६ ॥

कीटा वाथ पतङ्गा वा भयं यदिह दृश्यते।
प्रचुरापि यदाज्ञेया नरस्यास्थीनि निर्दिशेत् ॥ ७४७ ॥ 30

अपां समीपे गजमस्तके वा
सूर्योदये ब्राह्मणसंनिधौ वा।
मुख्यप्रकाशेऽप्यहिमस्तके वा
यः पश्यते खञ्जनकं स धन्यः॥ ७४८॥

5 मातङ्गराजो मतिमांस्त्रिशङ्कुः
प्रोवाच तत्त्वं खञ्जनं च शास्त्रम्।
स्निग्धे सरूक्षे विषमे समे च
आदेशयेद् दोषगुणैर्यथोक्तैः।
तमादिशेत्तत्र समीक्ष्य विद्वान्
10 शुभाशुभं तत्फलमादिशेच्च॥ ७४९॥

अयं भोः पुष्करसारिन् खञ्जरीटकज्ञानं नामाध्यायः॥

अथ खलु भोः पुष्करसारिन् शिवारुतं नामाध्यायं व्याख्यास्यामि। तच्छ्रूयताम्। अथ किम्। कथयतु भगवान् त्रिशङ्कुः—

M 168

## शिवारुतम्।

15 नमः सर्वेषामार्याणाम्। नमः सर्वेषां सत्यवादिनाम्। तेषां सर्वेषां तपसा वीर्येण च इमं शिवारुतं नामाध्यायं व्याख्यास्यामि। इत्याह भगवांस्त्रिशङ्कुः। शाण्डिल्यमिदमब्रवीत्। यादृशं च यथा वाशेत्तेषां सर्वेषां वाशान् शृणोथ मे। पूर्वस्यां दिशि यदि वाशेत्, शिवा पूर्वमुखं स्थित्वा त्रीन् वारान् वाशेत्, वृद्धिं निवेदयति। चतुरो वारान् यदि वाशेत्, अत्र मङ्गलं निवेदयति। पञ्च वारान् वाशेत्, वर्षां निवेदयति। षड्वारान् वाशेत्, 20 परचक्रभयं निवेदयति। सप्तवारान् वाशेत्, बन्धनं निवेदयति। अष्ट वारान् वाशेत्, प्रियसमागमं निवेदयति। अभीक्ष्णं वाशेत्, परचक्रभयं निवेदयति। इत्याह भगवांस्त्रिशङ्कुः॥

दक्षिणायां दक्षिणमुखं स्थित्वा त्रिवारान् वाशेत्, 'अतृ अतृ' कुरुते मरणं तत्र निवेदयति। चतुरो वारान् वाशति, दक्षिणमुखं स्थित्वा दक्षिणाया एव दिशायाः प्रियसमागमं निवेदयति। अर्थलाभं च निवेदयति। पञ्चवारान् वाशेत्, अर्थं निवेदयति। षड्वारान् वाशेत्, 25 सिद्धिं निवेदयति। सप्तवारान् वाशेत् विवादकलहं निवेदयति। अष्टवारान् वाशेत्, भयं निवेदयति। अभीक्ष्णं वाशेत्, आकुलं निवेदयति। इत्याह भगवांस्त्रिशङ्कुः॥

पश्चिमायां पश्चिमाभिमुखं स्थित्वा शिवा त्रिवारान् वाशति, मरणं निवेदयति। चतुर्वारान् वाशति, बन्धनं निवेदयति। पञ्चवारान् वाशति, वर्षं निवेदयति। षड्वारान् वाशति, अन्नपानं निवेदयति। सप्तवारान् वाशति, मैथुनं निवेदयति। अष्टवारान् वाशति, अर्थसिद्धिं 30 निवेदयति। अभीक्ष्णं वाशति, महामेघं निवेदयति। इत्याह भगवांस्त्रिशङ्कुः॥

उत्तरस्यां दिशि उत्तराभिमुखं स्थित्वा त्रिवारान् वाशति, पुरुषस्य प्रस्थितस्य निरर्थकं गमनं भवति। चतुर्वारान् वाशति, राजप्रतिभयं निवेदयति। पञ्चवारान् वाशति, विवादं निवेदयति। षड्वारान् वाशति, कुशलं निवेदयति। सप्तवारान् वाशति, वर्षां निवेदयति। अष्टवारान् वाशति, राजकुलदण्डं निवेदयति। अभीक्ष्णं वाशति, यक्षराक्षसपिशाचकुम्भाण्ड- M 169 भयं निवेदयति। इत्याह भगवांस्त्रिशङ्कुः॥ 5

दिशि विदिशि चैव गिरिप्राग्भारेषु शिखरेषु निर्देशं तं च शृणोथ मे। "अमूं तुष्येत् पिपासार्तां विद्यासिद्ध्यै तथैव च"।

विद्यालम्भं धनलम्भं निर्दिशेच्च विचक्षणः।
तीर्थाकारवृक्षमूले वाशती यदि दृश्यते॥ ७५०॥

सर्वत्र सिद्धिं निर्दिशेत्। न च शृगालभये शिवा (वा)मे समेति अप्रमत्तेन स्मृतिमता 10 पूजयितव्या शिवा नित्यम्। गन्धपुष्पोपहारेण शुश्रूषा कर्तव्या। एवमर्च्यमाना सर्वसिद्धिं निवेदयिष्यति। एवं "सर्वेऽर्थास्तस्य सिध्यन्ति त्रिशङ्कोर्वचनं यथा"। क्रौष्ट्रिको यदि वाशति, अर्थलम्भं निवेदयति। अधोमुखो यदि वाशति, निधानं तत्र निवेदयति। ऊर्ध्वमुखो यदि वाशति, वर्षां तत्र निवेदयति। द्विपथे यदि वाशति, पूर्वमुखं स्थित्वा अर्थलाभं निवेदयति। दक्षिणाभिमुखो यदि वाशति, यथाप्रियसमागमनं निवेदयति। द्विपथे पश्चिमाभि- 15 मुखो यदि वाशति, कलहं विवादं विग्रहं मरणं च निवेदयति। कूपकण्ठके यदि वाशति, अर्थं तत्र निवेदयति। शाद्वले यदि वाशति, अर्थसिद्धिं निवेदयति। अतिमृदुकं यदि वाशति, व्याधिकं तत्र निवेदयति। गीतहारेण यदि वाशति, अर्थमनर्थं च निवेदयति। त्रिभिर्वारैरर्थं चतुर्भिरनर्थं पञ्चभिः प्रियसमागमं षड्भिर्भोजनं सप्तभिर्भयमष्टभिर्विग्रहं विवादं च। इत्याह भगवांस्त्रिशङ्कुः॥ 20

"अथ भूयः प्रवक्ष्यामि अनुपूर्वं शृणोथ मे"। नानाहारे यदि वाशति, मार्गे संस्थितस्यापि सर्वं वक्ष्यामि तं शृणोथ मे। संप्रस्थितस्य पुरुषस्य शिवा वाशति वा, या पूर्वमुखं स्थित्वा क्षिप्रगमनमर्थसिद्धिं निवेदयति। अथ दक्षिणमुखं वाशति, या अर्थसिद्धिं निवेदयति। पश्चान्मुखं वाशति, भयं निवेदयति। अथोत्तरमुखं वाशति, अर्थलाभं निवेदयति। अथ संप्रस्थितस्य वाशति, या पुरतः स्थित्वा उपक्लेशं निवेदयति। अथ दक्षिणे वाशति, 25 यदि दक्षिणामुखा एव दिशः कर्मसिद्धिं च निवेदयति। पश्चिमतो यदि वाशति, चौरतो- M 170 ऽहितमस्य दुःखदौर्मनस्यं निवेदयति। अथ मार्गे व्रजतो दक्षिणतो वाशति, महाव्याधिमनर्थं चौरा मुषन्ति तन्निवेदयति। ग्लानस्य यदि वाशति, दक्षिणमुखं, "न स चिकित्सितुं शक्यो मृत्युदूतेन चोदितः"। ग्लानस्य यदि वाशति, उत्तरमुखं स्थित्वा आरोग्यधनलाभं च निवेदयति। अथ मूर्ध्ना वाशति, या उपक्लेशं निवेदयति। अथ पश्चिममुखं स्थित्वा या अन्योन्यं 30 व्याहरते, यमशासनं [निवेदयति]। नानाहारे यदि वाशति, या संक्षोभं निवेदयति। इत्याह भगवांस्त्रिशङ्कुः॥

शिवा पुरतः पुरुषस्य मार्गप्रयातस्य यदि वाशति, या अग्रतः क्षेममार्गं विज्ञापयति। अर्थसिद्धिं निवेदयति। मार्गं व्रजतोऽस्य शिवा वामेनागत्य गच्छते, दक्षिणमुखं क्षेममार्गं विजानीयादर्थसिद्धिं च निवेदयति। मार्गे व्रजतः पुरुषस्य शिवा वामेनागत्य पुरतो वाशति, या तथा सभयं मार्गं विज्ञापयति। निवर्तेत विचक्षणः। दक्षिणां दिशं वामं गत्वा वामतः 5 परिवर्तेत "न तन्मार्गेण गन्तव्यं त्रिशङ्कुवचनं यथा"। पुरतः शिवा गत्वा अग्रतश्च निषीदति, सभयं मार्गं विजानीयात्। निवर्तेत विचक्षणः। शिवा पुरत आगत्य वामेन परिवर्तते, 'भयमेतीह' तेनापि भयं जानीयाद्विचक्षणः। सेनायामावाहितायां शिवा वाशति, पश्चिमं निवर्तनं निवेदयति। यदि गच्छेत्पराजयः। सेना न गच्छेत्। सेनायां व्रजमानायां शिवा आगच्छेदग्रतः सेनाजयं निवेदयति। परचक्रपराजयं च निवेदयति। सार्थस्य व्रजमानस्य 10 शिवा गच्छत्यग्रतः क्षेममार्गं निवेदयति। अर्थसिद्धिं तथैव च। पुरुषस्य पथि व्रजतो वामतो वाशति, मार्गं निवेदयति। "तन्मार्गेण [हि] गन्तव्यं त्रिशङ्कुवचनं यथा"॥

"ग्रामस्य नगरस्यापि चैत्यस्थाने तथैव च"। पूर्वेणोत्तरेणापि शिवा वाशति, क्षेमं तत्र निवेदयति। दक्षिणे पश्चिमे यदि वाशति, या भयं तत्र निवेदयति।

वामतो न प्रशंसन्ति तथैव विदिशासु च।
15 अतिदीर्घातिरूक्षा वा काले मासान्तिके तथा।
अधरां तु भयं वक्ष्ये त्रिशङ्कुवचनं यथा॥ ७५१॥

M 171 मधुस्वरां शिवां ज्ञात्वा काले वेले उपस्थिते।
क्षेमं चैवार्थसिद्धिश्च चिन्तितव्यं विचक्षणैः॥ ७५२॥

व्याधिरुपद्रवाश्च, "सर्वं तु प्रशमं यान्ति त्रिशङ्कुवचनं यथा"। शिवारुतस्योपचारो 20 दिग्विदिशासु निमित्ता ग्रहीतव्याः। यः शिवाया दिवसो भवति, स दिवसो ज्ञातव्यः। पुष्पगन्धमाल्योपहारस्तद्दिवसे उपपादयितव्यः। नित्यं देवतागुरुकेण भवितव्यम्। देव्या गुरुकेण भवितव्यम्। देव्यै शुश्रूषा कर्तव्या। सर्वार्थान् संपादयिष्यति। सर्वकार्याणि निवेदयति॥

यत्किंचित्कार्यमारभिष्यति, तत्सर्वं निवेदयति। देव्यै सर्जरसो गुग्गुलु च धूपयि- 25 तव्यम्। पुष्पबलिश्च यथाकाले दापयितव्यः। इत्याह भगवांस्त्रिशङ्कुः॥

शिवारुतकथनेऽत्र विद्यां वक्ष्यामि यथासत्यं भविष्यति।
नम आरण्यायै। चीरिण्यै स्वाहा सर्जरसधूपम्।

अयं भोः पुष्करसारिन् शिवारुतनामाध्यायः॥



अथातः पुष्करसारिन् पाणिलेखानामाध्यायं व्याख्यास्यामि । तच्छ्रूयताम्। अथ किम्। कथयतु भगवांस्त्रिशङ्कुः—

## पाणिलेखा।

अथातः संप्रवक्ष्यामि नराणां करसंस्थितम्।
लक्षणं सुखदुःखानां जीवितं मरणं तथा ॥ ७५३ ॥ 5
अङ्गुष्ठमूलमाश्रित्य ऊर्ध्वरेखा प्रवर्तते।
तत्र जातं सुखतरं द्वितीया ज्ञानमन्तरे ॥ ७५४ ॥
तृतीया सा लेखा यत्र प्रदेशिन्या प्रवर्तते।
तत्रोक्ता हेतवः शास्त्रे समासेन चतुर्विधाः ॥ ७५५ ॥
अपर्वसु च पर्वाणि नक्षत्राणामुपद्रवः। 10
द्विनिःसृतो विशुद्धात्मा जीवेद्वर्षशतं हि सः ॥ ७५६ ॥
त्रिंशत् त्रिभागेन जानीयादर्धे पञ्चाशदायुषः।
सप्ततिस्त्र्यंशभागेषु अत्यन्तानुगते शतम् ॥ ७५७ ॥
आयुर्लेखा प्रदश्यैवं व्यन्तरायः प्रकाश्यते।
नक्षत्रसंज्ञया ज्ञेया मनुजैरर्थशस्तथा ॥ ७५८ ॥ 15
अङ्गुष्ठोदरमार्गे तु यावत्यो यस्य राजयः।
तस्यापत्यानि जानीयात् तावन्ति नात्र संशयः ॥ ७५९ ॥
दीर्घायुषं विजानीयाद् दीर्घलेखा तु या भवेत्।
ह्रस्वायुषं विजानीयाद्ध्रस्वलेखा तु या भवेत् ॥ ७६० ॥
अङ्गुष्ठमूले यवको रात्रौ जन्माभिनिर्दिशेत्। 20
दिवा तु जन्म निर्दिष्टमङ्गुष्ठयवके ध्रुवम् ॥ ७६१ ॥
अव्यक्तो यवको यत्र तत्र लग्नं विनिर्दिशेत्।
लग्नं पुंसंज्ञको ज्ञेयोऽहोरात्रं विनिर्दिशेत् ॥ ७६२ ॥
दिवसं जन्म निर्दिशेद् रात्रौ स्त्रीसंज्ञको भवेत्।
रात्रिः संध्या समाख्याता भागैरन्यैर्न संशयः। 25 M 173
पुंसंज्ञादुदयं तेषामहोरात्रान्तिकं वदेत् ॥ ७६३ ॥
अङ्गुष्ठमूले यवके शले सौख्यं विधीयते।
अश्वाद् भद्रं विजानीयादङ्गुष्ठयवकेष्विह ॥ ७६४ ॥
यवमाला च मत्स्यः स्यादङ्गुष्ठयवको रतौ।
बालयौवनमध्यान्ते सुखं तस्याभिनिर्दिशेत् ॥ ७६५ ॥ 30
यस्य स्याद् यवकश्चापि चापो वा स्वस्तिकस्तथा।
तलेषु येषु दृश्यन्ते धन्यास्ते पुरुषा ह्यमी ॥ ७६६ ॥

मत्स्यो धान्यं भवेद् भोगायामिषादौ यवे धनम् ।
भोगसौभाग्यं जानीयान्मीनादौ नात्र संशयः ॥ ७६७ ॥

पताकाभिर्ध्वजैर्वापि शक्तिभिस्तोमरैस्तथा ।
तलस्थैरङ्कुशैश्चापि विज्ञेयः पृथिवीपतिः ।
5 राजवंशप्रसूतं च राजमात्रं विनिर्दिशेत् ॥ ७६८ ॥

प्रेक्ष्यन्ते शाखया पञ्च हस्ते चत्वार एव च ।
क्षत्रियो वा भवेद् भोगी राजभिश्चापि सत्कृतः ॥ ७६९ ॥
वैश्योऽथ क्षत्रियो वाग्मी धनधान्यं न संशयः ।
शूद्रो विपुलभागी स्यात् पर्वशीलोऽथ नैष्ठिकः ॥ ७७० ॥
10 सततमभिपूज्यः स्यात् सर्वेषां च प्रियंवदः ।
विशीलः शीलकुब्जो वा बहुभिर्न बहुस्तथा ॥ ७७१ ॥
श्यामवर्णाथ भिन्ना वा सा लेखा दुःखभागिनी ।
त्रिलेखा यस्य दृश्यन्ते यस्य पूर्णाः करस्थिताः ।
M 174 महाभोगो महाविद्वान् जीवेद्वर्षशतं च सः ॥ ७७२ ॥
15 अजपदं राजच्छत्रं शङ्खचक्रपुरस्कृतम् ।
तलेषु यस्य दृश्यन्ते तं विद्यात् पृथिवीपतिम् ॥ ७७३ ॥

भगस्तु भाग्याय ध्वजैः पताकै-
हर्स्त्यश्वमालाङ्कुशतश्च राजा ।
मत्स्यो नु पानाय यवो धनाय
20 वेदिस्तु यज्ञाय गवां च गोष्ठः ॥ ७७४ ॥

अनामिकापर्व अतिक्रमेद् यदि
कनिष्ठिका वर्षशतं स जीवति ।
समे त्वशीतिर्वर्षाणि सप्तभि-
र्यथा नदीनां भरिताय निर्दिशेद् ॥ ७७५ ॥

25 शरीरवर्णप्रभवां तु लेखां
सवैशिखां वर्णविहीनकां च ।
समीक्ष्य नीचोत्तममध्यमानां
दारिद्र्यमध्ये चरतां विजानताम् ॥ ७७६ ॥

अभ्यञ्जनोद्वर्तनसत्करी[ षै ]-
30 रध्यक्षचूर्णैश्च विमृज्य पाणिम् ।
प्रक्षाल्य चैकान्तरघृष्टलेखा-
मेकाग्रचित्तस्तु करं परीक्षेत् ॥ ७७७ ॥

वलयसमनराधिपं भजन्त्यः
　　समनुगता मणिबन्धने तु तिस्रः।
द्विरपि च [स] भवान्तरे महात्मा
　　विपुलधनश्रिय आह वस्त्रलाभः॥ ७७८॥
दधति सततमुन्नतस्तु पाणि-　　5
　　र्भवति चिराय तु दीर्घपीनपाणिः।
परिपतति शिराविरुद्धपाणि-
　　र्धनमधिगच्छति मांसगूढपाणिः॥ ७७९॥
सुदृश [ करतलैश्च ] साधवस्ते
　　कुटिलकृतैर्विनिमीलितैश्च धूर्ताः।　　10
भवति रुधिरसंनिभः सुरक्त-
　　श्चिरमिह पिण्डितपाणिरीश्वरः स्यात्॥ ७८०॥
धृतरुचिरमनाः शिलारविन्दै-
　　र्ज्वलनकषायसुवर्णपाणिरा[ जिः ]।
भवति बहुधनो निगूढपाणि-　　15
　　श्चिरमिह जीवति पानभोगभोगी॥ ७८१॥
सुभग इह तथोष्णदीर्घपाणि-
　　र्ध्रुवमिह शीतलपाणिकस्तु षण्ढः।
इह हि बहुधनो बलेन युक्तः
　　सुतनुसुसंचितपाणिरेखको यः॥ ७८२॥　　20
धनमुपनयतीह पाणिलेखा　　M 175
　　कृतजनिता जलवच्च या सुदीर्घा।
जलवदनुगता सुवर्णवर्णा
　　धनमधिगच्छति निम्नशोन्नता या॥ ७८३॥
धनमुपलभते सुरक्तपाणि-　　25
　　र्विपुलमथो च निरन्तराङ्गुलिः स्यात्।
बलिपुरुषमपि त्यजेद्धि वित्तं
　　दितविवशा (?) च विशीर्णवर्णलेखा॥ ७८४॥
अपगतघृतवर्णपाणिलेखो
　　भवति नरो धनवान् बलेन युक्तः।　　30
असुभृतिसदृशा भवेत्तथा
　　भूषणवृत [रूपवती शुभा] एकभार्या॥ ७८५॥

भवति बहुधनो धनैर्विहीनः
श्रुतमधिगम्य विशालपाणिलेखः।
[सु]ऋजुभिरहिनीलनिर्मला[भिः]
करतलराजि [भिरीश्वरः स धन्यः] ॥ ७८६ ॥
5 अयं भोः पुष्करसारिन् करतललेखानामाध्यायः ॥

अथ खलु भोः पुष्करसारिन् वायसरुतं नामाध्यायं व्याख्यास्यामि। तच्छ्रूयताम्। अथ किम्। कथयतु भगवांस्त्रिशङ्कुः। नमोऽर्हताम्। तेषां नमस्कृत्वा—

## वायसरुतम्।

इदं शास्त्रं प्रवक्ष्यामि वायसानां शुभाशुभम्।
10 जयं पराजयं चैव लाभालाभं तथैव च ॥ ७८७ ॥
सुखदुःखं प्रियाप्रियं जीवितं मरणं तथा।
वायसानां वचःसिद्धिं प्रवक्ष्यामि यथाविधि ॥ ७८८ ॥
देवाः प्रवदन्ति श्रेष्ठा वायसानां नमो नमः।
आगता मानुषं लोकं वायसा बलिभोजनाः ॥ ७८९ ॥
15 प्रस्थितस्य यदाध्वानमग्रतो वायसो भवेत्।
व्याहरन् क्षीरिवृक्षस्थो निर्दिशेदर्थसिद्धिताम् ॥ ७९० ॥
स्वरेण परितुष्टेन फलवृक्षसमाश्रितः।
पुनरागमनं चैव सिद्धमर्थनिवेदितम् ॥ ७९१ ॥
M 176 विवृद्धवृक्षपत्राणि मधुरं चानुवासति।
20 असूपं निर्दिशेद् भोज्यं गुडमिश्रं तु गोरसम् ॥ ७९२ ॥
दृष्टस्तु तुण्डपादेन आत्मनः परिमार्जति।
पायसं सर्पिषा मिश्रं तत्र विद्यान्न संशयः ॥ ७९३ ॥
रूक्षं निर्घर्षते तुण्डं शिरश्च परिमार्जति।
सफलं वृक्षमास्थाय ध्रुवं मांसेन भोजनम् ॥ ७९४ ॥
25 लोचयति व्याहरति फलवृक्षसमाश्रितः।
व्याधेन च हतं मांसं निवेदयति भोजनम् ॥ ७९५ ॥
घोरं व्याहरते कार्यं वायसो वृक्षमाश्रितः।
कलहं संग्रामभयं तत्र विद्यान्न संशयः ॥ ७९६ ॥
शुष्कवृक्षे निषीदित्वा क्षामं दीनं च व्याहरेत्।
30 कलहं सुमहत् कृत्वा न चार्थं तत्र सिध्यति ॥ ७९७ ॥
क्षीरिवृक्षे निषीदित्वा क्षामं दीनं च व्याहरेत्।
क्रमेण युगमात्रेण न चार्थं तत्र सिध्यति ॥ ७९८ ॥

शुष्कवृक्षे निषीदित्वा 'कामुकाकं' प्रवाशति।
तत्क्षणं संनिवेदेति तत्र चौरभयं भवेत्॥ ७९९॥
शुष्कवृक्षे निषीदित्वा 'कामुकाकं' प्रवाशति।
पृष्ठेन दर्शयेद्द्वारं क्षुधापीडां च निर्दिशेत्॥ ८००॥
पक्षं विधूयमानो यः पश्यन् पथस्य वाशति। 5
न तत्र गमनं कुर्याच्चौरैः पथमुपद्रुतम्॥ ८०१॥
रज्जुं वा फलकं वापि यदि कर्षति वायसः।
न तत्र गमनं श्रेयश्चौरैः पथमुपद्रुतम्॥ ८०२॥
गोमये शुष्ककाष्ठे वा यदि वाशति वायसः।
कलहः कुवचो व्याधिर्न चार्थं तत्र सिध्यति॥ ८०३॥ 10
M 177
तृणं वा यदि वा काष्ठं दर्शयेच्च सदा खगः।
पुरतः शुष्कपाणिस्तु तत्र चौरभयं भवेत्॥ ८०४॥
सार्थोपरि निषीदित्वा क्षामं दीनं च व्याहरेत्।
निपतेत् सार्थमध्येऽस्मिन् चौरसैन्यं न संशयः॥ ८०५॥
यदा प्रदक्षिणं त्रस्तं वाशन्ति विविधं खगाः। 15
शुष्कवृक्षे निषीदित्वा तत्र विद्यान्महाभयम्॥ ८०६॥
भीतस्त्रस्तः परीतश्च यस्तु व्याहरते खगः।
परिबाधन् दिशः सर्वास्तत्र भयमुपस्थितम्॥ ८०७॥
गच्छन्तं समनुगच्छेत्पुरः स्थित्वा तु व्याहरेत्।
न तत्र गमनं कुर्यान्मार्गमत्र प्रशातनम्॥ ८०८॥ 20
वास्तुमध्ये प्रतिस्थाने क्षामं दीनं च व्याहरेत्।
व्याधिं तत्र विजानीयाद् वासे वा गृहस्वामिनाम्॥ ८०९॥
शकटस्य यथा शब्दं विश्रब्धं वाशति वायसः।
दूरादभ्यागतं ज्ञात्वा प्रसिद्धिं चाभिनिर्दिशेत्॥ ८१०॥
गर्गरे घटके चैव स्थालिकपिठरेषु वा। 25
निषण्णो वाशते काकः प्रसिद्धं गमनं ध्रुवम्॥ ८११॥
आसने शयने वापि स्थितो वाशति वायसः।
प्रसिद्धं गमनं ब्रूयात्प्रोषितेन समागमः॥ ८१२॥
ब्रह्मस्थाने निषीदित्वा ध्रुवं वाशति वायसः।
अर्थलाभं विजानीयाद्धनलाभं च आकरेत्॥ ८१३॥ 30
ब्रह्मस्थाने निषीदित्वा क्षामं दीनं च वाशति।
संधिस्थाने हरेच्चौरस्तत्र वै नास्ति संशयः॥ ८१४॥

देवतादेवतानां च देवस्योपवनानि च।
यस्य वाचं वदेत्तस्य अर्थलाभं विनिर्दिशेत्॥ ८१५॥

लाक्षाहरिद्रामञ्जिष्ठाहरितालमनःशिलाः।
यस्याहरेत्पुरस्तस्य स्वर्णलाभं विनिर्दिशेत्॥ ८१६॥

5 पात्रं च पात्रकं चैव मृत्तिकावरभाजनम्।
M 178 यस्य यस्य हरेत्तस्य द्रव्यलाभं विनिर्दिशेत्॥ ८१७॥

संघीभूत्वा युगमात्रं शुभं तिष्ठति वायसः।
काष्ठं वा वायसा यत्र गृहमारोपयन्ति च।
निगदन्त्यत्र विजानीयाद् याचकात्तु महाभयम्॥ ८१८॥

10 नीलं पीतं लोहितं च प्रतिसंहरणानि च।
निगृह्णन्ति यत्र काका व्याधिं तत्र विनिर्दिशेत्॥ ८१९॥

ग्रामान्ते भयमाख्याति काको वा वाशति ध्रुवम्।
प्रत्येकतो वा वाशन्ति विद्यात्तत्र महाभयम्॥ ८२०॥

वायसोऽस्थि गृहीत्वा वै प्रगच्छेदनुदक्षिणम्।
15 निषीदन् सफले वृक्षे स वदेन्मांसभोजनम्॥ ८२१॥

यस्य शीर्षे निषीदित्वा कर्णं कर्षति वायसः।
अभ्यन्तरे सप्तरात्रान्मरणं तस्य निर्दिशेत्॥ ८२२॥

करके चोदके चैव स्निग्धदेशेषु वाशति।
ऊर्ध्वमुखं निरीक्षंस्तु जगद् वृष्टिं विनिर्दिशेत्॥ ८२३॥

20 स्वरेण परितुष्टेन तीर्थवृक्षेषु वाशति।
ऊर्ध्वमुखं तथा वक्ति वातवृष्टिं विनिर्दिशेत्॥ ८२४॥

कायं किलकिलायंस्तु स्निग्धदेशेषु वाशति।
वक्षो विधुन्वन् वायसः सद्यो वृष्टिं विनिर्दिशेत्॥ ८२५॥

स्वरेण परितुष्टेन स्निग्धं मधुरं वाशति।
25 सक्षरसद्रवं भागं वाशति भोजनं भवेत्॥ ८२६॥

प्राकारे तोरणाग्रे वा यदि वाशति वायसः।
अभीक्ष्णं घर्षते तुण्डं संग्रामं तत्र निर्दिशेत्॥ ८२७॥

मण्डलानि वावर्तानि बहिर्वा नगरस्य च।
वैरं च विग्रहं घोरं तत्र चैव विनिर्दिशेत्॥ ८२८॥

M 179 30 ग्रामे वा नगरे वापि कुर्वते यत्र मण्डलम्।
ऊर्ध्वमुखं वाशन्तो वै विषण्णत्वं समुत्थितम्॥ ८२९॥

पूर्वेण चैव ग्रामस्य यदा सूयति वायसी।
अल्पोदकेनोत्प्लवन्ति वनानि नगराणि च ॥ ८३० ॥
पुरस्ताद्दक्षिणे पार्श्वे यदि सूयति वायसी।
वर्षति प्रथमे मासे पश्चाद्देवो न वर्षति।
कृष्टधान्यानि वर्धन्ते माषधान्यं विनश्यति ॥ ८३१ ॥ 5
दक्षिणे वृक्षशिखरे यदा सूयति वायसी।
मण्डूककीटकमक्षा चौरश्च बहुलीभवेत् ॥ ८३२ ॥
पश्चिमोत्तरपाश्व तु यदा सूयति वायसी।
अशनिर्निपतेत्तत्र भयं च मृगपक्षिणाम् ॥ ८३३ ॥
उत्तरे वृक्षशिखरे यदा सूयति वायसी। 10
पूर्वमुप्तं विजानीयाच्छस्यं समुपजायते ॥ ८३४ ॥
उपरि वृक्षशिखरे यदा सूयति वायसी।
अल्पोदकं विजानीयात्स्थले बीजानि रोपयेत् ॥ ८३५ ॥
यदा तु मध्ये वृक्षस्य निलयं करोति वायसी।
मध्यमं वर्षते वर्षं मध्यशस्यं प्रजायते ॥ ८३६ ॥ 15
स्कन्धमूले तु वृक्षस्य यदा सूयति वायसी।
अनावृष्टिर्भवेद् घोरा दुर्भिक्षं तत्र निर्दिशेत् ॥ ८३७ ॥
चतुरः पञ्च वा पोतान् यदा सूयति वायसी।
सुभिक्षं च भवेत्तत्र फलानामुदितं भवेत् ॥ ८३८ ॥

अयं भोः पुष्करसारिन् वायसरुतं नामाध्यायः ॥ 20 M 180

अथ खलु भोः पुष्करसारिन् द्वारलक्षणं नामाध्यायं व्याख्यास्यामि। तच्छ्रूयताम्। अथ किम्। कथयतु भगवान् त्रिशङ्कुः—

## द्वारलक्षणम्।

माहेन्द्रमथ दिव्यं च माङ्गल्यं पूर्वतः स्मृतम्।
दक्षिणे तु दिशो भागे पूषा च पित्र्यमेव च ॥ ८३९ ॥ 25
सुग्रीवं पुष्पदन्तं च पश्चिमेनात्र निर्दिशेत्।
भल्लातकं राजयक्ष्मं विद्यादुत्तरतः शुभम् ॥ ८४० ॥
जन्मसंपद्विपत्क्षेत्रक्षेमप्रत्यरिसाधनम्।
अथ वै धनमित्रं च परमं मैत्रमेव च ॥ ८४१ ॥
उवाच विधिवत्प्राज्ञो विश्वकर्मा महामतिः। 30
वास्तूनां गुणदोषौ च प्रवक्ष्याम्यनुपूर्वशः ॥ ८४२ ॥

समं स्याच्चतुरस्रं च विस्तीर्णा चैव मृत्तिका ।
क्षीरिवृक्षाकुलं धन्यं ब्राह्मणस्य प्रशस्यते ॥ ८४३ ॥
पूर्वायतनतया वास्तु रथचक्राकृति च यत् ।
रक्तपांशुर्भवेद्यत्र राज्ञां तत्तु प्रशस्यते ॥ ८४४ ॥
5 त्रिकोणं कुशसंस्तीर्णमुत्तानं मधुरं च यत् ।
व्यायमतो जलं चैव वास्तु तस्य धनौषधी ॥ ८४५ ॥
अङ्गाराकारसंस्थानं गोमुखं शकटाकृति ।
अनावास्यं च तत् प्रोक्तं यच्च पुत्रक्षयावहम् ॥ ८४६ ॥
M 181 यत्तु कङ्करकक्षैस्तत् त्यक्तं वर्षोदकेन च ।
10 अपसव्योदकं चैव दूरतः परिवर्जयेत् ॥ ८४७ ॥
विप्रस्य चतुरस्रं तु क्षात्रियं परिमण्डलम् ।
दशद्वादशकं वैश्ये शूद्रस्य तत्र लेखनम् ॥ ८४८ ॥
वास्तुपूर्वोत्तरे देशे गोकुलं तत्र कारयेत् ।
तथैव चाग्निशालां तु पूर्वदक्षिणतो दिशि ॥ ८४९ ॥
15 वर्षवृष्यायुधागारान् दक्षिणेन निवेशयेत् ।
पश्चिमोत्तरतश्चात्र वणिग्भाण्डं निवेशयेत् ॥ ८५० ॥
उत्तरायां तु कर्तव्यं वर्चःस्थानमनुत्तरम् ।
ऐशान्यामेव सर्वाणि प्रासादश्च पुरोमुखः ॥ ८५१ ॥
अविधिपरिवर्तेन तत्र वैरं वधो भवेत् ।
20 रचितसर्वद्वाराणामायामो द्विगुणो मतः ॥ ८५२ ॥
कुर्यात्सुरभवनानां यथेष्टं द्वारकाण्यपि ।
तद्द्वारबाहुपर्यन्ते स्त्रियो दृष्टा दोषावहाः ॥ ८५३ ॥
विद्विषस्य सलोकस्य द्वारे स्यान्नु करग्रहः ।
महेन्द्रे पुरे वा राज्यं सूर्ये सूरप्रभावता ॥ ८५४ ॥
25 सत्ये मृदुर्मृगे शूरोऽन्तरीक्षे धनक्षयः ।
वायव्ये तु बहुव्याधिर्भगे भाग्यविपर्ययः ॥ ८५५ ॥
पुष्पे तु सुभगो नित्यं वितथेऽप्यशुभो भवेत् ।
शोके भूतविकारः स्यात् शोषे तस्य विषण्णता ॥ ८५६ ॥
M 182 भल्लातके गृहे वासो राजयक्ष्मे समावृतिः ।
ह्रदे रेणुपरिश्राव आदित्ये तु कलिर्ध्रुवम् ॥ ८५७ ॥
30 नागराजे नागभयं महश्चेद् दीर्घमायुषम् ।
भवेदस्य च यद् द्वारं तत्राग्निभयमादिशेत् ॥ ८५८ ॥

क्षयं विद्यात्तस्य तस्य धनस्य च कुलस्य च।
यमे मृत्युं विजानीयात्कुले श्रेष्ठोत्तमस्य च।
भृङ्गिराजे तु मतिमान् गन्धर्वे गन्धमाल्यता ॥ ८५९ ॥
भृङ्गे क्रोधः कलिश्चैव पितरि भोगसंपदः।
दौवारिके स्वल्पधनं सुग्रीवे राजपूजितः ॥ ८६० ॥ 5
पुष्पदन्ते धनावाप्तिर्वरुणे जलचित्रता।
असुरे मरणं घोरं रोगे तु बहुदोषता ॥ ८६१ ॥
बलींश्च उपहारांश्च प्रवक्ष्यामि यथागृहम्।
विचित्रैर्विविदिशैर्गन्धैः परिपूज्य बलिं हरेत् ॥ ८६२ ॥
कलत्रे हेतुबीजानि मध्यमेऽर्जितमेव तु। 10
महेन्द्रे मुक्तपुष्पाणि पावके च पयो दधि ॥ ८६३ ॥
आदित्ये परिदेयं तु भक्तं चैव प्रियङ्गवः।
अन्तरीक्षे जलं दिव्यं पुष्पाणि जलजानि च ॥ ८६४ ॥
नन्दा प्रतिपदा ज्ञेया षष्ठी त्रयोदशी जया।
तासु तासु ध्रुवं कुर्यात्प्राज्ञो ह्येवं विचक्षणः ॥ ८६५ ॥ 15

अयं भोः पुष्करसारिन् द्वारलक्षणं नामाध्यायः ॥

अथ खलु भोः पुष्करसारिन् द्वादशराशिकं नामाध्यायं व्याख्यास्यामि। तच्छ्रूयताम्। अथ किम्। कथयतु भगवान् त्रिशङ्कुः— M 183

## द्वादशराशिकः।

अतः परं प्रवक्ष्यामि चित्तविज्ञानकाण्डकम्। 20
यथादृष्टान्तेनैवेनं नराणां समुदाहृतम् ॥ ८६६ ॥
तदहं संप्रवक्ष्यामि चित्तविज्ञानमुत्तमम्।
द्वादशैव तु चित्तास्ते ये लोके प्रचरन्ति वै ॥ ८६७ ॥
तानहं संप्रवक्ष्यामि शृणु तत्त्वेन मे ततः।
द्वादशैव तु कुर्याच्च मण्डलानि विचक्षणः ॥ ८६८ ॥ 25
प्रथमं मेषो नाम स्याद् द्वितीयं तु वृषः स्मृतः।
तृतीयं मिथुनं नाम चतुर्थं चापि कर्कटः ॥ ८६९ ॥
पञ्चमं चापि सिंहस्तु षष्ठं कन्या इति स्मृतम्।
तुला तु सप्तमं ज्ञेया वृश्चिकस्तु तथाष्टमम् ॥ ८७० ॥
धन्वी तु नवमं ज्ञेया दशमं मकरः स्मृतः। 30
कुम्भश्चैकादशं ज्ञेयो द्वादशं मीन उच्यते ॥ ८७१ ॥

होरा शरीरं जातस्य द्वितीये चिन्तितं धनम्।
तृतीये भ्रातरश्चैव चतुर्थे स्वजनस्तथा ॥ ८७२ ॥
चिन्त्यते पञ्चमे पुत्रः षष्ठे मण्डले शत्रुता।
सप्तमे दारसंयोगो ह्यष्टमे नैधनं स्मृतम् ॥ ८७३ ॥
5 नवमे चिन्त्यते धर्मो दशमे कर्मजं फलम्।
एकादशे चार्थलाभो द्वादशे व्यर्थसंभवः ॥ ८७४ ॥
एते द्वादश चित्तास्तु यथा दृष्टा महर्षिभिः।
सर्वभूतात्मभूताश्च यथाज्ञेयास्त देहिनाम् ॥ ८७५ ॥
M 184 आगत्य पृच्छते कश्चित् प्रथमं मण्डलं स्पृशेत्।
10 शिरस्तु स्पृशते यश्च शब्दश्च उपलक्ष्यते ॥ ८७६ ॥
व्याधितं चैव ह्यात्मानमाग्नेयाश्च विनष्टयः।
यदि ब्रूयात्तदा तस्य आत्मार्थं चिन्तितं भवेत् ॥ ८७७ ॥
काञ्चनं रजतं ताम्रं लोहं चैव भृशं भवेत्।
स च सर्वगतश्चैव अग्निरश्नाति निश्चितम् ॥ ८७८ ॥
15 एतादृशं दृष्ट्वोत्पातमाग्नेयं तस्य निर्दिशेत्।
यादृशश्च भवेच्छब्दस्तादृशं तेन चिन्तितम् ॥ ८७९ ॥
पुरुषः कश्चिदागत्य द्वितीयं मण्डलं स्पृशेत्।
ग्रीवां वा परिमार्जयेद् गलं च चिबुकं पुनः ॥ ८८० ॥
यदि शब्दश्च श्रूयेत दृष्टा गावस्तथैव च।
20 ईदृशं च दृष्ट्वोत्पातं गोशब्दं तत्र निर्दिशेत्।
अथ वा यादृशः शब्दस्तादृशं तेन चिन्तितम् ॥ ८८१ ॥
पुरुषः कश्चिदागत्य तृतीयं मण्डलं स्पृशेत्।
मार्जयेन्मुखदेशं तु स्त्रीचित्तं तस्य निर्दिशेत् ॥ ८८२ ॥
अथ शब्दो भवेत्तत्र श्रूयन्तां तादृशास्तु ते।
25 जातं प्रजातमुपजातं तथा जातो भविष्यति ॥ ८८३ ॥
एतादृशं दृष्ट्वोत्पातं गर्भं तस्य विनिर्दिशेत्।
अथ वा यादृशः शब्दस्तादृशं तेन चिन्तितम् ॥ ८८४ ॥
पुरुषः कश्चिदागत्य चतुर्थं मण्डलं स्पृशेत्।
कच्छपं स्पृशते यस्तु कलहं तत्र निर्दिशेत्।
स्वजनव्यवहारस्तु सति कलह न संशयः ॥ ८८५ ॥
30
M 185 आकट्टा कट्टेति शब्दा भवन्ति च निरन्तरम्।
एतादृशं दृष्ट्वोत्पातं कलहं तत्र निर्दिशेत् ॥ ८८६ ॥

पुरुषः कश्चिदागत्य पञ्चमं मण्डलं स्पृशेत् ।
हृदयं स्पृशते यस्तु अपत्यं तत्र चिन्तितम् ॥ ८८७ ॥
प्रवासकश्च विज्ञेयः परग्रामगतो मृतः ।
शस्त्रद्रव्यं च यत्तस्य ब्राह्मणानां कुले स्थितम् ॥ ८८८ ॥
अथ शब्दो भवेत्तत्र यं दृष्ट्वा तु महर्षिभिः । 5
पुत्रपुत्रेति यच्छब्दो यद्गतं गतमेत्र च ।
एतादृशं दृष्ट्वोत्पातं मरणं तत्र निर्दिशेत् ॥ ८८९ ॥
पुरुषः कश्चिदागत्य षष्ठं तु मण्डलं स्पृशेत् ।
स्पृशते चापि पार्श्वानि गात्रचिन्ता तु चिन्तिता ॥ ८९० ॥
विग्रहस्तु महाघोरः शत्रुश्चापि प्रवध्यते । 10
अथ वा तत्र ये शब्दाः श्रोतव्यास्ते न संशयः ॥ ८९१ ॥
अयं तु प्रक्षरश्चैव हतश्च विहतस्तथा ।
एतादृशं दृष्ट्वोत्पातमरिविग्रहमादिशेत् ।
अथ वा यादृशः शब्दस्तादृशं तेन चिन्तितम् ॥ ८९२ ॥
पुरुषः कश्चिदागत्य सप्तमं मण्डलं स्पृशेत् । 15
हस्तेन मर्दयेद् हस्तं तथा नाडीं च मर्दयेत् ॥ ८९३ ॥
निवेशचिन्ता विज्ञेया अन्यग्रामगता भवेत् ।
तत्रेमे भवन्ति शब्दाः श्रोतव्या भूमिमिच्छता ॥ ८९४ ॥
स्थितं निविष्टं वर्तं च कृतं हस्तगतं तथा ।
एतादृशं दृष्ट्वोत्पातं निवेशं तस्य निर्दिशेत् । 20
यादृशो वा श्रुतः शब्दस्तादृशं तेन चिन्तितम् ॥ ८९५ ॥
पुरुषः कश्चिदागत्य अष्टमं मण्डलं स्पृशेत् । M 186
उदरं चैव फिचकं द्वे इमे परिमार्जयेत् ॥ ८९६ ॥
निधनं दृश्यते तस्य मरणं चापि दृश्यते ।
यदि भवेद् भवेन्मृत्युर्यश्चान्यप्रियसंगमः ॥ ८९७ ॥ 25
तत्रेमे शब्दाः श्रोतव्या मृत एव भविष्यति ।
एतादृशं दृष्ट्वोत्पातं व्यापत्तिं तस्य निर्दिशेत् ॥ ८९८ ॥
पुरुषः कश्चिदागत्य नवमं मण्डलं स्पृशेत् ।
ऊरुं च स्पृशते भूयो धर्मचिन्ता च चिन्तिता ॥ ८९९ ॥
तत्र शब्दाश्च श्रोतव्या भवन्ति हि न संशयः । 30
यजन् हि याजकश्चैव यजमानस्तथैव च ।
शब्दानेवंविधान् श्रुत्वा यज्ञचिन्तां तु निर्दिशेत् ॥ ९०० ॥

पुरुषः कश्चिदागत्य दशमं मण्डलं स्पृशेत्।
कर्मचिन्ता विचिन्त्येति गृहकर्म न संशयः॥ ९०१॥

स्पृशते जानुनी चैव कर्मचिन्तां तु निर्दिशेत्।
तत्र शब्दा भवन्तीमे श्रोतव्याश्च न संशयः॥ ९०२॥

5 भूमिकर्म च क्षेत्रं च क्षेत्रकर्म तथैव च।
एतादृशं दृष्ट्वोत्पातं कर्मचिन्तां विनिर्दिशेत्॥ ९०३॥

पुरुषः कश्चिदागत्य एकादशं तु संस्पृशेत्।
जङ्घे तु स्पृशते भूयो ह्यर्थलाभं विनिर्दिशेत्॥ ९०४॥

तत्रेमे शब्दाः श्रोतव्या भवन्तीह न संशयः।
10 पणसुवर्णचेलानि धान्यं समणिकुण्डलम्॥ ९०५॥

एतादृशं रवं श्रुत्वा हिरण्यं तस्य निर्दिशेत्।
अथ वा यादृशः शब्दस्तादृशं फलमादिशेत्॥ ९०६॥

M 187 पुरुषः कश्चिदागत्य द्वादशं मण्डलं स्पृशेत्।
पादौ च स्पृशते पृच्छन् चित्तं चाप्यनर्थिकम्॥ ९०७॥

15 यस्तु तच्चिन्तितो ह्यर्थ आशा आगन्तुका च या।
अथ वा शब्दाः श्रोतव्या निमित्तज्ञानपारगैः॥ ९०८॥

निराशश्चैव घोषश्च निराशं तस्य निर्दिशेत्।
अथ वा यादृशः शब्दस्तादृशं तेन चिन्तितम्॥ ९०९॥

अय भोः पुष्करसारिन् द्वादशराशिको नामाध्यायः॥

20 अथ खलु भोः पुष्करसारिन् कन्यालक्षणं नामाध्यायं व्याख्यास्यामि। तच्छ्रूयताम्। अथ किम्। कथयतु भगवांस्त्रिशङ्कुः—

## कन्यालक्षणम्।

तत्त्वं विज्ञायते येन येन शुभमुपस्थितम्।
निन्दितं च प्रशस्तं च स्त्रीणां वक्ष्यामि लक्षणम्॥ ९१०॥

25 पितरं मातरं चैव मातुलं भ्रातरं तथा।
विम्बाद्विम्बं परीक्ष्येत त्रिशङ्कुवचनं यथा॥ ९११॥

मुहूर्ते तिथिसंपन्ने नक्षत्रे चापि पूजिते।
तद्विज्ञैः सह संगम्य कन्यां पश्येत शास्त्रवित्॥ ९१२॥

हस्तौ पादौ निरीक्षत नखानि ह्यङ्गुलीस्तथा।
30 पाणिलेखाश्च जङ्घे च कटि नाभ्यूरुमेव च॥ ९१३॥

ओष्ठौ जिह्वां च दन्तांश्च कपोलौ नासिकां तथा।
अक्षिभ्रुवौ ललाटं च कर्णौ केशांस्तथैव च॥ ९१४॥
रोमराजीं स्वरं वर्णं मन्त्रितं गीतमेव च। M 188
मतिं सत्त्वं समीक्षेत कन्यानां शास्त्रकोविदः।
तत्र पूर्वं परीक्षेत स्वयमेव विचक्षणः॥ ९१५॥ 5
हंसस्वरा मेघवर्णा नारी मधुरलोचना।
अष्टौ पुत्रान् प्रसूयेत दासीदासैः समावृता॥ ९१६॥
व्यावर्ताश्चत्वारो यस्याः सर्वे चैव प्रदक्षिणाः।
समगात्रविभक्ताङ्गी पुत्रानष्टौ प्रसूयते॥ ९१७॥
मण्डूककुक्षिर्या नारी सैश्वर्यमधिगच्छति। 10
धन्यान् सा जनयेत्पुत्रांस्तेषां प्रीतिं च भुञ्जते॥ ९१८॥
यस्याः पाणितले व्यक्तः कच्छपः स्वस्तिको ध्वजः।
अङ्कुशं कुण्डलं माला दृश्यन्ते सुप्रतिष्ठिताः।
एकं सा जनयेत्पुत्रं तं च राजानमादिशेत्॥ ९१९॥
यस्याः पाणौ प्रदृश्येत कोष्ठागारं सतोरणम्। 15
अपि दासकुले जाता राजपत्नी भविष्यति॥ ९२०॥
द्वात्रिंशद्दशना यस्याः सर्वे गोक्षीरपाण्डराः।
समशिखरिस्निग्धाभा राजानं सा प्रसूयते॥ ९२१॥
स्निग्धा कारण्डवप्रेक्षा हरिणाक्षी तनुत्वचा।
रक्तोष्ठजिह्वा सुमुखी राजानमुपतिष्ठति॥ ९२२॥ 20
सूक्ष्मा च तुङ्गनासा च सुकुमारक्तिमोदरी।
सुभ्रूः सुवरकेशान्ता सा तु कन्या बहुप्रजा॥ ९२३॥
अङ्गुल्यः संहिताः कान्ता नखाः कमलसंनिभाः।
सुऋजुरक्तचरणा सा कन्या सुखमेधते॥ ९२४॥
यस्यावर्तौ समौ स्निग्धौ उभौ पार्श्वौ सुसंस्थितौ। 25
.................राजपत्नी तु सा भवेत्॥ ९२५॥
प्रदक्षिणं प्रक्रमेत प्रेक्षते च प्रदक्षिणम्। M 189
प्रदक्षिणसमाचारां कन्यां भार्यार्थमावहेत्॥ ९२६॥
ऊरू जङ्घे च पार्श्वे च तथा विक्रमः संस्थितः।
रक्तान्ते विपुले नेत्रे सा कन्या सुखमेधते॥ ९२७॥ 30
मृगाक्षी मृगजङ्घा च मृगग्रीवा मृगोदरी।
युक्तनामा तु या नारी राजानमुपतिष्ठते॥ ९२८॥

यस्याप्रललिताः केशा मुखं च परिमण्डलम्।
नाभिः प्रदक्षिणावर्ता सा कन्या कुलवर्धिनी ॥ ९२९ ॥
नातिदीर्घा नातिह्रस्वा सुप्रतिष्ठतनुत्वचा।
सुखसंस्पर्शकेशाग्रा सौभाग्यं नातिवर्तते ॥ ९३० ॥
5 कान्तजिह्वा तु या नारी रक्तोष्ठी प्रियभाषिणी।
तादृशीं वरयेत्प्राज्ञो गृहार्थं सुखमेधिनीम् ॥ ९३१ ॥
नीलोत्पलसुवर्णाभा दीर्घाङ्गुलितला तु या।
सहस्राणां बहूनां तु स्वामिनी सा भविष्यति ॥ ९३२ ॥
धनधान्यैः समायुक्तामायुषा यशसा श्रिया।
10 कन्यां लक्षणसंपन्नां प्राप्य वर्धति मानवः ॥ ९३३ ॥
कीर्तितास्तु मया धन्या मङ्गल्यलक्षणाः स्त्रियः।
अप्रशस्तं प्रवक्ष्यामि यथोद्देशेन लक्षणम् ॥ ९३४ ॥
ऊर्ध्वप्रेक्षी अधःप्रेक्षी या च तिर्यक् च प्रेक्षिणी।
उद्भ्रान्ता विपुलाक्षी च वर्जनीया विचक्षणैः ॥ ९३५ ॥
15 भिन्नाग्रशतिका रूक्षाः केशा यस्याः प्रलम्बिकाः।
चित्रावली चित्रगात्रा भवति कामचारिणी ॥ ९३६ ॥
कामुका पिङ्गला चैव गौरी चैवातिकालिका।
अतिदीर्घा अतिह्रस्वा वर्जनीया विचक्षणैः ॥ ९३७ ॥
M 190 यस्यास्त्रीणि प्रलम्बन्ति ललाटमुदरं स्फिचौ।
20 त्रींश्च सा पुरुषान् हन्ति देवरं श्वशुरं पतिम् ॥ ९३८ ॥
पार्श्वतो रोमराजी तु विनता च कटिर्भवेत्।
दीर्घमायुरवाप्नोति दीर्घकालं च दुःखिता ॥ ९३९ ॥
काकजङ्घा च या नारी रक्ताक्षी घर्घरस्वरा।
निःसुखा च निराशा च वर्जिता नष्टबान्धवा ॥ ९४० ॥
25 अतिस्थूलोदरं यस्याः प्रलम्बो निम्नसंनिभः।
अत्यन्तमवशा नारी बहुपुत्रा सुदुःखिता ॥ ९४१ ॥
या तु सर्वसमाचारा मृद्वङ्गी समतां गता।
सर्वैः समैर्गुणैर्युक्ता विज्ञेया कामचारिणी ॥ ९४२ ॥
यस्या रोमचिते जङ्घे मुखं च परिमण्डलम्।
30 पुत्रं वा भ्रातरं वापि जारमिच्छति तादृशी ॥ ९४३ ॥
यस्या बाहुप्रकोष्ठौ द्वौ रोमराजीसमावृतौ।
उत्तरोष्ठे च रोमाणि सा तु भक्षयते पतिम् ॥ ९४४ ॥

यस्या हस्तौ च पादौ च छिद्रौ दन्तान्तराणि च ।
पतिनोपार्जितं द्रव्यं न तस्या रमते गृहे ॥ ९४५ ॥

यस्यास्तु व्रजमानायाः स्फुटन्ते पर्वसंधयः ।
सा ज्ञेया दुःखबहुला सुखं नैवाधिगच्छति ॥ ९४६ ॥

यस्याः कनिष्ठिका पादे भूमिं न स्पृशतेऽङ्गुलिः । 5
कौमारं सा पतिं त्यक्त्वा आत्मनः कुरुते प्रियम् ॥ ९४७ ॥

अनामाङ्गुलिः पादस्य महीं न स्पृशतेऽङ्गुलिः ।
न सा रमति कौमारं बन्धकीत्वेन जीवति ॥ ९४८ ॥

यस्याः प्रदेशिनी पादेऽङ्गुष्ठं समतिक्रमेत् ।
कुमारी कुरुते जारं यौवनस्था विशेषतः ॥ ९४९ ॥ 10

आवर्तः पृष्ठतो यस्या नाभी सा चानुबन्धति । M 191
न सा रमति कौमारं द्वितीयं लभते पतिम् ॥ ९५० ॥

विकृता स्थिरजाला च रूक्षगण्डशिरोरुहा ।
अपि राजकुले जाता दासीत्वमधिगच्छति ॥ ९५१ ॥

यस्यास्तु हसमानाया गण्डे जायति कूपकम् । 15
अग्निकार्येऽपि सा गत्वा क्षिप्रं दोषं करिष्यति ॥ ९५२ ॥

समासमगता सुभ्रूर्गण्डावर्ता च या भवेत् ।
प्रलम्बोष्ठी तु या नारी नैकत्र रमते चिरम् ॥ ९५३ ॥

लम्बोदरी स्थूलशिरा रक्ताक्षी पिङ्गलानना ।
अष्टौ भक्षयते वीरान्नवमे तिष्ठते चिरम् ॥ ९५४ ॥ 20

न देविका न नदिका न च दैवतनामिका ।
वृक्षगुल्मसनामा च वर्जनीया विचक्षणैः ॥ ९५५ ॥

नक्षत्रनामा या नारी या च गोत्रसनामिका ।
सुगुप्ता रक्षिता वापि मनसा पापमाचरेत् ॥ ९५६ ॥

दारान् विवर्जयेदेतान् या मया परिकीर्तिताः । 25
प्रशस्ता यास्तु पूर्वोक्तास्तादृशीयान्नरः (?) सदा ॥ ९५७ ॥

पद्माङ्कुशस्वस्तिकवर्धमानै-
श्चक्रध्वजाभ्यां कलशेन पाणौ ।
शङ्खातपत्रोत्तमलक्षणैश्च
संपत्तये साधु भवन्ति कन्याः ॥ ९५८ ॥ 30

अयं भोः पुष्करसारिन् कन्यालक्षणं नामाध्यायः ॥

अथ खलु भोः पुष्करसारिन् वस्त्राध्यायं व्याख्यास्यामि । तच्छ्रूयताम् । अथ किम् । कथयतु भगवान् त्रिशङ्कुः–

## वस्त्राध्यायः ।

M 192

कृत्तिकासु दहत्यग्निरर्थलाभाय रोहिणी ।
5 मृगशिरा मूषीदंशा आर्द्रा प्राणविनाशिनी ॥ ९५९ ॥
पुनर्वसुश्च धन्या स्यात्पुष्ये वै वस्त्रवान् भवेत् ।
आश्लेषासु भवेन्मोषः श्मशानं मघया व्रजेत् ॥ ९६० ॥
फाल्गुनीषु भवेद् विद्या उत्तरासु च वस्त्रवान् ।
हस्तासु हस्तकर्माणि चित्रायां गमनं ध्रुवम् ॥ ९६१ ॥
10 स्वात्यां च शोभनं वस्त्रं विशाखा प्रियदर्शनम् ।
बहुवस्त्रा चानुराधा ज्येष्ठा वस्त्रविनाशिनी ॥ ९६२ ॥
मूलेन क्लेदयेद्वास आषाढा रोगसंभवा ।
उत्तरा मृष्टभोजी स्याच्छ्रवणे चक्षुषो रुजम् ॥ ९६३ ॥
धनिष्ठा धान्यबहुला विद्याच्छतभिषे भयम् ।
15 पूर्वभाद्रपदे तोयं पुत्रलाभाय चोत्तरा ॥ ९६४ ॥
रेवती धनलाभाय अश्विनी वस्त्रलाभदा ।
भरणी च भयाकीर्णा चौरगम्या च सा भवेत् ॥ ९६५ ॥

अयं भोः पुष्करसारिन् वस्त्राध्यायः ॥

अथ खलु भोः पुष्करसारिन् लुङ्गाध्यायं प्रवक्ष्यामि । तच्छ्रूयताम् । अथ किम् । 20 कथयतु भगवान् त्रिशङ्कुः–

## लुङ्गाध्यायः ।

M 193

कुत्रोत्पन्ना इमे बीजाः (?) शस्यानां च यवादयः ।
यैरिदं ध्रियते विश्वं कृत्स्नं स्थावरजङ्गमम् ॥ ९६६ ॥
वापयेत् तु कथं बीजं लाङ्गलं योजयेत्कथम् ।
25 केषु नक्षत्रयोगेषु तिथियोगेषु केषु च ॥ ९६७ ॥
शारदं वाथ ग्रैष्मं तु कस्मिन् मासे तु वापयेत् ।
निमित्तं कति शस्यन्ते कानि वा परिवर्जयेत् ।
कस्य वा दापयेद् धूपं केन मन्त्रेण दापयेत् ॥ ९६८ ॥
प्रदक्षिणसमावृत्ता यदि लुङ्गा प्रजायते ।
तदा नागमुखी लुङ्गा दहति चित्रमुख्यपि ॥ ९६९ ॥
30

दर्भसूचीमुखी वापि कारणं तत्र को भवेत्।
कति सौभिक्षिका लुङ्गाः कति दौर्भिक्षिकाः स्मृताः।
कतिवर्णाः समाख्याताः कतिवर्णा निदर्शिताः॥ ९७०॥

नष्टापनष्टबीजस्य वर्षति यदि वासवः।
निर्घातो वा भवेत्तीव्रोऽथवापि मेदिनी चलेत्॥ ९७१॥ 5
शस्यं फलस्य किं तत्र निमित्तमुपलक्षयेत्।
सर्वमेतत्समासेन श्रोतुमिच्छामि तत्त्वतः॥ ९७२॥

पुष्करसारिणो ब्राह्मणस्य वचनं श्रुत्वा त्रिशङ्कुर्मातङ्गाधिपतिरिदं वचनमब्रवीत्—

पुरा देवासुरैर्नागैर्यक्षराक्षसकिन्नरैः।
सागरादमृतं दृष्टं मन्थिते तु समुद्भवम्॥ ९७३॥ 10
अमृते भक्ष्यमाणे तु भागं प्रार्थितवान् द्विजः। M 194
ततो दत्ताः सुरैर्भागा अमृताद्दशबिन्दवः॥ ९७४॥
तत उत्पन्ना इमे बीजा भुवि लोकसुखावहाः।
यवव्रीहितिलाश्चैव गोधूमा मुद्गमाषकाः॥ ९७५॥
श्यामकं सप्तमं विद्यादिक्षुश्चाष्टमकः स्मृतः। 15
शेषास्तु संगता जाता बहवः शस्यजातयः॥ ९७६॥
हरितकेषु सर्वेषु ये चान्ये सत्त्वजातयः।
परितो नवमो बिन्दुः सर्वदेहेऽमृतोऽभवत्।
मूलेषु चैव सर्वेषु बिन्दुरेकः प्रपातितः॥ ९७७॥
आषाढे शुक्लपक्षेऽस्य व्रीहिधान्यानि वापयेत्। 20
शारदादीनि सर्वाणि मासे भाद्रपदे तथा॥ ९७८॥
कार्तिके मार्गशीर्षे वा ग्रीष्मधान्यानि वापयेत्।
पञ्चम्यां शुक्लसप्तम्यां षष्ठ्यामेकादशीषु च॥ ९७९॥
त्रयोदश्यां द्वितीयायां तथा हि नवमीषु च।
विशेषतस्तु निम्नेषु सर्वबीजानि ह्युत्सृजेत्॥ ९८०॥ 25
भरणीपुष्यमूलेषु हस्ताश्विनीमघासु च।
कृत्तिकासु विशाखासु विशेषेण तु शारदम्॥ ९८१॥
सौम्ये मैत्रेऽनुराधे च धनिष्ठाश्रवणासु च।
उत्सर्गः सर्वबीजानामुत्तरेषु प्रशस्यते।
वर्जयेज्जन्मनक्षत्रं संग्रहं च विवर्जयेत्॥ ९८२॥ 30
ग्रामक्षेत्रे च यद् बीजं गृहे च गृहदेवता।
निमित्तमुपलक्षेत मङ्गलानि शुभानि च॥ ९८३॥

M 195 ब्राह्मणं क्षत्रियं कन्यामर्चिष्मन्तं च पावकम्।
वारणेन्द्रं वृषं चैव हयं वा स्वभ्यलंकृतम्॥ ९८४॥
पूर्णकुम्भं ध्वजं छत्रमाममांसं सुरां तथा।
उद्धृतां धारणीं चैव बद्धमेकपशुं दधि॥ ९८५॥
5 चक्रारूढं च शकटं काकारूढां च सूकरीम्।
परस्यारोपणं दृष्ट्वा सस्यसंपत्तिमादिशेत्॥ ९८६॥
सर्वे दक्षिणतो धन्याः पुरश्च मृगपक्षिणः।
दर्शनं शुक्लपुष्पाणां फलानां चैव शस्यते॥ ९८७॥
अजो वा वामतः शस्यो जम्बुकश्च प्रशस्यते।
10 विकृतं कुब्जकुष्ठिं च मुखं श्मश्रुधरं तथा॥ ९८८॥
नरं निर्भर्त्सितं दीनं शोकार्तं व्याधिपीडितम्।
वराहवृन्दं सर्पं च गर्दभं भारहीनकम्।
दृष्ट्वा निवर्तयेद् बीजं पुनर्ग्रामं प्रवेशयेत्॥ ९८९॥
तिलस्य बहुपूर्णस्य भाण्डे स्याद्वपनं तथा।
15 श्रुत्वा ह्येतानि व्रजतां सस्यसंपत्तिमादिशेत्॥ ९९०॥
राशिस्थं ग्रथितं धौतं स्वस्थमङ्कुरितं तथा।
श्रुत्वा संमार्जितं चैव इत्याशुकृतिनं विदुः॥ ९९१॥
श्रुत्वा म्लानं च शुष्कं च मन्दवृष्टिं च निर्दिशेत्।
श्रुत्वा निवर्तयेद् बीजं पुनर्ग्रामं प्रवेशयेत्॥ ९९२॥
20 नीयमानं च यद् बीजं वर्षते यदि वासवः।
स्वयमेव तु तच्छस्यं कामं कालेन भुज्यते॥ ९९३॥
नीयमानं च यद् बीजं कम्पते यदि मेदिनी।
भ्रम्यते कर्षकः स्थानान्न तच्छक्यं तु वापितुम्॥ ९९४॥
M 196 नीयमानस्य बीजस्य निर्घातो दारुणो भवेत्।
25 स्वामिनो मरणं क्षिप्रं शस्यपालस्य निर्दिशेत्॥ ९९५॥
अथ वा व्याकुलं कुर्याद्राजदण्डं निकृन्तति।
दृष्ट्वा निवर्तयेद् बीजं पुनर्ग्रामं निवेशयेत्॥ ९९६॥
ब्राह्मणेभ्यो यथाशक्ति दत्वा तु संप्रयोजयेत्।
कृत्वा सुविपुलां वेदीं दर्भानास्तीर्य सर्वतः॥ ९९७॥
30 समिद्भिरग्निं प्रज्वाल्य जुहुयाद् घृतसर्षपम्।
वेदशान्तिं जपेत्पूर्वं शस्यशान्तिमतः परम्॥ ९९८॥

जपेत्पाराशरं पूर्वं प्रियतां वाचयेद् द्विजैः।
प्रथमं प्राङ्मुखं बीजं प्रक्षिपेदुत्तरेऽथ वा ॥ ९९९ ॥
पिपीलिका यदा क्षेत्रे बीजं कुर्वन्ति संचयम्।
सुवृष्टिं च सुभिक्षं च सर्वसस्येषु संपदा ॥ १००० ॥
हरन्ति चेत् तृणाद् बीजं तृणे शस्यापहा अपि।
परस्परं च हिंसन्ति धान्यं च निधनं व्रजेत् ॥ १००१ ॥ 5
स्थलेषु संचयं दृष्ट्वा महावृष्टिं विनिर्दिशेत्।
दृष्ट्वा तु संचयं निम्नेऽनावृष्टिं च निर्दिशेत् ॥ १००२ ॥
यदा तु प्रोषितं बीजं सप्तरात्रेण जायते।
सुवृष्टिं च सुभिक्षं च सर्वशस्येषु संपदा ॥ १००३ ॥
यदा तु प्रोषितं बीजमर्धमासेन जायते। 10
अल्पं निष्पद्यते शस्यं दुर्भिक्षं चात्र जायते ॥ १००४ ॥
त्रिरात्राच्चतूरात्राद्वा यदि लुङ्गः प्रजायते।
अतिवृष्टिर्भवेत्तत्र परचक्रभयं विदुः ॥ १००५ ॥
लुङ्गस्य तु ये पादाः पञ्च सप्त नव तथा।
सुवृष्टिं च सुभिक्षं च सर्वसस्येषु संपदा ॥ १००६ ॥ 15
स्याल्लुङ्गस्य तु ये पादाश्चत्वारोऽष्टपदाथ वा। M 197
अल्पं निष्पद्यते शस्यं दुर्भिक्षं चात्र निर्दिशेत् ॥ १००७ ॥
लुङ्गस्य यदि पादास्तु दृश्यन्ते द्वादश क्वचित्।
क्वचिन्निष्पद्यते शस्यं दुर्भिक्षं क्वचिदादिशेत्।
वामावर्ताः प्रदृश्यन्ते दुर्भिक्षं तत्र निर्दिशेत् ॥ १००८ ॥ 20
यदा पूर्वमुखी लुङ्गा क्षेमं वृष्टिं च निर्दिशेत्।
यदा पश्चान्मुखी लुङ्गा अतिवृष्टिं च निर्दिशेत् ॥ १००९ ॥
क्षेमं सुभिक्षं चैवात्र यदा लुङ्गोत्तरामुखी।
हरितालसुवर्णाभा भद्रशोचिरिवोत्थिता ॥ १०१० ॥
दर्भसूचीमुखी चापि दृश्यते यत्र कुत्रचित्। 25
क्वचिन्निष्पद्यते शस्यं दुर्भिक्षं तत्र निर्दिशेत् ॥ १०११ ॥
यदा नागमुखी लुङ्गा दृश्यते यत्र वा क्वचित्।
क्वचिन्निष्पद्यते शस्यं दुर्भिक्षं चात्र निर्दिशेत्।
तत्राशनिभयं चापि भयं मेघान्न संशयः ॥ १०१२ ॥ 30
कृषिमूलमिदं सर्वं त्रैलोक्यं सचराचरम्।
नास्ति कृषिसमावृत्तिः स्वयमुक्तं स्वयंभुवा ॥ १०१३ ॥

नाकृषेर्धर्ममाप्नोति नाकृषेः सुखमाप्नुयात् ।
धर्ममर्थं तथा कामं सर्वं प्राप्नोति कर्षकः ॥ १०१४ ॥

इति लुङ्गाध्यायः ॥

पुनरपि पुष्करसारी ब्राह्मणस्त्रिशङ्कुं मातङ्गाधिपतिमेतदवोचत्—

M 198 5 कथं पृथिव्यां नागाश्च केन वा विनिवारिताः ।
कुतो मूलसमुत्थानं निर्घातः कुत्र जायते ॥ १०१५ ॥
कुतश्चाभ्राणि जायन्ते नानावर्णा दिशो दश ।
कस्यैष महतः शब्दः श्रूयते दुन्दुभिस्वरः ॥ १०१६ ॥
को हि सृजति दुर्भिक्षं सुभिक्षं चैव प्राणिनाम् ।
10 कस्तत्र स मुनिश्रेष्ठो नाम गोत्रं ब्रवीहि मे ॥ १०१७ ॥
दैवतानि च मे ब्रूहि विधानानि स्वयंभुवः ।
यज्ञं च यज्ञभागं च होतव्यश्च यथा बलिः ॥ १०१८ ॥
पृथिव्यां दैवतं ब्रूहि आश्रमे दैवतं ब्रूहि ।
देवे तु दैवतं ब्रूहि केन देवी सा कल्पिता ॥ १०१९ ॥
15 पात्रस्य दैवतं ब्रूहि पूर्णकुम्भस्य दैवतम् ।
करके दैवतं ब्रूहि तथा स्थाल्यां च दैवतम् ॥ १०२० ॥
शस्यस्य दैवतं ब्रूहि शस्यपालस्य दैवतम् ।
वायुस्कन्धैश्च कतिभिः शुक्रो वेगं प्रमुञ्चति ॥ १०२१ ॥

अथ त्रिशङ्कुर्मातङ्गाधिपतिर्ब्राह्मणं पुष्करसारिणमेतदवोचत्—

20 पृथ्वी वा वायुराकाशमापो ज्योतिश्च पञ्चमम् ।
तत्र संवर्तते पिण्डं ततो मेघः प्रवर्तते ॥ १०२२ ॥
एष व्याप्नोति चाकाशं वायुना जन्यते घनः ।
आदित्यरश्मयो वारि समुद्रस्य नभस्तले ॥ १०२३ ॥
तज्जलं नागसंक्षिप्तं ततो वरुणसंक्षयः ।
25 वायुर्नभो गर्जयते अग्निर्विद्योतते दिशः ॥ १०२४ ॥
M 199 मरुता क्षिप्यते पिण्डं संनिपातश्च गर्जते ।
विरोधनं तु वायोश्च अग्नेश्च अनिलस्य च ॥ १०२५ ॥
आकाशे वर्तते पिण्डं पश्चात्पतति मेदिनीम् ।
यद् ग्रहाणामधिपतिर्नक्षत्रज्योतिषामपि ।
30 ततो मारुतसंसर्गात्पर्जन्यमपि वर्षति ॥ १०२६ ॥
वर्षते शैलशिखरे यत्र संप्रस्थितो जनः ।
यत्र सत्यं च धर्मश्च हविर्मेघश्च वर्तते ॥ १०२७ ॥

तत्र बीजानि रोहन्ति अन्नपानं समृध्यति ।
एवं पिण्डाशनिराधा ततो वाताशनी स्मृता ।
दन्ताशनी तृतीया तु अशनिस्तु चतुर्थिका ॥ १०२८ ॥
पञ्चमी क्रिमयः प्रोक्ताः षष्ठी तु शलभास्तथा ।
सप्तमी स्यादनावृष्टिरतिवृष्टिस्तस्तथाष्टमी ॥ १०२९ ॥ 5

नवमी संवरः प्रोक्ता इत्याह भगवांस्त्रिशङ्कुः ।
एतास्त्वशन्यो व्याख्यातास्तासां वै देवताः शृणु ।
पिण्डाशनी ब्रह्मसृष्टा एषा ज्येष्ठाद्यदेवता ॥ १०३० ॥
दन्ताशनी तु सैन्यानां ग्रहा वाताशनी स्मृता ।
अदेश.........................देवताः ॥ १०३१ ॥ 10
शलभाः केतुदैवत्या आदित्या दितिदेवताः ।
शंसकामतिवर्षस्य अनावृष्टेस्तु ज्योति[ षः ] ॥ १०३२ ॥

[ सम्व ] रस्य तु पर्जन्यमाख्याताः नव देवताः । अशन्या देवताः प्रोक्ता आकाशगमनार्थं बोधत ।

पूर्वमधीन्द्रदैवत्यं दक्षिणे यमदैवतम् । 15
वरुणं पश्चिमे विद्यादुत्तरे धनदः स्मृतः । M 200
...त्या दैवतं विष्णुराश्रमं विश्वदैवतम् ॥ १०३३ ॥
समिधादैवता देवास्तेभ्यो देवी प्रकल्पिता ।
समिधादैवता............तोग्निहुताशनम् ॥ १०३४ ॥
वेद्यां तु दैवतं............कारादित्यदैवतम् । 20
पात्रस्य देवता धर्मः पूर्णकुम्भे जनार्दनः ॥ १०३५ ॥
चरुं चेति......धूपस्थानस्य ज्योतिषः ।
शस्य......शस्यपालो महामतिः ।
वायुस्कन्धैश्चतुर्भिस्तु शुक्रो वेगं प्रमुञ्चति ॥ १०३६ ॥
अत्र मध्ये पृथिव्याप आश्रमो विश्वदैवतः । 25
तस्मिन् देशे......यस्मिन् प्रीतो वृषध्वजः ॥ १०३७ ॥

इत्याह भगवांस्त्रिशङ्कुः । पुनरपि पुष्करसारी ब्राह्मणस्त्रिशङ्कुमेवमाह—

किमर्थमाश्रमे नित्यं हूयते हव्यवाहनः ।
तृणकाष्ठानि संहृत्य मेघं दृष्ट्वा समुत्थितम् ॥ १०३८ ॥
अति......न्यते अग्निं सुदारुणम् । 30
सर्वलोकहितार्थाय ध्यात्वा दिव्येन चक्षुषा ।
प्रशमेच्च समासेन तद्भवार्थं तु......॥ १०३९ ॥

एवमुक्ते त्रिशङ्कुर्मातङ्गाधिपतिर्ब्राह्मणं पुष्करसारिणमेतदवोचत्—

M 201

### धूमिकाध्यायः ।

पुरा हि खाण्डवद्वीपमर्जुनेन महात्मना ।
.........ज्वलितं जातवेदसा ॥ १०४० ॥
5 .........प्रसन्नमानान्निधिगतम् ।
तत्र दग्धा अनेका हि नागाः कोटिसहस्रशः ॥ १०४१ ॥
पुरा महोरगगणा यक्षराक्षसपन्नगाः ।
पादहीनाः कृताः केचिद् बाहुहीनाः कृतापरे ॥ १०४२ ॥
वैकल्यं कर्णनासाभ्यां कृतं चैवाक्षिपातनम् ।
10 तदाप्रभृति भूतानां दृष्टं वै त्रासितं मनः ॥ १०४३ ॥
अग्निना तापिताः केचिद्बाणैरन्ये च सूदिताः ।
वाचाटकेनापि पुरा काद्रवेयाः प्रपातिताः ॥ १०४४ ॥
अर्चिषा हविर्गन्धेन मुह्यमाना नभोन्तरे ।
तद्विहीनाः पतन्त्यन्ये गुह्यका धरणीतले ॥ १०४५ ॥
15 सहांपतिस्तु नाम्ना स शस्यकाले तदाश्रमे ।
शस्यपालैस्तु सततं होतव्यो हव्यवाहनः ॥ १०४६ ॥
गृहमेधी ज्वालयेदग्निं निर्मलेऽपि नभोन्तरे ।
दिग्भागेषु च भूतानां तेषामर्थं दिने दिने ॥ १०४७ ॥
जाग्रतं सततं वह्निमाश्रमस्थोऽपि धारयेत् ।
20 मेघं दृष्ट्वा विशेषेण ज्वालितव्यो हुताशनः ॥ १०४८ ॥
सधूमं ज्वलितं दृष्ट्वा दीप्यमानं तु पावकम् ।
भयमापतते तेषां नागसैन्यं विमुह्यते ॥ १०४९ ॥
अग्निं परिचरतोऽस्य शस्यपालस्य चाश्रमे ।
अग्निना हूयमानेन सिध्यते सर्वकर्म च ॥ १०५० ॥

25 अयं भोः पुष्करसारिन् धूमिकाध्यायः ॥

अथ खलु भोः पुष्करसारिन् तिथिकर्मनिर्देशं नामाध्यायं व्याख्यास्यामि । तच्छ्रूयताम् । अथ किम् । कथयतु भगवांस्त्रिशङ्कुः—

M 202

### तिथिकर्मनिर्देशः ।

नन्दां प्रतिपदामाहुः प्रशस्तां सर्वकर्मसु ।
30 विज्ञानस्य समारम्भे प्रवासे च विगर्हिता ॥ १०५१ ॥
द्वितीया कथिता भद्रा शस्ता भूषणकर्मसु ।
जया तृतीया व्याख्याता प्रशस्ता जयकर्मसु ॥ १०५२ ॥

चतुर्थी कथिता रिक्ता ग्रामसैन्यवधे हिता ।
चौर्याभिचारकूटाग्निदाहगोरससाधने ॥ १०५३ ॥
पूर्णा तु पञ्चमी ज्ञेया चिकित्सागमनाध्वसु ।
दानाध्ययनशिल्पेषु व्यायामे च प्रशस्यते ॥ १०५४ ॥
जयति संज्ञिता षष्ठी गर्हिताध्वसु शस्यते । 5
गृहे क्षेत्रे विवाहे वा आवाहकर्मसु मित्रेति ॥ १०५५ ॥
भद्रा च सप्तमी ख्याता श्रेष्ठा सा सौकृतेऽध्वनि ।
नृपाणां शासने छत्रे शय्यानां करणेषु च ॥ १०५६ ॥
महाबलाष्टमी सा च प्रयोज्या परिरक्षणे ।
भयमन्दरबद्धेषु योगेषु हरणेषु च ॥ १०५७ ॥ 10
उग्रसेना तु नवमी तस्यां कुर्याद्रिपुक्षयम् ।
तथा विषघ्नावस्कन्दविद्याबन्धवधक्रियाः ॥ १०५८ ॥
सुधर्मा दशमी शस्ता शास्त्रारम्भे धनोद्यते ।
शान्तिस्वस्त्ययनारम्भे दानयज्ञोद्यतेषु च ॥ १०५९ ॥
एकादशी पुनर्मान्या स्त्रीषु च मांसमद्ययोः । 15
कारयेन्नगरं गुप्तं विवाहं शास्त्रकर्म च ॥ १०६० ॥
यशेति द्वादशीमाहुर्वैरेऽध्वनि च गर्हिता ।
विवाहे च गिरौ क्षेत्रे गृहकर्मसु पूजिता ॥ १०६१ ॥
जया त्रयोदशी साध्वी मण्डलेषु च योषिताम् । M 203
कन्यावरणवाणिज्यविवाहादिषु चेष्यते ॥ १०६२ ॥ 20
उग्रा चतुर्दशी तु स्यात्कारयेदभिचारिकम् ।
वधबन्धप्रयोगांश्च पूर्वं च प्रहरेदपि ॥ १०६३ ॥
सिद्धा पञ्चदशी साध्वी देवताग्निविधौ हिता ।
गोसंग्रहवृषोत्सर्गबलिजप्यव्रतेषु च ॥ १०६४ ॥
नन्दादीनां क्रिया पूर्वे षष्ठ्यादीनां तु मध्यमे । 25
सुनन्दायाश्च संध्याभिर्दिनरात्र्योः प्रसिध्यति ॥ १०६५ ॥

अयं भोः पुष्करसारिन् तिथिकर्मनिर्देशो नामाध्यायः ॥

अपि च महाब्राह्मण इदं पूर्वनिवासानुस्मृतिज्ञानसाक्षात्क्रियायां विद्यायां चित्तमभिनिर्णयामि निर्वर्तयामि, अनेकविधपूर्वनिवासं समनुस्मरामि ॥

स्यात्ते ब्राह्मण काङ्क्षा वा विमतिर्वा अन्यः स तेन कालेन तेन समयेन ब्रह्मा देवानां 30 प्रवरोऽभूत् । नह्येवं द्रष्टव्यम् । अहमेव स तेन कालेन तेन समयेन ब्रह्मा देवानां प्रवरोऽभूवम् । सोऽहं ततश्च्युतः समान इन्द्रः कौशिकोऽभूवम् । ततश्च्युतः समानोऽरणेमिर्गौतमो-

ऽभूवम्। ततश्च्युतः समानः श्वेतकेतुर्नाम महर्षिरभूवम्। ततश्च्युतः समानः शुकपण्डितो-ऽभूवम्। मया ते तदा ब्राह्मण चत्वारो वेदा विभक्ताः। तद्यथा पुष्यो बह्वृचानां पङ्क्ति-
M 204 श्छन्दोगानाम्। एकविंशतिचरणा अध्वर्यवः। क्रतुरथर्वणिकानाम्॥

स्यात्तव ब्राह्मण काङ्क्षा वा विमतिर्वा अन्यः स तेन कालेन तेन समयेन
5 वसुर्नाम महर्षिरभूत्। न ह्येवं द्रष्टव्यम्। अहमेव स तेन कालेन तेन समयेन वसुर्नाम महर्षिरभूवम्। मया सा तक्षकवधूकायाः कपिला नाम माणविका दुहिता आसादिता भार्यार्थाय। सोऽहं तत्र संरक्तचित्त ऋद्ध्या भ्रष्टो ध्यानेभ्यो वञ्चितः परिहीनः। सोऽह-मात्मानं जुगुप्समानस्तस्यां वेलायामिमां गाथां बभाषे--ॐ भूर्भुवः स्वः। तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि। धियो यो नः प्रचोदयात्॥

10 सोऽहं ब्राह्मण त्वां ब्रवीमि—सामान्यसंज्ञामात्रकमिदं लोकस्य ब्राह्मण इति वा क्षत्रिय इति वा वैश्य इति वा शूद्र इति वा। एकमेवेदं सर्वं सर्वमिदमेकम्। पुत्राय मे शार्दूल-कर्णाय प्रकृतिं दुहितरमनुप्रयच्छ भार्यार्थाय। यावतकं कुलशुल्कं मन्यसे तावतकमनुप्रदा-स्यामि। इदं च वचनं पुनः श्रुत्वा त्रिशङ्कोर्मातङ्गराजस्य ब्राह्मणः पुष्करसारी इदमवोचत्—

भगवान् श्रोत्रियः श्रेष्ठस्त्वत्तो भूयान्न विद्यते।
15 सदेवकेषु लोकेषु महाब्रह्मसमो भवान्॥ १०६६॥

M 205
पुत्राय ते भोः प्रकृतिं ददामि
शीलेन रूपेण गुणैरुपेतः।
शार्दूलकर्णः प्रकृतिस्तु भद्रा
उभौ रमेतां रुचितं ममेदम्॥ १०६७॥

20 तत्र तानि पञ्चमात्राणि माणवकशतानि उच्चैःशब्दानि प्रोचुर्महाशब्दानि—मा त्वं भो उपाध्याय विद्यमानेषु ब्राह्मणेषु चाण्डालेन सार्धं संबन्धं रोचय। नार्हसि भो उपाध्याय विद्यमानेषु ब्राह्मणेषु चाण्डालेन सार्धं संबन्धं कर्तुम्॥

अथ ब्राह्मणः पुष्करसारी तेषां निदानं निदाय शब्दं संस्थाप्य निपत्य श्लोकेनैता-नर्थानभाषत—

25 एवमेतद्यथा ह्येष त्रिशङ्कुर्भाषते गिरम्।
तत्त्वं ह्यवितथं भूतं सत्यं नित्यं तथा ध्रुवम्॥ १०६८॥

M 206
अथ ब्राह्मणः पुष्करसारी तेषां माणवकानां तं महान्तं शब्दं संस्थाप्य त्रिशङ्कुं मातङ्गराजमिदमवोचत्—अयं भोस्त्रिशङ्को ब्रह्मणा सहापतिना चातुर्महाभौतिको महापुरुषः प्रज्ञप्तः। यस्य

30 शिरः सतारं गगनमाकाशमुदरं तथा।
पर्वताश्चाप्युभावूरू पादौ च धरणीतलम्॥ १०६९॥

सूर्याचन्द्रमसौ नेत्रे रोम तृणवनस्पती।
सागराश्चाप्यमेध्यं वै नद्यो मूत्रस्रवोऽस्य तु॥ १०७०॥

अश्रूणि वर्षणं चास्य एष ब्रह्मा सहापतिः।
भवांस्तु परमज्ञोऽसि तन्मे ब्रूहि यथा तथा॥ १०७१॥

इह भोस्त्रिशङ्को किमाह स्वलक्षणं ब्रह्मणः प्रत्यवेक्षस्व। पित्रा च मात्रा च कृतानि 5
कर्माणि भवन्ति। अश्वस्तनास्तेन वञ्चिताः।

गच्छन्ति सत्त्वा बहुगर्भयोनिं
न चैव कश्चिन्मनुजो ह्ययोनिः।
समस्तजातौ प्रचरन्ति सत्त्वा
न मारुताज्जायते कश्चिदेव॥ १०७२॥ 10

स्वभावभाव्यं ह्यवगच्छ लोके
के ब्राह्मणक्षत्रियवैश्यशूद्राः।
सर्वत्र काणाः कुणिनश्च खञ्जाः
कुष्ठी किलासी ह्यपस्मारिणोऽपि॥ १०७३॥

कृष्णाश्च गौराश्च तथैव श्यामाः 15 M 207
सत्त्वाः प्रजा ह्यन्यतमे विशिष्टाः।
सहास्थिचर्माः सनखाः समांसा
दुःखी सुखी मूत्रपुरीषयुक्ताः।
न चेन्द्रियाणां प्रविविक्तिरस्ति
तस्मान्न वर्णाश्चतुरो भवन्ति॥ १०७४॥ 20

मन्त्रैर्हि यदि लभ्येत स्वर्गं तु गमनं द्विजः।
कृष्णशुक्लानि कर्माणि भवेयुर्निष्फलानि हि॥ १०७५॥

यस्मात्कृष्णानि शुक्लानि कर्माणि सफलानि हि।
पच्यमानानि दृश्यन्ते गतिष्वेतानि पञ्चसु॥ १०७६॥

माणवकशतेषु स तत्र विनिहतो महायशसा त्रिशङ्कुना पुष्करसारी ब्राह्मणोऽब्रवीत्— 25
ब्राह्मणोऽसौ मातङ्गराजो हि त्रिशङ्कुर्नाम। भवान् हि ब्रह्मा इन्द्रश्च कौशिकः। त्वमरणेमिश्च गौतमः। त्वं श्वेतकेतुश्च शुकपण्डितः। वेदः समाख्यातस्त्वया चतुर्धा। भगवान्वसू राजर्षिर्महायशा भगवान्।

ज्ञानेन हि त्वं परमेण युक्तः
सर्वेषुं शास्त्रेषु भवान् कृतार्थः। 30

श्रेष्ठो विशिष्टो परमोऽसि लोके
भवान् हि विद्याचरणेन युक्तः ॥ १०७७ ॥

ददामि तेऽहं प्रकृतिं ममामलां
शीलेन रूपेण गुणैरुपेतः ।
5 शार्दूलकर्णः प्रकृतिश्च भद्रा
उभौ रमेतां रुचितं ममेदम् ॥ १०७८ ॥

M 208
प्रगृह्य भृङ्गारमुदकप्रपूर्ण-
मावर्जितो ब्राह्मणो हृष्टचित्तः ।
अनुप्रदासीदुदकेन कन्यकां
10 शार्दूलकर्णस्य इयमस्तु भार्या ॥ १०७९ ॥

उदग्रचित्त आसीन्मातङ्गराजः ।

कृत्वा निवेशं स तदात्मजस्य
गत्वाश्रमेऽसौ नगरं यशस्वी ।
धर्मेण वै कारयति स्वराज्यम्
15 क्षेमं सुभिक्षं च सदोत्सवाढ्यम् ॥ १०८० ॥ इति ।

स्याद् भिक्षवो युष्माकं काङ्क्षा वा विमतिर्वा विचिकित्सा वा—अन्यः स तेन कालेन तेन समयेन त्रिशङ्कुर्नाम मातङ्गराजोऽभूत् ? नैवं द्रष्टव्यम् । अहमेव स तेन कालेन तेन समयेन त्रिशङ्कुर्नाम मातङ्गराजोऽभूवम् । स्यादेवं च भिक्षवो युष्माकम्—अन्यः स तेन कालेन तेन समयेन शादूलकर्णो नाम मातङ्गराजकुमारोऽभूत् । नैवं द्रष्टव्यम् । एष स 20 आनन्दो भिक्षुः स तेन कालेन तेन समयेन शार्दूलकर्णो नाम मातङ्गराजकुमारोऽभूत् । स्यादेवं युष्माकम्—अन्यः स तेन कालेन तेन समयेन पुष्करसारी नाम ब्राह्मणोऽभूत् । नैवं द्रष्टव्यम् । एष शारद्वतीपुत्रो भिक्षुः स तेन कालेन तेन समयेन पुष्करसारी नाम ब्राह्मणोऽभूत् । नान्या सा तेन कालेन तेन समयेन पुष्करसारिणो ब्राह्मणस्य प्रकृतिर्नाम माणविका दुहिताभूत् । नैवं द्रष्टव्यम् । एषा सा प्रकृतिर्भिक्षुणी तेन कालेन तेन समयेन पुष्कर- M 209 25 सारिणो ब्राह्मणस्य प्रकृतिर्नाम माणविका दुहिताभूत् । सा एतर्हि तेनैव स्नेहेन तेनैव प्रेम्णा आनन्दं भिक्षुं गच्छन्तमनुगच्छति तिष्ठन्तमनुतिष्ठति । यद्यदेव कुलं पिण्डाय प्रविशति, तत्र तत्रैव द्वारे तूष्णींभूता अस्थात् ॥

अथ खलु भगवानेतस्मिन्निदाने एतस्मिन् प्रकरणे तस्यां वेलायामिमां गाथामभाषत—

पूर्वकेण निवासेन प्रत्युत्पन्नेन तेन च ।
30 एतेन जायते प्रेम चन्द्रस्य कुमुदे यथा ॥ १०८१ ॥

तस्मात्तर्हि भिक्षवोऽनभिसमितानां चतुर्णामार्यसत्यानामभिसमयाय, अधिमात्रं वीर्यं तीव्रच्छन्दो वीर्यं शब्दापयामि। उत्साह उन्नतिरप्रतिवाणिः। स्मृत्या संप्रजन्येन अप्रमादतो योगः करणीयः। द्रुतमेषां चतुर्णां दुःखस्यार्यसत्यस्य दुःखसमुदयस्य निरोधस्य निरोधगामिन्याः प्रतिपद आर्यसत्यस्य अमीषां चतुर्णामार्यसत्यानामनभिसमितानामभिसमयाय अधिमात्रं तीव्रच्छन्दो वीर्यं व्यायाम उत्साह उन्नतिरप्रतिवाणिः स्मृत्या संप्रजन्येनाप्रमादतो योगः करणीयः॥ 5

अस्मिंश्च खलु पुनर्धर्मपर्याये भाष्यमाणे भिक्षूणां षष्टिमात्राणामनुपादाय आस्रवेभ्यश्चित्तानि विमुक्तानि। संबहुलानां श्रावकाणां ब्रह्मणां गृहपतीनां च विरजस्कं विगतमलं धर्मचक्षुरुदपादि विशुद्धम्॥ M 210

इदमवोचद्भगवान्। आत्तमनसस्ते भिक्षवो भगवतो भाषितमभ्यनन्दन्॥ 10

इति श्रीदिव्यावदाने शार्दूलकर्णावदानम्॥



## ३४ दानाधिकरणमहायानसूत्रम् ।

C 482 एवं[1] मया श्रुतम्। एकस्मिन् समये भगवाञ्छ्रावस्त्यां विहरति जेतवनेऽनाथपिण्डदस्यारामे महता भिक्षुसंघेन सार्धम्। तत्र [भगवान्] भिक्षूनामन्त्रयते स्म—सप्तत्रिंशता भिक्षव आकारैः पण्डितो दानं ददाति। काले दानं ददाति तथागतानुज्ञातम्।
5 कल्पितं दानं ददाति त्रिवस्तुपरिशुद्धम्। सत्कृत्य दानं ददाति सर्वदोषविक्षेपविगमार्थम्। स्वहस्तेन दानं ददात्यसारात्कायात्सारसंग्रहार्थम्। स्कन्धं दानं ददाति महात्यागभोगविपाकप्रतिलाभसंवर्तनीयम्। वर्णसंपन्नं दानं ददाति प्रासादिकविपाकप्रतिसंवर्तनीयम्। गन्धसंपन्नं दानं ददाति गन्धविपाकप्रतिलाभसंवर्तनीयम्। रससंपन्नं दानं ददाति रसरसाग्रव्यञ्जनविपाकप्रतिलाभसंवर्तनीयम्। प्रणीतं दानं ददाति प्रणीतभोगविपाकप्रतिलाभसंवर्तनीयम्।
10 विपुलं दानं ददाति विपुलभोगविपाकप्रतिलाभसंवर्तनीयम्। अन्नदानं ददाति क्षुत्तर्षविच्छेदविपाकप्रतिलाभसंवर्तनीयम्। पानदानं ददाति सर्वत्र जातिषु तृड्विच्छेदविपाकप्रतिलाभसंवर्तनीयम्। वस्त्रदानं ददाति प्रणीतवस्त्रभोगविपाकप्रतिलाभसंवर्तनीयम्। प्रतिश्रयं दानं ददाति हर्म्यकूटागारप्रासादभवनविमानोद्यानारामविशेषविपाकप्रतिलाभसंवर्तनीयम्। शय्यादानं ददात्युच्चकुलभोगविपाकप्रतिलाभसंवर्तनीयम्। यानं दानं ददाति ऋद्धिपाद-
15 विपाकप्रतिलाभसंवर्तनीयम्। भैषज्यदानं ददाति अजरामरणविशोकसंक्लिष्टनिरोधनिर्वाणविपाकप्रतिलाभसंवर्तनीयम्। धर्मदानं ददाति जातिस्मरप्रतिलाभसंवर्तनीयम्। पुष्पदानं ददाति बोध्यङ्गपुष्पविपाकप्रतिलाभसंवर्तनीयम्। माल्यदानं ददाति रागद्वेषमोहविशुद्धविपाकप्रतिलाभसंवर्तनीयम्। गन्धदानं ददाति दिव्यगन्धसुखोपपत्तिविपाकप्रतिलाभसंवर्तनीयम्। धूपदानं ददाति संक्लेशदौर्गन्धप्रहाणविपाकप्रतिलाभसंवर्तनीयम्। छत्रदानं ददाति धर्मैश्वर्या-
20 धिपत्यविपाकप्रतिलाभसंवर्तनीयम्। घण्टादानं ददाति मनोज्ञस्वरविपाकप्रतिलाभसंवर्तनीयम्।
C 483 वाद्यदानं ददाति ब्रह्मस्वरनिर्घोषविपाकप्रतिलाभसंवर्तनीयम्। पट्टदानं ददाति देवमनुष्याभिषेकपट्टबन्धविपाकप्रतिलाभसंवर्तनीयम्। तथागतचैत्येषु तथागतबिम्बेषु च सुगन्धोदकस्नानं दानं ददाति द्वात्रिंशन्महापुरुषलक्षणाशीत्यनुव्यञ्जनविपाकप्रतिलाभसंवर्तनीयम्। सूत्रदानं ददाति सर्वत्र जातिषूपपस्यता ग्राह्यकुलेषूपपद्य समन्तप्रासादिकविपाकप्रतिलाभसंवर्तनीयम्।
25 पञ्चसारदानं ददाति सर्वत्र जातिषु महाबलविपाकप्रतिलाभसंवर्तनीयम्। मैत्र्यात्मकदानं ददाति व्यापादप्रहाणविपाकप्रतिलाभसंवर्तनीयम्। करुणाश्रितदानं ददाति महासुखविपाकप्रतिलाभसंवर्तनीयम्। मुदिताश्रितदानं ददाति सर्वथा मुदितानन्दविपाकप्रतिलाभसंवर्तनीयम्। उपेक्षाश्रितं दानं ददाति अरतिप्रहाणविपाकप्रतिलाभसंवर्तनीयम्। विचित्रोपचित्रं दानं ददाति नानाबहुविधविचित्रोपभोगविपाकप्रतिलाभसंवर्तनीयम्। सर्वार्थपरित्यागं दानं ददाति अनुत्तर-
30 सम्यक्संबोधिविपाकप्रतिलाभसंवर्तनीयम्। एभिर्भिक्षवः सप्तत्रिंशत्प्रकारैः पण्डितो दानं ददाति॥

इदमवोचद्भगवान्। आत्तमनसस्ते भिक्षवो भगवतो भाषितमभ्यनन्दन्॥

इति श्रीदिव्यावदाने दानाधिकरणमहायानसूत्रं समाप्तम्॥

---

1 Before एवं, Mss. read नमो रत्नत्रयाय.

# ३५ चूडापक्षावदानम् ।

बुद्धो भगवान् श्रावस्त्यां विहरति स्म जेतवनेऽनाथपिण्डदस्यारामे । श्रावस्त्यामन्यतमो ब्राह्मणः प्रतिवसति । तेन सदृशात् कुलात् कलत्रमानीतम् । स तया सार्धं क्रीडति रमते परिचारयति । तस्यापत्यं जातं जातं कालं करोति । अथापरेण समयेन तस्य पत्नी आपन्नसत्त्वा संवृत्ता । स करे कपोलं दत्वा चिन्तापरो व्यवस्थितः । तस्य नातिदूरे वृद्धयुवतिः 5 C 484
प्रतिवसति । तया दृष्टः । सा कथयति—कस्मात्त्वं ब्राह्मण करे कपोलं दत्वा चिन्तापरो व्यवस्थितः ? स कथयति—ममापत्यं जातं जातं कालं करोति । मम चेदानीं पत्नी आपन्नसत्त्वा संवृत्ता । यदप्यन्यदपत्यं जनयिष्यति, तदपि कालं करिष्यति । सा कथयति—यदा तव पत्न्याः प्रसवकालः स्यात्, तदा मां शब्दापयेथा इति । अथापरेण समयेन तस्य पत्न्याः प्रसवकालो जातः । तेन सा वृद्धयुवतिः शब्दापिता । तया सा प्रसवापिता । पुत्रो 10
जातः । तया स दारकः स्नापयित्वा शुक्लेन वस्त्रेण वेष्टयित्वा नवनीतेनास्यं पूरयित्वा दारिकाया हस्तेऽनुप्रदत्तः । सा दारिकोक्ता—इमं दारकं चतुर्महापथे धारय । यं कंचित् पश्यसि ब्राह्मणं वा श्रमणं वा, स वक्तव्यः—अयं दारकः पादाभिवन्दनं करोतीति । अस्तं गते आदित्ये यदि जीवति, गृहीत्वा आगच्छ । अथ कालं करोति, तत्रैवारोपयितव्यः । सा तमादाय चतुर्महापथे गत्वा स्थिता । आचरितं तीर्थ्यानां कल्यमेवोत्थाय तीर्थोपस्पर्शनाय 15
गच्छन्ति । सा दारिका सगौरवा सप्रतीशा पादाभिवन्दनं कृत्वा कथयति—अयं दारक आर्याणां पादाभिवन्दनं करोति । ते कथयन्ति—चिरं जीव, दीर्घमायुः पालयतु, मातापित्रोर्मनोरथं पूरयतु । स्थविरस्थविरा भिक्षवः पूर्वाह्णकालसमये निवास्य पात्रचीवरमादाय श्रावस्त्यां पिण्डाय प्रविशन्ति । सा दारिका सगौरवा सप्रतीशा पादाभिवन्दनं कृत्वा कथयति—अयं दारक आर्याणां पादाभिवन्दनं करोतीति । स्थविराः कथयन्ति—सुचिरं 20
जीवतु, दीर्घमायुः पालयतु, मातापित्रोर्मनोरथं पूरयतु । भगवान् पूर्वाह्णे निवास्य पात्रचीवरमादाय श्रावस्तीं पिण्डाय प्रविशति स्म । सा दारिका सगौरवा सप्रतीशा पादाभिवन्दनं कृत्वा कथयति—भगवन्, अयं दारको भगवतः पादाभिवन्दनं करोतीति । भगवानाह—चिरं जीवतु, दीर्घमायुः पालयतु, मातापित्रोर्मनोरथं पूरयतु । विकालीभूते पश्यति—यावज्जीवति । सा तं गृहीत्वा गृहमागता । सा तैः पृष्टा—जीवति दारकः ? सा कथयति—जीवति । 25 C 185
ते कथयन्ति—कुत्र धारितः ? अस्मिन् महापथे । ते कथयन्ति—किं भवतु दारकस्य नाम ? अयं दारको महापथे धारितः । भवतु दारकस्य महापन्थक इति नाम । महापन्थको दारक उन्नीतो वर्धितो महान् संवृत्तः । स यदा महान् संवृत्तस्तदा लिप्यामुपन्यस्तः, संख्यायां गणनायां मुद्रायां ब्राह्मणिकायामीर्यायां शौचे समुदाचारे भस्मग्रहे औत्करे भोस्कारे ऋग्वेदे यजुर्वेदे सामवेदेऽथर्ववेदे यजने याजनेऽध्ययनेऽध्यापने दाने प्रतिग्रहे । षट्कर्मनिरतो 30
ब्राह्मणः संवृत्तः । स पञ्चशतगणं ब्राह्मणकर्म ॐ वाचयितुमारब्धः । तस्य भूयः क्रीडतो रमतः परिचारयतः पत्नी आपन्नसत्त्वा संवृत्ता । तस्याः प्रसवकालो जातः । तेन सा वृद्ध-

युवतिः शब्दापिता। तया प्रसविता। तस्याः पुत्रो जातः। तया स दारकः स्नापयित्वा शुक्लेन वस्त्रेण वेष्टयित्वा नवनीतेनास्यं पूरयित्वा दारिकाया हस्ते दत्तः। सा दारिकोक्ता—इमं त्वं दारकं चतुर्महापथे धारय। यदि कंचित्पश्यसि श्रमणं ब्राह्मणं वा, स वक्तव्यः—अयं दारक आर्यस्य पादाभिवन्दनं करोति। अस्तं गत आदित्ये यदि जीवति, गृहीत्वा आगच्छ। 5 अथ कालं करोति, तत्रैवारोपयित्वा आगच्छ। सा दारिका अलसजातीया तं दारकमादाय पन्थलिकायां स्थिता। आचरितं तीर्थ्यानां कल्यमेवोत्थाय तीर्थोपस्पर्शका गच्छन्ति। सा दारिका सगौरवा सप्रतीशा पादाभिवन्दनं कृत्वा कथयति—आर्य, अयं दारक आर्याणां पादाभिवन्दनं करोति। ते कथयन्ति—चिरं जीवतु, दीर्घमायुः पालयतु, मातापित्रोर्मनोरथं पूरयतु। सा तं विकालीभूते पश्यति—यावज्जीवति। सा तं गृहीत्वा गृहमागता। सा तैः 10 पृष्टा—जीवति दारकः? सा कथयति—जीवतीति। ते कथयन्ति—कुत्र त्वयैष धारितः? सा कथयति—अमुष्यां पन्थलिकायाम्। ते कथयन्ति—किं भवतु दारकस्य नाम? अयं दारकः पन्थलिकायां धारितः। भवतु दारकस्य नामधेयं पन्थक इति। पन्थको दारक उन्नीतो वर्धितो महान् संवृत्तः। स यदा महान् संवृत्तस्तदा लिप्यामुपन्यस्तः। तस्य सीत्युक्ते धमिति विस्मरति। अथ तस्याचार्यः कथयति—ब्राह्मण, मया प्रभूतदारकाः पाठयि-15 तव्याः। न शक्ष्याम्यहं पन्थकं पाठयितुम्। महापन्थकस्याल्पमुच्यते प्रभूतं गृह्णाति, अस्य तु पन्थकस्य सीत्युक्ते धमिति विस्मरति। ब्राह्मणः संलक्षयति—सर्वे ब्राह्मणा लिप्यक्षरकुशला भवन्ति, वेदब्राह्मण एष भविष्यति। स तेनाध्यापकस्य वेदं पाठयितुं समर्पितः। तस्य ओमित्युक्ते भूरिति विस्मरति, भूरित्युक्त ओमिति विस्मरति। अध्यापकः कथयति—प्रभूता माणवकाः पाठयितव्या मया। न शक्याम्यहं पन्थकं पाठयितुम्। अस्य ओमित्युक्ते भूरिति 20 विस्मरति, भूरित्युक्त ओमिति विस्मरति। ब्राह्मणः संलक्षयति—न सर्वे ब्राह्मणा वेदपारगा भवन्ति। जातिब्राह्मण एवायं भविष्यतीति। स यत्र क्वचिन्निमन्त्रितको गच्छति, तमेव पन्थकमादाय गच्छति। अथ तेन समयेन स ब्राह्मणो ग्लानीभूतः। स मूलगण्डपत्रफल-भैषज्यैरुपस्थीयमानो हीयत एव। स तेन महापन्थक उक्तः—पुत्र, त्वं ममात्ययादशोच्योऽसि। अपि तु त्वया पन्थकस्य योगोद्वहनं कर्तव्यमिति। इत्युक्त्वा—

25 सर्वे क्षयान्ता निचयाः पतनान्ताः समुच्छ्रयाः।
संयोगा विप्रयोगान्ता मरणान्तं च जीवितम्॥ १॥

इति स कालधर्मेण संयुक्तः। ते तं नीलपीतलोहितावदातैर्वस्त्रैः शिबिकामलंकृत्य महता सत्कारेण श्मशाने ध्मापयित्वा शोकविनोदं कृत्वा अवस्थिताः॥

आयुष्मन्तौ शारिपुत्रमौद्गल्यायनौ पञ्चशतपरिवारौ कोसलेषु जानपदेषु चारिकां 30 चरन्तौ श्रावस्तीमनुप्राप्तौ। श्रावस्त्यां जनकायेन श्रुतम्—आयुष्मन्तौ शारिपुत्रमौद्गल्यायनौ पञ्चशतपरिवारौ कोसलेषु जनपदेषु चारिकां चरन्तौ श्रावस्तीमनुप्राप्तौ। श्रुत्वा च पुनः स जनकायो बहिर्निर्गन्तुमारब्धः। महापन्थकोऽपि बहिः श्रावस्त्यामन्यतमस्मिन् वृक्षमूले

C 486 C 487

पञ्चमात्राणि माणवकशतानि ब्राह्मणकान् मन्त्रान् वाचयति । तेन स जनकायः श्रावस्त्या निर्गच्छन् दृष्टः । स तान् माणवकान् पृच्छति—भवन्तः, क एष महाजनकायो निर्गच्छति? ते तस्य कथयन्ति—उपाध्याय, भदन्तौ शारिपुत्रमौद्गल्यायनौ पञ्चशतपरिवारौ कोसलेषु जनपदेषु चारिकां चरित्वा इह श्रावस्तीमनुप्राप्तौ, तद्दर्शनायोपसंक्रान्तः। किं नु तौ द्रष्टव्यौ? यत्रेदानीं तदग्रं वर्णमपहाय द्वितीयवर्णस्य श्रमणस्य गौतमस्यान्तिके प्रव्रजितौ । एकस्तत्र 5 माणवकः श्राद्धः । स कथयति—उपाध्याय, मैवं वोचः । महानुभावौ तौ । यद्युपाध्यायस्तेषां धर्मं शृणुयात्, स्थानमेतद्विद्यते यदुपाध्यायस्यापि रोचते । आचरितं तेषां माणवकानां यदा अपाठा भवन्ति, ते कदाचिन्नगरावलोकनया गच्छन्ति । कदाचित्तीर्थोपस्पर्शका गच्छन्ति । कदाचित्समिधाहारका गच्छन्ति । अपरेण समयेन ते सर्वे अपाठाः संवृत्ताः । ते समिधाहारकाः संप्रस्थिताः । सोऽपि महापन्थकोऽन्यतमवृक्षमूले चंक्रम्य स्थितः । तत्रैकं 10 भिक्षुमद्राक्षीत् । स तमुपसंक्रम्यैवमाह—भो भिक्षो, उच्यतां तावत्किंचिद्बुद्धवचनम् । तेन तस्य दश कुशलाः कर्मपथा विस्तरेण संप्रकाशिताः । सोऽभिप्रसन्नः कथयति—भो भिक्षो, पुनरप्याख्याहि विस्तरम् । इत्युक्त्वा प्रक्रान्तः । अपरेण समयेन भूयस्ते अपाठाः संवृत्ताः । ते समिधाहारकाः संप्रस्थिताः । महापन्थकोऽपि भिक्षुसकाशमुपसंक्रान्तः । तेन तस्य द्वादशाङ्गः प्रतीत्यसमुत्पादोऽनुलोमप्रतिलोमो विस्तरेण प्रकाशितः । सोऽभिप्रसन्नः कथयति— 15 भो भिक्षो, लभेयाहं स्वाख्याते धर्मविनये प्रव्रज्यामुपसंपदं भिक्षुभावम् । चरेयमहं श्रमणस्य गौतमस्यान्तिके ब्रह्मचर्यम् । स भिक्षुः संलक्षयति—प्रव्राजयामि शासने, धुरमुन्नामयतीति । स तेनोक्तः—ब्राह्मण, एवं कुरुष्व । महापन्थकः कथयति—भिक्षो, वयं प्रज्ञाता ब्राह्मणाः । न शक्ष्याम इहैव प्रव्रजितुम् । जनपदं गत्वा प्रव्रजामः । स तेन जनपदं नीत्वा C 488 प्रव्रजितः उपसंपादितः, उक्तश्च । द्वे भिक्षुकर्मणी ध्यानमध्ययनं च । किं करिष्यसि? उभयं 20 करिष्यामि । तेन दिवा उद्दिशता योनिशो भावयता त्रीणि पिटकानि, रात्रौ चिन्तयता तुलयता उपपरीक्षमाणेन सर्वक्लेशप्रहाणादर्हत्वं साक्षात्कृतम् । अर्हन् संवृत्तस्त्रैधातुकवीतरागः समलोष्टकाञ्चन आकाशपाणितलसमचित्तो वासीचन्दनकल्पो विद्याविदारिताण्डकोशो विद्याभिज्ञाप्रतिसंवित्प्राप्तो भवलाभलोभसत्कारपराङ्मुखः । सेन्द्रोपेन्द्राणां देवानां मान्यः पूज्योऽभिवाद्यश्च संवृत्तः ॥ 25

यदा पन्थकस्य भोगास्तनुत्वं परिक्षयं पर्यादानं गताः, स कृच्छ्रेण जीविकां कल्पयितुमारब्धः । अथ पन्थकस्यैतदभवत्—यत्तावन्मे श्रुतेन प्राप्तव्यं तन्मया... । यन्न्वहं श्रावस्तीं गत्वा भगवन्तं पर्युपास्यामि । अथायुष्मान् महापन्थकः पञ्चशतपरिवारो येन श्रावस्ती तेन चारिकां प्रक्रान्तः । अनुपूर्वेण चारिकां चरन् श्रावस्तीमनुप्राप्तः । श्रावस्त्यां जनकायेन श्रुतम्—आर्यो महापन्थकः पञ्चशतपरिवारः कोसलेषु जनपदेषु चारिकां चरन् 30 श्रावस्तीमनुप्राप्तः । श्रुत्वा च पुनर्निर्गन्तुमारब्धः । पन्थकेन दृष्टः । स पृच्छति—भवन्तः, कुत्रैष महाजनकायो गच्छति? ते कथयन्ति—आर्यो महापन्थकः पञ्चशतपरिवारः कोसलेषु

जनपदेषु चारिकां चरन् श्रावस्तीमनुप्राप्तः । तमेष महाजनकायो दर्शनायोपसंक्रामति। पन्थकः संलक्षयति—एषामसौ न भ्राता न ज्ञातिः। ममासौ भ्राता भवति। अहं कस्मात्तं न दर्शनायोपसंक्रमामि? सोऽपि तद्दर्शनायोपसंक्रान्तः। स तेन दृष्टः पृष्टश्च—पन्थक, कथं यापयसि? कृच्छ्रेण यापयामि? किं न प्रव्रजसि? स कथयति—अहं चूडः परमचूडो 5 धन्वः परमधन्वः। को मां प्रव्राजयिष्यतीति? आयुष्मान् महापन्थकः संलक्षयति—सन्त्यस्य कानिचित्कुशलमूलानि? सन्ति। केनायं न योग्यः? आगच्छ, अहं त्वां प्रव्राजयिष्यामि। तेन प्रव्राजित उपसंपादितः। तेन तस्योद्देशो दत्तः—

C 489

पापं न कुर्यान्मनसा न वाचा
कायेन वा किंचन सर्वलोके।
10 रिक्तः कामैः स्मृतिमान् संप्रजानन्
दुःखं न स विद्यादनर्थोपसंहितम् ॥ १ ॥

तस्यैषा गाथा त्रैमास्येनापि न वृत्ता जाता। अन्येषां गोपालकानां पशुपालकानां श्रुत्वा प्रवृत्ता जाता। सगौरवः सप्रतीश उपसंक्रम्य प्रष्टुं प्रवृत्तः। ते उपसंहरन्ति। धर्मता खलु यथा बुद्धानां भगवतां द्वौ श्रावकाणां संनिपातौ भवतः, आषाढ्यां वर्षोपनायिकायां 15 कार्तिकपूर्णमास्याम्। एवं महाश्रावकाणामपि। तत्र ये आषाढीवर्षोपनायिकायामुपसंक्रामन्ति, ते तांस्तान् मनसिकारविशेषानादाय तासु तासु ग्रामनिगमराष्ट्रराजधानीषु वर्षा उपगच्छन्ति। ये कार्तिक्यां च पूर्णमास्यामुपसंक्रामन्ति, ते स्वाध्यायनिकां परिपृच्छनिकां च याचन्ति, यथाधिगतं चारोचयन्ति। आयुष्मतो महापन्थकस्य सार्धंविहार्यन्तेवासिका भिक्षवो जनपदे वर्षोषिताः, तेऽप्येत्र कार्तिक्यां पूर्णमास्यां येनायुष्मान् महापन्थकस्तेनोपसंक्रान्ताः। तत्र 20 केचित्स्वाध्यायिनिकां याचन्ति, केचित्परिपृच्छन्ति, केचिद्यथाधिगतमारोचयन्ति। तत्र ये चूडा भवन्ति परमचूडा धन्वाः परमधन्वाः, ते षड्वर्गीयान् सेवन्ते भजन्ते पर्युपासन्ते। आयुष्मान् पन्थकः षड्वर्गीयान् सेवते भजते पर्युपासते। स षड्वर्गीयैरुच्यते—आयुष्मन् पथक, तव समानोपाध्याया उपाध्यायस्यान्तिकात्स्वाध्यायिनिकां परिपृच्छिनिकां याचन्ति। गच्छ, त्वमपि त्वदुपाध्यायस्यान्तिकात्स्वाध्यायिनिकां परिपृच्छिनिकां याचस्व। स कथ-25 यति—मया न किंचित्पठितं त्रैमास्ये, न त्वेका गाथा मम वृत्ता जाता, किमहं स्वाध्यायिनिकां याचेयमिति? ते कथयन्ति—ननूक्तं भगवता—अस्वाध्यायमाना मत्ता इति। किं तवास्वाध्यायमानस्य गाथा अनुप्रवृत्ता भविष्यति? गच्छ, याचाहि। स गत्वा कथयति—उपाध्याय, स्वाध्यायिनिकां तावन्मे देहि। आयुष्मान् महापन्थकः संलक्षयति—किमस्येदं स्वं प्रतिभानमाहोस्वित् केनचित्प्रयुक्तः? स पश्यति—यावत्प्रयुक्तः। आयुष्मान् महापन्थकः 30 संलक्षयति—किं न्वयमुत्सहनाविनेय आहोस्विदवसादनाविनेयः? स पश्यति—यावदवसादनाविनेयः। स तेन ग्रीवायां गृहीत्वा बहिर्विहारस्य निष्कासितः। त्वं तावच्चूडः परमचूडो धन्वः परमधन्वः। किं त्वमस्मिन् शासने करिष्यसि? स रोदितुमारब्धः। इदानीमहं न

C 490

गृही न प्रव्रजितः। अद्राक्षीद्भगवानायुष्मन्तं पन्थकं बहिर्विहारस्य भ्रमन्तम्। दृष्ट्वा च पुनरागच्छन्तमिदमवोचत्–कस्मात्त्वं पन्थक बहिर्विहारस्य रोदिष्यसि, अश्रूणि वर्तयसि? अहमस्मि भदन्त उपाध्यायेन निष्कासितः। इदानीमहं न गृही न प्रव्रजितः। भगवानाह–नेदं वत्स मौनीन्द्रं वचनं तवोपाध्यायेन त्रिभिः कल्पासंख्येयैरनैकैर्दुष्करशतसहस्रैः षट् पारमिताः परिपूर्य समुदानीतम्, अपि तु मयेदं मौनीन्द्रं प्रवचनं त्रिभिः 5 कल्पासंख्येयैरनैकैर्दुष्करशतसहस्रैः षट् पारमिताः परिपूर्य समुदानीतम्। न शक्यसि त्वं तथागतस्यान्तिकात्पठितुम्? अहमस्मि भदन्त चूडः परमचूडो धन्वः परमधन्वः। अथ भगवानस्यामुत्पत्तौ गाथां भाषते–

यो बालो बालभावेन पण्डितस्तत्र तेन सः।
बालः पण्डितमानी तु स वै बाल इहोच्यते॥ २॥ 10

अस्थानमनवकाशो यद्बुद्धा भगवन्तः पदशो धर्मं वाचयिष्यन्ति नेदं स्थानं विद्यते। तत्र भगवानायुष्मन्तमानन्दमामन्त्रयते स्म–इमं पाठय त्वमानन्द पन्थकम्। आयुष्मानानन्दस्तं पाठयितुमारब्धः। स न शक्नोति पाठयितुम्। आयुष्मानानन्दो भगवन्तमिदमवोचत्–मया तावद्भदन्त शास्तुरुपस्थानं करणीयम्, श्रुतमुद्ग्रहीतव्यम्, गणो वाचयितव्यः। आगतागतानां ब्राह्मणगृहपतीनां धर्मो देशयितव्यः। नाहं शक्ष्यामि पन्थकं पाठयितुम्। भगवता 15 तस्य द्वे पदे दत्ते–रजो हरामि, मलं हरामीति। तस्यैतत्पदद्वयं न लेभे। भगवान् संलक्षयति। कर्मापनयोऽस्य कर्तव्यमिति। तत्र भगवानायुष्मन्तमानन्दमामन्त्रयते–शक्ष्यसि त्वं पन्थक भिक्षूणामुपानहान्मूलाच्च प्रोञ्छितुम्। परं भदन्त शक्ष्यामि। गच्छ प्रोञ्छस्व। स भिक्षूणामुपानहान्मूलाच्च प्रोञ्छितुमारब्धः। तस्य ते भिक्षवो नानुप्रयच्छन्ति। भगवानाह–अनुप्रयच्छत, कर्मापनयोऽस्य कर्तव्य इति। पदद्वयस्य दास्ये स्वाध्यायनिकाम्, अनु- 20 प्रयच्छत। स भिक्षूणामुपानहान्मूलं क्रमतश्च प्रोञ्छते। तस्य ते भिक्षवः पदद्वयस्य स्वाध्यायनिकामनुप्रयच्छन्ति। तस्यैतत्पदद्वयं स्वाध्यायतः कालान्तरेण प्रवृत्तं जातम्। अथायुष्मतः पन्थकस्य रात्र्याः प्रत्यूषसमये एतदभवत्–भगवानेवमाह–रजो हरामि, मलं हरामीति। किं नु भगवानाध्यात्मिकं रजः संधायाह आहोस्विद्बाह्यम्? तस्यैवं चिन्तयतस्तस्यां वेलायामश्रुतपूर्वास्तिस्रो गाथा आमुखीप्रवृत्ता जाताः– 25

रजोऽत्र रागो न हि रेणुरेष
रजो रागस्याधिवचनं न रेणोः।
एतद्रजः प्रतिविनुदन्ति पण्डिता
न ये प्रमत्ताः सुगतस्य शासने॥ ३॥

रजोऽत्र द्वेषो न हि रेणुरेष 30
रजो द्वेषस्याधिवचनं न रेणोः।

C 491

एतद्रजः प्रतिविनुदन्ति पण्डिता
न ये प्रमत्ताः सुगतस्य शासने ॥ ४ ॥
रजोऽत्र मोहो न हि रेणुरेष
रजो मोहस्याधिवचनं न रेणोः ।
C 492 5 एतद्रजः प्रतिविनुदन्ति पण्डिता
न ये प्रमत्ताः सुगतस्य शासने ॥ ५ ॥

तेनोद्यच्छमानेन घटमानेन व्यायच्छमानेन सर्वक्लेशप्रहाणादर्हत्वं साक्षात्कृतम्। अर्हन् संवृत्तः त्रैधातुकवीतरागः समलोष्टकाञ्चन आकाशपाणितलसमचित्तो वासीचन्दनकल्पो विद्याविदारिताण्डकोशो विद्याभिज्ञाप्रतिसंविन्प्राप्तो भवलाभलोभसत्कारपराङ्मुखः । 10 सेन्द्रोपेन्द्राणां देवानां मान्यश्च पूज्यश्चाभिवाद्यश्च संवृत्तः । ध्याने निषण्ण आयुष्मता महापन्थकेन दृष्टः । असमन्वाहृत्यार्हतां ज्ञानदर्शनं न प्रवर्तते । स तेन बाहौ गृहीत्वोक्तः— आगच्छ स्वाध्यायिनिकां तावत्कुरु, ततः पश्चाद्ध्यायिष्यसीति । अथायुष्मता पन्थकेन सर्वक्लेशप्रहाणादर्हत्वं साक्षात्कृतम्, गजभुजसदृशो बाहुरुत्सृष्टः । आयुष्मता महापन्थकेन पृष्ठतो मुखं व्यवलोकयता दृष्टः । स कथयति—आयुष्मन् पन्थक, एवं ते त्वया गुणगणा 15 अधिगताः ? अधिगताः ॥

यदा आयुष्मता पन्थकेन सर्वक्लेशप्रहाणादर्हत्वं साक्षात्कृतम्, अन्यतीर्थिका अवध्यायन्ति ध्रियन्ति विवाचयन्ति । श्रमणो गौतम एवमाह—गम्भीरो मे धर्मो गम्भीरावभासो दुर्दृशो दुरनुबोधोऽतर्कोऽतर्कावचरः, सूक्ष्मो निपुणपण्डितविज्ञवेदनीयः । अत्रेदानीं किं गम्भीरोऽस्य, यस्येदानीं पन्थकप्रभृतयश्चूडाः परमचूडा धन्वाः परमधन्वाः प्रव्रजन्ति । 20 भगवान् संलक्षयति—सुमेरुप्रख्ये महाश्रावके महाजनकायः क्षान्तिं गृह्णाति । गुणोद्भावना अस्य कर्तव्या । तत्र भगवानायुष्मन्तमानन्दमामन्त्रयते—गच्छ आनन्द, पन्थकस्य कथय—भिक्षुण्यस्ते अववदितव्या इति । एवं भदन्तेत्यायुष्मानानन्दो भगवतः प्रतिश्रुत्य येनायुष्मान् पन्थकस्तेनोपसंक्रान्तः । उपसंक्रम्यायुष्मन्तं पन्थकमिदमवोचत्—शास्ता C 493 त्वामायुष्मन् पन्थक एवमाह—भिक्षुण्यस्ते अववदितव्या इति । आयुष्मान् पन्थकः कथयति— 25 किमर्थं स्थविरस्थविरान् भिक्षूनपहाय मां भगवान् भिक्षुण्यववादकमाज्ञापयति ? ममैव गुणोद्भावना कर्तव्येति शास्तुर्मनोरथं परिपूरयिष्यामीति । भिक्षुण्यश्छन्दहानिसः(?) जेतवनमागताः । ता भिक्षून् पृच्छन्ति—भगवता कोऽस्माकमववादक आज्ञप्तः ? ते कथयन्ति— आयुष्मान् पन्थकः । ताः कथयन्ति—भगिन्यः, पश्यत कथं मातृग्रामः परिभूतः । येन त्रिभिर्मासैरेका गाथा पठिता, सापि न प्रवृत्ता । भिक्षुण्यस्त्रिपिटा धार्मकथिका युक्त- 30 मुक्तप्रतिभानाः । स किल भिक्षुणीरववदिष्यतीति । ताः पर्षदमागता भिक्षुणीभिः पृष्टाः— भगिन्यः, कोऽस्माकमववदितुमागमिष्यति ? ताः कथयन्ति—आर्यपन्थकः । किमार्यो महापन्थकः ? न ह्ययम्, स त्वन्यश्चूडापन्थकः । द्वादशवर्गीयाभिः श्रुतम् । तावदवध्यायन्ति ।

भगिन्यः पश्यत, कथं मातृग्रामः परिभूतः? येन त्रिभिर्मासैरेका गाथा पठिता, सापि न प्रवृत्ता। इमा भिक्षुण्यस्त्रिपिटा धार्मकथिका युक्तमुक्तप्रतिभानाः, स किल किमासामववदिष्यतीति? ताः कथयन्ति—भगिन्यः, षड्जन्यो द्वादशहस्तिकाभिर्लताभिः सिंहासनं प्रज्ञपयन्तु। षड्जन्यः श्रावस्तीं प्रविश्य रथ्यावीथिचत्वरशृङ्गाटकेष्वारोचयन्तु—सोऽस्माकं तादृशोऽववादक आगमिष्यति, योऽस्माकं तनुसल्यानि न द्रक्ष्यति। तेन संसारे चिरं वस्तव्यं 5 भविष्यतीति। येन न कश्चित् पुत्रमोटिकापुत्रोऽल्पश्रुत उत्सहते भिक्षुणीरववदितुम्। तासां षड्भिः जनीभिः द्वादशहस्तिकाभिः लताभिः सिंहासनं प्रज्ञप्तम्, षड्भिक्षुणीभिः श्रावस्तीं प्रविश्य रथ्यावीथिचत्वरशृङ्गाटकेष्वारोचितम्—सोऽस्माकं तादृशोऽववादक आगमिष्यति, योऽस्माकं तनुसल्यानि न द्रक्ष्यति। तेन संसारे चिरं वस्तव्यं भविष्यतीति। आयुष्मान् पन्थकः पूर्वाह्णे निवास्य पात्रचीवरमादाय श्रावस्तीं पिण्डाय प्राविक्षत्। 10 कृतभक्तकृत्यः पश्चाद्भक्तपिण्डपात्रप्रतिक्रान्तः पात्रचीवरं प्रतिसमय्य पादौ प्रक्षाल्य विहारं प्रविष्टः प्रतिसंलयनाय। अथायुष्मान् पन्थकः सायाह्ने प्रतिसंलयनाद् व्युत्थाय संघाटीमादाय अन्यतमेन भिक्षुणा पश्चाच्छ्रमणेन संप्रस्थितः। अनेकानि प्राणिशतसहस्राणि—कानि च कुतूहलजातानि, कानिचित् पूर्वकैः कुशलमूलैः संचोद्यमानानि। अद्राक्षीत् सा परिषत् आयुष्मन्तं पन्थकं दूरादेव। दृष्ट्वा च पुनः परस्परं पृच्छति—कतरोऽत्र भिक्षुण्यववादकः? 15 किं पुरःश्रमणः, आहोस्वित् पश्चाच्छ्रमणः? तत्रैके कथयन्ति—पुरःश्रमणः। तेऽवध्यायितुमारब्धाः—पश्यत भदन्त, संचिन्त्य वयं भिक्षुणीभिर्विहेठिताः। येन त्रिभिर्मासैरेका गाथा पठिता, सापि न प्रवृत्ता, स किं भिक्षुणीरववदिष्यति, धर्मं वा वाचयिष्यति? गच्छामः। अपरे कथयन्ति—तिष्ठामो यदि धर्मं देशयिष्यति, श्रोष्यामः। अथ न, गच्छामः। इति सा पर्षत् समवस्थिता। आयुष्मता पन्थकेन सिंहासनं दृष्टं प्रज्ञप्तकम्। दृष्ट्वा संलक्षयति—किं 20 तावत् प्रसादजाताभिः प्रज्ञप्तमाहोस्वित् विहेठनाभिप्रायाभिः? पश्यति—यावत् विहेठनाभिप्रायाभिः। आयुष्मता पन्थकेन गजभुजसदृशं बाहुमभिप्रसार्य तं सिंहासनं यथास्थाने स्थापितम्। आयुष्मान् पन्थकस्तत्र निषण्णः। स निषीदन् कैश्चित् दृष्टः, कैश्चित् न दृष्टः। अथात्रस्थ आयुष्मान् पन्थकस्तद्रूपं समाधिं समापन्नो यथा समाहिते चित्ते स्वे आसनेऽन्तर्हितः, पूर्वस्यां दिशि उपरिविहायसमभ्युद्गम्य पूर्ववत् यावत् ऋद्धिप्रातिहार्याणि विदर्श्य तान् 25 ऋद्ध्यभिसंस्कारान् प्रतिप्रस्रभ्य प्रज्ञप्त एवासने निषण्णः। निषद्य आयुष्मान् पन्थकस्ता भिक्षुणीरामन्त्रयते—मया भगिन्यस्त्रिभिर्मासैरेका गाथा पठिता। उत्सहेतव्यानि(?) श्रोतुमेकगाथायाः सप्तरात्रिंदिवसान्यन्यैः पदैर्व्यञ्जनैरर्थं विभक्तुम्?

पापं न कुर्यान्मनसा न वाचा
कायेन वा किंचन सर्वलोके। 30
रिक्तः कामैः स्मृतिमान् संप्रजानन्
दुःखं न स विद्यादनर्थोपसंहितम्॥ ६॥ इति।

C 494

C 495 सर्वपापस्य भगवान् कारणमाह—यावद्गाथार्थस्यार्थमधीतं याति, तावद् द्वादशभिः प्राणिसहस्रैः सत्यानि दृष्टानि । कैश्चिच्छ्रोतापत्तिफलं साक्षात्कृतम्, कैश्चित् सकृदागामिफलम्, कैश्चिदनागामिफलम्, कैश्चित् प्रव्रज्य सर्वक्लेशप्रहाणादर्हत्वं साक्षात्कृतम्, कैश्चिच्छ्रावकबोधौ चित्तान्युत्पादितानि, कैश्चित् प्रत्येकायां बोधौ, कैश्चिदनुत्तरायां सम्यक्संबोधौ
5 चित्तान्युत्पादितानि । यद्भूयसा सा परिषद् बुद्धनिम्ना धर्मप्रवणा संघप्राग्भारा व्यवस्थिता । अथायुष्मान् पन्थकस्तां परिषदं धर्म्यया कथया संदर्श्य समादाप्य समुत्तेज्य संप्रहर्ष्योत्थायासनात् प्रक्रान्तः । स भिक्षुभिरागच्छन् दृष्टः । ते संलक्षयन्ति—अद्यायुष्मता पन्थकेन महाजनकायः प्रसादितो भविष्यति । ते न शक्नुवन्त्यायुष्मन्तं पन्थकं संमुखमप्रियं प्रष्टुम् । तैः पश्चाच्छ्रमणः पृष्टः । आयुष्मन्, अद्य आयुष्मता पन्थकेन किं महाजनकायो न प्रसादितो
10 वा प्रसादितः ? आयुष्मता न कश्चित् अप्रसादितः । भगवता वाराणस्यां ऋषिवदने मृगदावे त्रिपरिवर्तं द्वादशाकारं धर्म्यं चक्रं प्रवर्तितम्, तदद्यायुष्मता पन्थकेनानुप्रवर्तितम् । यावद्गाथार्थं न विभजति, तावद् द्वादशभिः प्राणिसहस्रैः सत्यानि दृष्टानि ॥

तत्र भगवान् भिक्षूनामन्त्रयते स्म—एषोऽग्रो मे भिक्षवो भिक्षूणां मम श्रावकाणां चेतोविवर्तकुशलानां यदुत पन्थको भिक्षुः । भिक्षवो बुद्धं भगवन्तं पृच्छन्ति—पश्य भदन्त
15 द्वादशवर्गीयाभिरायुष्मतः पन्थकस्यानर्थं करिष्याम इत्यर्थ एव कृतः । भगवानाह—न भिक्षव एतर्हि यथा अतीतेऽप्यध्वनि आभिरनर्थं करिष्याम इत्यर्थ एव कृतः । तच्छ्रूयताम् ॥

भूतपूर्वमेवं भिक्षवोऽन्यतमस्मिन् कर्वटके ब्राह्मणः प्रतिवसति । तेन सदृशात्कुलात्कलत्रमानीतम् । स तया सार्धं क्रीडति रमते परिचारयति । तस्य क्रीडतो रममाणस्य परिचारयतो C 496 भूयः क्रीडति रमते परिचारयति यावत् द्वादश पुत्रा जाताः । तेन तेषां निवेशः कृतः ।
20 अपरेण समयेन तस्य पत्नी कालगता । सोऽपि ब्राह्मणो वृद्धावस्थायां जातः । अन्धीभूतस्य स्नुषा दुश्चारिण्यः । यदा तासां स्वामिनो बहिर्निर्गता भवन्ति, तदा ताः परपुरुषैः सार्धं परिचारयन्ति । स ब्राह्मणः शब्दे कृतावी । स जानाति—अयं मम पुत्रस्य शब्दः, अयं परपुरुषस्येति । स पुरुषाणां पदशब्दान् श्रुत्वा ताः स्नुषा गर्जयति । ताः संलक्षयन्ति—अयं ब्राह्मणोऽस्माकमनर्थाय प्रतिपन्नः । तास्तस्य चकव्योदनं काञ्जिकच्छिटिं चानुप्रयच्छन्ति ।
25 स ब्राह्मणः पुत्राणां कथयति—ममैताः स्नुषाश्चकव्योदनं काञ्जिकच्छिटिं चानुप्रयच्छन्ति । तैस्ता उक्ताः—किं कारणं यूयं तातस्य चकव्योदनं काञ्जिकच्छिटिं चानुप्रयच्छत ? ताः कथयन्ति—तस्य पुण्यानि परिक्षीणानि, अस्यार्थे पिपरीकायां तण्डुलाः प्रक्षिप्ता भवन्ति, चकव्योदनं परिवर्तते, दधि प्रक्षिप्तं काञ्जिकं परिवर्तते । ते कथयन्ति—किमेतदेवं भविष्यति ? ताः कथयन्ति—वयं युष्माकं प्रत्यक्षीकरिष्यामः । ताः कथयन्ति—अस्माभिः प्रतिज्ञातमिदानीं
30 निर्वोढव्यम् । ताभिः कुम्भकार उक्तः—शक्ष्यसि त्वं भद्रमुख एकमुखिके द्वे स्थाल्यौ कर्तुम् ? स कथयति—शक्ष्यामि । तेनैकमुखिके द्वे स्थाल्यौ कृते । ताभिरेकस्यां स्थाल्यां चकटितण्डुलाः प्रक्षिप्ताः, द्वितीयायां काञ्जिकम् । ताभिः स्वामिनां पुरस्तादेकस्य

स्थाल्यां तण्डुलाः प्रक्षिप्ता एकस्यां दधि। ताभिः साधितम्। कथयन्ति—आर्यपुत्रस्य किं तावत्तातस्तत्प्रथमतः परिभुक्तामाहोस्वित् यूयम्। ते कथयन्ति—तातस्तावत्परिभुक्ताम्। ताभिस्तेषां पुरस्तात्तस्यैकस्याः स्थाल्या उद्धृत्य चकव्योदनं दत्तं द्वितीयायाः काञ्जिकम्। तत एवं ताभिस्तेषामेकस्याः स्थाल्या उद्धृत्य शाल्योदनं दत्तं द्वितीयाया दधि उद्धृतम्। ते तस्य कथयन्ति—तात, तव पुण्यानि परिक्षीणानि। यत एकस्यां स्थाल्यां शालितण्डुलाः 5 C 497 प्रक्षिप्ताः, द्वितीयस्यां दधि, तच्चकव्योदनं काञ्जिकं च परिवृत्तम्। ब्राह्मणः संलक्षयति—मया हस्तोच्छ्रयशतैर्भोगाः समुदानीताः। किं कारणं मम पुण्यानि परिक्षीणानि? तेन तासामप्रत्यक्षं महानसं प्रविश्य पर्येषमाणेन हस्तसंस्पर्शेनैकमुखे द्वे स्थाल्यौ लब्धे। तेन गोपायिते। तेन तेषां पुत्राणामागतानां ते प्रदर्शिते—पश्यत, मम पुण्यानि परिक्षीणानि। गत्वा पश्यध्वमस्माकं गृह एव एकमुखी स्थाली। पुत्रक, अन्येषु गेहेषु न स्थालीद्वयं 10 त्वेकमुखमस्माकं मन्दभाग्यानाम्। तैस्ताः पत्न्यः सुताडिताः। ताः संलक्षयन्ति—अयं ब्राह्मणोऽस्माकमनर्थाय प्रतिपन्नकः। प्रघातयाम इति। तेन च प्रदेशेनाहितुण्डिक आगतः। ताः पृच्छन्ति—अस्ति सर्प इति? स कथयति—कीदृशं सर्पं मृगयथ जीवन्तमाहोस्वित् मृतकमिति? ताः कथयन्ति—मृतकम्। स संलक्षयति—किमेता मृतकेन सर्पेण करिष्यन्ति? नूनमेता एतं वृद्धं मारयितुकामा भविष्यन्ति। धर्मता खलु सर्पस्य रुषितस्य 15 द्वयोः स्थानयोर्विषं संक्रामति—शिरसि पुच्छे च। तेन रोषित्वा शिरः पुच्छं स्वयं छित्त्वा तासां मध्ये सर्पो दत्तः। ताभिर्जोमां साधयित्वा स ब्राह्मण उक्तः—तात, हिलिमां जोम पास्यसि? स ब्राह्मणः संलक्षयति—किमेता मे हिलिमां जोमां दास्यन्ति? नूनं किंचित् अभैषज्यं दत्तं भविष्यति। स संलक्षयति—पिबामि, यथा च तथा मरामि। ताभिस्तस्य हिलिमा जोमा दत्ता। तेन पीता। तस्य बाष्पेण पटले स्फुटिते। स द्रष्टुमारब्धः। स 20 निपत्यावस्थितः। कथयति च—मरामि मरामीति। ताः कथयन्ति—शीघ्रं मा पातु। ताः कथयन्ति—तात, भूयः पास्यसि? स कथयति—पास्यामीति। ताभिस्तस्य भूयः हिलिमा जोमा दत्ता। तेन भूयः पीता। तस्य तेन बाष्पेण भूयस्या मात्रया पटले स्फुटिते। स C 498 स्पष्टतरं द्रष्टुमारब्धः। ताः पूर्वं यथा तस्यान्धस्य ततो विश्वस्ता विद्धतवन्त्यस्तथैव विहर्तुमारब्धाः। स दण्डं गृहीत्वा उत्थितः। कथयति च—किं यूयं जानीथ इदानीमप्यहं न पश्यामि? पश्याम्यहमिदानीमिति। ताः सलज्जाः निष्पलायिताः॥ 25

किं मन्यध्वे भिक्षवः। योऽसौ ब्राह्मणः, एष एवासौ पन्थकस्तेन कालेन तेन समयेन। यास्तास्तस्य द्वादश स्नुषाः, एता एव ता द्वादशवर्गीयाः। तदाप्याभिरस्यानर्थं करिष्याम इत्यर्थ एव कृतः। एतर्ह्यपि आभिरस्यानर्थं करिष्याम इत्यर्थ एव कृतः॥

भिक्षवो बुद्धं भगवन्तं पृच्छन्ति—पश्य भदन्त भगवता आयुष्मान् पन्थकः परीत्तेनाववादेनाचोद्य संसारकान्तारादुत्तार्य अत्यन्तनिष्ठे अनुत्तरे योगक्षेमे निर्वाणे प्रतिष्ठापितः। 30 भगवानाह—न भिक्षव एतर्हि यथा अतीतेऽप्यध्वन्येष मया परीत्तेनाववादेनाचोद्य महत्यैश्वर्याधिपत्ये प्रतिष्ठापितः। तच्छ्रूयताम्॥

भूतभूतं भिक्षवोऽन्यतमस्मिन् कर्वटके गृहपतिः प्रतिवसति आढ्यो महाधनो महाभोगः। तेन सदृशात्कुलात्कलत्रमानीतम्। स तया सार्धं क्रीडति रमते परिचारयति। तस्य पुत्रो जातः। स पत्नीमामन्त्रयते—भद्रे, जातोऽस्माकं ऋणहरः। गच्छामि, अहं पण्यमादाय महासमुद्रमवतरामि। सा आह—एवं कुरुष्व। स गृहपतिः संलक्षयति—यद्यहमस्यै प्रभूतान्
5 कार्षापणान् दास्यामि, परपुरुषैः सार्धं विहरिष्यति। तेन तस्याः कार्षापणा न दत्ताः। तस्मिन् कर्पटके श्रेष्ठी प्रतिवसति तस्य गृहपतेर्वयस्यः। तस्य हस्ते प्रभूताः कार्षापणाः स्थापिताः—यदि मम पत्न्या भक्ताच्छादेन योगोद्वहनं कुर्याः। स पण्यमादाय महासमुद्रमवतीर्णः। तत्रैवानयेन व्यसनमापन्नः। तया स दारको ज्ञातिबलेन स्वहस्तबलेन वा आयापिता (पयित्वा) पालितो वर्धितः। स मातरं पृच्छति—अम्ब, किमस्माकं पिता पितामहाश्च
10 कर्माकार्षुः? सा संलक्षयति—यद्यस्य वक्ष्यामि महासमुद्रे पोतसंव्यवहारिण आसन् इति, स्थानमेतद्विद्यते यदेषोऽपि महासमुद्रमवतरिष्यतीति, तत्रैव अनयेन व्यसनमापत्स्यते। श्रुतमाहितस्तव पिता च पितामहाश्च इहैव वाणिज्यमकार्षुः। स कथयति—कार्षापणान् ममानुप्रयच्छ, यैरिहैव वाणिज्यं करिष्यामि। माता कथयति—कुतो मम कार्षापणाः? त्वं मया कथंचित् ज्ञातिबलेन स्वहस्तबलेन आयापितः पोषितः संवर्धितः। कुतो मे कार्षापणानां
15 विभवः? अपि त्वयं श्रेष्ठी तव पितृवयस्यो भवति। अस्य सकाशात् कार्षापणान् गृहीत्वा कर्म कुरु। स तस्य गृहं गतः। तस्यान्यतमेन पुरुषेण यावत् द्विरपि विनाशितः। स तमवसादयति। तस्य च गृहात् प्रेष्यदारिकायाः संकारतलस्योपरि मृतमूषिकां दृष्ट्वा प्रयच्छति छोरयितुम्। स श्रेष्ठी तस्य पुरुषस्य कथयति—यः पुरुषः स्यात्, शक्यते अनया मृतमूषिकया आत्मानमुद्धर्तुम्। तेन दारकेण श्रुतम्। स संलक्षयति—महात्मैषः। न
20 शक्यमनेन यद्वा तद्वा वक्तुम्। नूनं शक्यमनया मृतमूषिकया आत्मानमुद्धर्तुम्। स तस्या दारिकायाः पृष्ठतो निर्गतः। तया दारिकया संकारे छोरिता। स तां मृतमूषिकामादाय वीथीं गतः। तत्र वाणिजको बिडालेन क्रीडित्वा स्थितः। तेन तस्य बिडालस्य मृतमूषिका दर्शिता। स तां दृष्ट्वा उत्पतितुमारब्धः। तेन वाणिजकेन दारक उच्यते—अनुप्रयच्छ अस्य बिडालस्य मृतमूषिकाम्। स कथयति—किमयं कलिकया दीयते? मूल्य-
25 मनुप्रयच्छ। तेन तस्य कलायानामञ्जलिपूरो दत्तः। स संलक्षयति—यद्येतान् भक्षयिष्यामि, मूलमेव भक्षितं भविष्यति। स तान् भ्राष्ट्रे भर्जयित्वा शीतलस्य पानीयस्य वर्धनीयस्य पूर्णं कृत्वा तद्गृह्य तस्मात्स्थानकान्निष्क्रम्य यस्मिन् प्रदेशे काष्ठहारका विश्राम्यन्ति, तस्मिन् प्रदेशे गत्वावस्थितः। काष्ठहारका आगताः। तेनोक्ताः—मातुलाः, अर्पयत काष्ठभारकाः, मुहूर्तं विश्राम्यताम्। तैः काष्ठभाराः स्थापिताः। तेन तेषां कलायानां स्तोकं दत्तं शीतलं च
30 पानीयं पातम्। ते कथयन्ति—भागिनेय, क्व यास्यसि? काष्ठानाम्। भागिनेय, वयं तावत् कल्यमेवोत्थाय गत्वा इदानीमागच्छामः। त्वमिदानीं गच्छन् कियता आगमिष्यसि? तैस्तस्यैकैकं काष्ठमनुप्रदत्तम्। तस्य काष्ठमूलिका संपन्ना। स तां गृहीत्वा प्रतिनिवृत्तः। स तां विक्रीय

C 499 (margin, at line 8); C 500 (margin, at line 26)

कलायानां गृहीत्वा भर्जयित्वा उदकस्य कुम्भं पूरयित्वा तस्मिन्नेव प्रदेशे गत्वावस्थितः। ते काष्ठहारकास्तथैव तेन कलायैः संविभक्ताः, शीतलेन पानीयेन संतर्पिताः। ते तस्य कथयन्ति—भागिनेय, दिवसे दिवसे त्वं कलायान् पानीयं च गृहीत्वा आगम्य अत्रैव तिष्ठ। वयं तवोपरि काष्ठमूलिकामानयिष्यामः। स दिवसे दिवसे तथैव कर्तुमारब्धः। स तेषां कथयति—मातुल, मा यूयं काष्ठभारान् वीथीं नयथ। मम गृहे स्थापयत। युष्माक- 5 मेवं पिण्डितमूल्यं दास्यामि। तैस्तस्य गृहे काष्ठभारकाः स्थापिताः। अपरेण समयेन सप्ताहवर्दलिका जाताः। तेन तानि काष्ठभारकाणि विक्रीतानि। तस्य प्रभूतो लाभः संपन्नः। स संलक्षयति—एतत्प्रतिक्रुष्टतरं वाणिज्यानां यदुत काष्ठवाणिज्यम्। स संलक्ष- C 501 यति—अपि चन्दनकाष्ठेन काष्ठवाणिज्यमेव। यन्न्वहमुक्करिकापणं प्रसारयेयम्। तेन उक्करि- कापणः प्रसारितः। स धर्मेण व्यवहरति। तस्य तत्प्रभूतो लाभः संपन्नः। स संलक्ष- 10 यति—एतत् प्रतिक्रुष्टतरं वाणिज्यानां यदुत उक्करिकापणः। यन्न्वहं गान्धिकापणं प्रसारयेयम्। तेन गान्धिकापणः प्रसारितः। तस्य प्रभूतो लाभः संपन्नः। स संलक्षयति—एतदपि प्रति- क्रुष्टतरं च तद्वाणिज्यानां पूर्ववत्। तेन सर्वे हैरण्यिका अभिभूताः। तस्य मूषिकाहैरण्यको मूषिकाहैरण्यिक इति संज्ञा संवृत्ता। ते हैरण्यिकाः कथयन्ति—भवन्तः, सर्वे वयमनेन मूषिकाहैरण्यिकेनाभिभूताः। वयमेनं मानं ग्राहयामः, यथा महासमुद्रमवतरेत्, तत्रैवानयेन 15 व्यसनमापत्स्यते तथा करिष्याम इति। ते तस्य नातिदूरे स्थित्वा स्वैः कथासंलापेन तिष्ठन्ति—यथापि नाम भवन्तः पुरुषो हस्तिग्रीवायां गत्वा अश्वपृष्ठेन गच्छेत्, अश्वपृष्ठेन गत्वा शिबिकायां गच्छेत्, शिबिकायां गत्वा पद्भ्यां गच्छेत्, एवमेवास्य मूषिकाहैरण्यिकस्य पिता च पितामहाश्च समुद्रे पोतसंव्यवहारिण आसन्। एष इदानीं कृच्छ्रेण जीविकां कल्पयति हैरण्यिकापणं वाहयतीति। श्रुत्वा स कथयति—किं कथयत? ते कथयन्ति—तव पिता च 20 पितामहाश्च पोतसंव्यवहारिण आसन्। स त्वमिदानीं कृच्छ्रेण जीविकां कल्पयसि, हैरण्यि- कापणं वाहयसि? स गृहं गत्वा मातरं पृच्छति—अम्ब, सत्यमस्माकं पिता च पितामहाश्च महासमुद्रे पोतसंव्यवहारिण आसन्? सा संलक्षयति—नूनमनेन किंचित्कुतश्चित् श्रुतं स्यात्। तदप्रतिरूपं स्यात्, यदहं मृषावादेन वञ्चयेयम्। सत्यं पुत्र। स कथयति—अनु- जानीष्व, अहमपि महासमुद्रमवतरिष्यामि। सा कथयति—पुत्र, इहैव तिष्ठ। स भूयो भूयः 25 कथयति—गच्छामि। तस्य निर्बन्धं ज्ञात्वा अनुज्ञातः। तेन घण्टावघोषणं कृतम्—यो युष्माक- मुत्सहते मूषिकाहैरण्येन सार्धमशुल्केनागुल्मेनातरपण्येन महासमुद्रमवतरितुम्, स महासमुद्र- गमनीयं पण्यं समुदानयतु। पञ्चमात्रैर्वणिक्शतैर्महासमुद्रगमनीयं पण्यं समुदानीतम्। अथ मूषिकाहैरण्यिकः कृतमङ्गलकौतूहलस्वस्त्ययनः शकटैर्भारैर्मूटैः पिटकैरुष्ट्रैर्गोभिर्गर्दभैः पण्य- मारोप्य महासमुद्रं संप्रस्थितः। सोऽनुपूर्वेण महासमुद्रमवतरन्ननुप्राप्तः। ते वणिजो महासमुद्रं 30 C 502 दृष्ट्वा भीताः। नोत्सहन्ते वहनमभिरोढुम्। सार्थवाहः कर्णधारस्य कथयति—कथय कथय भोः पुरुष यथाभूतं महासमुद्रस्य वर्णम्। ततः कर्णधार उद्घोषयितुमारब्धः—सन्त्येतस्मिन्

महासमुद्रे इमान्येवंरूपाणि रत्नानि तद्यथा—मणयो मुक्ता वैडूर्यशङ्खशिलाप्रवाल रजतजात-
रूपमश्मगर्भो मुसारगल्वो लोहितका दक्षिणावर्तः । यो युष्माकमुत्सहते एवंरूपै
रत्नैरात्मानं सम्यक्सुखेन प्रीणयितुम्, मातापितरौ पुत्रदारान् दासीदासकर्मकरपौरुषेयं
मित्रामात्यज्ञातिसालोहितं कालेन कालं श्रमणब्राह्मणेभ्यो दक्षिणां प्रतिष्ठापयितुम्, मूर्ध-
5 गामिनीं सौभासिकीं सुखविपाकामायत्यां स्वर्गसंवर्तनीम्, स महासमुद्रमवतरतु। संपत्तिकामो
लोकः । महाजनकायोऽभिरूढो यतस्तद्वहनमसह्यं जातम् । सार्थवाहः संलक्षयति—
किमिदानीं वक्ष्यामि अवतरतेति? स कर्णधारस्य कथयति—घोषय भोः पुरुष महासमुद्रस्य
यथाभूतं वर्णम् । ततः कर्णधार उद्घोषितुमारब्धः—शृण्वन्तु भवन्तो जम्बुद्वीपका वणिजः ।
सन्त्यस्मिन् महासमुद्रे इमान्येवंरूपाणि महान्ति महाभयानि, तद्यथा तिमिभयं तिमिंगिलभयं
10 तिमितिमिंगिलभयमावर्तभयं कुम्भीरभयं शिशुमारभयमन्तर्जलगतानां पर्वतानामाघातभयम् ।
चौरा अप्यत्रागच्छन्ति नीलैः सितैर्वनचारिणः, अस्माकं सर्वेण सर्वं जीविताद्व्यवरोपयिष्यन्ति ।
येन युष्माकं प्रियमात्मानं परित्यक्त्वा मातापितरौ पुत्रदारं दासीदासकर्मकरपौरुषेयं
मित्रामात्यज्ञातिसालोहितं महासमुद्रमवतरतु । अल्पाः शूरा बहवः कातराः । महाजन-
कायोऽवतीर्णः, यतस्तद्वहनं सह्यं संवृत्तम् । ततः कर्णधारस्त्रिरुद्घोषणावघोषणं कृत्वा ततः
C 503 15 पश्चादेकां वरत्रां मुञ्चति, द्वित्रिवरत्रां मुञ्चति, यतस्तद्वहनं महाकर्णधारसंधानबलवद्वायुसंप्रेरितं
महामेघ इव संप्रस्थितोऽनुगुणेन वायुना यावद् रत्नद्वीपमनुप्राप्तम् । ततः कर्णधार
उद्घोषयितुमारब्धः—शृण्वन्तु भवन्तो जम्बुद्वीपका वणिजः, सन्त्यस्मिन् रत्नद्वीपे काचमणयो
रत्नसदृशाः। ते भवद्भिरुपपरीक्ष्योपपरीक्ष्य ग्रहीतव्याः । मा वः पश्चाज्जम्बुद्वीपप्राप्तानां
पश्चात्तापो भविष्यति । अस्मिन्नेव च रत्नद्वीपे क्रोञ्चकुमारिका नाम राक्षस्यः प्रतिवसन्ति ।
20 ताः पुरुषं तथा तथा उपलालयन्ति यथा तत्रैवानयेन व्यसनमापद्यन्ते । अस्मिन्नेव रत्नद्वीपे
मदनीयानि फलानि सन्ति । तानि यः परिभुङ्क्ते, स सप्तरात्रं मूर्च्छितस्तिष्ठति । तानि
भवद्भिर्न परिभोक्तव्यानि । अस्मिन्नेव च रत्नद्वीपेऽमनुष्याः प्रतिवसन्ति । ते मनुष्याणां सप्ताहं
मर्षयन्ति । सप्ताहस्यात्ययात् तादृशं वायुमुत्सृजन्ति येन वहनमपह्रियते यथापि तदकृत-
कार्याणाम् । यं श्रुत्वा ते वणिजोऽवहिता अप्रमत्ता अवस्थिताः । तैस्तद्वहनं रत्नानामुप-
25 परीक्ष्योपपरीक्ष्य पूरितं तद्यथा तिलतण्डुलकोलकुलत्थानाम् । ते अनुगुणेन वायुना
जम्बुद्वीपमनुप्राप्ताः । एवं यावत् सप्तकृत्वः संसिद्धयानपात्र आगतः । स मात्राऽभिहितः—
पुत्र, अत्र निवेशः क्रियतामिति । स कथयति—अग्रधनिकं तावच्छिनद्मि, ततः पश्चान्निवेशं
करिष्यामि । स तया उक्तः—पुत्र न तव पिता न पितामहो धनिकः कृतः, कुतस्तव
धनिको जातः? स कथयति—अम्ब, अहमेव जानामि । तेन चातूरत्नमय्यश्चतस्रो मूषिकाः
30 कारिताः । तेन सुवर्णस्य फेलां पूरयित्वा चतस्रो मूषिकाश्चतुर्षु पार्श्वेषु स्थापयित्वा श्रेष्ठिगृहं
गतः । स श्रेष्ठी तदा तस्यैव तद्वर्णं भाषमाणस्तिष्ठति—पश्यत भवन्तो मूषिकाहैरण्यिकः
कथं पुण्यमहेशाख्यो यं यमेव गृह्णाति तृणं वा लोष्टं वा सर्वं तत् सुवर्णं संपद्यते । स च

तथा कथासंलापेन तिष्ठति । दौवारिकेण चास्य गत्वा आरोचितम्—मूषिकाहैरण्यिको द्वारि तिष्ठति। स कथयति—प्रविशतु, मूषिकाहैरण्यिकं वा आनयेति । स प्रविश्य कथयति—इदं ते मूलम्, अयं लाभः। प्रतिगृह्यताम्। स आह—विस्मरामि, सत्यं यत्तव किंचिद्दत्तकमिति । अहं ते स्मारयिष्यामि । तेन स्मारितम्। स पृच्छति—कस्य त्वं पुत्र इति । अमुकस्य गृहपतेः । श्रेष्ठी कथयति—त्वं मम वयस्यपुत्रो भवसि । मयैव तव दातव्यम्। तव पित्रा गच्छता मम हस्ते कार्षापणाः स्थापिताः । तेन श्रेष्ठिना दुहिता सर्वालंकारविभूषिता तस्य भार्यार्थमनुप्रदत्ता ॥

किं मन्यध्वे भिक्षवो योऽसौ श्रेष्ठी, अहमेव तेन कालेन तेन समयेन । योऽसौ मूषिकाहैरण्यिकः, एष एव पन्थकस्तेन कालेन तेन समयेन । तदाप्येष मया परीत्तेनाववादेनाचोद्य महत्यैश्वर्ये प्रतिष्ठापितः । एतर्ह्यप्येष मया परीत्तेनाववादेनाववाद्य संसारकान्तारादुत्तार्य अत्यन्तनिष्ठेऽनुत्तरे योगक्षेमे निर्वाणे प्रतिष्ठापितः ॥

भिक्षवो बुद्धं भगवन्तं पृच्छन्ति—किं भदन्त पन्थकेन कर्म कृतं यस्य कर्मणो विपाकेन धन्वः परमधन्वश्चूडः परमचूडो जातः ? पन्थकेनैव भिक्षवः कर्माणि कृतानि । न भिक्षवः कर्माणि कृतान्युपचितानि बाह्ये पृथिवीधातौ विपच्यन्ते, नाब्धातौ, न तेजोधातौ, न वायुधातौ, अपि तूपात्तेष्वेव स्कन्धधात्वायतनेषु विपच्यन्ते शुभान्यशुभानि च ।

न प्रणश्यन्ति कर्माणि कल्पकोटिशतैरपि ।
सामग्रीं प्राप्य कालं च फलन्ति खलु देहिनाम् ॥ ७ ॥

भूतपूर्वं भिक्षवो विंशतिवर्षसहस्रायुषि प्रजायां काश्यपो नाम शास्ता लोक उत्पन्नस्तथागतोऽर्हन् सम्यक्संबुद्धो विद्याचरणसंपन्नः सुगतो लोकविदनुत्तरः पुरुषदम्यसारथिः शास्ता देवानां च मनुष्याणां च बुद्धो भगवान् । स विंशतिभिर्भिक्षुसहस्रैः परिवारो वाराणसीमुपनिश्रित्य विहरति स्म । तस्यैव प्रवचने भिक्षुरासीत् त्रिपिटः । अनेन तत्र मात्सर्येण न कस्यचिच्चतुष्पदिकापि गाथा उद्दिष्टा । भूयोऽन्यस्मिन् कर्पटके सौकरिक आसीत् । तस्मात् कर्पटकान्नदीपारे द्वितीयं कर्पटकम् । तत्र पर्वणी प्रत्युपस्थिता । स संलक्षयति—यदि सूकरान् प्रघात्य नयिष्यामि, मांसस्य क्रयिको न भविष्यति, क्लेदं गमिष्यति । जीवन्तमेव गृहीत्वा गच्छामि । तत्र तत्र प्रघात्य नेष्यामि, यत्र यत्र क्रायिकोऽस्ति । स प्रभूतान् सूकरान् जानुषु बद्ध्वा नावमारोप्य संप्रस्थितः । सा नौस्तैः परिस्पन्दमानैर्बाडिता । तत्रैवानयेन व्यसनमापन्नः । सोऽपि सौकरिकोऽत्र स्रोतेनोह्यमानः । तस्या नद्यास्तीरे पञ्च प्रत्येकबुद्धशतानि प्रतिवसन्ति । तेषामेकः प्रत्येकबुद्धः पानीयस्यार्थे नदीं गतः । तेन स दृष्टः । स संलक्षयति—किं तावदयं मृतः आहोस्विज्जीवतीति ? पश्यति यावज्जीवति । स तेन गजभुजसदृशं बाहुमभिप्रसार्य उद्धृत्य वालुकायाः स्थलं कृत्वा तत्रावमूर्धकः स्थापितः । तस्य कायात् पानीयं निःसृतम् । स व्युत्थितः । मनुष्यपदानि पश्यति । स तेन पादानुसारेण गतो यावत्पश्यति पञ्चमात्राणि प्रत्येकबुद्धशतानि । स तेषां पत्रेण पुष्पेण फलेन दन्तकाष्ठेन चोपस्थानं कर्तुमारब्धः । ते तस्य पात्रशेषमनुप्रयच्छन्ति । तेन भुक्तम् । अथ

ते प्रत्येकबुद्धाः पर्यङ्कं बद्ध्वा ध्यायन्ति। तदा सोऽप्येकान्ते स्थित्वा पर्यङ्कं बद्ध्वा ध्यायति। स तत्रासंज्ञिकमुत्पाद्य असंज्ञिसत्त्वेषु देवेषूपपन्नः॥

किं मन्यध्वे भिक्षवः। योऽसौ काश्यपस्य सम्यक्संबुद्धस्य प्रवचने भिक्षुस्त्रिपिटः आसीत्, पश्चादसौ सौकरिकः, एष एव पन्थको भिक्षुः। यदनेन मात्सर्येण न कस्यचि-
5 च्चतुष्पदिका गाथा उद्दिष्टा, यच्च सूकरान् प्रघात्य यच्चासंज्ञिसत्त्वेभ्य इहोपपन्नः, तस्य कर्मणो विपाकेन चूडः परमचूडो धन्वः परमधन्वः संवृत्तः॥

C 506 यदा आयुष्मान् पन्थकः स्वाख्याते धर्मविनये प्रव्रजितः, जीवकेन श्रुतम्—पन्थकः स्वाख्याते धर्मविनये प्रव्रजित इति। स संलक्षयति—यदि भगवान् राजगृहमागमिष्यति, अहं बुद्धप्रमुखं भिक्षुसंघं भोजयिष्यामि स्थापयित्वा भदन्तं पन्थकम्। भगवान् यथाभिरम्यं श्रावस्त्यां
10 विहृत्य येन राजगृहं तेन चारिकां प्रक्रान्तः। अनुपूर्वेण चारिकां चरन् राजगृहमनुप्राप्तः। राजगृहे विहरति वेणुवने कलन्दकनिवापे। अश्रौषीज्जीवकः कुमारभूतः—भगवान् मगधेषु जनपदचारिकां चरन् राजगृहे विहरति वेणुवने कलन्दकनिवापे। श्रुत्वा पुनर्येन भगवां-स्तेनोपसंक्रान्तः। उपसंक्रम्य भगवतः पादौ शिरसा वन्दित्वैकान्ते निषण्णः। एकान्तनिषण्णं जीवकं कुमारभूतं भगवान् धर्म्यया कथया संदर्शयति समादापयति समुत्तेजयति संप्रहर्षयति।
15 अनेकपर्यायेण धर्म्यया कथया संदर्श्य समादाप्य समुत्तेज्य संप्रहर्ष्य तूष्णीम्। अथ जीवकः कुमारभूतः उत्थायासनादेकांसमुत्तरासङ्गं कृत्वा येन भगवांस्तेनाञ्जलिं प्रणम्य भगवन्तमेत-दवोचत्—अधिवासयतु मे भगवाञ्छ्वोऽन्तर्गृहे भक्तेन सार्धं भिक्षुसंघेन। दुरासदा बुद्धा भगवन्तो दुष्प्रसहाः। स न शक्नोति भगवन्तं वक्तुं स्थापयित्वा भदन्तं पन्थकम्। अथ जीवकः कुमारभूतो भगवतो भाषितमभिनन्द्यानुमोद्य भगवतोऽन्तिकात् प्रक्रान्तो येनायुष्मा-
20 नानन्दस्तेनोपसंक्रान्तः। उपसंक्रम्यायुष्मत आनन्दस्य पादौ शिरसा वन्दित्वा एकान्ते निषण्णः। एकान्तनिषण्णो जीवकः कुमारभूत आयुष्मन्तमानन्दमिदमवोचत्—यत्खलु भदन्त आनन्द जानीयाः—मया बुद्धप्रमुखो भिक्षुसंघः श्वोऽन्तर्गृहे भक्तेनोपनिमन्त्रितः स्थाप-यित्वा भदन्तं पन्थकम्। यथा ते जीवक कुशलानां धर्माणां वृद्धिर्भवति। अथ जीवकः कुमारभूत आयुष्मत आनन्दस्य भाषितमभिनन्द्यानुमोद्य आयुष्मत आनन्दस्य पादौ शिरसा
C 507
25 वन्दित्वा प्रक्रान्तः। अथायुष्मानानन्दोऽचिरप्रक्रान्तं जीवकं कुमारभूतं विदित्वा येनायुष्मान् पन्थकस्तेनोपसंक्रान्तः। उपसंक्रम्यायुष्मन्तं पन्थकमिदमवोचत्—यत्खल्वायुष्मन् पन्थक जानीयाः—जीवकेन कुमारभूतेन बुद्धप्रमुखो भिक्षुसंघः श्वोऽन्तर्गृहे भक्तेनोपनिमन्त्रितः स्थापयित्वा आयुष्मन्तं पन्थकम्। यथास्य भदन्तानन्द कुशलानां धर्माणां वृद्धिर्भवति। स जीवकः कुमारभूतस्तामेव रात्रिं शुचि प्रणीतं खादनीयं भोजनीयं समुदानीय कल्यमेवोत्थाय
30 आसनानि प्रज्ञप्य उदकमणीन् प्रतिष्ठाप्य भगवतो दूतेन कालमारोचयति—समयो भदन्त, सज्जं भक्तं यस्येदानीं भगवान् कालं मन्यते। अथ भगवान् पूर्वाह्णे निवास्य पात्रचीवरमादाय भिक्षुगणपरिवृतो भिक्षुसंघपुरस्कृतो येन जीवकस्य कुमारभूतस्य निवेशनं तेनोपसंक्रान्तः।

उपसंक्रम्य पुरस्ताद्भिक्षुसंघस्य प्रज्ञप्त एवासने निषण्णः। निषद्य भगवानायुष्मन्तमानन्दमामन्त्रयते—पन्थकस्यानुगन्ती मोक्तव्या। जीवकः कुमारभूतः सौवर्णभृङ्गारं गृहीत्वा वृद्धान्ते तिष्ठति। भगवान् वारिधारां न प्रतिगृह्णाति। जीवकः कुमारभूतः कथयति—किं कारणं भगवन् वारिधारां न प्रतिगृह्णाति। भगवानाह—न तावद्भिक्षुसंघ इति समग्र इति। जीवकः कुमारभूतः कथयति—भगवन्, कोऽनागत इति। भगवानाह—पन्थको भिक्षुः संघः। 5 जीवकः कथयति—भगवन्, नासौ मया निमन्त्रित इति। भगवानाह—न त्वया जीवक बुद्धप्रमुखो भिक्षुसंघो निमन्त्रितः? भगवन्, निमन्त्रितः। किमसौ भिक्षुसंघाद्बहिर्न वा? भगवान् कथयति जीवकम्—गच्छ त्वं शब्दापय। जीवकः कुमारभूतः संलक्षयति—किं चाप्यहं भगवतो गौरवेण शब्दापयामि, न सत्कृत्य परिवेषयिष्यामि। तेन दूतोऽनुप्रेषितः—गच्छ, शब्दापयस्व। आयुष्मानपि पन्थकश्च त्रयोदशभिक्षुशतानि निर्मायावस्थितः। तेन दूतेन 10　C 508 गत्वा पन्थक इति शब्दो मुक्तः। अनेकैर्भिक्षुभिः प्रतिवचनं दत्तम्। स दूत आगत्य जीवकस्य कथयति—तथैव वेणुवनं कलन्दकनिवापो भिक्षूणां पूर्णस्तिष्ठति। भगवानाह—गच्छ त्वं कथय यो भूतपन्थकः स आगच्छतु। स गत्वा कथयति—यो भूतपन्थकः स आगच्छतु। आयुष्मान् पन्थकस्तत्र गत्वा स्वस्यां गत्यां निषण्णः। जीवकः कुमारभूतो बुद्धप्रमुखं भिक्षुसंघं परिवेषयितुमारब्धः। आयुष्मन्तं पन्थकं न सत्कृत्य परिवेषयति। भगवान् संलक्षयति—सुमेरुप्रख्ये 15 महाश्रावके जीवकः कुमारभूतः क्षान्तिं गृह्णाति। गुणोद्भावना अस्य कर्तव्या। भगवता आयुष्मत आनन्दस्य पात्रं नानुप्रदत्तम्। धर्मता खलु न तावत् स्थविरस्थविराणां भिक्षूणां पात्राणि प्रतिगृह्यन्ते, यावद्भगवतः पात्रप्रतिग्रही न भविष्यति। आयुष्मान् पन्थकः संलक्षयति—किं कारणं भगवतः स्थविरस्थविराणां भिक्षूणां पात्राणि न गृह्यन्ते? मया अत्र गुणोद्भावना कर्तव्या। आयुष्मता पन्थकेनार्धासनं कृत्वा गजभुजसदृशं बाहुमभिप्रसार्य 20 भगवतः पात्रं गृहीतम्। कुमारभूतेन जीवकेन वृद्धान्ते स्थितेन दृष्टम्। स संलक्षयति—कोऽप्ययं स्थविरो भिक्षुः। ऋद्धिप्रातिहार्यं विदर्शयति। स पात्रानुसारेण गतो यावत्पश्यत्यायुष्मन्तं पन्थकम्। स दृष्ट्वा मूर्छितकस्तिष्ठति। स जलपरिषेकप्रत्यागतप्राण आयुष्मतः पन्थकस्य पादयोर्निपत्य क्षमापयति, गाथां च भाषते—

नित्यं चैत्यगुणो हि चन्दनरसो नित्यं सुगन्ध्युत्पलं　　25
　नित्यं भासति काञ्चनस्य विमलं वैडूर्यशुद्धं द्रवम्।
नित्यं पापजने हि क्रोधमतुलं पाषाणरेखोपमं
　नित्यं चार्यजनेषु प्रीतिर्वसते क्षान्तिर्ध्रुवा ह्यर्हताम्॥ ८॥

आयुष्मान् पन्थकः कथयति—क्षान्तं जीवक॥

भिक्षवो बुद्धं भगवन्तं पृच्छन्ति—पश्य भदन्त, यदा जीवकः कुमारभूत आयुष्मतः 30　C 509 पन्थकस्य गुणानामनभिज्ञस्तदा असत्कारः प्रयुक्तः, यदा गुणानामभिज्ञस्तदा पादयोर्निपत्य

क्षमापयति। भगवानाह—न भिक्षव एतर्हि यथातीतेऽध्वन्येषोऽस्य गुणानामनभिज्ञः, तदा असत्कारं प्रयुक्तवान्। यदा गुणानामभिज्ञस्तदा पादयोर्निपत्य क्षमापितवान्। तच्छ्रूयताम्॥

भूतपूर्वं भिक्षव उत्तरापथात् सार्थवाहः पञ्चशतमश्वपण्यमादाय मध्यदेशमागतः। तस्य च वडवायाः कुक्षावश्वाजानेयोऽवक्रान्तः। स यमेव दिवसमवक्रान्तस्तमेव दिवसमुपादाय 5 तेऽश्वा न भूयो हेषन्ते। सार्थवाहः संलक्षयति—किं च ममाश्वानां कश्चिद् रोगः प्रादुर्भूतो भविष्यति येन ते न हेषन्ते? अपरेण समयेनाश्वा वडवा प्रसूता। तस्याः किशोरको जातः। स यमेव दिवसमुपादाय तेऽश्वाः संचर्तुमपि नारब्धाः। सार्थवाहः संलक्षयति—नूनमयं दौर्भाग्यसत्त्वो जातः अस्य दोषेण ममाश्वानां रोगः प्रादुर्भूतः। स तां वडवां नित्यमेव वाहयति। तस्या नवयवसंपन्नयोग्याशनमनुप्रयच्छति। सोऽनुपूर्वेण पूजितं नामाधिष्ठानमनु-10 प्राप्तः। तस्य तत्र वर्षारात्र्यः प्रत्युपस्थिताः। स संलक्षयति—यदि गमिष्यामि, अश्वानां खुराः क्लेदं गमिष्यन्ति, अपण्यीभविष्यन्ति। इहैव वर्षां तिष्ठामि। स तस्यैव वर्षामुषितस्य तद्वासिनो ये शिल्पिनस्ते स्वेन शिल्पेनोपस्थानं कुर्वन्ति। तस्य गमनकाले शिल्पिन उपसंक्रान्ताः। तेषां तेन संविभागः कृतः। तत्रैकः कुम्भकारः प्रतिवसति। तेनापि तस्य स्वेन शिल्पेनोप-स्थानं कृतम्। स पत्न्याभिहितः—आर्यपुत्र, स सार्थवाहो गच्छति। गच्छ, त्वं गत्वा किंचि-15 द्याचस्व। तस्माच्चलितस्य मृत्पिण्डं गृहीत्वोपस्थितः। स तेन सार्थवाहेन दृष्टः। स तस्य कथयति—भोः पुरुष, अतिचिरेण त्वमागतः। मम किंचिद्दातव्यम्। स आह—सर्वं गतम्। तस्यापि सार्थवाहस्य तस्य किशोरस्यान्तिकेऽमङ्गलबुद्धिः। स कथयति—अपि त्वयमेकः किशोरस्तिष्ठति, यदि प्रियोऽसि, गृहीत्वा गच्छ। कुम्भकारः कथयति—शोभनम्। अहं भाण्डानि करिष्यामि, एष भेत्स्यते। स किशोरकस्तस्य कुम्भकारस्य पादौ जिह्वया लेढु-20 मारब्धः। तस्याश्वस्यान्तिकेऽनुनय उत्पन्नः। स तं गृहीत्वा गतः। स पत्न्या उक्तः—अस्ति किंचित्त्वया तस्य सकाशाल्लब्धम्? लब्धम्। अयं किशोरकः। शोभनम्। त्वं भाण्डानि करिष्यसि, एष भेत्स्यते। स किशोरकोऽस्याः पादानि लेढुमारब्धः। तस्या अपि तस्यान्तिके-ऽनुनय उत्पन्नः। स पक्वमानानां भाण्डानां मध्ये परिसर्पन्न किंचिद्भाण्डं भिनत्ति। सा तस्य पत्नी कथयति—शोभनम्। अयं किशोरकः संप्रजानन् परिसर्पति। अपरेण समयेन 25 कुम्भकारो मृत्तिकार्थमागतः। स किशोरकस्तस्य पृष्ठतोऽनुसरन्ननुबद्धः। तेन कुम्भकारेण मृत्तिकाप्रसेवकः पूरितः। तेन किशोरकेन पृष्ठमवनामितम्। तेन तस्य मृत्तिकायाः प्रसेवकः पृष्ठमारोपितः। स तं गृहीत्वा गृहमागतः। तेन कुम्भकारेण पत्नी उक्ता—भद्रे, शोभनः किशोरकः। न भूयो मया मृत्तिका वोढव्या भविष्यति। अहमस्य तत्रारोपयिष्यामि, त्वमिहावतारयिष्यसि। स तस्य तुषान् कुटिं चानुप्रयच्छति॥

C 510

30 तेन कालेन तेन समयेन वाराणस्यां ब्रह्मदत्तो नाम राजा राज्यं कारयति ऋद्धं च स्फीतं च बहुजनमनुष्यं च। तस्याश्वाजानेयः कालगतः। सामन्तराज्यैः श्रुतम्—ब्रह्मदत्तस्य राज्ञोऽश्वाजानेयः कालगत इति। तैस्तस्य संदिष्टम्—करप्रत्यायान् वा अनुप्रयच्छ उद्यानं

वा। ते निर्गतकण्टकेऽनुवरोध्य आनयिष्यामः। स तेषां करप्रत्यायान् नानुप्रयच्छति, नापि तं स उद्यानं समागतः। सार्थवाहोऽनुपूर्वेण वाराणसीनगरमनुप्राप्तः। ब्रह्मदत्तेन राज्ञा श्रुतम्—उत्तरापथात् सार्थवाहोऽश्वपण्यमादाय वाराणसीमनुप्राप्त इति। सोऽमात्यानामन्त्रयते स्म—भवन्तः, कियच्चिरं मयेह प्रविष्टेन स्थातव्यम्? गच्छत, अश्वाजानेयं पर्येषध्वम्। C 511
ते सार्थवाहस्य सकाशं गताः। तैस्तेऽश्वा दृष्टाः। तेऽन्योन्यं कथयन्ति—भवन्तः, आजानेया- 5
स्तेऽश्वाः। न चात्र कश्चिदश्वाजानेयो विद्यते। सार्थवाहं दृष्ट्वा ते कथयन्ति—भवन्तो-ऽश्वावडवाया अश्वाजानेयो जातः। स च न दृश्यते। सार्थवाहमुपसंक्रम्य पृच्छन्ति—अस्ति कश्चिदश्वस्त्वया विक्रीतः कस्यचिद्वा दत्त इति? स कथयति—नास्ति कश्चिद्विक्रीतः। अपि त्वस्ति मया पूजितकेऽधिष्ठानेऽमङ्गलकः किशोरकः कुम्भकारस्य दत्त इति। तेऽन्योन्यं कथ-यन्ति—भवन्तः, महामूर्खोऽयं सार्थवाहः, योऽयं मङ्गलमपहायामङ्गलानेवादायागत इति। ते 10
राजानमवलोक्य पूजितकं गताः। ते तं कुम्भकारमुपसंक्रान्ताः। उपसंक्रम्य कथयन्ति—किमनेन किशोरकेन करोषि? स आह—एष मम मृत्तिकां वहति। ते कथयन्ति—वयं ते तथा गर्दभमनुप्रयच्छामः, त्वमस्माकममुमनुप्रयच्छस्व। कथयति—एष मे शोभन इति। चतुर्गर्दभयुक्तं शकटमनुप्रयच्छामः। स कथयति—एष मम शोभन इति। ते कथयन्ति—एवं चेत् संप्रधारय वयं श्वो भूय आगमिष्यामः। इत्युक्त्वा प्रक्रान्ताः। स 15
किशोरकः कथयति—किमर्थं नानुप्रयच्छसि? किं त्वं जानासि मया मृत्तिका वोढव्या तुषाश्च कुटिसकण्टं भक्षितव्यम्। मया राजा क्षत्रियो मूर्धाभिषिक्तो वोढव्यः, सौवर्णस्थाले मधुम्रक्षितका मूलका भक्षितव्याः। ते यदि संकथयन्ति किशोरक इति, वक्तव्याः—किं लज्जध्वं वक्तुमश्वाजानेय इति? श्वः पुनरागत्वा ते कथयिष्यन्ति मूल्येनानुप्रयच्छेति। वक्तव्याः—सुवर्णलक्षं वानुप्रयच्छथ यावद्वा दक्षिणेन सक्थ्ना करिष्यति तावदनुप्रयच्छथ। 20
तेऽपरस्मिन् दिवसे उपसंक्रम्य पृच्छन्ति—भोः पुरुष, संप्रधारितं त्वया? संप्रधारितम्—किं लज्जध्वं वक्तुमश्वाजानेय इति? ते कथयन्ति—मूर्खः स एषः। किमेष ज्ञास्यति? एष अश्वाजानेयो धारयति। एतदेव तेन सार्थवाहेनास्यारोचितं भविष्यति। ते कथयन्ति—अश्वाजानेयो भवतु। मूल्येनानुप्रयच्छ। स कथयति—सुवर्णलक्षं वानुप्रयच्छथ, यावद्वा सुवर्णलक्षं दक्षिणेन सक्थ्ना करिष्यति। ते संलक्षयन्ति—बलवानेषः। स्थानमेतद्विद्यते यत् 25
प्रभूततरमाकर्षयति। सुवर्णलक्षमनुप्रयच्छामः। तैर्ब्रह्मदत्तस्य राज्ञः संदिष्टं सुवर्णलक्षेण अश्वाजानेयो लभ्यते। राज्ञापि संदिष्टम्—यूयं यावता मूल्येन तावता गृह्णीत। तैः सुवर्ण-लक्षेण गृहीतः। ते तमादाय वाराणसीमागताः। स तैश्च मन्दुरायां प्रतिष्ठापितः। तस्य परमयोग्याशनं दीयते। स तं न परिभुङ्क्ते। किं सरोगो भवद्भिरश्वाजानेय आनीतः? अपि तु समनुयुञ्ज्यामहे तावदेनम्। अथ सूतो गाथां भाषते— 30 C 512

स्मरसि तुरग घटिकरस्य शालां

किमिह*विधैर्य विप्रयुक्तः।

परिशिथिलशिरास्थिचर्मगात्रः
खदशनचूर्णितघासस्य चारी ॥ ९ ॥
न चरसि बहुमतस्तदर्थे
मासीदिह हि चर यानसहस्रपूर्णयायी ।
5 ह्यवसनमिदं तृषापनीतं
न चरसि किं वद मेऽद्य साधु पृष्टः ॥ १० ॥
तमकथयदमर्षितः सकोपं
परमयवार्जवधैर्यसंप्रयुक्तः ।
उपशममथ संप्रचिन्त्य तस्मात्
10 तुरगवरो नरसूतमैत्रबुद्धिः ॥ ११ ॥
त्वमिह विधिहितप्रदाभिमानी
न च विहितो भवतो यथावदस्मि ।
C 513 निधनमहमिह प्रयायमाशु
न च विदुषाय तरेय पूर्व्याम् ॥ १२ ॥
15 सुचिरमपि हि न सज्जनावमानो
यदि गुणवानसि सौम्य नात्रमानः ।
क्षणमपि खलु सज्जनावमानो
यदि गुणवानसि नावमानः ॥ १३ ॥

सूतो राज्ञः कथयति—देवस्यानुपूर्वी न कृता येनैष यवसयोग्याशनं न गृह्णाति। 20 कास्यानुपूर्वी कृता? अस्यायमुपचारः। सार्धतृतीयानि योजनानि मार्गशोभा कर्तव्या। राजाभिषिक्तश्चतुरङ्गेन बलकायेन सार्धं प्रत्युद्गच्छति। यस्मिन् प्रदेशे स्थाप्यते, स प्रदेशस्ताम्रपट्टैर्बध्यते। राज्ञो ज्येष्ठपुत्रः। स तस्य शतशलाकं छत्रं मूर्ध्नि धारयति। राज्ञो ज्येष्ठा दुहिता सौवर्णेन मणिव्यजनेन मक्षिकान् वारयति। राज्ञोऽग्रमहिषी सौवर्णस्थाले मधुम्रक्षितकान् मूलान् भक्षयतो धारयति। राज्ञोऽग्रामात्यः सौवर्णेन लक्षणेन लड्डीश्छोरयति। राजा कथयति—एष 25 नाम राजा, नाहं स राजेति। सूतः कथयति—देव, नास्य सर्वकालमेष उपचारः क्रियते। अपि तु सप्ताहस्यात्ययाद्विधेयो भवति। राजा कथयति—यत्तावदतीतं न शक्यं तत्पुनः कर्तुम्, यदवशिष्टं तत्क्रियताम्। यस्मिन् प्रदेशे ताम्रपट्टैर्बद्धः, तस्य राज्ञो ज्येष्ठः पुत्रः शतशलाकां धारयति, राज्ञो ज्येष्ठा दुहिता सौवर्णमणिमयवालव्यजनेन मक्षिकान् वारयति, राज्ञोऽग्रमहिषी C 514 सौवर्णेन स्थालेन मधुम्रक्षितकान् मूलान् भक्षयतो धारयति, राज्ञोऽमात्यः सौवर्णेन लक्षणेन 30 लड्डीश्छोरयति। तमनुनयति पार्थिवः। ससृतपरमसुगन्धिविलेपनानुधारी मधुरमधुरकृतान्तरानुरागा नृपमहिषी तुरगोत्तमाय दत्ता राज्ञा। उद्यानभूमिं निर्गन्तुकामोऽस्याश्वाजानेय उपगम्य पृष्ठमुन्नामयति। राजा सूतं पृच्छति—राजा अस्य पृष्ठं दुःखयति। स कथयति—किं तु राजा

दुःखमधिरोक्ष्यतीति। यतोऽनेनावनामितं स राजा तमभिरुह्य संप्रस्थितः। तस्य गच्छतः पानीयमागतम्। स तत्र नावतरति। राजा सूतं पृच्छति—एषो बिभेति? देव, नैष बिभेति। अपि तु मा राजानं पुच्छोदकेन सेक्ष्यामीति। तस्य तत्पुच्छं सौवर्णायां नालिकायां प्रक्षिप्तम्। स तं पानीयमुत्तीर्णः। स उद्यानं गत्वा प्रमत्तोऽवस्थितः। सामन्तराजैः श्रुतम्—यथा राजा ब्रह्मदत्त उद्यानं गत इति। तैरागत्य नगरस्य द्वाराणि बन्धयन्ति। राज्ञा ब्रह्मदत्तेन श्रुतं सामन्तराजैर्नगरद्वाराणि निगृहीतानीति। सोऽश्वाजानेयमभिरूढः। अन्तरा च वाराणस्यन्तरा चोद्यानमत्रान्तरा ब्रह्मावती नाम पुष्किरिण्युत्पलकुमुदपुण्डरीकसंछन्ना। सोऽश्वाजानेयः पद्मोपरि सरन् वाराणसीं प्रविष्टः। राजा तुष्टोऽमात्यानां कथयति—भवन्तः, यो राज्ञः क्षत्रियस्य मूर्ध्नाभिषिक्तस्य जीवितमनुप्रयच्छति, किं तस्य कर्तव्यम्? देव, उपार्धराज्यं दातव्यम्। राजा कथयति—तिर्यगेषः। किमस्योपार्धराज्येन? अपि त्वेनमागम्य सप्ताहं दानानि दीयन्ताम्, पुण्यानि क्रियन्ताम्, अकालकौमुदी च क्रियताम्। अमात्यैः सप्ताहं दानानि दातुमारब्धानि, पुण्यानि कर्तुमारब्धानि, सप्ताहमकालकौमुदी प्रस्थापिता। सार्थवाहः पुरुषान् पृच्छति—भवन्तः, किमकालकौमुदी वर्तते? तेऽस्य कथयन्ति—पूजितं नामाधिष्ठानम्। ततः कुम्भकारस्य सकाशात् सुवर्णलक्षेणाश्वाजानेयं गृहीत्वा इहानीतम्। तेनाद्य राज्ञो जीवितं दत्तम्। तमागम्य सप्ताहं दानानि दातुमारब्धानि, पुण्यानि क्रियन्ते, अकालकौमुदी च प्रस्थापिता। सार्थवाहः संलक्षयति—यो मया छोरितो नाम, स एष किशोरकोऽश्वाजानेयः स्यात्? तत्तावद्गत्वा पश्यामि। स तस्य सकाशं गतः। स तेनाश्वाजानेयेनोक्तः—भोः पुरुष, किं त्वया तेषामश्वानां सकाशाल्लब्धम्? मयैकाकिनैव तस्य कुम्भकारस्य सुवर्णलक्षं दत्तम्। स मूर्छितकः पृथिव्यां निपतितः। जलपरिषेकेन प्रत्यागतप्राणः पादयोर्निपत्य क्षमापितवान्॥

किं मन्यध्वे भिक्षवो योऽसौ सार्थवाहः, एष एव जीवकस्तेन कालेन तेन समयेन। योऽश्वाजानेयः, एष एव पन्थकस्तेन कालेन तेन समयेन। तदापि यदा अस्यैष गुणानामनभिज्ञः, तदास्यासत्कारं प्रयुक्तवान्। यदा तु गुणानामभिज्ञः, तदा पादयोर्निपत्य क्षमापितवान्। एतर्ह्यप्येष यदा गुणानामनभिज्ञः, तदा असत्कारं प्रयुक्तवान्। यदा गुणानामभिज्ञः, तदा पादयोर्निपत्य क्षमापयति॥

इति श्रीदिव्यावदाने चूडापक्षावदानं समाप्तम्॥



# ३६ माकन्दिकावदानम् ।

बुद्धो भगवान् कुरुषु जनपदचारिकां चरन् कल्माषदम्यमनुप्राप्तः । तेन खलु पुनः समयेन कल्माषदम्ये माकन्दिको नाम परिव्राजकः प्रतिवसति । तस्य साकलिर्नाम पत्नी । तस्य दुहिता जाता अभिरूपा दर्शनीया प्रासादिका सर्वाङ्गप्रत्यङ्गोपेता । तस्या अस्थीनि
5 सूक्ष्माणि सुसूक्ष्माणि, न शक्यत उपमा कर्तुम् । तस्यास्त्रीणि सप्ताहान्येकविंशतिं दिवसान् विस्तरेण जातिमही संवृत्ता यावज्जातमहं कृत्वा नामधेयं व्यवस्थाप्यते—किं भवतु दारिकाया नामेति ? ज्ञातय ऊचुः—इयं दारिका अभिरूपा दर्शनीया प्रासादिका सर्वाङ्गप्रत्यङ्गोपेता । तस्या अस्थीनि सूक्ष्माणि सुसूक्ष्माणि, न शक्यते उपमा कर्तुम् । भवतु दारिकाया अनुपमेति नाम । तस्या अनुपमेति नामधेयं व्यवस्थापितम् । सोन्नीता वर्धिता । माकन्दिकः संलक्ष-
10 यति—इयं दारिका न मया कस्यचित् कुलेन दातव्या न धनेन नापि श्रुतेन, किं तु योऽस्या रूपेण समो वाप्यधिको वा, तस्य मया दातव्येति ॥

C 516 अत्रान्तरे भगवान् कुरुषु जनपदेषु चारिकां चरन् कल्माषदम्यमनुप्राप्तः । कल्माषदम्ये विहरति कुरूणां निगमे विहरति । अथ भगवान् पूर्वाह्णे निवास्य पात्रचीवरमादाय कल्माषदम्यं पिण्डाय प्राविक्षत् । कल्माषदम्यं पिण्डाय चरित्वा कृतभक्तकृत्यः पश्चाद्भक्त-
15 पिण्डपात्रः प्रतिक्रान्तः । पात्रचीवरं प्रतिशाम्य पादौ प्रक्षाल्य अन्यतमवृक्षमूलं निश्रित्य निषण्णः सुप्तोरगराजभोगपरिपिण्डीकृतं पर्यङ्कं बद्ध्वा । तेन खलु समयेन माकन्दिकः परिव्राजकः पुष्पसमिधस्यार्थे निर्गतोऽभूत् । अद्राक्षीन्माकन्दिकः परिव्राजको भगवन्तं दूरादेवान्यतरवृक्षमूलं निश्रित्य सुप्तोरगराजभोगपरिपिण्डीकृतं पर्यङ्कं बद्ध्वा निषण्णं प्रासादिकं प्रदर्शनीयं शान्तेन्द्रियं शान्तमानसं परमेण चित्तव्युपशमेन समन्वागतं सुवर्णयूपमिव
20 श्रिया ज्वलन्तम् । दृष्ट्वा च पुनः प्रीतिप्रामोद्यजातः । स संलक्षयति—यादृशोऽयं श्रमणः प्रासादिकः प्रदर्शनीयः सकलजनमनोहारी, दुर्लभस्तु सर्वस्त्रीजनस्य पतिः प्रतिरूपः प्रागेव अनुपमायाः । लब्धो मे जामातेति । येन स्वं निवेशनं तेनोपसंक्रान्तः । उपसंक्रम्य पत्नीमामन्त्रयते—यत्खलु भद्रे जानीयाः—लब्धो मे दुहितुर्जामाता । अलंकुरुष्व, अनुपमां ददामीति । सा कथयति—कस्य प्रयच्छसीति ? स कथयति—श्रमणस्य गौतमस्येति । सा कथयति—
25 गच्छावस्तावत्पश्याव इति । माकन्दिकस्तया सार्धं गतः । दूरात्तया दृष्टः । तस्या अन्तर्मार्गे स्मृतिरुपपन्ना । गाथां भाषते—

दृष्टो मया विप्र स पिण्डहेतोः
कल्माषदम्ये विचरन्महर्षिः ।
भूरत्नभा सन्ति तस्य प्रगच्छतो-
30 ऽप्युन्नमते न चैव(?) ॥ १ ॥

नासौ भक्तां भजते कुमारिकाम् । निवर्त, यास्यामः स्वकं निवेशनम् । सोऽपि गाथां भाषते—

अमङ्गले साकलिके त्वं
माङ्गल्यकाले वदसे ह्यमङ्गलम् ।
सचेद्द्रुत समधिकृतं भविष्यति
पुनरप्यसौ कामगुणेषु रंस्यते ॥ २ ॥ इति ।

सा अनुपमां वस्त्रालंकारैरलंकृत्य संप्रस्थिता । भगवानपि तस्माद्वनषण्डादन्यवनषण्डं 5 संप्रस्थितः । अद्राक्षीन्माकन्दिकः परिव्राजको भगवन्तं तृणसंस्तरणकम् । दृष्ट्वा च पुनः पत्नीमामन्त्रयते—यत्खलु भवति जानीयाः—एष ते दुहितुस्तृणसंस्तरक इति । सा गाथां भाषते—

रक्तस्य शय्या भवति विकोपिता
द्विष्टस्य शय्या सहसा निपीडिता । 10
मूढस्य शय्या खलु पादतो गता
सुवीतरागेण निसेविता न्वियम् ।
नासौ भर्ता भजते कुमारिकां
निवर्त, यास्यामः स्वं निवेशनम् ॥ ३ ॥
अमङ्गले साकलिके त्वं 15
मङ्गल्यकाले वदसे ह्यमङ्गलम् ।
सचेद्द्रुतं समधिकृतं भविष्यति
पुनरप्यसौ कामगुणेषु रंस्यते ॥ ४ ॥

अद्राक्षीन्माकन्दिकः परिव्राजकः । भगवतः पदानि दृष्ट्वा पुनः पत्नीमामन्त्रयते—इमानि ते भवन्ति भद्रे दुहितुर्जामातुः पदानि । गाथां भाषते— 20

रक्तस्य पुंसः पदमुत्पटं स्या-
न्निपीडितं द्वेषवतः पदं च ।
पदं हि मूढस्य विसृष्टदेहं
सुवीतरागस्य पदं त्विहेदृशम् ।
नासौ भर्ता भजते कुमारिकाम् । 25
निवर्त, यास्यामः स्वकं निवेशनम् ॥ ५ ॥

अमङ्गले साकलिके पूर्ववत् ।

भगवतोत्काशशब्दः कृतः । अश्रौषीन्माकन्दिकः परिव्राजको भगवत उत्काशनशब्दं शुश्राव । श्रुत्वा च पुनः पुनः पत्नीमामन्त्रयते—एष ते भवति दुहितुर्जामातुरुत्काशनशब्द इति । सा गाथां भाषते— 30



रक्तो नरो भवति हि गद्गदस्वरो
द्विष्टो नरो भवति हि खक्खटास्वरः ।

मूढो नरो हि भवति समाकुलस्वरो
बुद्धो ह्ययं ब्राह्मणदुन्दुभिस्वरः।
नासौ भर्ता भजते कुमारिकां
निवर्त यास्यामः स्वकं निवेशनम् ॥ ६ ॥

5 अमङ्गले साकलिके पूर्ववत्।

भगवता माकन्दिकः परिव्राजको दूरादवलोकितः। अद्राक्षीन्माकन्दिकः परिव्राजको भगवन्तमवलोकयन्तम्। दृष्ट्वा च पुनः पत्नीमामन्त्रयते स्म—एष ते भवति दुहितुर्जामाता निरीक्षत इति। सा गाथां भाषते—

रक्तो नरो भवति हि चञ्चलेक्षणो
10 द्विष्टो भुजगघोरविषो यथेक्षते।
मूढो नरः संतमसीव पश्यति
द्विजवीतरागो युगमात्रदर्शी।
न एष भर्ता भजते कुमारिकां
निवर्त यास्यामः स्वकं निवेशनम् ॥ ७ ॥

15 अमङ्गले साकलिके पूर्ववत्।

भगवांश्चंक्रम्यते। अद्राक्षीन्माकन्दिकः परिव्राजको भगवन्तं चंक्रम्यमाणम्। दृष्ट्वा च पुनः पत्नीमामन्त्रयते—एष दुहितुर्जामाता चंक्रम्यत इति। सा गाथां भाषते—

यथास्य नेत्रे च यथावलोकितं
यथास्य काले स्थित एव गच्छतः।
20 यथैव पद्मं स्तिमिते जलेऽस्य
नेत्रं विशिष्टे वदने विराजते।
न एष भर्ता भजते कुमारिकां
निवर्त यास्यामः स्वकं निवेशनम् ॥ ८ ॥

अमङ्गले साकलिके त्वं
25 मङ्गलकाले वदसे ह्यमङ्गलम्। C 519
सचेद्भुतं समधिकृतं भविष्यति
पुनरप्ययं कामगुणेषु रंस्यते ॥ ९ ॥
वशिष्ठोशीरमौनलायना (?)
अपत्यहेतोरतत्काममोहिताः।
30 धर्मो मुनीनां हि सनातनो ह्यय-
मपत्यमुत्पादितवान् सनातनः ॥ १० ॥

अथ माकन्दिकः परिव्राजको येन भगवांस्तेनोपसंक्रान्तः । उपसंक्रम्य भगवन्तमिदमवोचत्—

इमां भगवान् पश्यतु मे सुतां सतीं
रूपोपपन्नां प्रमदामलंकृताम् ।
कामार्थिनीं यद्भवते प्रदीयते    5
सहानया साधुरिवाचरतां भवान् ।
समेत्य चन्द्रो नभसीव रोहिणीम् ॥ ११ ॥

भगवान् संलक्षयति—यद्यहमनुपमाया अनुनयवचनं ब्रूयाम्, स्थानमेतद्विद्यते यदनुपमा रागेण खिन्ना कालं कुर्वाणा भविष्यति । तत्तस्याः प्रतिघवचनं ब्रूयामिति विदित्वा गाथां भाषते—    10

दृष्टा मया मारसुता हि विप्र
तृष्णा न मे नापि तथा रतिश्च ।
छन्दो न मे कामगुणेषु कश्चित् ।
तस्मादिमां मूत्रपुरीषपूर्णां
प्रष्टुं हि यत्तामपि नोत्सहेयम् ॥ १२ ॥    15

माकन्दिको गाथां भाषते—

सुतामिमां पश्यसि किं मदीयां
हीनाङ्गिनीं रूपगुणैर्वियुक्ताम् ।
छन्दं न येनात्र करोषि चारौ
विविक्तभावेष्विव कामभोगी ॥ १३ ॥ इति ।    20

भगवानपि गाथां भाषते—

यस्मादिहार्थी विषयेषु मूढः
स प्रार्थयेद्विप्र सुतां तवेमाम् ।
रूपोपपन्नां विषयेषु सक्तामवीतरागोऽत्र जनः प्रमूढः ॥ १४ ॥    25
अहं तु बुद्धो मुनिसत्तमः कृती    C 520
प्राप्ता मया बोधिरनुत्तरा शिवा ।
पद्मं यथा वारिकणैरलिप्तं
चरामि लोकेऽनुपलिप्त एव ॥ १५ ॥
नीलाम्बुजं कर्दमवारिमध्ये    30
यथा च पङ्केन व नोपलिप्तम् ।
तथा ह्यहं ब्राह्मण लोकमध्ये
चरामि कामेषु विविक्तः [ एव ] ॥ १६ ॥ इति ।

अथानुपमा भगवता मूत्रपुरीषवादेन समुदाचरिता वीतहर्षा दुर्मनाः संवृत्ता। तस्या यद्रागपर्यवस्थानं तद्विगतम्, द्वेषपर्यवस्थानमुत्पन्नम्, स्थूलीभूतार्यस्थीतिकावरीभूतेक्षिणी(?)। तेन स खलु समयेनान्यतमो महल्लो भगवतः पृष्ठतः स्थितोऽभूत्। अथ महल्लो भगवन्तमिदमवोचत्—

5 समन्तदृष्टे प्रतिगृह्य नारी-
मस्मत्समेतां भगवन् प्रयच्छ।
रता वयं हि प्रमदामलंकृतां
भोक्ष्यामहे धीर यथानुलोमम्॥ १७॥ इति।

एवमुक्ते भगवांस्तं महल्लमिदमवोचत्—अपेहि पुरुष, मा मे पुरतस्तिष्ठेति। स 10 रुषितो गाथां भाषते—

इदं च ते पात्रमिदं च चीवरं
यष्टिश्च कुण्डी च व्रजन्तु निष्ठाम्।
इमां च शिक्षां स्वयमेव धारय
धात्री यथा ह्यङ्कगतं कुमारकम्॥ १८॥ इति।

15 एवमुक्ते स महल्लः शिक्षां प्रत्याख्याय महाननार्योऽयमिति मत्वा येन माकन्दिकः परिव्राजकस्तेनोपसंक्रान्तः। उपसंक्रम्य माकन्दिकं परिव्राजकमिदमवोचत्—अनुप्रयच्छ C 521 ममान्तिकेऽनुपमामिति। स पर्यवस्थितः कथयति—महल्ल, द्रष्टुमपि ते न प्रयच्छामि, प्रागेव स्प्रष्टुमिति। एवमुक्तस्य माकन्दिकस्य परिव्राजकस्यान्तिके तादृशं पर्यवस्थानमुत्पन्नं येनोष्णं शोणितं छर्दयित्वा कालगतो नरकेषूपपन्नः॥

20 ततो भिक्षवः संशयजाताः सर्वसंशयच्छेत्तारं बुद्धं भगवन्तं पप्रच्छुः—पश्य भदन्त, भगवता अनुपमा लभ्यमाना न प्रतिगृहीतेति। भगवानाह—न भिक्षव एतर्हि, यथा अतीतेऽप्यध्वन्येषा मया लभ्यमाना न प्रतिगृहीता। तच्छ्रूयताम्॥

भूतपूर्वं भिक्षवोऽन्यतमस्मिन्कर्वटकेऽयस्कारः प्रतिवसति। तेन सदृशात्कुलात् कलत्रमानीतम्। पूर्ववद्यावद्दुहिता जाता अभिरूपा दर्शनीया प्रासादिका। उन्नीता वर्धिता 25 महती संवृत्ता। अयस्कारः संलक्षयति—मयैषा दुहिता न कस्यचित् कुलेन दातव्या, न रूपेण न धनेन, अपि तु यो मम शिल्पेन समोऽभ्यधिको वा, तस्याहमेनां दास्यामीति। यावदन्यतमो माणवो भिक्षार्थी तस्य गृहं प्रविष्टः। सा दारिका भैक्षमादाय निर्गता। स माणवस्तां दृष्ट्वा कथयति—दारिके, त्वं कस्यचिद्दत्ता आहोस्विन्न दत्तेति? सा कथयति—यदा जाताहं तदैव मत्पितैवाङ्गीकृत्य वदति—दुष्करमसौ मां कस्यचिद्दास्यति। किं तव पिता 30 वदति? यो मम शिल्पेन समोऽभ्यधिको वा, अस्याहमेनां दास्यामीति। तव पिता कीदृशं शिल्पं जानीते? सूचीमीदृशां करोति यावदुदके प्लवते। स माणवः संलक्षयति—किं चाप्यहमनयानर्थी, मदापनयोऽस्य कर्तव्य इति। कुशलोऽसौ तेषु तेषु शिल्पस्थानकर्मस्थानेषु।

तेनायस्कारभाण्डिकां याचित्वा अन्यत्र गृहे सुसूक्ष्माः सूच्यो घटिताः, या उदके प्लवन्ते। एका च महती घटिता यस्यां सप्त सूच्यः प्रतिक्षिप्ताः सह तया प्लवन्ते। स ताः कृत्वा तस्यायस्कारस्य गृहमागतः। स कथयति—सूच्यः सूच्य इति। तया दारिकया दृष्टः। सा गाथां भाषते—

उन्मत्तकस्त्वं कटुकोऽथ वासि अचेतनः। 5 C 522
अयस्कारगृहे यस्त्वं सूचीं विक्रेतुमागतः॥ १९॥ इति।

सोऽपि गाथां भाषते—

नाहमुन्मत्तको वास्मि कटुकोऽहमचेतनः।
मानावतारणार्थं तु मया शिल्पं प्रदश्यते॥ २०॥
सचेत्पिता ते जानीयाच्छिल्पं मम हि यादृशम्। 10
त्वां चैवानुप्रयच्छेत अन्यच्च विप्रतं (विपुलं ?) धनम्॥ २१॥ इति।

सा कथयति—कीदृशं त्वं शिल्पं जानीषे? ईदृशीं सूचीं करोमि योदके प्लवते। तया मातुर्निवेदितम्—अम्ब, शिल्पिकर्मात्रागत इति। सा कथयति—प्रवेशयेति। तया प्रवेशितः। अयस्कारभार्या कथयति—कीदृशं त्वं शिल्पं जानीषे? तेन समाख्यातम्। तया स्वामिने निवेदितः। आर्यपुत्र, अयं शिल्पदारकः। ईदृशं जानीत इति। स कथयति—यद्येवमानय पानीयम्, पश्यामीति। तया पानीयस्य भाजनं पूरयित्वोपनामितम्। तेनैका सूची 15 प्रक्षिप्ता। सा प्लोतुमारब्धा। एवं द्वितीया, तृतीया। ततः सा महती सूची प्रक्षिप्ता। सापि प्लोतुमारब्धा। पुनस्तस्यामेका सूची प्रक्षिप्ता। तथापि प्लोतुमारब्धा। एवं द्वितीयां तृतीयां यावत् सप्तसूचीं प्रक्षिप्य प्रक्षिप्तास्तथापि प्लोतुमारब्धाः। अयस्कारः संलक्षयति—ममैषोऽधिकतरः शिल्पेन। अस्मै दुहितरमनुप्रयच्छाम्। इति विदित्वा तां दारिकां सर्वालंकारविभूषितां कृत्वा वामेन पाणिना गृहीत्वा दक्षिणेन पाणिना भृङ्गारकमादाय माणवस्य पुरतः 20 स्थित्वा कथयति—इमां तेऽहं माणवक दुहितरमनुप्रयच्छामि भार्यार्थायेति। स कथयति—नाहमनयार्थी, किं तु तवैव मदापनयः कर्तव्य इति मया शिल्पमुपदर्शितमिति॥

भगवानाह—किं मन्यध्वे भिक्षवो योऽसौ माणवः, अहमेव स तेन कालेन तेन समयेन। योऽसावयस्कारः, एष एव माकन्दिकस्तेन कालेन तेन समयेन। यासावयस्कारभार्या, एषैवासौ माकन्दिकभार्या तेन कालेन तेन समयेन। यासावयस्कारदुहिता, 25 एषैवासावनुपमा तेन कालेन तेन समयेन। तदाप्येषा मया लभ्यमाना न प्रतिगृहीता। C 523 एतर्ह्यप्येषा मया लभ्यमाना न प्रतिगृहीता॥

पुनरपि भिक्षवः संशयजाताः सर्वसंशयच्छेत्तारं बुद्धं भगवन्तं पप्रच्छुः—पश्य भदन्त अयं महल्लकोऽनुपमामागम्यानयेन व्यसनमापन्न इति। भगवानाह—न भिक्षव एतर्हि यथातीतेऽप्यध्वन्येष अनुपमामागम्य सान्तःपुरोऽनयेन व्यसनमापन्नः। तच्छ्रूयताम्॥ 30

भूतपूर्वं भिक्षवः सिंहकल्पायां सिंहकेसरी नाम राजा राज्यं कारयति ऋद्धं च स्फीतं च क्षेमं च सुभिक्षं च आकीर्णबहुजनं पूर्ववद्यावद्धर्मेण राज्यं कारयति। तेन खलु समयेन सिंहकल्पायां सिंहको नाम सार्थवाहः प्रतिवसति आढ्यो महाधनो महाभोगो विस्तीर्णविशालपरिग्रहः पूर्ववद्यावत्तेन कलत्रमानीतम्। सा आपन्नसत्त्वा संवृत्ता। न चास्याः किंचिदमनोज्ञशब्दश्रवणं यावद्गर्भस्य 5 परिपाकाय। सा अष्टानां वा नवानां वा मासानामत्ययात् प्रसूता। दारको जातः अभिरूपो दर्शनीयः प्रासादिको गौरः कनकवर्णः छत्राकारशिराः प्रलम्बबाहुर्विस्तीर्णललाट उच्चघोणः संगतभ्रूः तुङ्गनासः सर्वाङ्गप्रत्यङ्गोपेतः। तस्य त्रीणि सप्तकान्येकविंशतिं दिवसान् विस्तरेण तस्य जातस्य जातिमहं कृत्वा नामधेयं व्यवस्थाप्यते—किं भवतु दारकस्य नामेति? ज्ञातय ऊचुः—अयं दारकः सिंहस्य सार्थवाहस्य पुत्रः। भवतु सिंहल इति नाम। तस्य सिंहल 10 इति नामधेयं व्यवस्थापितम्। सिंहलो दारकोऽष्टाभ्यो धात्रीभ्यो दत्तः पूर्ववद्यावदष्टासु परीक्षासु घटको वाचकः पण्डितः पटुप्रचारः संवृत्तः। तस्य पित्रा त्रीणि वासगृहाणि मापितानि हैमन्तिकं ग्रैष्मिकं वार्षिकम्। त्रीण्यन्तःपुराणि व्यवस्थापितानि ज्येष्ठं मध्यं कनीयसम्। सोऽपरेण समयेन पितरमाह्वयते—तात, अनुजानीहि, महासमुद्रमवतरामीति।

C 524 स कथयति—पुत्र, तावत्प्रभूतं मे धनजातमस्ति यदि त्वं तिलतण्डुलकुलत्थादिपरिभोगेन 15 रत्नानि मे परिभोक्ष्यसे, तथापि मे भोगा न तनुत्वं परिक्षयं पर्यादानं गमिष्यन्ति। तद्यावदहं जीवामि, तावत् क्रीड रमस्व परिचारय। ममात्ययाद् धनेनोपार्जितं करिष्यसीति। स भूयो भूयः कथयति—तात, अनुजानीहि, महासमुद्रमवतरामीति। स तेनावश्यनिर्बन्धं ज्ञात्वा उक्तः—पुत्र, एवं कुरु। किं तु भयभैरवसहिष्णुना ते भवितव्यमिति। तेन सिंहकल्पायां राजधान्यां घण्टावघोषणं कारितम्—शृण्वन्तु भवन्तः सिंहकल्पनिवासिनो वणिजः नाना- 20 देशाभ्यागताश्च। सिंहलसार्थवाहो महासमुद्रमवतरिष्यतीति। यो युष्माकमुत्सहते सिंहलेन सार्थवाहेन सार्धमशुल्केनातरपण्येन महासमुद्रमवतर्तुम्, स महासमुद्रगमनीयं पण्यं समुदानयत्विति। ततः पञ्चभिर्वणिक्शतैर्महासमुद्रगमनीयं पण्यं समुदानीतम्। मातापितरौ भृत्यांश्च सुहृत्संबन्धिबान्धवानवलोक्य दिवसतिथिमुहूर्तप्रयोगेण कृतकौतुकमङ्गलस्वस्त्ययनः शकटैर्भारैः पिटकैः मूटैरुष्ट्रैर्गोभिर्गर्दभैः प्रभूतं महासमुद्रगमनीयं पण्यमादाय पञ्चभिर्वणिक्शतैः सपरिवारः 25 संप्रस्थितः। सोऽनुपूर्वेण ग्रामनगरनिगमराष्ट्रराजधानीषु चञ्चूर्यमाणः पत्तनान्यवलोकयन् समुद्रतीरमनुप्राप्तः। विस्तरेण राक्षसीसूत्रं सर्वं वाच्यम्। सर्वे ते वणिजो बालाहाश्वराजात्पतिताः, ताभिश्च राक्षसीभिर्भक्षिताः। सिंहलक एकः स्वस्तिक्षेमाभ्यां जम्बुद्वीपमनुप्राप्तः। सिंहलभार्या या राक्षसी सा राक्षसीभिरुच्यते—भगिनि, अस्माभिः स्वकस्वकाः स्वामिनो भक्षिताः, त्वया स्वामी निर्वाहितः। यदि तावत्तमानयिष्यसीत्येवं कुशलम्, नो चेत्त्वां 30 भक्षयाम इति। सा संत्रस्ता कथयति—यदि युष्माकमेष निर्बन्धो मां धरिष्यथ आनयामीति। ताः कथयन्ति—शोभनम्। एवं कुरुष्वेति। सा परमभीषणरूपमभिनिर्माय लघुलघ्वेव

C 525 गत्वा सिंहलस्य सार्थवाहस्य पुरतो गत्वा स्थिता। सिंहलेन सार्थवाहेन निष्कोषमसिं कृत्वा

संत्रासिता अपक्रान्ता। यावन्मध्यदेशात् सार्थ आगतः। सा राक्षसी सार्थवाहस्य पादयो-र्निपत्याह—सार्थवाह, अहं ताम्रद्वीपकस्य राज्ञो दुहिता। तेनाहं सिंहलसार्थवाहस्य भार्यार्थं दत्ता। तस्य महासमुद्रमध्यगतस्य मकरेण मत्स्यजातेन यानपात्रं भग्नम्। तेनाहममङ्गलेति कृत्वा छोरिता। तदर्हसि तं ममोपसंवरयितुमिति। तेनाधिवासितं क्षमापयामीति। स तस्य सकाशं गतः। विश्रम्भकथालापेन मुहूर्तं स्थित्वा कथयति—वयस्य, राजदुहितासौ त्वया 5 परिणीता। मा तामस्थाने परित्यज, क्षमस्वेति। स कथयति—वयस्य, नासौ राजदुहिता, ताम्रद्वीपादसौ राक्षसी। अथ कथमिहागता? तेन वृत्तमारोचितम्। स तूष्णीमवस्थितः। सिंहलः सार्थवाहोऽनुक्रमतः स्वगृहमनुप्राप्तः। सापि राक्षसी स्वयमतीवरूपयौवनसंपन्न-महासुन्दरीमानुषीरूपमास्थाय सिंहलसदृशनिर्विशेषसुन्दरं पुत्रं निर्माय तं पुत्रमादाय सिंहकल्पां राजधानीमनुप्राप्ता। सिंहलस्य सार्थवाहस्य स्वगृहद्वारमूलेऽवस्थिता। जनकाये- 10 नासौ मुखबिम्बकेन प्रत्यभिज्ञातः। ते कथयन्ति—भवन्तः, ज्ञायन्तामयं दारकः सिंहलस्य सार्थवाहस्य पुत्र इति। राक्षसी कथयति—भवन्तः, परिज्ञातो युष्माभिः। तस्यैवायं पुत्र इति। ते कथयन्ति—भगिनि, कुत आगता, कस्य वा दुहिता त्वमिति? सा कथयति—भवन्तः, अहं ताम्रद्वीपराजस्य दुहिता सिंहलस्य सार्थवाहस्य भार्यार्थं दत्ता। महासमुद्रमध्यगतस्य सार्थवाहस्य मत्स्यजातेन यानपात्रं भग्नम्। तेनाहममङ्गलेति कृत्वा अस्थाने छोरिता, 15 कथंचिदिह संप्राप्ता। क्षुद्रपुत्राहम्। अर्हथ सिंहलं सार्थवाहं क्षमयितुमिति। तैस्तस्य मातापित्रोर्निवेदितम्। स ताभ्यामुक्तः—पुत्र, मैनां [त्यज]दुहितरं राज्ञः, क्षुद्रपुत्रेयं तपस्विनी, क्षमेति। स कथयति—तात, नैषा राजदुहिता, राक्षस्येषा ताम्रद्वीपादिहागतेति। तौ कथयतः—पुत्र, सर्वा एव स्त्रियो राक्षस्यः। क्षमेति। तात, यद्येषा युष्माकमभिप्रेता, एतां गृहे धारयत। C 526 अहमप्यन्यत्र गच्छामीति। तौ कथयतः—पुत्र, सुतरां वयमेनां तवैवार्थाय धारयामः। यद्येषा 20 तत्र नाभिप्रेता, किमस्माकमनया? न धारयाम इति। ताभ्यां निष्कासिता। सा सिंह-केसरिणो राज्ञः सकाशं गता। अमात्यै राज्ञो निवेदितम्—देव, ईदृशी रूपयौवनसंपन्ना स्त्री राजद्वारे तिष्ठतीति। राजा कथयति—प्रवेशयेति। पश्याम इति। सा तैः प्रवेशिता। हारिणी-न्द्रियाणि। राजा तां दृष्ट्वा रागेनोत्क्षिप्तः। स्वागतवादसमुदाचारेण तां समुदाचर्य कथयति—कुतः कथमत्रागता, कस्य वा त्वमिति। सा पादयोर्निपत्य कथयति—देव, अहं ताम्रद्वीपकस्य 25 राज्ञो दुहिता सिंहलस्य सार्थवाहस्य भार्यार्थं दत्ता। तस्य महासमुद्रमध्यगतस्य मकरेण मत्स्यजातेन यानपात्रं भग्नम्। तेनाहममङ्गलेति श्रुत्वा अस्थाने छोरिता, कथंचिदिह संप्राप्ता। क्षुद्रपुत्राहम्। तदर्हसि देव तमेव सिंहलं सार्थवाहं क्षमापयितुमर्हसि। तेन राज्ञा समा-श्वासिता। अमात्यानामाज्ञा दत्ता—गच्छन्तु भवन्तः, सिंहलं सार्थवाहं शब्दयतेति। तैरसौ शब्दितः। राजा कथयति—सिंहल, एनां राजदुहितरं धारय, क्षमस्वेति। स कथयति—देव, 30 नैषा राजदुहिता, राक्षस्येषा ताम्रद्वीपादिहागतेति। राजा कथयति—सार्थवाह, सर्वा एव स्त्रियो राक्षस्यः, क्षमस्व। अथ तत्र नाभिप्रेता, ममानुप्रयच्छेति। सार्थवाहः कथयति—देव,

राक्षस्येषा। नाहं ददामि, न वरयामीति। सा राज्ञा अन्तःपुरं प्रवेशिता। तया राजा वशीकृतः। यावदपरेण समयेन राज्ञः सान्तःपुरस्यास्वापनं दत्वा तासां राक्षसीनां सकाशं गत्वा कथयति—भगिन्यः, किं युष्माकं सिंहलेन सार्थवाहेन? मया सिंहकेसरिणो राज्ञः सान्तःपुरस्यास्वापनं दत्तम्। आगच्छत, तं भक्षयाम इति। ता विकृतकरचरणनासाः परमभैरव-
5 मात्मानमभिनिर्माय रात्रौ सिंहकल्पामागताः। ताभिरसौ राजा सान्तःपुरपरिवारो भक्षितः। प्रभातायां रजन्यां राजद्वारं न मुच्यते। राजगृहस्योपरिष्टात्कुणपखादकाः पक्षिणः परि-
C 527 भ्रामितुमारब्धाः। अमात्या भटबलाग्रनैगमजनपदाश्च राजद्वारे तिष्ठन्ति। एष शब्दः सिंहकल्पायां राजधान्यां समन्ततो विसृतः—राजद्वारं न मुच्यते। राजगृहस्योपरिष्टात्कुणपखादकाः पक्षिणः परिभ्रमन्ति। अमात्या भटबलाग्रं नैगमजनपदाश्च राजद्वारे तिष्ठन्तीति।
10 सिंहलेन सार्थवाहेन श्रुतम्। स त्वरितत्वरितं खड्गमादाय गतः। स कथयति—भवन्तः, क्षमं चिन्तयत। तया राक्षस्या राजा खादित इति। अमात्याः कथयन्ति—कथमत्र प्रतिपत्तव्यमिति? स कथयति—निश्रयणीमानयत, पश्यामीति। तैरानीता। सिंहलः सार्थवाहः खड्गमादाय निरूढः। तेन ताः संत्रासिताः। तासां काश्चिद्धस्तपादानादाय निष्पलायिताः, काश्चिच्छिरः। ततः सिंहलेन सार्थवाहेन राजकुलद्वाराणि मुक्तानि। अमात्यै राजकुलं
15 शोधितम्। पौरामात्यजनपदाः संनिपत्य कथयन्ति—भवन्तः, राजा सान्तःपुरपरिवारो राक्षसीभिर्भक्षितः। कुमारो नास्य, कमत्राभिषिञ्चाम इति? तत्रैके कथयन्ति—यः सात्त्विकः प्राज्ञश्चेति। अपरे कथयन्ति—सिंहलात्सार्थवाहात् कोऽन्यः सात्त्विकः प्राज्ञश्च? सिंहलं सार्थवाहमभिषिञ्चाम इति। एवं कुर्मः। तैः सिंहलः सार्थवाह उक्तः—सार्थवाह, राज्यं प्रतीच्छेति। स कथयति—अहं वणिक्संव्यवहारोपजीवी। किं मम राज्येनेति? ते कथयन्ति—
20 सार्थवाह, नान्यः शक्नोति राज्यं धारयितुम्। प्रतीच्छेति। स कथयति—समयेन प्रतीच्छामि यदि मम वचनानुसारिणो भवथ। प्रतीच्छ, भवामः, शोभनं ते। तैरसौ नगरशोभां कृत्वा महता सत्कारेण राज्येऽभिषिक्तः। तेन नानादेशनिवासिनो विद्यावादिका आहूय भूयस्या मात्रया विद्या शिक्षिता, एवमिष्वस्त्राचार्या इष्वस्त्राणि। अमात्यानां चाज्ञा दत्ता—सज्जीक्रियतां भवन्तश्चतुरङ्गबलकायम्। गच्छामः, ता राक्षसीस्ताम्रद्वीपान्निर्वासयाम इति। अमात्यै-
25 श्चतुरङ्गबलकायं संनाहितम्। सिंहलो राजा चतुरङ्गाद्बलकायाद्वरवराग्रान् हस्तिनोऽश्वान्
52 8 रथान् मनुष्यांश्च वहनेष्वारोप्य ताम्रद्वीपं संप्रस्थितः। अनुपूर्वेण समुद्रतीरमनुप्राप्तः। तासां राक्षसीनामापणस्थानीयो ध्वजः कम्पितुमारब्धः। ताः संजल्पं कर्तुमारब्धाः—भवत्यः, आपणस्थानीयो ध्वजः कम्पते। नूनं जाम्बुद्वीपका मनुष्या युद्धाभिनन्दिन आगताः। समन्वेषाम इति। ताः समुद्रतीरं गताः। यावत् पश्यन्ति अनेकशतानि यानपात्राणि समुद्र-
30 तीरमनुप्राप्तानि। दृष्ट्वा च पुनस्ता अर्धेन प्रत्युद्गताः। ततो विद्याधारिभिराविष्टा इष्वस्त्राचार्यैः संप्रघातिताः। अवशिष्टाः सिंहलस्य राज्ञः पादयोर्निपत्य कथयन्ति—देव, क्षमस्वेति। स कथयति—समयेन क्षमे, यदि यूयमेतन्नगरमुत्कीलयित्वा अन्यत्र गच्छथ, न च मद्विजिते

कस्यचिदपराध्यथेति। ताः कथयन्ति—देव, एवं कुर्मः। शोभनम्। तं नगरमुत्कीलयित्वा अन्यत्र गत्वावस्थिताः। सिंहलेनापि राज्ञा आवासितमिति सिंहलद्वीपः सिंहलद्वीप इति संज्ञा संवृत्ता॥

किं मन्यध्वे भिक्षवो योऽसौ सिंहलः, अहमेव स तेन कालेन तेन समयेन। योऽसौ सिंहकेसरी राजा, एष एव स महल्लस्तेन कालेन तेन समयेन। या सा राक्षसी, एषैवानु- 5 पमा तेन कालेन तेन समयेन। तदाप्येष अनुपमाया अर्थे अनयेन व्यसनमापन्नः। एतर्ह्यप्येष अनुपमाया अर्थे अनयेन व्यसनमापन्नः॥

माकन्दिकः परिव्राजकोऽनुपमामादाय कौशाम्बीं गतः। अन्यतमस्मिन्नुद्यानेऽवस्थितः। उद्यानपालकपुरुषेण राज्ञ उदयनस्य वत्सराजस्य निवेदितम्—देव, स्त्री अभिरूपा दर्शनीया प्रासादिका उद्याने तिष्ठति। देवस्यैषा योग्येति श्रुत्वा राजा तदुद्यानं गतः। 10 तेनासौ दृष्टा। हारीणीन्द्रियाणि। सहदर्शनादेवाक्षिप्तहृदयः। तेन माकन्दिकः परिव्राजक उक्तः—कस्येयं दारिका? स आह—देव, मद्दुहिता देव, न कस्यचिद्। मम कस्मान्न दीयते? C 529 देव, दत्ता भवतु राज्ञः। शोभनम्। महाराजस्य बहवः पण्यपरिणीताः। तस्य पुष्पदन्तस्य परिणीता। तस्याः पुष्पदन्तस्य प्रासादस्यार्धं दत्तम्, पञ्चोपस्थायिकाशतानि दत्तानि, पञ्च च कार्षापणशतानि दिने दिने गन्धमाल्यनिमित्तम्। माकन्दिकः परिव्राजकोऽग्रामात्यः 15 स्थापितः। तेन खलु पुनः समयेनोदयनस्य राज्ञस्त्रयोऽग्रामात्या योगन्धरायणो घोषिलो माकन्दिक इति। यावदपरेण समयेन उदयनस्य राज्ञः पुरुष उपसंक्रान्तः। राज्ञा पृष्टः—कस्त्वमिति? स कथयति—देव प्रियाख्यायीति। अमात्यानामाज्ञा दत्ता—भवन्तः, प्रयच्छत प्रियाख्यायिनो वृत्तिमिति। तैस्तस्य वृत्तिर्दत्ता। यावदपरः पुरुष उपसंक्रान्तः। सोऽपि राज्ञा पृष्टः—कस्त्वमिति? स कथयति—देव अप्रियाख्यायीति। राज्ञा अमात्यानामाज्ञा दत्ता—भवन्तः, 20 प्रयच्छतास्याप्यप्रियाख्यायिनो वृत्तिमिति। ते कथयन्ति—मा कदाचिद्देवोऽप्रियं शृणुयात्। स कथयति—भवन्तः, विस्तीर्णानि राजकार्याणि। प्रयच्छतेति। तैस्तस्यापि वृत्तिर्दत्ता। यावदपरेण समयेन राजा उदयनः श्यामावती अनुपमा चैकस्मिन् स्थाने तिष्ठन्ति। तदा राज्ञा क्षुतं कृतम्। श्यामावत्योक्तम्—नमो बुद्धायेति। अनुपमया नमो देवस्येति। अनुपमा कथयति—महाराज, श्यामावती देवस्य सन्तकं भक्तं भुङ्क्ते, श्रमणस्य गौतमस्य नमस्कारं 25 करोतीति। राजा कथयति—अनुपमे, नात्र ह्येवम्। श्यामावत्युपासिका। अवश्यं श्रमणस्य गौतमस्य नमस्कारं करोतीति। सा तूष्णीमवस्थिता। तस्याः प्रेष्यदारिका उक्ता—दारिके, यदा देवः श्यामावती अहं च रहसि तिष्ठेम, तदा त्वं सोपानके कांसिकां पातयिष्यसीति। एवमस्त्विति। तया तेषां रहस्यवस्थितानां सोपानके कांसिका पातिता। श्यामावत्योक्तम्—नमो बुद्धायेति। अनुपमा नमो देवस्येत्युक्त्वा कथयति—देवस्य सन्तकं भवती भुङ्क्ते, 30 श्रमणस्य गौतमस्य नमस्कारं करोतीति। राजा कथयति—अनुपमे, अत्र मा संरम्भं कुरु, उपासिकैषा, नात्र दोष इति। राजा उदयन एकस्मिन् दिवसे श्यामावत्या सकाशं

C 530 भुङ्क्ते, द्वितीयदिवसेऽनुपमायाः। राज्ञा शाकुनिकस्याज्ञा दत्ता—यस्मिन् दिवसे श्यामावत्या भोजनवारः, तस्मिन् दिवसे जीवन्तः कपिंजला आनेतव्या इति। शाकुनिकेन जीवन्तः कपिंजला राज्ञ उपनीताः। राजा कथयति—अनुपमायाः समर्पयेति। अनुपमया श्रुतम्। सा कथयति—देव, न मम वारः। श्यामावत्या वार इति। राजा कथयति—गच्छ भोः पुरुष, 5 श्यामावत्याः समर्पयेति। तेन श्यामावत्याः सकाशमुपनीतः—देवस्यार्थाय साधयेति। सा कथयति—किमहं शाकुनिकायिनी? न मम प्राणातिपातः कल्पते। गच्छेति। तेन राज्ञे गत्वा निवेदितम्—देव, श्यामावती कथयति—किमहं शाकुनिकायिनी? न मम प्राणातिपातः कल्पते। गच्छेति। अनुपमा श्रुत्वा कथयति—देव, यद्यसावुच्यते श्रमणस्य गौतमस्यार्थाय साधयेति सांप्रतं सपरिवारा साधयेत्। राजा संलक्षयति—स्यादेवम्। तेनासौ पुरुष 10 उक्तः—गच्छ भोः पुरुष, एवं वद—भगवतोऽर्थाय साधयेति। संप्रस्थितोऽनुपमया प्रच्छन्नमुक्तः—प्रघातयित्वानयेति। तेन प्रघातयित्वा श्यामावत्या उपनीताः। देवः कथयति—भगवतोऽर्थाय साधयेति। सा सपरिवारा उद्युक्ता। शाकुनिकेन गत्वा राज्ञे निवेदितम्—सा देव सपरिवारा उद्युक्तेति। अनुपमा कथयति—श्रुतं देवेन? यदि तावत्प्राणातिपातो न कल्पते, श्रमणस्यार्थाय न कल्पते, देवस्यापि कल्पते? देवस्य न कल्पते इति कुत एतत्? 15 राजा पर्यवस्थितो धनुः पूरयित्वा संप्रस्थितः। मित्रामित्रमध्यमो लोकः। अपरया श्यामावत्या निवेदितम्—देवोऽत्यर्थं पर्यवस्थितो धनुः पूरयित्वा आगच्छति, क्षमयेति। तया स्वोपनिषदुक्ता—भगिन्यः, सर्वा यूयं मैत्रीं समापद्यध्वमिति। ताः सर्वा मैत्रीसमापन्नाः। राज्ञा आ कर्णाद्धनुः पूरयित्वा शरः क्षिप्तः। सोऽर्धमार्गे पतितः। द्वितीयः क्षिप्तः। स निवर्त्य राज्ञः समीपे पतितः। तृतीयं क्षेप्तुमारब्धः। श्यामावती कथयति—देव, मा क्षेप्स्यसि। मा 20 सर्वेण सर्वं न भविष्यतीति। राजा विनीतः कथयति—त्वं देवी नागी यक्षिणी गन्धर्वी किन्नरी महोरगीति? सा कथयति—न। अथ का त्वम्? भगवतः श्राविका अनागामिनी। मया भगवतोऽन्तिकेऽनागामिफलं साक्षात्कृतम्, एभिश्च पञ्चभिः स्त्रीशतैः सत्यानि दृष्टानीति। राजा

C 531 अभिप्रसन्नः कथयति—वरं तेऽनुप्रयच्छामीति। सा कथयति—यदि देवोऽभिप्रसन्नः, यदा देवोऽन्तःपुरं प्रविशति, तदा ममान्तिके धर्मान्वयमुपस्थापयेदिति। राजा कथयति—शोभनम्। 25 एवं भवत्विति। सोऽनुपमायाः श्यामावत्या अन्तिके धर्मान्वयं प्रसादयति। यान्यस्य नवसस्यानि नवफलानि नवर्तुकानि समापद्यन्ते, तानि तत्प्रथमतः श्यामावत्याः प्रयच्छति। ईर्ष्याप्रकृतिर्मातृग्रामः। अनुपमा संलक्षयति—अयं राजा मया सार्धं रतिक्रीडां प्रत्यनुभवति। श्यामावत्या नवैः फलैः नवैः सस्यकैर्नवर्तुकैः कारां करोति। तदुपायसंविधानं कर्तव्यं येनैषा प्रघात्यत इति। सा च तस्याः प्रघातनाय रन्ध्रान्वेषणतत्परा अवस्थिता। राज्ञ- 30 श्चान्यतमः कार्वटिको विरुद्धः। तेनैकं दण्डस्थानं प्रेषितम्। तद्धतप्रहतमागतम्। एवं द्वितीयं तृतीयम्। अमात्याः कथयन्ति—देवस्य बलं हीयते, कार्वटिकस्य बलं वर्धते। यदि देवः स्वयमेव न गच्छति, स्थानमेतद्विद्यते यत् सर्वथासौ दुर्दम्यो

भविष्यति। तेन कौशाम्ब्यां घण्टावघोषणं कारितम्—यो मम विजिते कश्चिच्छस्त्रोपजीवी प्रतिवसति, तेन सर्वेण गन्तव्यमिति। तेन संप्रस्थितेन योगन्धरायण उक्तः—त्वमिह तिष्ठेति। स न संप्रतिपद्यते। स कथयति—देवेनैव सार्धं गच्छामीति। घोषिलोऽप्युक्त एवमेव कथयति। राज्ञा माकन्दिकः स्थापित उक्तश्च—श्यामावत्या योगोद्वहनं कर्तव्यमिति। संप्रस्थितेनाप्यनुव्रजन् स एवमेवोक्तः। निवर्तमानेनापि तेन संप्रतिपन्नम्। सोऽनुपमायाः 5 सकाशं गतः। तया पृष्टः—तात, क इह देवेन स्थापितः? अहम्। सा संलक्षयति—शोभनम्। शक्यमनेन सहायेन वैरनिर्यातनं कर्तुमिति विदित्वा कथयति—नानुजानीषे श्यामावती का मम भवतीति। पुत्रि, जाने सपत्नीति। तात सत्यमेवम्। नानुजानीषे कतरो धर्मोऽत्यर्थं बाधत इति? पुत्रि, जाने ईर्ष्या मात्सर्यं च। तात यद्येवम्, श्यामावतीं प्रघातय। स कथयति—किं मे द्वे शिरसी? यावत् त्रिरप्यहं राज्ञा संदिष्टः—श्यामावत्या 10 C 532 योगोद्वाहनं करिष्यसीति। भवतु नामापि न गृहीतुमिति। सा कथयति—तात, ईदृशोऽपि त्वं मूर्खः? अस्ति कश्चित्पिता दुहितुरर्थे विमुखः, यः सपत्न्याः सकाशे अतीव स्नेहं करोति? प्रघातयसीत्येवं कुशलम्। नो चेदहं पौराणे स्थाने स्थापयामीति। स भीतः संलक्षयति—स्त्रीवशगा राजानः। स्यादेवमिति विदित्वा कथयति—पुत्रि, नैवमेव शक्यते प्रघातयितुम्, उपायविधानं करोमीति। सा कथयति—शोभनम्। एवं कुरु। स श्यामावत्याः सकाशं गतः। 15 स कथयति—देवि, किं ते करणीयमस्ति? सा कथयति—माकन्दिक, न किंचित्करणीयमस्ति। अपि त्वेता दारिका रात्रौ प्रदीपेन बुद्धवचनं पठन्ति, अत्र भूर्जेन प्रयोजनं तैलेन मसिना कलमया तुलेन। स कथयति—देवि, शोभनम्। उपावर्तयामीति। तेन प्रभूतमुपावर्त्य प्रवेशितम्, द्वारकोष्ठके राशिर्व्यवस्थापितः। श्यामावती कथयति—माकन्दिक, अलं पर्याप्तमिति। माकन्दिकः कथयति—देवि प्रवेशयामि, न भूयो भूयः प्रवेशितव्यम्। 20 तेनापश्चिमे भूर्जभारकेऽग्निं प्रक्षिप्य शरः प्रवेशितः। तेन संधुक्षितेन द्वारकोष्ठकः प्रज्वालितः। कौशाम्बीनिवासी जनकायः प्रधावितो निर्वापयितुम्। माकन्दिको निष्कोषमसिं कृत्वा जनकायं निर्वासयितुमारब्धः। तिष्ठत, किं यूयं राज्ञोऽन्तःपुरं द्रष्टुम्? कौशाम्ब्यां यन्त्रकराचार्यः कथयति—अहमेनं द्वारकोष्ठकं ज्वलन्तं यन्त्रेणान्यस्थानं संक्रमयामीति। सोऽपि माकन्दिकेनैवमेवोक्तो निवर्तितः। श्यामावती ऋद्ध्या आकाशमुत्प्लुत्य कथयति—भगिन्यः, 25 अस्माभिरेवैतानि कर्माणि कृतान्युपचितानि लब्धसंभाराणि परिणतप्रत्ययान्योघवत्प्रत्युपस्थितान्यवश्यंभावीनि। अस्माभिरेव कृतान्युपचितानि। कोऽन्यः प्रत्यनुभविष्यति? उक्तं च भगवता—

नैवान्तरिक्षे न समुद्रमध्ये
न पर्वतानां विवरं प्रविश्य। 30
न विद्यते स पृथिवीप्रदेशो
यत्र स्थितं न प्रसहेत कर्म॥ २२॥ इति।

C 533 तत्कर्मपरायणैर्वो भवितव्यमित्युक्त्वा गाथां भाषते—

दृष्टो मया स भगवान् तिर्यक्प्राकारसंनिभः।
आज्ञातानि च सत्यानि कृतं बुद्धस्य शासनम्॥ २३॥ इति।

श्यामावतीप्रमुखास्ताः स्त्रियः पतङ्ग इवोत्प्लुत्याग्नौ निपतिताः। इति तत्र श्यामावती-
5 प्रमुखानि पञ्च स्त्रीशतानि दग्धानि। कुब्जोत्तरा ससंभ्रमेण निष्पलायिता। माकन्दिकेन
तेषां पञ्चानां स्त्रीशतानां कलेवराणि श्मशाने छोरितानि। राजकुलं सान्तर्बहिः शोधितम्।
कौशाम्बीनिवासी जनकायो नानादेशाभ्यागतश्च विक्रोशन्निवारितः॥

अथ संबहुला भिक्षवः पूर्वाह्णे निवास्य पात्रचीवरमादाय कौशाम्बीं पिण्डाय प्रावि-
क्षन्। अश्रौषुः संबहुला भिक्षवः कौशाम्बीनगरे उदयनस्य वत्सराजस्य जनपदान् गतस्य
10 अन्तःपुरमग्निना दग्धं पञ्चमात्राणि स्त्रीशतानि श्यामावतीप्रमुखानि। श्रुत्वा च पुनः कौशाम्बीं
पिण्डाय प्रविश्य चरित्वा प्रतिक्रम्य पुनर्येन भगवांस्तेनोपसंक्रान्ता एतदूचुः—अश्रौष्म वयं
भदन्त संबहुला भिक्षवो कौशाम्बीं पिण्डाय चरन्त उदयनस्य वत्सराजस्यान्तःपुरमग्निना
दग्धं पञ्चमात्राणि स्त्रीशतानि श्यामावतीप्रमुखानि दग्धानि॥

भगवानाह—बहु भिक्षवस्तेन मोहपुरुषेणापुण्यं प्रसूतं येनोदयनस्य वत्सराजस्य
15 जनपदगतस्यान्तःपुरमग्निना दग्धं पञ्चमात्राणि स्त्रीशतानि श्यामावतीप्रमुखानि। किं चापि
भिक्षवस्तेन मोहपुरुषेण बह्वपुण्यं प्रसूतम्, अपि तु न ता दुर्गतिं गताः। सर्वाः शुद्धपुद्गलाः
कालगताः। तत्कस्य हेतोः? सन्ति तस्मिन्नन्तःपुरे स्त्रियो याः पञ्चानामवरभागीयानां संयो-
जनानां प्रहाणादुपपादुकाः। तत्र परिनिर्वायिण्योऽनागामिन्योऽनावृत्तिकधर्मिण्यः पुनरिमं
लोकम्। एवंरूपास्तस्मिन्नन्तःपुरे स्त्रियः सन्ति। सन्ति तस्मिन्नन्तःपुरे स्त्रियो यास्त्रयाणां
C 534 20 संयोजनानां प्रहाणाद्रागद्वेषमोहानां कालं कृत्वा सकृदागामिन्यः, सकृदिमं लोकमागम्य
दुःखस्यान्तं करिष्यन्ति। एवंरूपास्तस्मिन्नन्तःपुरे स्त्रियः सन्ति। सन्ति तस्मिन्नन्तःपुरे स्त्रियो
यास्त्रयाणां संयोजनानां प्रहाणाच्छ्रोतापन्ना अविनिपातधर्मिण्यो नियतसमाधिपरायणाः
सप्तकृत्वो भवपरमाः सप्तकृत्वो देवांश्च मनुष्यांश्च संधाव्य संसृत्य दुःखस्यान्तं करिष्यन्ति।
एवंरूपास्तस्मिन्नन्तःपुरे स्त्रियः सन्ति। सन्ति तस्मिन्नन्तःपुरे स्त्रियो याः स्वजीवितहेतोरपि
25 शिक्षां न व्यतिक्रान्ताः। इत्येवंरूपास्तस्मिन्नन्तःपुरे स्त्रियः सन्ति। सन्ति तस्मिन्नन्तःपुरे
स्त्रियो या ममान्तिके प्रसन्नचित्तालंकारं कृत्वा कायस्य भेदात्सुगतौ स्वर्गलोके देवेषूपपन्नाः।
एवंरूपास्तस्मिन्नन्तःपुरे स्त्रियः सन्ति। आगम्यत भिक्षवो येन श्यामावतीप्रमुखानां पञ्चस्त्री-
शतानां कलेवराणि। एवं भदन्तेति भिक्षवो भगवतः प्रत्यश्रौषुः। अथ खलु भगवान्
संबहुलैर्भिक्षुभिः सार्धं येन तासां पञ्चानां स्त्रीशतानां कलेवराणि तेनोपसंक्रान्तः।
30 उपसंक्रम्य भिक्षूनामन्त्रयते स्म—एतानि भिक्षवस्तानि पञ्चशतकलेवराणि यत्र उदयनो
वत्सराजो रक्तः सक्तो गृद्धो ग्रथितो मूर्च्छितोऽध्यवसितोऽध्यवसायमापन्नः। तत्र नैव
प्राज्ञधीः पादेनापि स्पृशेत्। गाथां च भाषते—

मोहसंवर्धनो लोको भव्यरूप इव दृश्यते ।
उपधिबन्धना बालास्तमसा परिवारिताः ।
असत्सदिति पश्यन्ति पश्यतां नास्ति किंचन ॥ २४ ॥ इति ।

एवं चाह—तस्मात्तर्हि भिक्षव एवं शिक्षितव्यम्, यद्दग्धस्थूणायामपि चित्तं न प्रदूषयिष्यामः प्रागेव सविज्ञानके काये । इत्येवं वो भिक्षवः शिक्षितव्यम् ॥ 5

अथ कौशाम्बीनिवासिनः पौराः संनिपत्य संजल्पितुमारब्धाः—भवन्तः, राज्ञ ईदृशोऽनर्थः संवृत्त। तत्को न्वस्माकं राज्ञ आरोचयिष्यतीति? तत्रैकै कथयन्ति—योऽसावप्रियाख्यायी स आरोचयिष्यति । तं शब्दयाम इति । अपरे कथयन्ति—एवं कुर्मः । तैरसावाहूयोक्तः—देवस्येदमीदृशमप्रियमनुपूर्व्या निवेदयेति । वृत्तिर्दीयताम् । किमप्रियाख्यायिनो वृत्तिर्दीयत इत्ययं स कालः । यूयमेव निवेदयत । ते कथयन्ति—अतोर्थमेव तव वृत्तिर्दत्ता । कार्यं 10 निवेदयेति। समयतो निवेदयामि यदहं ब्रवीमि तत्कुरुध्वम्? ब्रूहि, करिष्यामः। एवमनुपूर्वेणास्य निवेदयितव्यम्—पञ्चहस्तिशतानि प्रयच्छत, पञ्चहस्तिनीशतानि पञ्चाश्वशतानि पञ्चवडवाशतानि पञ्चकुमारशतानि पञ्चकुमारिकाशतानि सुवर्णलक्षं कौशाम्ब्यधिष्ठानम् । पटे लेखयत पुष्पदन्तप्रासादं यथा माकन्दिकेन भूर्जं कलमा तैलं तूलमसिरपश्चिमे च भूर्जभागेऽग्निः प्रक्षिप्तः । यथा द्वारकोष्ठकः प्रज्वालितः, यथा कौशाम्बीनिवासी जनकायो निर्वापयितुं 15 प्रधावितः, यथा माकन्दिकेन निष्कोषमसिं कृत्वा निवारितः । यथा यन्त्रकलाचार्य आगत्य कथयति—द्वारकोष्ठकं ज्वलन्तमन्यत् स्थानं संक्रमयामीति। सोऽपि माकन्दिकेन निवारितः। यथा श्यामावतीप्रमुखानि पञ्चस्त्रीशतान्युत्प्लुत्य निपतितानि। ते कथयन्ति—एवं कुर्मः । तैः पञ्चहस्तिशतान्युपस्थापितानि पञ्चहस्तिनीशतानि पञ्चाश्वशतानि पञ्चवडवाशतानि पञ्चकुमारशतानि पञ्चकुमारिकाशतानि सुवर्णस्य लक्षं कौशाम्ब्यधिष्ठानं पटे लिखितं पुष्पदन्तप्रासादः । यथा 20 माकन्दिकेन भूर्जं कलमा तैलं तूलमसिरपश्चिमे भूर्जभारकेऽग्निः प्रक्षिप्तो यथा द्वारकोष्ठके प्रज्वालितः । यथा कौशाम्बीनिवासी जनकायो निर्वापयितुं प्रधावितः । यथा माकन्दिकेन निष्कोषमसिं कृत्वा निवारितः । यथा यन्त्रकलाचार्य आगतः—अहमेनं द्वारकोष्ठकं ज्वलन्तमन्यत् स्थानं संक्रमयामीति, सोऽपि माकन्दिकेन निवारितः । यथा श्यामावतीप्रमुखानि पञ्चस्त्रीशतान्यग्नावुत्प्लुत्य निपतितानि, तत्सर्वं पटे लिखितम्। ततोऽप्रियाख्यायिनोऽमात्यानां 25 लेखोऽनुप्रेषितो राज्ञ ईदृशोऽनर्थ उत्पन्नोऽहमस्यानेनोपायेन निवेदयिष्यामि । युष्माभिः साहाय्यं कल्पयितव्यमिति । स तेषां लेखां लेखयित्वा चतुरङ्गबलकाययुक्तोऽन्यतमस्मिन् प्रदेशे गत्वावस्थितः । उदयनस्य च लेखोऽनुप्रेषितः—देव, अहममुष्मिन् प्रदेशे राजा । मम च पुत्रो मृत्युनापहृतः। तदहं तेन सार्धं संग्रामं संग्रामयिष्यामि। यदि तावत्त्वं शक्नोषि युद्धेन नियोक्तुमित्येवं कुशलम्, नो चेत्पञ्चहस्तिशतानि पञ्चहस्तिनीशतानि पञ्चाश्वशतानि 30 पञ्चवडवाशतानि पञ्चकुमारशतानि पञ्चकुमारिकाशतानि सुवर्णस्य लक्षं दत्वा तमानेष्यामीति । राज्ञ उदयनस्य स कार्वटिको बलवान् संनामं न गच्छति । सोऽमात्यानां कथयति—

C 535

C 536

भवन्तः, ईदृशोऽपि राजा मूर्खः? अस्ति कश्चिन्मृत्युनापहृतः शक्यत आनेतुम्? तद्गतम्। एतत्तस्यैवं लिखितम्—ममैवंनामा कार्वटिकः संनामं न गच्छति। स त्वमस्माकं तावत्साहाय्यं कल्पय, पश्चात्तवापि साहाय्यं करोमीति। सोऽमात्यैस्तस्यैवं लेखोऽनुप्रेषितः। स लेखश्रवणादेवागत्य कार्वटिकस्य नातिदूरे व्यवस्थापितः। कार्वटिकेन श्रुतम्। स संलक्षयति—एकेन 5 तावदहं राज्ञा दश दिशो विश्रान्तः, अयं च द्वितीयः। सर्वथा पुनरपि विषयान्न तु प्राणान्निर्गच्छामीति। स कण्ठेऽसिं बद्ध्वा निर्गत्य राज्ञ उदयनस्य पादयोर्निपतितः। स राज्ञा उदयनेन करदो व्यवस्थापितः। अथासावप्रियाख्यायी राजलीलया राज्ञ उदयनस्य सकाशं गत्वा कथयति—देव, मम पुत्रो मृत्युना अपहृतः। त्वं मम देवः साहाय्यं कल्पयतु। अहं तेन सार्धं संग्रामं संग्रामयिष्यामीति। यदि तावत्त्वं शक्नोषि युद्धेन निर्जेतुमित्येवं 10 कुशलम्, नो चेत्पञ्चहस्तिशतानि पञ्चहस्तिनीशतानि पञ्चवडवाशतानि पञ्चकुमारशतानि पञ्चकुमारिकाशतानि सुवर्णस्य लक्षं दत्वा तमानेष्यामीति। उदयनो राजा कथयति—प्रियवयस्य, मूर्खस्त्वम्। अस्ति कश्चिच्छक्यते मृत्योः सकाशादानेतुमिति? स कथयति—देव, न शक्यते। यद्येवम्, इमं पटं पश्येति। तेन पटः प्रसारितः। राजा पटं निरीक्ष्य मर्मवेधविद्ध इव रुष्यमाणः कथयति—भोः किम्? कथयति—भोः पुरुष, किं कथयसि श्यामावतीप्रमुखानि 15 पञ्च स्त्रीशतान्यग्निना दग्धानीति? स पट्टं मौलिं चापनीय गाथां भाषते—

C 537

नाहं नरेन्द्रो न नरेन्द्रपुत्रः
पादोपजीवी तव देव भृत्यः।
अथाप्रियस्यैव निवेदनार्थ-
मिहागतोऽहं तव पादमूलम्॥ २५॥ इति।

20 राजा सुतरां निरीक्ष्य विचारयति। इयं कौशाम्बी नगरी, इदं राजकुलम्, अयं माकन्दिकः पुष्पदन्तं प्रासादं भूर्जादिना प्रयोगेण दहति, इमानि श्यामावतीप्रमुखानि पञ्च स्त्रीशतान्यग्निना दह्यमानान्युत्प्लुत्य निपतितानीति। विचार्य कथयति—भोः पुरुष, किं कथयसि श्यामावती दग्धेति? देव, नाहं कथयामि अपि तु देव एव कथयति। भोः पुरुष, उपायेन मे त्वया निवेदितम्, अन्यथा ते मयासिना निकृन्तितमूलं शिरः कृत्वा पृथिव्यां निपातितमन्वभवि- 25 ष्यदित्युक्त्वा मूर्च्छितः पृथिव्यां निपतितः। ततो जलपरिषेकेण प्रत्यागतप्राणः कथयति—संनाहयत भवन्तश्चतुरङ्गबलकायम्। कौशाम्बीं गच्छाम इति। अमात्यैश्चतुरङ्गबलकायं संनाहितम्। राजा कौशाम्बीं संप्रस्थितः। अनुपूर्वेण संप्राप्तः। तेन पौराणां सकाशात् सर्वं श्रुतम्। तैरमर्षितम्। तमारागितम्। ततो योगन्धरायणस्याज्ञा दत्ता—गच्छ माकन्दिकमनुपमया सह यन्त्रगृहे प्रक्षिप्य दह्यताम्। ततो योगन्धरायणेन सुगुप्तं भूमिगृहे प्रक्षिप्य 30 स्थापितः। राज्ञः सप्तमे दिवसे शोको विगतः। स विगतशोकः। स कथयति—योगन्धरायण, कुत्रानुपमेति? तेन यथावृत्तं निवेदितम्। राजा कथयति—शोभनम्। माकन्दिकेन श्यामावती प्रघातिता, त्वयाप्यनुपमया सपरिवारया सार्धं मया प्रव्रजितव्यं जातमिति। योगन्धरायणः कथयति—देव, इत्यर्थमेव मया असौ भूमिगृहे प्रक्षिप्य स्थापिता। पश्यामि तावद्यदि जीवतीति।

तेनासौ भूमिगृहादानीता तदवस्थानाक्लिष्टा अम्लानशरीरा। राजा दृष्ट्वा संलक्षयति—यथेयमम्लाना, नैषा निराहारा। नूनमनया परपुरुषेण सार्धं परिचारितमिति विदित्वा कथयति— C 538
अनुपमे, अन्येन परिचारितमिति? सा कथयति—शान्तं पापम्, नाहमेवंकारिणी। कथं जाने? अभिश्रद्दधसि त्वं भगवतः? अभिश्रद्दधे गौतमे। तत्तदा श्रमणो गौतमः, इदानीं भगवान्। अपि तु किं नवशवाया अर्थे भगवन्तं प्रवक्ष्यामि, श्यामावत्या अर्थे प्रवक्ष्यामीति विदित्वा येन 5
भगवांस्तेनोपसंक्रान्तः। उपसंक्रम्य भगवतः पादौ शिरसा वन्दित्वैकान्ते निषण्णः। उदयनो वत्सराजो भगवन्तमिदमवोचत्—किं भदन्त श्यामावतीप्रमुखैः पञ्चभिः स्त्रीशतैः कर्म कृतं येनाग्निना दग्धानि? कुब्जोत्तरा अनुक्रमेण निष्पलायितेति। भगवानाह—आभिरेव महाराट् कर्माणि कृतान्युपचितानि लब्धसंभाराणि परिणतप्रत्ययानि पूर्ववद्यावत्फलन्ति खलु देहिनाम्॥

भूतपूर्वं महाराज वाराणस्यां नगर्यां ब्रह्मदत्तो राजा राज्यं कारयति ऋद्धं च स्फीतं च 10
क्षेमं च पूर्ववद्यावद्धर्मेण राज्यं कारयति। असति बुद्धानामुत्पादे प्रत्येकबुद्धा लोक उत्पद्यन्ते हीनदीनानुकम्पकाः प्रान्तशयनासनभक्ता एकदक्षिणीया लोकस्य। यावदन्यतमः प्रत्येकबुद्धो जनपदचारिकां चरन् वाराणसीमनुप्राप्तः। सोऽन्यतमस्मिन्नुद्याने कुटिकायामवस्थितः। राजा च ब्रह्मदत्तः सान्तःपुरपरिवारस्तदुद्यानं निर्गतः। ता अन्तःपुरिकाः क्रीडापुष्किरिण्यां स्नात्वा शीतेनानुबद्धाः। ततोऽग्रमहिष्या प्रेष्यदारिकोक्ता—दारिके, शीतेनातीव बाध्यामहे। 15
गच्छ, एतस्यां कुटिकायामग्निं प्रज्वलयेति। सा उल्कां प्रज्वल्य गता। पश्यति तं प्रत्येकबुद्धम्। तया तस्या निवेदितम्—देवि, प्रव्रजितोऽस्यां तिष्ठतीति। सा कथयति—प्रव्रजितो वा तिष्ठतु, अग्निं दत्वा तां प्रज्वलयेति। तया न दत्तम्। ततस्तया कुपितया स्वयमेव दत्तम्। स प्रत्येकबुद्धो निर्गतः। आभिः सर्वाभिरन्तःपुरिकाभिरनुमोदितम्। देवि, शोभनं त्वया यदग्निर्दत्तः। सर्वा वयं प्रतप्ता इति। स प्रत्येकबुद्धः संलक्षयति—क्षता एतास्तपस्विन्य 20 C 539
उपहताश्च। मा अत्यन्तक्षता एता भविष्यन्ति। अनुग्रहमासां करोमीति। स तासामनुकम्पार्थं तत एवाकाशमुत्प्लुत्य तपनवर्षणविद्योतनप्रातिहार्याणि कर्तुमारब्धः। आशु पृथग्जनस्य ऋद्धिरावर्जनकरी। ता मूलनिकृन्तित इव द्रुमः पादयोर्निपत्य क्षमयितुमारब्धाः। अवतरावतर सद्भूतदक्षिणीय, अस्माकं कामपङ्कनिमग्नानां हस्तोद्धारमनुप्रयच्छेति। स तासामनुकम्पार्थमवतीर्णः। तानि तस्मिन् कारां कृत्वा प्रणिधानं कर्तुमारब्धाः—यदस्माभिरेवं सद्भूत- 25
दक्षिणीयेऽपकारः कृतः, मा अस्य कर्मणो विपाकमनुभवेम। यत्तु काराः कृताः, अनेन वयं कुशलमूलेनैवंविधानां धर्माणां लाभिन्यो भवेम, प्रतिविशिष्टतरं चातः शास्तारमारागयेम इति॥

किं मन्यसे महाराज तदा यासौ राज्ञो ब्रह्मदत्तस्याग्रमहिषी, एषैव सा श्यामावती तेन कालेन तेन समयेन। यानि पञ्च स्त्रीशतानि, एतान्येव तानि पञ्च स्त्रीशतानि तानि तेन कालेन तेन समयेन। या सा प्रेष्यदारिका, एषैवासौ कुब्जोत्तरा तेन कालेन तेन 30
समयेन। यदाभिः प्रत्येकबुद्धस्य कुटिकां दग्ध्वा अनुमोदितम्, तस्य कर्मणो विपाकेन बहूनि वर्षाणि नरकेषु पक्ता यावदेतर्ह्यपि दृष्टसत्या अग्निना दग्धाः। कुब्जोत्तरा अनुक्रमेण

निष्पलायिता । यत्प्रणिधानं कृतं तेन ममान्तिके सत्यदर्शनं कृतम् । इति हि महाराज एकान्तकृष्णानां कर्मणां पूर्ववद्यावदेवमाभोगः करणीयः । इत्येवं ते महाराज शिक्षितव्यम् । अत्रोदयनो वत्सराजो भगवतो भाषितमभिनन्द्यानुमोद्य भगवतः पादौ शिरसा वन्दित्वा भगवतोऽन्तिकात्प्रक्रान्तः ॥

5 भिक्षवः संशयजाताः सर्वसंशयच्छेत्तारं बुद्धं भगवन्तं पप्रच्छुः—किं भदन्त कुब्जोत्तरया कर्म कृतं येन कुब्जा संवृत्ता ? भगवानाह—कुब्जोत्तरयैव भिक्षवः कर्माणि कृतान्युपचितानि पूर्ववद्यावद् फलन्ति खलु देहिनाम् ॥

C 540 भूतपूर्वं भिक्षवो वाराणस्यां नगर्यां ब्रह्मदत्तो नाम राजा राज्यं कारयति पूर्ववद्यावद्धर्मेण राज्यं कारयति । नैमित्तिकैर्द्वादशवार्षिका अनावृष्टिरादिष्टा । राज्ञा वाराणस्यामेवं 10 घण्टावघोषणं कारितम्—यस्य द्वादशवार्षिकं भक्तमस्ति, तेन स्थातव्यम् । यस्य नास्ति तेनान्यत्र गन्तव्यमिति यतः कालेनागन्तव्यमिति । तेन खलु समयेन वाराणस्यां संधानो नाम गृहपतिः प्रतिवसति आढ्यो महाधनो महाभोग इति विस्तरः पूर्ववद्यावद् वैश्रवणधनप्रतिस्पर्धी । तेन कोष्ठागारिक आहूयोक्तः—भोः पुरुष, भविष्यति मम सपरिवारस्य द्वादश वर्षाणि भक्तमिति ? स कथयति—आर्य, भविष्यतीति । असति बुद्धानामुत्पादे 15 प्रत्येकबुद्धा लोक उत्पद्यन्ते पूर्ववद्यावद्भोः पुरुष, विन्यस्य प्रव्रजितसहस्रस्य मम द्वादश वर्षाणि भक्तमिति । स कथयति—आर्य, भविष्यतीति । तेन तेषां प्रतिज्ञातम् । दानशाला मापिताः । पूर्ववत्तत्र दिने दिने प्रत्येकबुद्धसहस्रं भुङ्क्ते । तत्रैकः प्रत्येकबुद्धो ग्लानः । सोऽन्यतमस्मिन् दिने नागच्छति । संधानस्य दुहिता कथयति—तात, एकोऽद्य प्रव्रजितो नागत इति । स कथयति—पुत्रि, कीदृश इति । सा पृष्ठं विनामयित्वा कथयति—तात, 20 ईदृश इति । यदनया प्रत्येकबुद्धो विनाडितः, तस्य कर्मणो विपाकेन कुब्जा संवृत्ता ।

पुनरपि भिक्षवो बुद्धं भगवन्तं पप्रच्छुः—किं भदन्त, कुब्जोत्तरया कर्म कृतं येन श्रुतधरा जातेति ? भगवानाह—तेन कालेन तेन समयेन प्रत्येकबुद्धानां यः संघस्थविरः स वाय्वाधिकः । तस्य भुञ्जानस्य पात्रं कम्पते । तस्य संधानदुहित्रा हस्तात् कटानवतार्य स प्रत्येकबुद्ध उक्तः—आर्य, तैस्तत्पात्रं स्थापयेति । तेन तत्र स्थापितम् । निष्कम्पमव- 25 स्थितम् । तया पादयोर्निपत्य प्रणिधानं कृतम् । यथैव तत्पात्रं निष्कम्पमवस्थितम्, C 541 एवमेव ममापि संताने ये धर्माः प्रविशेयुः, ते निष्कम्पं तिष्ठन्त्विति । यत्तया प्रणिधानं कृतं तस्य कर्मणो विपाकेन श्रुतधरा संवृत्ता ॥

पुनरपि भिक्षवो भगवन्तं पप्रच्छुः—किं भदन्त कुब्जोत्तरया कर्म कृतं येन दासी संवृत्तेति ? भगवानाह—अनया भिक्षवस्तत्रैश्वर्यमदमत्तया परिजनो दासीवादेन समुदा- 30 चरितः । तस्य कर्मविपाकेन दासी संवृत्ता ॥

पुनरपि भिक्षवो भगवन्तं पप्रच्छुः—किं भदन्त अनुपमया कर्म कृतं यदेषा निराहारा भूमिगृहे स्थापिता अम्लानगात्री चोत्थिता । भगवानाह—अनुपमयैव भिक्षवः कर्माणि कृतान्युपचितानि पूर्ववद्यावत्फलन्ति खलु देहिनाम् ॥

भूतपूर्वं भिक्षवोऽन्यतमस्मिन् कर्वटके द्वे दारिके अन्योन्यसंस्तुतिके क्षत्रियदारिका ब्राह्मणदारिका च। असति बुद्धानामुत्पादे प्रत्येकबुद्धा लोक उत्पद्यन्ते हीनदीनानुकम्पकाः प्रान्तशयनासनभक्ता एकदक्षिणीया लोकस्य। यावदन्यतमः प्रत्येकबुद्धोऽन्यतमस्मिञ्छान्ते प्रदेशे रात्रिं वासमुपगतः। अपरस्मिन् दिवसे पूर्वाह्णे निवास्य पिण्डार्थी प्रचलितः। तं दृष्ट्वा ते दारिके प्रसादिते, अस्मै प्रणीतान्नपूर्णं पात्रं प्रयच्छतः। तत्कर्मणो विपाकेनानुपमा 5 जाता, एका घोषिलस्य गृहपतेर्दुहिता जाता महासुन्दरी श्रीमती नाम। एकस्मिन् समये राज्ञा दृष्टा पृष्टा च—कस्येयं कन्या? मन्त्रिभिः कथितम्—घोषिलस्य गृहपतेः। ततो घोषिलो गृहपतिः समाहूयोक्तः—गृहपते, तव दुहितेयं कन्या? स प्राह—मम देव। कस्मान्मम न दीयते? दीयतां मह्यम्। स प्राह—देव, दत्ता भवतु। घोषिलेन गृहपतिना दत्ता। उदयनेन वत्सराजेनान्तःपुरं प्रवेश्य महता श्रीसमुदयेन परिणीता। अपरेण समयेन राजा उक्तः— 10 देव, भिक्षुदर्शनमभिकाङ्क्षामीति। स कथयति—आकाङ्क्षसे किं तु भिक्षवो राजकुलं प्रविशन्ति। देव, अहं नाम दारकं प्रवेशिता। सर्वथा यदि भिक्षुदर्शनं न लभे, अद्याग्रेण न भोक्ष्ये न पास्य इति। सा अनाहारतां प्रतिपन्ना। राज्ञा घोषिलो गृहपतिरुक्तः—गृहपते, न त्वं दुहितरं प्रत्यवेक्षसे? देव, किम्? अनाहारतां प्रतिपन्ना। किमर्थम्? भिक्षुदर्शनमाकाङ्क्षते। तदात्मनो गृहे भक्तं साधित्वा कायां(?) भिक्षुसंघमुपनिमन्त्र्य भोजय, अन्तरेण 15 च द्वारं छेदयेति। राज्ञो घोषिलस्य च संसक्तसीमं गृहम्। घोषिलेन गृहपतिना द्वारं छिन्नम्। ततो भूरि कर्म कारयित्वा येन भगवांस्तेनोपसंक्रान्तः। उपसंक्रम्य भगवतः पादौ शिरसा वन्दित्वैकान्ते निषण्णः। एकान्तनिषण्णं घोषिलं गृहपतिं भगवान् धर्म्यया कथया संदर्शयति समादापयति समुत्तेजयति संप्रहर्षयति। अनेकपर्यायेण धर्म्यया कथया संदर्श्य समादाप्य समुत्तेज्य संप्रहर्ष्य तूष्णीम्। अथ घोषिलो गृहपतिरुत्थायासनाद्येन भगवांस्तेना- 20 ञ्जलिं प्रणम्य भगवन्तमिदमवोचत्—अधिवासयतु मे भगवाञ्छ्वोऽन्तर्गृहे भक्तेन मम निमन्त्रितं सार्धं भिक्षुसंघेन। पूर्ववद्यावद्भगवतो दूतेन कालमारोचयति—समयो भदन्त, सज्जं भक्तं यस्येदानीं भगवान् कालं मन्यत इति। भगवानौपधिके स्थितः। शारिपुत्रप्रमुखो भिक्षुसंघः संप्रस्थितः। पञ्चभिः कारणैर्बुद्धा भगवन्त औपधिके तिष्ठन्ति—अभिनिर्ह्वतं मन्त्रयते स्म। चतुर्णामायुष्मन्त आज्ञा अकोप्या तथागतस्यार्हतः सम्यक्संबुद्धस्य, अरहतो भिक्षोः 25 क्षीणाश्रवस्य उपधिवारकस्य, राज्ञश्च क्षत्रियस्य मूर्ध्नाभिषिक्तस्य। स्मृतिमुपस्थापयति—प्रविशामेति। स प्रविश्य पुरस्ताद् भिक्षुसंघस्य प्रज्ञप्त एवासने निषण्णः। अथ श्रीमती देवी सुखोपनिषण्णं शारिपुत्रप्रमुखं भिक्षुसंघं विदित्वा पूर्ववद्यावन्नीचतरमासनं गृहीत्वा पुरस्तान्निषण्णा धर्मश्रवणाय। अथायुष्माञ्छारिपुत्रः श्रीमतीं देवीं धर्म्यया कथया संदर्शयति समादापयति समुत्तेजयति संप्रहर्षयति। सा सत्यानि न पश्यति। आयुष्माञ्छारिपुत्रः 30 संलक्षयति—किमस्याः सन्ति कानिचित्कुशलमूलानि? न सन्तीति पश्यति। सन्ति कस्यान्तिके प्रतिबद्धानि? पश्यत्यात्मनः। तस्य धर्मं देशयतो विचारयतश्च सूर्यास्तंगमनसमयो

C 542 C 543

जातः। भिक्षव उत्थायासनात्प्रक्रान्ताः। आयुष्मांञ्छारिपुत्रः संलक्षयति—किं चापि भगवता नानुज्ञातम्, स्थानमेतद्विद्यते यदेतदेव प्रत्यक्षं कृत्वा अनुज्ञास्यतीति। स विनेयापेक्षया तत्रैवावस्थितः। तेन तस्या आशयानुशयं धातुं च प्रकृतिं च ज्ञात्वा तादृशी धर्मदेशना कृता, यां श्रुत्वा श्रीमत्या विंशतिशिखरसमुद्गतं सत्कायदृष्टिशैलं पूर्ववद्यावत्सर्वं वाच्यं त्रिशरणगम-
5 भिप्रसन्नम्। अथायुष्मांञ्छारिपुत्रः श्रीमतीं सत्येषु प्रतिष्ठाप्य प्रक्रान्तो येन भगवांस्तेनोप-संक्रान्तः। उपसंक्रम्य भगवतः पादौ शिरसा वन्दित्वैकान्ते निषण्णः। एकान्ते निषण्ण आयुष्मांञ्छारिपुत्र एतत्प्रकरणं भिक्षवो भगवते विस्तरेणारोचयति। भगवानाह—साधु साधु शारिपुत्र, सप्तानामाज्ञा अकोप्या—तथागतस्यार्हतः सम्यक्संबुद्धस्य, अर्हतो भिक्षोः क्षीणाश्रवस्य, राज्ञः क्षत्रियस्य मूर्धाभिषिक्तस्य, संघस्थविरस्य, उपधिवारिकस्य, आचार्यस्य,
10 उपाध्यायस्य। अथ भगवाञ्छिक्षाकामतया वर्णं भाषित्वा पूर्ववद्यावत् पूर्विका प्रज्ञप्तिः। इयं चाभ्यनुज्ञाता—एवं च मे श्रावकैर्विनयशिक्षापदमुपदेष्टव्यम्। यः पुनर्भिक्षुरनिर्गतायां रजन्यामनुद्गतेऽरुणे अनिर्हृतेषु रत्नेषु रत्नसंमतेषु वा राज्ञः क्षत्रियस्य मूर्धाभिषिक्तस्य इन्द्रकीलं वा इन्द्रकीलसामन्तं वा समतिक्रामेदन्यत्र तद्रूपात्प्रत्ययात् पापान्तिकेति। यः पुनर्भिक्षुरित्युदायी इति, सो वा पुनरन्योऽप्येवंजातीयः अनिर्गतायां रजन्यामित्यप्रभा-
15 तायाम्, अनुद्गत इत्यनुदिते अरुणे इति, अरुणः नीलारुणः पीतारुणः ताम्रारुणः। तत्र नीलारुणो नीलाभासः, पीतारुणः पीताभासः, ताम्रारुणः ताम्राभासः। इह तु ताम्रारुणोऽभिप्रेतः। रत्नेषु वेति रत्नान्युच्यन्ते मणयो मुक्ता वैडूर्यं पूर्ववद्यावद्दक्षिणावर्तः।
C 544 रत्नसंमतेषु वेति रत्नसंमतमुच्यते सर्वं संग्रामावचरशस्त्रं सर्वं च गन्धर्वावचरं भाण्डम्। राज्ञः क्षत्रियस्य मूर्धाभिषिक्तस्येति वा राज्ये स्त्र्यपि राज्याभिषेकेणाभिषिक्ता भवति, राजा
20 सः क्षत्रियो मूर्धाभिषिक्तः। क्षत्रियोऽपि ब्राह्मणोऽपि वैश्योऽपि शूद्रोऽपि राज्याभिषेकेणा-भिषिक्तो भवति राजा क्षत्रियो मूर्धाभिषिक्तः। इन्द्रकीलं वेति त्रय इन्द्रकीलाः। नगरे इन्द्रकीलो राजकुले इन्द्रकीलोऽन्तःपुर इन्द्रकीलश्च। इन्द्रकीलसामन्तं वेति तत्समीपम्। समतिक्रमेदपि विगच्छेत्। अन्यत्र तद्रूपात्प्रत्ययादिति तद्रूपं प्रत्ययं स्थापयित्वा। पापान्तिकेति दहति पचति यातयति पूर्ववत्। तत्रापत्तिः कथं भवति? भिक्षुरप्रभाते प्रभातसंज्ञी
25 नगरेन्द्रकीलं समतिक्रामति, आपद्यते दुष्कृताम्। अप्रभाते वैमतिकः, आपद्यते दुष्कृतम्। प्रभाते अप्रभातसंज्ञी, आपद्यते दुष्कृतम्। प्रभाते वैमतिकः, आपद्यते दुष्कृतम्। भिक्षुरप्रभाते अप्रभातसंज्ञी अन्तःपुरेन्द्रकीलं समतिक्रामति आपद्यते पापान्तिकम्। प्रभातेऽप्रभातसंज्ञी आपद्यते दुष्कृतम्। प्रभाते वैमतिकः, आपद्यते दुष्कृतम्। अना-पत्तिः—राजा शब्दयति—देव्यः कुमारा अमात्या अष्टानामन्तरायाणामन्यतमान्यतममुपस्थितं
30 भवति राजा चौरमनुष्यामनुष्यव्यालाग्न्युदकानाम्। अनापत्तिरादिकर्मिकस्येति पूर्ववत्॥

इति श्रीदिव्यावदाने माकन्दिकावदानं समाप्तम्॥

## ३७ रुद्रायणावदानम् ।

बुद्धो भगवान् राजगृहे विहरति वेणुवने कलन्दकनिवापे । द्वे महानगरे पाटलि-
पुत्रं रोरुकं च । यदा पाटलिपुत्रं संवर्तते, तदा रोरुकं विवर्तते । रोरुके महानगरे रुद्रायणो C 545
नाम राजा राज्यं कारयति ऋद्धं च स्फीतं च क्षेमं च सुभिक्षं च आकीर्णबहुजनमनुष्यं
च । सदापुष्पफलवृक्षाः । देवः कालेन कालं सम्यग्वारिधारामनुप्रयच्छति । अतीव शस्य- 5
संपत्तिर्भवति । तस्य चन्द्रप्रभा नाम देवी, शिखण्डी पुत्रः कुमारः, हिरुर्भिरुस्तस्याग्रामात्यौ ।
राजगृहे राजा बिम्बिसारो राज्यं कारयति ऋद्धं च स्फीतं च क्षेमं च सुभिक्षं च आकीर्ण-
बहुजनमनुष्यं च । तस्य वैदेही महादेवी, अजातशत्रुः पुत्रः कुमारः, वर्षकारो ब्राह्मणो
मगधमहामात्योऽग्रामात्यः । सदापुष्पफलवृक्षाः । देवः कालेन कालं सम्यग्वारिधारामनु-
प्रयच्छति । अतीव शस्यसंपत्तिर्भवति । राजगृहाद्वणिजः पण्यमादाय रोरुकमनुप्राप्ताः । अथ 10
राजा रुद्रायणोऽमात्यगणपरिवृतोऽमात्यानामन्त्रयते—भवन्तः, अस्ति कस्यचिदन्यस्यापि राज्ञ
एवंविधा जनपदा ऋद्धाश्च स्फीताश्च क्षेमाश्च सुभिक्षाश्च आकीर्णबहुजनमनुष्याश्च ? सदा-
पुष्पफलवृक्षाः ? देवः कालेन कालं सम्यग्वारिधारामनुप्रयच्छति ? अतीव शस्यसंपत्तिर्भवति ?
ते वणिजः कथयन्ति—अस्ति देव पूर्वदेशे राजगृहं नगरम् । तत्र राजा बिम्बिसारो राज्यं
कारयति ऋद्धं च स्फीतं च क्षेमं च सुभिक्षं च आकीर्णबहुजनमनुष्यं च । तस्यापि 15
सदापुष्पफलवृक्षाः । देवः कालेन कालं सम्यग्वारिधारामनुप्रयच्छति । अतीव शस्यसंपत्ति-
र्भवति । तस्य सहश्रवणादेव तस्यान्तिकेऽनुनय उत्पन्नः । सोऽमात्यानामन्त्रयते—किं
भवन्तस्तस्य राज्ञो दुर्लभम् ? ते कथयन्ति—देवो रत्नाधिपतिः, स राजा वस्त्राधिपतिः । तस्य
रत्नानि दुर्लभानि । तेन तस्य रत्नानां पेटां पूरयित्वा प्राभृतमनुप्रेषितं लेखश्च दत्तः—प्रिय-
वयस्य, त्वं ममादृष्टसखा । यदि तव किंचिद् रोरुके नगरे करणीयं भवति, मम लेखो 20
दातव्यः । सर्वं तत् परिप्रापयिष्यामि । ते तं प्राभृतमादाय येन राजगृहं तेन प्रक्रान्ताः ।
अनुपूर्वेण राजगृहमनुप्राप्ताः । तैः सा रत्नपेटा राज्ञो बिम्बिसारस्योपनामिता लेखश्च । राजा C 546
बिम्बिसारो लेखं वाचयित्वा अमात्यानामन्त्रयते—किं भवन्तस्तद्राज्ञो दुर्लभम् ? अमात्याः
कथयन्ति—देवो वस्त्राधिपतिः, स राजा रत्नाधिपतिः । तस्य वस्त्राणि दुर्लभानि । तेन तस्य
महार्हाणां वस्त्राणां पेटां पूरयित्वा प्राभृतमनुप्रेषितं लेखश्च दत्तः—प्रियवयस्य, त्वं ममादृष्ट- 25
सखा । यत्किंचित्तव राजगृहे प्रयोजनं भवति, मम लेखो दातव्यः । तत्सर्वं परिप्राप-
यिष्यामि । ते तं प्राभृतमादाय येन रोरुकं तेन प्रक्रान्ताः । अनुपूर्वेण रोरुकमनुप्राप्ताः ।
तैः सा वस्त्रपेटा राज्ञो रुद्रायणस्योपनामिता लेखश्च । स दूतः प्रत्यागतः । अथापरेण
समयेन राजा रुद्रायणोऽमात्यगणपरिवृतः । सोऽमात्यानामन्त्रयते—भवन्तः, कीदृशस्तस्य राज्ञो
आनाहपरिणाहः ? ते कथयन्ति—यादृश एव देवस्य, अपि तु स राजा स्वयं प्रहर्ता । 30
प्रातिसीमैः कीदृशं राजभिः सार्धं संग्रामयति ? रुद्रायणस्य राज्ञो मणिवर्म पञ्चाङ्गेपेतोशीतं
उष्णसंस्पर्शमुष्णे शीतसंस्पर्शं दुश्छेदं दुर्भेदं विषघ्नमवभासात्मकं च । तेन तस्य तं प्राभृत-

मनुप्रेषितं लेखश्च दत्तः—प्रियवयस्य, इदं मया च तव मणिवर्म प्राभृतमनुप्रेषितं पञ्चाङ्गोपेतं शीते उष्णसंस्पर्शमुष्णे शीतसंस्पर्शं दुश्छेदं दुर्भेदं विषघ्नमवभासात्मकम्। न त्वयैतत्कस्यचिद्दातव्यम्। स दूतस्तन्मणिवर्म आदाय लेखं च, येन राजगृहं तेन प्रक्रान्तः। अनुपूर्वेण राजगृहमनुप्राप्तः। तेन तन्मणिवर्म राज्ञो बिम्बिसारस्योपनीतं लेखश्च। राजा बिम्बि-
5 सारस्तं दृष्ट्वा विस्मयमापन्नः। तेन रत्नपरीक्षका आहूताः—मूल्यमस्य कुरुत। ते कथयन्ति—देव, एकैकरत्नमनर्घोऽयम्। धर्मता खलु यस्य न शक्यते मूल्यं कर्तुम्, तस्यैकैकस्य कोटिमूल्यं क्रियते। राजा बिम्बिसारो व्यथितः कथयति—किं मया तस्य प्राभृतमनुप्रेषितव्यं भविष्यति? स संलक्षयति—अयं बुद्धो भगवान्। स राज्ञः सर्वदस्यानुत्तरज्ञानज्ञो वशिप्राप्तः। गच्छामि, बुद्धं भगवन्तं पृच्छामि। स तमादाय येन भगवांस्तेनोपसंक्रान्तः। उप-
C 547
10 संक्रम्य भगवतः पादौ शिरसा वन्दित्वा एकान्ते निषण्णः। राजा बिम्बिसारो भगवन्तमिदमवोचत्—रोरुके भदन्त नगरे राजा रुद्रायणो नाम प्रतिवसति ममादृष्टसखा। तेन मम पञ्चाङ्गोपेतमणिवर्म प्राभृतमनुप्रेषितम्। अहं तस्य किं प्राभृतमनुप्रेषयामि? भगवानाह—तथागतप्रतिमां पटे लिखापयित्वा प्राभृतमनुप्रेषय। तेन चित्रकरा आहूयोक्ताः—तथागतप्रतिमां पटे चित्रयथ। दुरासदा बुद्धा भगवन्तः। ते न शक्नुवन्ति भगवतो निमित्त-
15 मुद्ग्रहीतुम्। ते कथयन्ति—यदि देवो भगवन्तमन्तर्गृहे भोजयेत्, एवं स्वयं संज्ञापय भगवतो निमित्तमुद्ग्रहीतुम्। राज्ञा बिम्बिसारेण भगवानन्तर्गृहे उपनिमन्त्र्य भोजितः। असेचनकदर्शना बुद्धा भगवन्तः। ते यमेवावयवं भगवतः पश्यन्ति, तमेव पश्यन्तो न तृप्तिं गच्छन्ति। ते न शक्नुवन्ति भगवतो निमित्तमुद्ग्रहीतुम्। भगवानाह—महाराज, खेदमापत्स्यन्ते, न शक्यते तथागतस्य निमित्तमुद्ग्रहीतुम्। अपि तु पटकमानय। तेन पटक
20 आनीतः। तत्र भगवता छाया उत्सृष्टा, उक्ताश्च—रङ्गैः पूरयत। तस्याधस्ताच्छरणगमनशिक्षापदानि लिखितव्यानि। अनुलोमप्रतिलोमद्वादशाङ्गः प्रतीत्यसमुत्पादो लिखितव्यः। गाथाद्वयं च लिखितव्यम्—

आरभध्वं निष्क्रामत युज्यध्वं बुद्धशासने।
धुनीत मृत्युनः सैन्यं नडागारमिव कुञ्जरः॥ १॥

25 अस्मिन् यो धर्मविनये ह्यप्रमत्तश्चरिष्यति।
प्रहाय जातिसंसारं दुःखस्यान्तं करिष्यति॥ २॥

यदि कथयति—किमिदम्? वक्तव्यम्—इयमभ्युपपत्तिरियं शिक्षा इयं लोकसंवृतिरियमत्युत्साहता। तैर्यथासंदिष्टं सर्वमभिलिखितम्। भगवता राजा बिम्बिसार उक्तः—महाराज, रुद्रा-
C 548
यणस्य लेखमनुप्रयच्छ—प्रियवयस्य, इदं ते मया त्रैलोक्यप्रतिविशिष्टं प्राभृतमनुप्रेषितम्। अस्य
30 त्वया अर्धतृतीयानि योजनानि मार्गशोभा कर्तव्या। स्वयमेव चतुरङ्गेन बलकायेन प्रत्युद्गन्तव्यम्। विस्तीर्णावकाशे प्रदेशे स्थापयित्वा महतीं पूजां सत्कारं कृत्वोद्घाटयितव्यम्। ततस्ते महतः पुण्यस्यावाप्तिर्भविष्यतीति। राज्ञा बिम्बिसारेण यथासंदिष्टं लेखो लिखित्वा संप्रेषितः। राज्ञो

रुद्रायणस्य लेख उपनामितः । तेन वाचितः । तस्यामर्ष उत्पन्नः । सोऽमात्यानां कथयति—भवन्तः, कीदृशं मम तेन प्राभृतमनुप्रेषितं यस्य मयैवंविधः सत्कारः कर्तव्यो भविष्यति ? संनाहयत चतुरङ्गबलकायम् । राष्ट्रापमर्दनमस्य करिष्यामः । अमात्याः कथयन्ति—देव, महात्मासौ राजा श्रूयते । न शक्यं तेन यद्वा तद्वा प्रतिप्राभृतमनुप्रेषयितुम् । आनुपूर्वी तावत्क्रियताम् । यदि देवस्य न चित्तपरितोषो भविष्यति, तत्र कालज्ञा भविष्यामः । एवं 5 क्रियताम् । तेनार्धतृतीयानि योजनानि मार्गशोभा कृता । स्वयमेव चतुरङ्गबलकायेन प्रत्युद्गम्य प्रवेशितः । विस्तीर्णावकाशे प्रदेशे स्थापयित्वा महतीं पूजां कृत्वोद्घाटिता । मध्यदेशाद्वणिजः पण्यमादाय तत्रानुप्राप्ताः । तैर्बुद्धप्रतिमां दृष्ट्वा एकरवेण नादो मुक्तः—नमो बुद्धायेति । तस्य बुद्ध इत्यश्रुतपूर्वं घोषं श्रुत्वा सर्वरोमकूपाण्याहृष्टानि । स कथयति—क एष भवन्तो बुद्धो नाम ? ते कथयन्ति—देव, शाक्यानां कुमार उत्पन्नोऽस्ति हिमवत्पार्श्वे नद्या 10 भागीरथ्यास्तीरे कपिलस्य ऋषेराश्रमपदस्य नातिदूरे । स ब्राह्मणैर्नैमित्तिकैर्विपश्चिकैर्व्याकृतः । सचेद्गृही अगारमध्यावसिष्यति, राजा भविष्यति चक्रवर्ती चतुरङ्गैर्विजेता धार्मिको धर्मराजः सप्तरत्नसमन्वागतः । तस्येमान्येवंरूपाणि सप्तरत्नानि भवन्ति, तद्यथा—चक्ररत्नं हस्तिरत्नमश्वरत्नं मणिरत्नं स्त्रीरत्नं गृहपतिरत्नं परिणायकरत्नमेव सप्तमम् । पूर्णं चास्य भविष्यति सहस्रं पुत्राणां शूराणां वीराणां वराङ्गरूपिणां परसैन्यप्रमर्दकानाम् । स इमामेव समुद्रपर्यन्तां महापृथ्वी- 15 मखिलामकण्टकामनुत्पीडामदण्डेनाशस्त्रेण धर्मेण शमेनाभिनिर्जित्य अध्यावसिष्यति । सचेत् केशश्मश्रूण्यवतार्य काषायाणि वस्त्राण्याच्छाद्य सम्यगेव श्रद्धया अगारादनगारिकां प्रव्रजिष्यति, तथागतो भविष्यत्यर्हन् सम्यक्संबुद्धो विघुष्टशब्दो लोके । स एष बुद्धो नाम । तस्यैषा प्रतिमा । इदं किम् ? अभ्युपपत्तिः । इदं किम् ? शिक्षापदम् । इदं किम् ? लोकस्य प्रवृत्तिनिवृत्ती । इदं किम् ? अत्युत्साहना । तेन प्रतीत्यसमुत्पादोऽनुलोमप्रतिलोमः सुगृहीतः कृतः ॥ 20

C 549

अथ रुद्रायणो राजा सामात्यः प्रत्यूषसमये सर्वार्थान् सर्वकर्मान्तान् प्रतिप्रस्रभ्य निषण्णः पर्यङ्कमाभुज्य ऋजुकायं प्रणिधाय प्रतिमुखां स्मृतिमुपस्थाप्य । स इममेव द्वादशाङ्गं प्रतीत्यसमुत्पादमनुलोमप्रतिलोमं व्यवलोकयति, यदुत अस्मिन् सतीदं भवति, अस्योत्पादादिदमुत्पद्यते यदुत अविद्याप्रत्ययाः संस्कारा यावत्समुदयो निरोधश्च भवति । तेनेमं द्वादशाङ्गं प्रतीत्यसमुत्पादमनुलोमप्रतिलोमं व्यवलोकयता विंशतिशिखरसमुद्गतं सत्कायदृष्टिशैलं ज्ञान- 25 वज्रेण भित्त्वा स्रोतापत्तिफलं साक्षात्कृतम् । स दृष्टसत्यो गाथां भाषते—

भूरत्नेन हि बुद्धेन प्रज्ञाचक्षुर्विशोधितम् ।
नमस्तस्मै सुवैद्याय चिकित्सा यस्य हीदृशी ॥ २ ॥

तेन राज्ञो बिम्बिसारस्य संदिष्टम्—प्रियवयस्य, त्वामागम्य मयोद्धृतो नरकतिर्यक्प्रेतेभ्यः पादः, प्रतिष्ठापितो देवमनुष्येषु । उच्छोषिता रुधिराश्रुसमुद्राः, लङ्घिता अस्थि- 30 पर्वताः, अनादिकालोपचितं सत्कायदृष्टिशैलं ज्ञानवज्रेण भित्त्वा स्रोतापत्तिफलं साक्षात्कृतम् । भिक्षुदर्शनमाकाङ्क्षामि । तदर्हसि भिक्षुं प्रेषयितुम् । अथ स राजा बिम्बिसारो येन भगवांस्तेनो-

पसंक्रान्तः। उपसंक्रम्य भगवतः पादौ शिरसा वन्दित्वा एकान्ते निषण्णः। एकान्तनिषण्णो भगवन्तमिदमवोचत्—रुद्रायणेन भदन्त राज्ञा सत्यानि दृष्टानि। तेन मम संदिष्टम्—भिक्षु-
C 550 दर्शनमाकाङ्क्षामीति। भगवान् संलक्षयति—कतमस्य भिक्षो रुद्रायणो राजा सपरिवारो विनेयो रौरुकनिवासी च जनकायः? कात्यायनस्य भिक्षोः। तत्र भगवानायुष्मन्तं महा-
5 कात्यायनमामन्त्रयते—समन्वाहर कात्यायन रौरुके नगरे रुद्रायणं राजानं सपरिवारं रौरुक-निवासिनं च जनकायम्। अधिवासयत्यायुष्मान् महाकात्यायनः। भगवतः पादौ शिरसा वन्दित्वा भगवतोऽन्तिकात्प्रक्रान्तः। अथायुष्मान् महाकात्यायनस्तस्या एव रात्र्या अत्ययात्पूर्वाह्णे निवास्य पात्रचीवरमादाय राजगृहं पिण्डाय प्राविक्षत्। राजगृहं पिण्डाय चरित्वा कृतभक्तकृत्यः पश्चाद्भक्तपिण्डपातप्रतिक्रान्तः परिभुक्तं शयनं प्रतिशाम्य समादाय
10 पात्रचीवरं पञ्चशतपरिवारो येन रौरुकं तेन चारिकां प्रक्रान्तः। राज्ञा बिम्बिसारेण रुद्रा-यणस्य राज्ञो लेखोऽनुप्रेषितः। प्रियवयस्य, एष ते भिक्षुर्मया शास्तृकल्पो महाश्रावकोऽनु-प्रेषितः। अस्य त्वयार्धतृतीयानि योजनानि मार्गशोभा कर्तव्या नगरशोभा च। स्वयमेव चतुरङ्गेन बलकायेन प्रत्युद्गन्तव्यः। पञ्च विहारशतानि कर्तव्यानि। पञ्च मञ्चपीठ-वृषिकोच्चकबिम्बोपधानचतुरस्रकशतानि दातव्यानि। पञ्च पिण्डशतानि प्रज्ञापयितव्यानि।
15 अतस्ते महतः पुण्यस्यावाप्तिर्भविष्यति। तेनार्धतृतीयानि योजनानि मार्गशोभा कृता, नगर-शोभा कृता, पञ्च विहारशतानि, येन एकजनसहस्रपरिवारेण च स्वयमेव प्रत्युद्गम्य महता सत्कारेण रोरुकं नगरं प्रवेशितः। बहिर्नगरस्य पञ्च विहारशतानि कारितानि, पञ्च मञ्चपीठवृषिकोच्चकबिम्बोपधानचतुरस्रकशतानि दापितानि, पञ्च पिण्डपातशतानि प्रज्ञप्तानि, विस्तीर्णावकाशे च पृथिवीप्रदेशे आसनप्रज्ञप्तिः कारिता। आयुष्मान् महाकात्यायनः
20 पुरस्ताद् भिक्षुसंघस्य प्रज्ञप्त एवासने निषण्णः। अनेकानि प्राणिशतसहस्राणि संनिपति-तानि। कानिचित्कुतूहलजातानि, कानिचित्पूर्वकैः कुशलमूलैः संचोद्यमानानि। तत आयुष्मता महाकात्यायनेन तस्याः परिषद आशयानुशयं धातुं प्रकृतिं च ज्ञात्वा तादृशी
C 551 धर्मदेशना कृता, यां श्रुत्वा अनेकैः प्राणिशतसहस्रैर्महाविशेषोऽधिगतः। कैश्चिच्छ्रोतापत्ति-फलम्, कैश्चिदनागामिफलम्, कैश्चित्प्रव्रज्य सर्वक्लेशप्रहाणादर्हत्त्वं साक्षात्कृतम्, कैश्चि-
25 च्छ्रावकबोधौ चित्तान्युत्पादितानि, कैश्चित्प्रत्येकायां बोधौ, कैश्चिदनुत्तरायां सम्यक्संबोधौ। यद्भूयसा सा परिषद्बुद्धनिम्ना धर्मप्रवणा संघप्राग्भारा व्यवस्थापिता॥

रौरुके नगरे तिष्यः पुष्यश्च गृहपती वसतः। तौ येनायुष्मान् महाकात्यायनस्तेनोप-संक्रान्तौ। उपसंक्रम्य आयुष्मतो महाकात्यायनस्य पादौ शिरसा वन्दित्वा एकान्ते निषण्णौ। तिष्यपुष्यौ गृहपती आयुष्मन्तं महाकात्यायनमिदमवोचताम्—लभेवहि आर्यमहाकात्यायन
30 स्वाख्याते धर्मविनये प्रव्रज्यामुपसंपदं भिक्षुभावम्। चरेव आर्यमहाकात्यायन भवतोऽन्तिके ब्रह्मचर्यमिति। तावायुष्मता कात्यायनेन प्रव्रजितावुपसंपादितौ, अववादो दत्तः। ताभ्यां युज्यमानाभ्यां व्यायच्छमानाभ्यां घटमानाभ्यामिदमेव पञ्चगण्डकं संसारचक्रं चलाचलं

विदित्वा सर्वसंस्कारगतीः शतशः शतनपतनविकिरणविध्वंसनधर्मतया पराहत्य सर्वक्लेश-
प्रहाणादर्हत्त्वं साक्षात्कृतम् । अर्हन्तौ संवृत्तौ त्रैधातुकवीतरागौ समलोष्टकाञ्चनावाकाश-
पाणिसमचित्तौ वासीचन्दनकल्पौ विद्याविदारिताण्डकोशौ विद्याभिज्ञाप्रतिसंवित्प्राप्तौ भव-
लाभलोभसत्कारपराङ्मुखौ । सेन्द्रोपेन्द्राणां देवानां पूज्यौ मान्यावभिवाद्यौ च संवृत्तौ । तौ
ज्वलनतपनवर्षणविद्योतनप्रातिहार्याणि कृत्वा निरुपधिशेषे निर्वाणधातौ परिनिर्वृतौ । 5
तयोर्ज्ञातृभिः शरीरपूजां कृत्वा द्वौ स्तूपौ कारितौ—एकस्तिष्यस्य, द्वितीयः पुण्यस्य ॥

रुद्रायणो राजा दिने दिने आयुष्मतो महाकात्यायनस्यान्तिकाद् धर्मं श्रुत्वा अन्तः-
पुरस्यारोचयति—आर्यो महाकात्यायनो मधुरमधुरं धर्मं देशयति क्षौद्रमिव मधुरं प्रप्रीण-
यतीति । ताः कथयन्ति—देवस्य सफलो बुद्धोत्पादः । कथम्? येन त्वं धर्मं शृणोषि । C 552
यद्येवम्, यूयं कस्मान्न शृणुथ? देव, वयं ह्रीमन्त्यः । कथं वयं तत्र गत्वा धर्मं शृणुमः? 10
यद्यार्यो महाकात्यायन इहैवागत्य धर्मं देशयेत्, एवं वयमपि शृणुयाम इति । रुद्रायणेन
राज्ञा आयुष्मान् महाकात्यायन उक्तः—मम आर्य सान्तःपुरमिच्छति श्रोतुम् । स कथयति—
महाराज, न भिक्षवोऽन्तःपुरं प्रविश्य धर्मं देशयन्ति । प्रतिक्षिप्तो भगवता अन्तःपुरप्रवेशः ।
आर्य, अत्र कोऽन्तःपुरस्य धर्मं देशयति? महाराज, भिक्षुण्यः । रुद्रायणराज्ञा बिम्बिसारस्य
राज्ञो लेखोऽनुप्रेषितः—प्रियवयस्य, अन्तःपुरमिच्छति धर्मं श्रोतुम् । तदर्हसि कांचिद्भिक्षुणीं 15
प्रेषयितुम् । बिम्बिसारो राजा तं लेखं वाचयित्वा येन भगवांस्तेनोपसंक्रान्तः । उपसंक्रम्य
भगवतः पादौ शिरसा वन्दित्वैकान्ते निषण्णः । एकान्तनिषण्णो राजा बिम्बिसारो
भगवन्तमिदमवोचत्—रुद्रायणेन भगवन् राज्ञा लेखोऽनुप्रेषितः—अन्तःपुरमिच्छति धर्मं श्रोतुम्।
तदर्हसि कांचिद्भिक्षुणीं प्रेषयितुमिति । तदत्र कथं प्रतिपत्तव्यमिति? भगवान् संलक्ष-
यति—कतरस्या भिक्षुण्या रुद्रायणस्य राज्ञो अन्तःपुरपरिजनो विनेयो रौरुकनिवासी च 20
स्त्रीजन इति? पश्यति शैलाया भिक्षुण्याः । तत्र भगवाञ्छैलां भिक्षुणीमामन्त्रयते—समन्वाहर
शैले रौरुके नगरे रुद्रायणस्य राज्ञोऽन्तःपुरजनं रौरुकनिवासिनं स्त्रीजनमिति । एवं भदन्तेति
शैला भिक्षुणी भगवतः प्रतिश्रुत्य पादौ शिरसा वन्दित्वा भगवतोऽन्तिकात् प्रक्रान्ता ।
अथ शैला भिक्षुणी तस्या एव रात्रेरत्ययात्पूर्वाह्णे निवास्य पात्रचीवरमादाय राजगृहं
पिण्डाय चरित्वा कृतभक्तकृत्या पश्चाद्भक्तपिण्डपातप्रतिक्रान्ता यथापरिभुक्तं शयनासनं 25
प्रतिसमय्य समादाय पात्रचीवरं पञ्चशतपरिवारा येन रौरुकं नगरं तेन चारिकां प्रक्रान्ता ।
बिम्बिसारेण च राज्ञा रुद्रायणस्य राज्ञो लेखोऽनुप्रेषितः—प्रियवयस्य, एषा ते मया महा-
श्राविका शास्त्रानुगता पञ्चशतपरिवारा प्रेषिता । अस्यां त्वयार्धतृतीयानि योजनानि मार्गशोभा
कर्तव्या नगरशोभा च । स्वयमेव च चतुरङ्गेन बलकायेन प्रत्युद्गन्तव्यम् । अभ्यन्तरे च नगरस्य C 553
पञ्च विहारशतानि कारयितव्यानि, पञ्च मञ्चपीठशतानि, वृषिकोच्चबिम्बोपधानचतुरस्रकशतानि 30
दातव्यानि, पञ्च पिण्डपातशतानि प्रज्ञापयितव्यानि । अतस्ते पुण्यस्यावाप्तिर्भविष्यतीति ।
रुद्रायणेन राज्ञा लेखं वाचयित्वा प्रामोद्यजातेनार्धतृतीयानि योजनानि मार्गशोभा कारिता ।

अनेकजनसहस्रपरिवारेण च स्वयमेव प्रत्युद्गम्य महता सत्कारेण रौरुकं नगरं प्रवेशिता। अभ्यन्तरे च नगरस्य पञ्च विहारशतानि कारितानि, पञ्च मञ्चपीठवृषिकोषबिम्बोपधानचतुरस्रकशतानि दापितानि, पञ्च पिण्डपातशतानि प्रज्ञप्तानि। शैला भिक्षुणी रुद्रायणस्य राज्ञोऽन्तःपुरं प्रविश्य दिने दिनै धर्मं देशयति। रुद्रायणो राजा वीणायां कृतावी, चन्द्रप्रभा देवी नृत्ये।
5 यावदपरेण समयेन रुद्रायणो राजा वीणां वादयति, चन्द्रप्रभा देवी नृत्यति। तेन तस्या नृत्यन्त्या विनाशलक्षणं दृष्टम्। स तामितश्चामुतश्च निरीक्ष्य संलक्षयति—सप्ताहस्यात्ययात्कालं करिष्यति। तस्य हस्ताद्वीणा स्रस्ता, भूमौ निपतिता। चन्द्रप्रभा देवी कथयति—देव, मा मया दुर्नृत्यम्? देवि, न त्वया दुर्नृत्यम्। अपि तु मया तव नृत्यन्त्या विनाशलक्षणं दृष्टम्—सप्तमे दिवसे तत्र कालक्रिया भवतीति। चन्द्रप्रभा देवी पादयोर्निपत्य कथयति—देव यद्येवम्,
10 कृतोपस्थानाहं देवस्य। यदि देवोऽनुजानीयात्, अहं प्रव्रजेयमिति। स कथयति—चन्द्रप्रभे, समयतोऽनुजानामि। यदि तावत्प्रव्रज्य सर्वक्लेशप्रहाणादर्हत्त्वं साक्षात्करोषि, एष एव ते दुःखान्तः। अथ सावशेषसंयोजना कालं कृत्वा देवेषूपपद्यसे, देवभूतया ते ममोपदर्शयितव्यमिति। सा कथयति—देव, एवं भवत्विति। सा रुद्रायणेन राज्ञा शैलाया भिक्षुण्याः

C 554

समर्पिता—आर्यचन्द्रप्रभा देवी आकाङ्क्षति स्वाख्याते धर्मविनये प्रव्रज्यामुपसंपदं भिक्षुणी-
15 भावम्। तदर्हसि तां प्रव्राजयितुमुपसंपादयितुमिति। शैला भिक्षुणी कथयति—एवं भवतु, प्रव्राजयामीति। तयासौ प्रव्राजिता उपसंपादिता च। समन्वाहृत्य चाववादो दत्तः—मरणसंज्ञां भावयेति। चन्द्रप्रभा देवी मरणसंज्ञां भावयितुमारब्धा। सा सप्तमे दिवसे कालगता चातुर्महाराजिकेषु देवेषूपपन्ना। धर्मता खलु देवपुत्रस्य वा देवकन्याया वा अचिरोपपन्नस्य, त्रीणि चित्तान्युत्पद्यन्ते—कुतश्च्युतः, कुत्रोपपन्नः, केन कर्मणेति। चन्द्रप्रभा
20 देवकन्या संलक्षयति—कुतोऽहं च्युता? मनुष्येभ्यः। कुत्रोपपन्ना? चातुर्महाराजिकेषु देवेषु। केन कर्मणा? भगवतः शासने ब्रह्मचर्यं चरित्वेति। तस्या एतदभवत्—तदप्रतिरूपं स्याद्यदहं पर्युषितपरिवासा भगवन्तं दर्शनायोपसंक्रमितुम्। यन्न्वहमपर्युषितपरिवासैव भगवन्तं दर्शनायोपसंक्रामेयमिति। अथ चन्द्रप्रभा देवकन्या चलविमलकुण्डलधरा हारार्धहारविभूषितगात्री तामेव रात्रीं दिव्यानामुत्पलकुमुदपुण्डरीकमान्दारवाणामुत्सङ्गं पूरयित्वा सर्वं
25 वेणुवनं कलन्दकनिवापमुदारेणावभासेनावभास्य भगवन्तं पुष्पैरवकीर्य भगवतः पुरस्तान्निषण्णा धर्मश्रवणाय। भगवता तस्या आशयानुशयं धातुं प्रकृतिं च ज्ञात्वा तादृशी चतुरार्यसत्यसंप्रतिवेधिकी धर्मदेशना कृता, यां श्रुत्वा चन्द्रप्रभया देवकन्यया विंशतिशिखरसमुद्गतंसत्कायदृष्टिशैलं ज्ञानवज्रेण भित्त्वा श्रोतापत्तिफलं साक्षात्कृतम्। सा दृष्टसत्या त्रिरुदानमुदानयति—इदमस्माकं भदन्त न मात्रा कृतं न पित्रा कृतं न राज्ञा न देवताभिर्नेष्टैर्न
30 स्वजनबन्धुवर्गैर्न पूर्वप्रेतैर्न श्रमणब्राह्मणैर्यद्भगवतास्माकं कृतम्। उच्छोषिता रुधिराश्रुसमुद्राः, लङ्घिता अस्थिपर्वताः, पिहितान्यपायद्वाराणि, विवृतानि स्वर्गमोक्षद्वाराणि, प्रतिष्ठापिता देवमनुष्येषु। आह च—

तवानुभावात्पिहितः सुघोरो
ह्यपायमार्गो बहुदुःखयुक्तः।
अपावृता स्वर्गगतिः सुपुण्या C 555
निर्वाणमार्गश्च मयोपलब्धः ॥ ४ ॥
त्वदाश्रयादाप्तमपेतदोषं 5
ममाद्य शुद्धं सुविशुद्धचक्षुः।
प्राप्तं च शान्तं पदमार्यकान्तं
तीर्णश्च दुःखार्णवपारमस्मि ॥ ५ ॥
जगति दैत्यनरामरपूजित
विगतजन्मजरामरणामय। 10
भवसहस्रसुदुर्लभदर्शन
सफलमद्य मुने तव दर्शनम् ॥ ६ ॥
अवनम्य ततः प्रलम्बहारा
चरणौ द्वावभिवन्द्य जातहर्षा।
परिगम्य प्रदक्षिणं जितारिं 15
सुरलोकाभिमुखी दिवं जगाम ॥ ७ ॥

अथ चन्द्रप्रभा देवकन्या वणिगिव लब्धलाभः, सस्यसंपन्न इव कर्षकः, शूर इव विजितसंग्रामः, सर्वरोगपरिमुक्त इवातुरः, यया विभूत्या भगवत्सकाशमागता तयैव विभूत्या स्वभवनं संप्रस्थिता। तस्या एतदभवत्—मया रुद्रायणस्य राज्ञः प्रतिज्ञातमुपदर्शयिष्यामीति। अथ चन्द्रप्रभा देवकन्या येन राजा रुद्रायणस्तेनोपसंक्रान्ता। तेन खलु समयेन रुद्रायणो 20 राजा एकाकी गृहस्योपरितलके शयितः। स तया उदारावभासं कृत्वा अच्छटाशब्देन प्रतिबोधितः। स मिद्धावस्थलोचनापरिस्फुटोऽविज्ञातः कथयति—का त्वमिति? सा कथयति—अहं चन्द्रप्रभेति। राजा कथयति—आगच्छ, परिचारयाम इति। सा कथयति—देव, च्युताहं कालगता चातुर्महाराजिकेषु देवेषूपपन्ना। यदीच्छसि मया सार्धं समागमम्, भगवतोऽन्तिके प्रव्रज। यदि तावद्दृष्टधर्मा सर्वक्लेशप्रहाणादर्हत्त्वं साक्षात्करिष्यसे, स एव तेऽन्तो दुःखस्य। 25 अथ सावशेषसंयोजनः, कालं कृत्वा चातुर्महाराजिकेषु देवेषूपपत्स्यसे। तत्र ते मया सार्धं C 556 समागमो भविष्यति। इत्युक्त्वा तत्रैवान्तर्हिता। रुद्रायणो राजा कृत्स्नां रात्रिं प्रव्रज्यामनुविचिन्तयन् काल्यमेवोत्थाय अमात्यानामन्त्रयते—पश्यत भवन्तः, चन्द्रप्रभा देवी क्व तिष्ठतीति? ते कथयन्ति—देव, कालगतेति। रुद्रायणः संलक्षयति—न मम प्रतिरूपं स्याद्यदहं देवताचोदितोऽहं गृही अगारमध्यावसेयम्। संनिधानी कालपरिभोगेन वा कामान् परिभुञ्जीयम्। 30 यन्न्वहं शिखण्डिनं कुमारं राज्येऽभिषिच्य केशश्मश्रूण्यवतार्य काषायाणि वस्त्राण्याच्छाद्य सम्यगेव श्रद्धया अगारादनगारिकां प्रव्रजेयमिति। तेन हिरुभिरुकावग्रामात्यौ दूतेनाहूयोक्तौ—

भवन्तौ, यादृश एव मम शिखण्डी कुमारः पुत्रः, तादृश एव युवयोः । स एष युवाभ्यामहिता-
न्निवारयितव्यो हिते च संनियोजयितव्यः । अहं प्रव्रजामि स्वाख्याते धर्मविनये इति । एतौ
साश्रुकण्ठौ व्यवस्थितौ । शिखण्ड्यपि कुमारोऽभिहितः—पुत्र, यथैव त्वं मम वचनं श्रोतव्यं
कर्तव्यं मन्यसे, तथा अनयोरपि हिरुभिरुकयोरग्रामात्ययोर्वचनं श्रोतव्यं कर्तव्यं मन्येथाः । अहं
5 प्रव्रजामि स्वाख्याते धर्मविनये । इति श्रुत्वा सोऽपि साश्रुकण्ठो व्यवस्थितः । ततो रुद्रायणेन
राज्ञा रौरुके नगरे घण्टावघोषणं कारितम्—शृण्वन्तु भवन्तो रौरुकनिवासिनः पौराः नाना-
देशाभ्यागतश्च जनकायः । अहं केशश्मश्रूण्यवतार्य काषायाणि वस्त्राण्याच्छाद्य सम्यगेव श्रद्धया
अगारादनगारिकां प्रव्रजिष्यामि । भूयशः पुत्रमाह—पुत्र, त्वया राज्यं कारयता कस्यचिदपराध्यं
न क्षन्तव्यमिति । अनुरक्तपौरजनपदोऽसौ राजा । श्रुत्वा सर्व एव रौरुकनिवासी जनकायोऽन्यश्च
10 नानादेशाभ्यागतः साश्रुकण्ठो व्यवस्थितः । ततो रुद्रायणो राजा शिखण्डिनं कुमारं राज्ये
प्रतिष्ठाप्य बन्धुजनं क्षमापयित्वा श्रमणब्राह्मणकृपणवनीपकेभ्यो दानानि दत्वा पुण्यानि कृत्वा
एकेन पुरुषेणोपस्थायकेन राजगृहाभिमुखः [संप्रस्थितः] । ततः शिखण्डी राजा सान्तः-
पुरामात्यपौरजनपदोऽन्यश्च नानादेशाभ्यागतो जनकायः पृष्ठतः पृष्ठतः समनुबद्धः । सोऽनेकैः
प्राणिशतसहस्रैरनुगम्यमानो रौरुकान्नगरान्निष्क्रम्य अन्यतमस्मिन्नुद्याने विविधतरुषण्डमण्डिते
C 557 15 नानापुष्पसलिलसंपन्ने हंसक्रौञ्चमयूरशुकसारिकाकोकिलजीवंजीवकनिर्घोषिते मुहूर्तमास्थाय
रौरुकं नगरमवलोक्य शिखण्डिनं राजानमामन्त्रयते—पुत्र, मया धर्मेण राज्यं कारितम्, येन मे
इयन्ति प्राणिशतसहस्राणि पृष्ठतोऽनुबद्धानि । तत्त्वयापि धर्मेण राज्यं कारयितव्यमिति । सोऽपि
जनकायः समाश्वास्योक्तः—भवन्तः, एष युष्माकं राजा समनुयुक्तो मया । निवर्तत, सुखं
प्रतिवत्स्यथ, इत्युक्त्वा संप्रस्थितः । राजा शिखण्डी सान्तःपुरकुमारामात्यपौरजनपदोऽश्रुपर्या-
20 कुलेक्षणो मुहुर्मुहुर्निवर्त्य निरीक्षमाणो रौरुकं नगरं प्रतिनिवृत्तः । ततो रुद्रायणो राजा
अनुपूर्वेण राजगृहं नगरमनुप्राप्तः । तेनोद्याने स्थित्वा स पुरुष उक्तः—गच्छ भोः पुरुष, राज्ञो
बिम्बिसारस्य गत्वा निवेदय—रुद्रायणो नाम उद्याने तिष्ठतीति । तेन पुरुषेण गत्वा राज्ञो
बिम्बिसारस्य निवेदितम्—देव, रुद्रायणो राजा उद्याने तिष्ठतीति, स राजा श्रुत्वा सहसैवोत्थितः
पौरुषानामन्त्रयते—भवन्तः, महासाधनो राजा अप्रतिसंविदित एवागतः । न युष्माकं केन-
25 चिद्विज्ञात इति? स कथयति—देव, कुतोऽस्य साधनम्? आत्मना द्वितीय आगत इति । राजा
बिम्बिसारः संलक्षयति—न मम प्रतिरूपं स्याद्यदहं राजानं क्षत्रियं मूर्धाभिषिक्तमेवमेव प्रवेश-
येयम् । महता सत्कारेण प्रवेशयामीति विदित्वा मार्गशोभां नगरशोभां च कारयित्वा चतुरङ्गेन
बलकायेन प्रत्युद्गतः । कण्ठे परिष्वज्य हस्तिस्कन्धे आरोप्य राजगृहं महानगरं प्रवेशितः ।
नानागन्धपरिभावितेनोदकेन स्नापितः । राजार्हैर्वस्त्रैर्गन्धमाल्यविलेपनैश्च समलंकृत्य भोजितः ।
30 मार्गश्रमे प्रतिविनोदिते उक्तः—प्रियवयस्य, स्फीतं राज्यमपास्य अन्तःपुरं कुमारानामात्यान्
पौरजनपदान् किमिहागमनप्रयोजनम्? मा केनचिद्भूम्यन्तरेण राज्ञा राष्ट्रावमर्दनः कृतः?
कुमारेण वा केनचिद्दुष्टामात्यविग्राहितेन राज्याभिनन्दिना पराक्रान्तमिति? स कथयति—वयस्य,

आकाङ्क्षामि स्वाख्याते धर्मविनये प्रव्रज्यामुपसंपदं भिक्षुभावम्। इति श्रुत्वा राजा बिम्बिसार आत्तमनाः पूर्वकायमभ्युन्नमय्य दक्षिणबाहुमभिप्रसार्योदानमुदानयति—अहो बुद्धः, अहो धर्मः, अहो संघः अहो धर्मस्य स्वाख्यातता, यत्रेदानीमेवंविधाः पुरुषाः स्फीतं राज्यमपहाय स्फीतमन्तःपुरं विस्तीर्णस्वजनबन्धुवर्गं स्फीतानि च कोशकोष्ठागाराण्यपहाय आकाङ्क्षन्ते स्वाख्याते धर्मविनये प्रव्रज्यामुपसंपदं भिक्षुभावम्। इत्युक्त्वा राजानं रुद्रायणं समादाय येन भगवांस्तेनोपसंक्रान्तः। तेन खलु समयेन भगवाननेकशताया भिक्षुपर्षदः पुरस्तान्निषण्णो धर्मं देशयति। अद्राक्षीद्भगवान् राजानं मागधं श्रेण्यं बिम्बिसारं दूरादेव। दृष्ट्वा च पुनर्भिक्षूनामन्त्रयते स्म—एष भिक्षवो राजा बिम्बिसारः सप्राभृत आगच्छति। नास्ति तथागतस्यैवंविधः प्राभृतो यथा विनेयप्राभृतः। इत्युक्त्वा तूष्णीमवस्थितः। राजा बिम्बिसारो भगवतः पादौ शिरसा वन्दित्वैकान्ते निषण्णः। एकान्तनिषण्णो राजा बिम्बिसारो भगवन्तमिदमवोचत्—अयं भदन्त राजा रुद्रायण आकाङ्क्षते स्वाख्याते धर्मविनये प्रव्रज्यामुपसंपदं भिक्षुभावम्। तं भगवान् प्रव्राजयतु, उपसंपादयतु अनुकम्पामुपादायेति। स भगवता एहिभिक्षुकया आभाषितः—एहि भिक्षो, चर ब्रह्मचर्यमिति। स भगवतो वाचावसाने एव मुण्डः संवृत्तः संघाटीप्रावृतः पात्रकरव्यग्रहस्तो वर्षशतोपसंपन्नस्य भिक्षोरीर्यापथेनावस्थितः॥

एहीति चोक्तः स तथागतेन
मुण्डश्च संघाटिपरिवृतदेहः।
सद्यः प्रशान्तेन्द्रिय एव तस्थौ
एवं स्थितो बुद्धो मनोरथेन॥ ८॥

आयुष्मान् रुद्रायणः पूर्वाह्णे निवास्य पात्रचीवरमादाय राजगृहं पिण्डाय प्राविक्षत्। स महाजनकायेन दृष्टः। एष च शब्दो राजगृहे नगरे समन्ततो विसृतः—रुद्रायणो राजा भगवता प्रव्राजितः, स राजगृहं भिक्षार्थी प्रविष्टः। इति श्रुत्वा अनेकानि प्राणिशतसहस्राणि संनिपतितानि। अन्तर्भवनविचारिण्योऽपि योषितो वातायनगवाक्षवेदिकास्ववस्थिता निरीक्षितुमारब्धाः। अमात्यै राज्ञो बिम्बिसारस्य निवेदितम्—देव, रुद्रायणो राजा राजगृहं पिण्डाय प्रविष्टोऽनेकैः प्राणिशतसहस्रैः परिवृतस्तिष्ठतीति। श्रुत्वा च पुना राजा बिम्बिसारो येन रुद्रायणो भिक्षुस्तेनोपसंक्रान्तः। उपसंक्रम्य रुद्रायणं भिक्षुमिदमवोचत्—

भुक्त्वा ग्रामसहस्राणि रौरुकं च नराधिप।
उत्सृष्टं पिण्डमेषाणः कच्चिन्न परितप्यसे॥ ९॥

भुक्त्वा शतपले पात्रे सौवर्णे राजतेऽथ वा।
भुञ्जानो मृन्मये पात्रे कच्चिन्न परितप्यसे॥ १०॥

शालीनामोदनं भुक्त्वा शुचि मांसोपसेवितम्।
भुञ्जानः शुष्ककुल्माषान् कच्चिन्न परितप्यसे॥ ११॥

हित्वा कौशेयकर्पासान् क्षौमं कौटुम्बकाशिकान् ।
धारयन् पांशुकूलानि कच्चिन्न परितप्यसे ॥ १२ ॥
कूटागारे शयित्वा त्वं निर्वाते स्पर्शितागते ।
आसीनो वृक्षमूलेषु कच्चिन्न परितप्यसे ॥ १३ ॥
5 पर्यङ्केऽवशयित्वा त्वं मृदुके तूलसंनिभे ।
तृणसंस्तरे शयानः कच्चिन्न परितप्यसे ॥ १४ ॥
भार्यां सदृशिकां हृद्यामाश्रवां वै प्रियंवदाम् ।
रुदन्तीं विप्रहाय त्वं कच्चिन्न परितप्यसे ॥ १५ ॥
यानैस्त्वं हस्तिग्रीवाभिरश्वैरपि रथैरपि ।
10 पद्भ्यां परिभ्रमन् भूमौ कच्चिन्न परितप्यसे ॥ १६ ॥
कोष्ठागाराणि कोशं च बहुवित्तं प्रहाय वै ।
आकिंचन्यमनुप्राप्तः कच्चिन्न परितप्यसे ॥ १७ ॥ इति ।

C 560 रुद्रायणः प्राह—

अनृद्धिर्दमयत्वेनं सचेद्भवति दुर्दमः ।
15 परभोजनभुञ्जानः कथं दमयते युगम् ॥ १८ ॥ इति ।

राजा बिम्बिसारः प्राह—

किं नु त्वं दुर्मना राजन् किं दीन इव भाषसे ।
ददाम्युपार्धराज्यं ते भुङ्क्ष्व भोगपरायण ॥ १९ ॥
किं नु त्वं दुर्मना राजन् किं दीन इव भाषसे ।
20 ददामि प्रवरान् भोगान् यान् कांश्चिन्मनसेच्छसि ॥ २० ॥ इति ।

रुद्रायणः प्राह—

न राजन् कृपणो लोके धर्मकायेन संस्पृशेत् ।
देव त्रिपथनिराशी (?) ध्रुवं तस्य विधीयते ॥ २१ ॥
यस्तु धर्मविरागार्थमधर्मे निरतो नृपः ।
25 स राजन् कृपणो ज्ञेयस्तमस्तमःपरायणः ॥ २२ ॥
शृणु मे त्वं महाराज धर्मतां देशयाम्यहम् ।
श्रुत्वा धर्मं ततो ज्ञेयो यदि त्वं प्रीतिमेष्यसि ॥ २३ ॥
निर्गुणस्य शरीरस्य एक एव महागुणः ।
यथा यथा विधार्यं ते तत्तथैवानुवर्तते ॥ २४ ॥
30 दशेमे वर्षदशाः पुरुषस्याशु निरुच्यते ।
क्रीडा तत्र रतिः का वा पुत्रपरधनेषु वा ॥ २५ ॥

पुत्राद्वेषिणीयामाद्धुर्भार्यया कृतिरुच्यते ।
शौरा धनं प्रार्थयन्ते राजन् मुक्तोऽस्मि बन्धनात् ॥ २६ ॥

न भैषज्यानि त्रायन्ते न धनं ज्ञातयो न च ।
न सर्वविद्या न बलं न शौर्यं त्रायतेऽन्तकात् ॥ २७ ॥

देवापि सन्तीह महानुभावाः 5
स्थानेष्विहोच्चेषु चिरायुषोऽपि ।
आयुःक्षयान्तेऽपि ततश्च्यवन्ते
मुच्येत को नेह शरीरभेदात् ॥ २८ ॥

राज्यानि कृत्वापि महानुभावा
वृष्ण्यन्धकाः कुरवश्च पाण्डवाश्च । 10
संपन्नचित्ता यशसा ज्वलन्तः
ते न शक्ता मरणं नोपगन्तुम् ॥ २९ ॥

न संयमेन तपसा न राजन्
न कर्मणा वीर्यपराक्रमेण वा ।
न वित्तपूगैर्न धनैरुदारैः 15
शक्यं कदाचिन्मरणाद्विमोक्तुम् ॥ ३० ॥

नैवान्तरीक्षे न समुद्रमध्ये C 561
न पर्वतानां विवरं प्रविश्य ।
न विद्यते स पृथिवीप्रदेशो
यत्र स्थितं न प्रसहेत मृत्युः ॥ ३१ ॥ 20

नैवान्तरीक्षे न समुद्रमध्ये
न पर्वतानां विवरं प्रविश्य ।
न विद्यते स पृथिवीप्रदेशो
यत्र स्थितं न प्रसहेत कर्म ॥ ३२ ॥

यानीमान्यपविद्धानि विक्षिप्तानि दिशो दश । 25
कपोतवर्णान्यस्थीनि तानि दृष्ट्वेह का रतिः ॥ ३३ ॥

इमानि यान्युपस्थानानि अलाबुरिव सेरभे ।
शङ्खवर्णानि शीर्षाणि तानि दृष्ट्वेह का रतिः ॥ ३४ ॥

यमातपे छादयसे शीते यमुपगूहसे ।
एवं ते प्रियमात्मानं राजन् मृत्युर्हनिष्यति ॥ ३५ ॥ 30

यावन्मृत्योर्वशं भुङ्क्ते परिधत्ते ददाति वा।
तद्धि तस्य स्वकं ज्ञेयमन्यन्नित्यं विगच्छति ॥ ३६ ॥
असाधारणमन्येषामशौराहरणं निधिम्।
मर्त्यो निदध्याद्दानेन अन्येन सुकृतेन वा ॥ ३७ ॥
5 पुरा हि त्वां व्याघ्र इव मृगं निहत्य
व्याधिर्जरा कर्षति अन्तकश्च।
न ते मित्राण्यपनेष्यन्ति रोगं
संगम्य सोदर्यगणाश्च सर्वे ॥ ३८ ॥
यदेव लब्धाधिकमस्य भवति
10 धनं धान्यं रजतं जातरूपम्।
दायाद्यमेवानुविचिन्तयन्ति
पुत्राः सदारा अनुजीविनश्च ॥ ३९ ॥
सचेद्व्रणं भवति पितुर्मृतस्य
प्रियाः सुता नास्य वर्हि विशन्ति
15 मृत्यौ न वाप्यश्रुमुखा रुदन्ति
राहुः पिता मम कार्यतेति (?) ॥ ४० ॥
C 562 आयान्तु सत्त्वाः पिता ममेति
प्रकीर्णकेशाश्रुमुखा रुदन्ति।
ज्योतिश्चास्य पुरतो हरन्ति
20 ह्यहो बतायममरो भवेदिति ॥ ४१ ॥
दूष्यैरेनं प्रावृतं निर्हरन्ति
ज्योतिः समादाय [ च तं ] दहन्ति।
स दह्यते ज्ञातिभी रुद्यमान
एकेन वस्त्रेण विहाय भोगम् ॥ ४२ ॥
25 एको ह्ययं जायते जायमान-
स्तथा म्रियते म्रियमाणोऽयमेकः।
एको दुःखाननुभवतीह जन्तु-
र्न विद्यते संसरतः सहायः ॥ ४३ ॥
एतच्च दृष्ट्वेह परिव्रजन्ति
30 कुलायकास्ते न भवन्ति सन्तः।
ते सर्वसंगानभिसंप्रहाय
न गर्भशय्यां पुनरावसन्ति ॥ ४४ ॥ इति।

अथ बिम्बिसारो राजा रुद्रायणेन भिक्षुणा उत्तरोत्तरेण प्रतिभानेन निराकृतस्तूष्णीं निष्प्रतिभः प्रक्रान्तः ॥

अथ शिखण्डी राजा यावत्कंचिद्धर्मेण राज्यं कारयित्वा अधर्मेण राज्यं कारयितुमारब्धः । स हिरुभिरुकाभ्यामुक्तः—देव, धर्मेण राज्यं कारय, मा अधर्मेण । तत्कस्य हेतोः ? पुष्पफलवृक्षसदृशा देव जनपदाः । तद्यथा देव पुष्पवृक्षाः फलवृक्षाश्च कालेन कालं 5 सम्यक्परिपाल्यमाना अनुपरतप्रयोगेण यथाकालं पुष्पाणि फलानि चानुप्रयच्छन्ति, एवमेव जनपदाः प्रतिपाल्यमाना अनुपरतप्रयोगेण यथाकालं करप्रत्यायाननुप्रयच्छन्तीति । स ताभ्यां निवारितो यावत्तावद्धर्मेण राज्यं कारयित्वा पुनरप्यधर्मेण राज्यं कारयितुमारब्धः । स ताभ्यां यावत् त्रिरप्युक्तः । विसारिणी क्व(तृ?)ष्णा । निवार्यमाणा नावतिष्ठते । रुषितोऽमात्यानामन्त्रयते—यो भवन्तो राज्ञः क्षत्रियस्य मूर्धाभिषिक्तस्य यावत् त्रिरप्याज्ञां प्रतिवहति, 10 तस्य कीदृशो दण्ड इति । तत्र केचिद्दुष्टामात्याः कथयन्ति—देव, किमत्र ज्ञातव्यम् ? तस्य वधो दण्ड इति । गाथे च भाषन्ते—

अमात्यस्य च दुष्टस्य दन्तस्य चलितस्य च । C 563
भोजनस्य च [ अजीर्णस्य ] नान्यत्रोद्धरणात्सुखम् ॥ ४५ ॥
अमात्यं बुद्धिसंपत्तिप्रज्ञाविनयकोविदम् । 15
कोशस्थं च बलस्थं च यो न हन्यात्स घात्यते ॥ ४६ ॥ इति ।

शिखण्डी राजा कथयति—भवन्तः, ममैतौ पित्रा संन्यस्तौ । नाहमेतौ प्रघातयामि । किं त्वाभ्यां मम दर्शनपथे न स्थातव्यमिति । तयोर्द्वारं निवारितम् । अन्यौ द्वौ दुष्टामात्यौ स्थापितौ । तौ कथयतः—देव, नाक्रन्दिता नालुञ्चिता नातप्ता नोत्पीडितास्तिलास्तैलं प्रयच्छन्ति, तद्वन्नरपते जनपदा इति । राजा कथयति—यदेताभ्यां कृतम्, तत्परं प्रमाणमिति । 20 तौ जनपदान् पीडयितुमारब्धौ । यावदन्यतमो वणिक् पण्यमादाय रौरुकान्नगराद् राजगृहमनुप्राप्तः । स आयुष्मता रुद्रायणेन दृष्टः ।

कच्चिच्छिखण्डी खलु रौरुकेषु
सभृत्यवर्गो बलवानरोगः ।
धर्मेण वा कारयति स्वराज्यं 25
न चास्य कश्चित्परतोपसर्गः ॥ ४७ ॥ इति ।

स कथयति—

तथ्यं शिखण्डी खलु रौरुकेषु
सभृत्यवर्गो बलवानरोगः ।
न चास्य कश्चित्परतोपसर्गो 30
अधर्मेण तु राज्यं करोति नित्यम् ॥ ४८ ॥

अथायुष्मान् रुद्रायणोऽनुपूर्व्या प्रष्टुमारब्धः—कस्तत्रामात्यप्रधानः? कस्य शिखण्डी वशेन जनपदान् पीडयतीति? स कथयति—देव, हिरुभिरुकयोरमात्ययोर्द्वारं निवार्य अन्यौ दुष्टामात्यौ स्थापितौ। तद्वशेन शिखण्डी जनपदान् पीडयतीति। रुद्रायणः
C 564 कथयति—गच्छ त्वं भोः पुरुष, रौरुकनिवासिनं जनकायं समाश्वासय। अहमपि तत्र
5 प्रचारिते गमिष्यामि। अहमेनं शिखण्डिनमहितान्निवारयिष्यामि, हिते च संनियोजयिष्यामीति। स वणिक् पण्यं विसर्जयित्वा प्रतिपण्यमादाय संप्रस्थितोऽनुपूर्वेण रौरुकमनुप्राप्तः। तेन ज्ञातीनां रहसि निवेदितम्—भवन्तः, अहं पण्यमादाय राजगृहं गतः। तत्र मया वृद्धराजो दृष्टः। स कथयति—अहं प्रचारितं रौरुकं गमिष्यामि, शिखण्डिनं चाहितान्निवारयिष्यामि, हिते च संनियोजयिष्यामि यथा जनपदान्न पीडयतीति। तैरपरेषामारोचितम्,
10 तैरप्यपरेषाम्। एवं कर्णपरंपरया स शब्दस्तयोर्दुष्टामात्ययोः कर्णं गतः। तौ संलक्षयतः—यदि वृद्धराजा आगमिष्यति, नियतमसौ भूयो हिरुभिरुकावग्रामात्यौ स्थापयिष्यति, आवयोश्चानर्थं कारयिष्यति। तदुपायसंविधानं च कर्तव्यं येनासावन्तर्मार्ग एव प्रघात्यत इति। ताभ्यां राज्ञः शिखण्डिन आरोचितम्—देव, श्रूयते वृद्धराजा आगच्छतीति। स कथयति—प्रव्रजितोऽसौ। किमर्थं तस्यागमनप्रयोजनमिति? तौ कथयतः—देव, येनैकदिवस-
15 मपि राज्यं कारितम्, स विना राज्येनाभिरंस्यत इति कुत एतत्? पुनरप्यसौ राज्यं कारयितुकाम इति। शिखण्डी कथयति—यद्यसौ राजा भविष्यति, अहं स एव कुमारः। को नु विरोध इति? तौ कथयतः—देव, अप्रतिरूपमेतत्। कथं नाम कुमारामात्यपौरजनपदैरञ्जलिसहस्रैर्नमस्यमानेन राज्यं कारयित्वा पुनरपि कुमारवासेन वस्तव्यम्? वरं देशपरित्यागो न तु कुमारवासेन वासम्। तद्यथापि नाम पुरुषो हस्तिग्रीवायां गत्वा अश्वपृष्ठेन
20 गच्छेत्, अश्वपृष्ठेन गत्वा रथेन गच्छेत्, रथेन गत्वा पादाभ्यामेव गच्छेत्, एवमेव राज्यं कारयित्वा पुनः कुमारवासेन वास इति। स ताभ्यां विप्रलब्धः कथयति—किमत्र युक्तम्? कथं प्रतिपत्तव्यमिति? तौ कथयतः—देव, प्रघातयितव्योऽसौ। यदि न प्रघात्यते, नियतं दुष्टामात्यविग्राहितो देवं प्रघातयतीति। स एवमुक्ते हीनदीनवदनो मुहूर्तं तूष्णीं स्थित्वा
C 565 बाष्पोपरुध्यमानहृदयः करुणदीनविलम्बितैरक्षरैः स कथयति—भवन्तौ, कथं पितरं प्रघातया-
25 मीति? तौ कथयतः—न देवेन श्रुतम्?

पिता वा यदि वा भ्राता पुत्रो वा स्वाङ्गनिःसृतः।
प्रत्यनीकेषु वर्तेत कर्तव्या भूमिवर्धना (?)॥ ४९॥ इति।

पुनरप्याह—

यस्य पुत्रसहस्रं स्यादेकनावाधिरूढकम्।
30 एकश्च तत्र शत्रुः स्यात्तदर्थे तान्निमज्जयेत्॥ ५०॥ इति।

अन्यत्राप्युक्तम्—

त्यजेदेकं कुलस्यार्थे ग्रामस्यार्थे कुलं त्यजेत्।
ग्रामं जनपदस्यार्थे आत्मार्थे पृथिवीं त्यजेत्॥ ५१॥ इति।

देव, नात्र किंचित्तपनीयम् । वधार्होऽसौ प्रघातयितव्यः । यदि देवोऽत्र विलम्बते, यद्देवस्यानुरक्ताः कुमारामात्यपौरजनपदास्ते क्षोभमापन्ना नियतमनर्थं कुर्वन्तीति । कामान् खलु प्रतिसेवमानस्य नास्ति किंचित्पापं कर्माकरणीयमिति तेनाधिवासितम्—एवं क्रियता-मिति । तौ दुष्टामात्यौ हृष्टतुष्टौ प्रमुदितौ वधकपुरुषानुत्साहयतः—भवन्तः, गच्छत, वृद्धराजं प्रघातयत । भोगैर्वः संविभागं करिष्याम इति । अनुरक्तपौरजानपदः स राजा । न कश्चि- 5 दुत्सहते प्रघातयितुम् । ताभ्यां ते हिरण्यसुवर्णग्रामप्रदानादिना प्रोत्साहिता न प्रतिपद्यन्ते । ततस्ताभ्यां क्रोधपर्यवस्थिताभ्यां चारपालानामाज्ञा दत्ता—गच्छन्तु, भवन्तः एतान् पुरुषान सपुत्रदारान् ससुहृत्संबन्धिबान्धवांश्चारके बद्ध्वा स्थापयतेति । ते श्रुत्वा भीताः संप्रतिपन्नाः कथयन्ति—देव, अलं क्रोधेन । भृत्या वयमाज्ञाकराः । गच्छाम इति । ते तीक्ष्णानसीन् कक्षेणा-दाय संप्रस्थिताः । आयुष्मानपि रुद्रायणस्त्रयाणां मासानामत्ययात्कृतचीवरो निष्ठितचीवरः 10 समादाय पात्रचीवरं येन भगवांस्तेनोपसंक्रान्तः । उपसंक्रम्य भगवतः पादौ शिरसा वन्दित्वा भगवन्तमिदमवोचत्—इच्छाम्यहं भदन्त रौरुकं नगरं जनपदचारिकां चरितुमिति । भगवानाह—गच्छ रुद्रायण, कर्मस्वकता ते मनसिकर्तव्येति । अथायुष्मान् रुद्रायणो भगवतः पादौ शिरसा वन्दित्वा भगवतोऽन्तिकात् प्रक्रान्तः । आयुष्मान् रुद्रायणस्तस्या C 566 एव रात्रेरत्ययात् पूर्वाह्णे निवास्य पात्रचीवरमादाय राजगृहं पिण्डाय प्राविक्षत् । राजगृहं 15 पिण्डाय चरित्वा कृतभक्तकृत्यः पश्चाद्भक्तपिण्डपात्रः प्रतिक्रान्तो यथापरिभुक्तं शयनासनं प्रतिसामय्य समादाय पात्रचीवरं कर्मबलप्रेरितम्—

दूरं हि कर्षते कर्म दूरात्कर्म प्रकर्षते ।
तत्र प्रकर्षते जन्तुं यत्र कर्म विपच्यते ॥ ५२ ॥

इति येन रौरुकं तेन चारिकां प्रक्रान्तः । अनुपूर्वेण चारिकां चरन्नन्तर्मार्गेऽन्यतमं 20 कर्वटकं पिण्डाय प्रविष्टः । स च तस्मात् पिण्डपातमटित्वा निष्क्रामति । ते च वधकपुरुषाः संप्राप्ताः । स तैर्दृष्टः । तेनापि ते प्रत्यभिज्ञाताः । स तैः पुरुषैः सार्धमेकस्मिन्नेवोद्याने रात्रिंदिवा समुपगतः । स तान् प्रष्टुमारब्धः—

कच्चिच्छिखण्डी खलु रौरुकेषु
सभृत्यवर्गो बलवानरोगः । 25
धर्मेण वा कारयति स्वकं राज्यं
न चास्य कच्चित्परतोपसर्गः ॥ ५३ ॥ इति ।

ते कथयन्ति—देव,

तथ्यं शिखण्डी खलु रौरुकेषु
सभृत्यवर्गो बलवानरोगः । 30
न चास्य कश्चित्परतोपसर्गः
अधर्मराज्यं तु करोति नित्यम् ॥ ५४ ॥

नरवर यत्तव सदृशं कृतं त्वया आर्यपराभवचिह्नकरम् ।
तस्यापि तु यत्सदृशं तदद्य उपलप्स्यसे सौम्येति ॥ ५५ ॥

आयुष्मान् रुद्रायणः कथयति—भवन्तः, किमसौ मम तत्र गमनं नाभिनन्दतीति ? ते कथयन्ति—देव, नाभिनन्दतीति । स कथयति—भवन्तः, यद्येवं न गच्छामि, प्रतिनिवर्ता- 5 मीति । ते गाथां भाषन्ते—

क्व यास्यसि त्वं नरवीर भूयो
न ते सुतो नन्दति जीवितेन ।
वयं ह्यधन्या नृपसंप्रयुक्ता
इहाभ्युपेतास्तव घातनाय ॥ ५६ ॥ इति ॥

10 आयुष्मान् रुद्रायणः कथयति—भवन्तः, यूयं नाम मम वधकपुरुषाः ? देव, वधक- C 567 पुरुषाः । स संलक्षयति—यत्तदुक्तं भगवता कर्मस्वकता ते रुद्रायण मनसिकर्तव्येति, इदं तत् । सर्वथा धिक् संसारभङ्गुरमिति विदित्वा तेषां कथयति—भद्रमुखाः, अहमस्मि यदर्थं प्रव्रजितः, सोऽर्थो मया न संप्राप्तः । तिष्ठत तावन्मुहूर्तं यावत्स्वकार्यमनुरूपं गच्छामीति । ते परस्परं संजल्पं कृत्वा कथयन्ति—देव, एवं कुरु । अथायुष्मान् रुद्रायणोऽन्यतमं 15 वृक्षमूलं निश्रित्य सुप्तोरगराजभोगपरिपिण्डितं पर्यङ्कं बद्ध्वा शान्तेनेर्यापथेनावस्थितः । उक्तं भगवता—पञ्चानुशंसा बाहुश्रुत्ये—स्कन्धकुशलो भवति धातुकुशल आयतनकुशलः प्रतीत्य- समुत्पादकुशलः, अपरप्रतिबद्धा चास्य भवत्यववादानुशासनीति । तेन वीर्यमारभ्य इदमेव पञ्चगण्डकं संसारचक्रं चलाचलं विदित्वा सर्वसंस्कारगतीः शतनपतनविकिरणविध्वं- सनधर्मतया पराहत्य सर्वक्लेशप्रहाणादर्हत्त्वं साक्षात्कृतम् । अर्हन् संवृत्तस्त्रैधातुकवीतरागः 20 समलोष्टकाञ्चन आकाशपाणितलसमचित्तो वासीचन्दनकल्पो विद्याविदारिताण्डकोशो विद्याभिज्ञाप्रतिसंवित्प्राप्तो भवलाभलोभसत्कारपराङ्मुखः । सेन्द्रोपेन्द्राणां देवानां पूज्यो मान्योऽभिवाद्यश्च संवृत्तः । अथायुष्मान् रुद्रायणोऽर्हत्त्वप्राप्तो विमुक्तिप्रीतिसुखप्रतिसंवेदी तस्यां वेलायां गाथां भाषते—

मुक्तो ग्रन्थैश्च योगैश्च शल्यैर्नीवरणैस्तथा ।
25 अद्याप्युद्रायणो भिक्षू राजधर्मैर्न मुच्यते ॥ ५७ ॥ इति ।

इत्युक्त्वा तान् वधकपुरुषानुवाच—भद्रमुखाः, यं मया प्राप्तव्यं तत्प्राप्तम् । इदानीं यदर्थं यूयमागतास्तदर्थं संप्रापयतेति । ते कथयन्ति—देव, यदि शिखण्डी राजा अस्मान् पृच्छति—किं वृद्धराजेन मरणसमये व्याकृतमिति, किमस्माभिर्वक्तव्यम् ? भद्रमुखाः, स वक्तव्यः—

30 बहुपुण्यं प्रसवसे राज्यहेतोः पितुर्वधात् ।
अहं च परिनिर्वास्ये त्वं चावीचिं गमिष्यसि ॥ ५८ ॥ इति ।

इदं चापरं वक्तव्यः—द्वे त्वया आनन्तर्ये कर्मणी कृते—यच्च पिता जीविताद् व्यपरोपितः, यच्चार्हन् भिक्षुः क्षीणाश्रवः। तेऽवीचौ महानरके वस्तव्यम्। अत्ययमत्ययतो देशय, अप्येतत्कर्म तनुत्वं परिक्षयं पर्यादानं गच्छेदिति। पुनरायुष्मान् रुद्रायणः संलक्षयति—ऋद्ध्या गच्छामि। ममासौ सत्त्वो नरकपरायणो भविष्यतीति। यं यं ऋद्ध्युपायं प्रारभते, तस्य धर्मविनष्टत्वाद् ऋकारोऽपि न प्रतिभाति प्रागेव ऋद्धिः। ततस्तेषामेकेन पुरुषेण निर्घृणहृदयेन त्यक्तपरलोकेन कक्षादसिं निष्कृष्य उत्कृत्तमूलं शिरः कृत्वा पृथिव्यां निपातितः॥

अथ भगवान् स्मितमकार्षीत्। धर्मता खलु यस्मिन् समये बुद्धा भगवन्तः स्मितं प्राविष्कुर्वन्ति, तस्मिन् समये नीलपीतलोहितावदाता अर्चिषो मुखान्निश्चार्य काश्चिदधस्ताद्गच्छन्ति, काश्चिदुपरिष्टाद्गच्छन्ति। या अधस्ताद्गच्छन्ति, ताः संजीवं कालसूत्रं संघातं रौरवं महारौरवं तपनं प्रतापनमवीचिमर्बुदं निरर्बुदमटटं हहवं हुहुवमुत्पलं पद्मं महापद्मं नरकं गत्वा ये उष्णनरकास्तेषु शीतीभूत्वा निपतन्ति, ये शीतनरकास्तेषूष्णीभूत्वा निपतन्ति। तेन तेषां सत्त्वानां कारणाविशेषाः प्रतिप्रस्रभ्यन्ते। तेषामेवं भवति—किं नु वयं भवन्त इतश्च्युताः, आहोस्विदन्यत्रोपपन्ना इति। तेषां प्रसादसंजननार्थं भगवान्निर्मितं विसर्जयति। तेषां निर्मितं दृष्ट्वैवं भवति—न ह्येव वयं भवन्त इतश्च्युताः, नाप्यन्यत्रोपपन्नाः। अपि त्वयमपूर्वदर्शनः सत्त्वः। अस्यानुभावेनास्माकं कारणाविशेषाः प्रतिप्रस्रब्धा इति। ते निर्मिते चित्तमभिप्रसाद्य तं नरकनिवेदनीयं कर्म क्षपयित्वा देवमनुष्येषु प्रतिसंधिं गृह्णन्ति यत्र सत्यानां भाजनभूता भवन्ति। या उपरिष्टाद्गच्छन्ति, ताश्चातुर्महाराजिकांस्त्रायस्त्रिंशान् यामांस्तुषितान्निर्माणरतीन् परिनिर्मितवशवर्तिनो ब्रह्मकायिकान् ब्रह्मपुरोहितान् ब्रह्मपार्षद्यान् महाब्रह्मणः परीत्ताभानप्रमाणाभानाभास्वरान् परीत्तशुभानप्रमाणशुभाञ्छुभकृत्स्नाननभ्रकान् पुण्यप्रसवान् बृहत्फलानबृहानतपान् सुदृशान् सुदर्शनानकनिष्ठान् देवान् गत्वा अनित्यं दुःखं शून्यमनात्मेत्युद्घोषयन्ति। गाथाद्वयं च भाषन्ते—

> आरभध्वं निष्क्रामत युज्यध्वं बुद्धशासने।
> धुनीत मृत्युनः सैन्यं नडागारमिव कुञ्जरः॥ ५९॥
> यो ह्यस्मिन् धर्मविनये अप्रमत्तश्चरिष्यति।
> प्रहाय जातिसंसारं दुःखस्यान्तं करिष्यति॥ ६०॥

अथ ता अर्चिषस्त्रिसाहस्रमहासाहस्रं लोकधातुमन्वाहिण्ड्य भगवन्तमेव पृष्ठतः पृष्ठतः समनुगच्छन्ति। तद्यदि भगवानतीतं कर्म व्याकर्तुकामो भवति, भगवतः पृष्ठतोऽन्तर्धीयन्ते। अनागतं चेत् पुरस्तात्। नरकोपपत्तिं चेत् पादतले। तिर्यगुपपत्तिं चेत् पार्ष्ण्याम्। प्रेतोपपत्तिं चेत् पादाङ्गुष्ठे। मनुष्योपपत्तिं चेज्जानुनोः। बलचक्रवर्तिराज्यं चेद्वामे करतले। चक्रवर्तिराज्यं चेद्दक्षिणे करतले। देवोपपत्तिं चेन्नाभ्याम्। श्रावकबोधिं चेदास्ये। प्रत्येकां बोधिं चेदूर्णायाम्। यद्यनुत्तरां सम्यक्संबोधिं व्याकर्तुकामो भवति

उष्णीषेऽन्तर्धीयन्ते। अथ ता अर्चिषो भगवन्तं त्रिः प्रदक्षिणीकृत्य भगवतः पादतलेऽन्तर्हिताः। अथायुष्मानानन्दः कृतकरपुटो भगवन्तं पप्रच्छ—

नानाविधो रङ्गसहस्रचित्रो
वक्त्रान्तरान्निष्कसितः कलापः।
5 अवभासिता येन दिशः समन्ता-
दिवाकरेणोदयता यथैव ॥ ६१ ॥

गाथां च भाषते—

विगतोद्भवा दैन्यमदप्रहीणा
बुद्धा जगत्युत्तमहेतुभूताः।
10 नाकारणं शङ्खमृणालगौरं
स्मितमुपदर्शयन्ति जिना जितारयः ॥ ६२ ॥
तत्कालं स्वयमधिगम्य धीर बुद्ध्या
श्रोतॄणां श्रमण जिनेन्द्र काङ्क्षितानाम्।
धीराभिर्मुनिवृष वाग्भिरुत्तमाभि-
15 रुत्पन्नं व्यपनय संशयं शुभाभिः ॥ ६३ ॥
नाकस्माल्लवणजलाद्रिराजधैर्याः
संबुद्धाः स्मितमुपदर्शयन्ति नाथाः।
यस्यार्थे स्मितमुपदर्शयन्ति धीरा-
स्तं श्रोतुं समभिलषन्ति ते जनौघाः ॥ ६४ ॥ इति।

C 570 20 भगवानाह—एवमेतदानन्द, एवमेतद्। नाहेत्वप्रत्ययमानन्द तथागता अर्हन्तः सम्यक्संबुद्धाः स्मितं प्राविष्कुर्वन्ति। अपि त्वानन्द,

मुक्तो ग्रन्थैश्च योगैश्च शल्यैर्नीवरणैस्तथा।
अथापि रुद्रायणो भिक्षुर्जीविताद् व्यपरोपितः ॥ ६५ ॥

रुद्रायण आनन्द अर्हत्त्वं प्राप्तो जीविताद् व्यपरोपितः। श्रुत्वा आयुष्मानानन्दः 25 साश्रुकण्ठो व्यवस्थितः। अथ ते वधकपुरुषा आयुष्मतो रुद्रायणस्य पात्रचीवरं खिक्खिरं चादाय रौरुकमनुप्राप्ताः। तैस्तयोर्दुष्टामात्ययोर्निवेदितम्—वृद्धराजः प्रघातित इति। तौ श्रुत्वा प्रीतिप्रामोद्यजातौ येन शिखण्डी राजा तेनोपसंक्रान्तौ। कथयतः—देव, दिष्ट्या वर्धसे। इदानीं देवस्याकण्टकं राज्यम्। कथं कृत्वा? यो देवस्य शत्रुः, स प्रघातितः। को नाम शत्रुः? देव, वृद्धराजः। कथं ज्ञायतेऽसौ प्रघातित इति? ताभ्यां ते वधकपुरुषा 30 दर्शिताः—देव, इमे ते बधकपुरुषा यैरसौ प्रघातितः। शिखण्डिना राज्ञा ते पृष्टाः—भवन्तः, कियद्वृद्धराजस्य बलम्। देव, कुतस्तस्य बलम्? इदं पात्रचीवरं खिक्खिरं चेति। शिखण्डी

राजा मूर्च्छितः पृथिव्यां निपतितो जलपरिषेकप्रत्यागतप्राणः कथयति–भवन्तः, किं वृद्धराजेन मरणकाले व्याकृतम्? देव, वृद्धराजः प्राणवियोगः कथयति–

बह्वपुण्यं प्रसवसे राज्यहेतोः पितुर्वधात्।
अहं च परिनिर्वास्ये त्वं चावीचिं गमिष्यसि॥ ६६॥ इति।

इदं चापरं वक्तव्यः–द्वे त्वया आनन्तर्ये कर्मणी कृते–यच्च पिता जीविताद् 5 व्यपरोपितः, यच्चार्हन् भिक्षुः क्षीणाश्रवश्च। चिरं तेऽवीचौ महानरके वस्तव्यम्। अत्ययमत्ययतो देशय। अप्येवैतत्कर्म तनुत्वं परिक्षयं पर्यादानं गच्छेदिति। मनःशोकशल्येनाभ्याहतो हरितछिन्न इव नडो म्लायितुमारब्धः। तेन हिरुभिरुकावग्रामात्यावाहूयोक्तौ–भवन्तौ, न युवाभ्यामहमीदृशकर्म कुर्वाणो निवारित इति? तौ कथयतः–वयं देवेनादर्शनपथे व्यवस्थापिताः। कथं निवारयाम इति? तेन तौ दुष्टामात्यौ अदर्शनपथे व्यवस्थापितौ। 10　　C 571
भूयो हिरुभिरुकावग्रामात्यौ स्थापितौ। ताभ्यामपि दुष्टामात्याभ्यां प्रच्छन्नं तिष्यपुष्यस्तूपयोर्द्वे बिले कृत्वा द्वौ बिडालपोतकौ स्थापितौ। तयोर्दिने दिने मांसपेशीर्दत्त्वा शिक्षयतः–तिष्यपुष्यौ, येन सत्येन सत्यवचनेन युवाभ्यां मायया लोकं वञ्चयित्वा श्रद्धादेयं विनिपात्य प्रत्यवरायां बिडालयोनावुपपन्नौ, तेन सत्येन सत्यवचनेन मांसपेशीं कृत्वा स्वकस्वकं स्तूपं प्रदक्षिणीकृत्य स्वकस्वकं बिलं प्रविशतामिति। तौ यदा सुशिक्षितौ संवृत्तौ, तदा ताभ्यां 15 दुष्टामात्याभ्यां रुद्रायणस्य राज्ञो देवी उक्ता–देवि, पुत्रस्ते कृशालुको दुर्बलको म्लानोऽप्राप्तकायः। किमध्युपेक्षस इति? सा कथयति–किमहं करोमीति? युवाभ्यामेवासावीदृशकर्म कारित इति। तौ कथयतः–देवि, यत्र घटः पतितः, किं तत्र रज्जुरपि पातयितव्या? सा कथयति–सत्यमेतत्पितुर्वधम्। तदहं तस्य प्रतिविनोदयामि। अर्हद्वधं कः प्रतिविनोदयिष्यतीति? तौ कथयतः–देवि, वयमर्हद्वधं प्रतिविनोदयाम इति। सा कथयति–यद्येवम्, 20 शोभनम्। सा तस्य सकाशं गत्वा कथयति–पुत्र, कस्मात्त्वमुत्पाण्डूत्पाण्डुः कृशालुको दुर्बलको म्लानोऽप्राप्तकाय इति? स कथयति–अम्ब, त्वमप्येवं कथयसि–कस्मात्त्वमुत्पाण्डूत्पाण्डुः कृशालुको दुर्बलो म्लानोऽप्राप्तकाय इति, कथमहं नोत्पाण्डूत्पाण्डुको भवामि कृशालुको दुर्बलको म्लानोऽप्राप्तकाय इति, येन मया दुष्टामात्यविग्राहितेन द्वे आनन्तर्ये कर्मणी कृते–यच्च पिता जीविताद्व्यपरोपितो यच्चार्हन् भिक्षुः क्षीणाश्रवः? चिरमवीचौ 25 महानरके वस्तव्यमिति। सा कथयति–पुत्र, अभयं तावत्प्रयच्छ, यत्सत्यं तत्कथयामीति। स कथयति–दत्तं भवतु। सा कथयति–यथाभूतं पुत्र, नासौ तव पिता, किं तु मया ऋतुस्नातया अन्येन पुरुषेण सार्धं परिचरितम्, ततस्त्वं जात इति। स संलक्षयति–पितृवधस्तावन्न जातः। इति विदित्वा कथयति–अम्ब, यद्येवं पितृवधो नास्ति, अर्हद्वधोऽस्ति। स कथं निस्तार्य इति? सा कथयति–पुत्र, ज्ञानकोविदाः प्रष्टव्याः। ते एतदेकान्तीकरिष्यन्तीति 30　　C 572
उक्त्वा प्रक्रान्ता। तया तौ दुष्टामात्यौ आहूयोक्तौ–मया अस्य पितृवधो विनोदितः। युवामिदानीमर्हद्वधं प्रतिविनोदयतामिति। शिखण्डिना राज्ञा अमात्यानामाज्ञा दत्ता, सर्वामात्यान्

संनिपातयत ये च केचिज्ज्ञानकोविदा इति। तैः सर्वामात्याः संनिपातिताः, ये च केचिज्ज्ञानकोविदाः। तावपि दुष्टामात्यौ तत्रैव संनिपतितौ। सर्व एव राजोपजीवी लोकोऽनुकूलं वक्तुमारब्धः। तत्र केचित्कथयन्ति—देव, केनासौ दृष्टोऽर्हत्त्वं कुर्वाण इति? अपरे कथयन्ति—देव, अर्हन्तः सर्वज्ञानकल्पा आकाशगामिन इति। तौ दुष्टामात्यौ कथयतः—देव, किमत्र 5 शोकः क्रियते? स कथयति—युवामप्येवं कथयथ—किमर्थं शोकः क्रियते इति, ननु युवाभ्यामेवाहमर्हद्वधं कारितः। देव, न सन्त्यर्हन्तः। कुतोऽर्हद्वधः? स कथयति—मया प्रत्यक्षदृष्टौ तिष्यपुष्यौ अर्हन्तौ ज्वलनतपनवर्षणविद्योतनप्रातिहार्याणि कृत्वा निरुपधिशेषे निर्वाणधातौ निर्वातौ। युवामेवं कथयथ—न सन्त्यर्हन्तः, कुतोऽर्हद्वध इति? तौ कथयतः—वयं देवस्य प्रत्यक्षीकुर्मो यथा मायया लोकं वञ्चयित्वा श्रद्धादेयं विनिपात्य प्रत्यवरायां बिडालयोनावुप- 10 पन्नौ अद्यत्वेऽपि स्तूपे तिष्ठत इति। राजा अमात्यानामन्त्रयते—भवन्तः, यद्येवमागच्छत गच्छामः, पश्यामः किं भूतमभूतं वेति। एष च शब्दो रौरुके नगरे समन्ततो विसृतः। ततस्ते सर्वे जनपदनिवासिनो लोकास्तद्द्रष्टुं निष्क्रान्ताः। ततस्तौ दुष्टामात्यौ कथयतः—यथा तिष्यपुष्यौ येन सत्येन सत्यवचनेन युवां मायया लोकं वञ्चयित्वा श्रद्धादेयं विनिपात्य प्रत्यवरायां बिडालयोनावुपपन्नौ स्वकस्वके स्तूपे तिष्ठतः। अनेन सत्येन सत्यवचनेन इमां मांसपेशी- 15 मादाय स्वकस्वकं स्तूपं प्रदक्षिणीकृत्य स्वकस्वकं बिलं प्रविशतामिति। तावेवमुक्तौ स्वकस्वकात् स्तूपान्निर्गतौ। तावेवानेकैः प्राणिशतसहस्रैर्दृष्टौ। तौ मांसपेशीमादाय स्वकस्वकस्तूपं प्रदक्षिणीकृत्य स्वकस्वकबिलं प्रविष्टौ। तौ दुष्टामात्यौ कथयतः—दृष्टं देवेनेति? स कथयति—दृष्टम्। देव, न सन्ति लोकेऽर्हन्तः। केवलं त्वयं जनप्रवाद इति। तस्य यासौ दृष्टिः—सन्ति लोकेऽर्हन्त इति, सा प्रतिविगता। तत्र येऽश्रद्धास्तेषामसद्दर्शनमुत्पन्नम्, ये मध्यस्था- 20 स्तेषां काङ्क्षा, ये श्रद्धास्तेषामद्भुतं संवृत्तम्। अनुभावोदग्रा अविशारदाः। शिखण्डी राजा संलक्षयति—यदि न सन्त्येव लोकेऽर्हन्तः, किमर्थमार्यकाश्यपस्य कात्यायनस्य पञ्चशतपरिवारस्य शैलाया भिक्षुण्याः पञ्चशतपरिवारायाः पिण्डकमनुप्रयच्छामीति? तेन भिक्षूणां भिक्षुणीनां च पिण्डपातः समुच्छिन्नः। भिक्षवो भिक्षुण्यश्च रौरुकात्प्रक्रान्ताः। अथायुष्मान् महाकात्यायनः शैला च भिक्षुणी विनयापेक्षया तत्रैवावस्थितौ। यावदपरेण समयेन राजा 25 शिखण्डी रौरुकान्नगरान्निर्गच्छति। आयुष्मांश्च महाकात्यायनो रौरुकं नगरं पिण्डाय प्रविशति। स राजानं दृष्ट्वैकान्तेऽपक्रम्यावस्थितः—मा अयमप्रसादं प्रवेदयिष्यतीति। स राज्ञा शिखण्डिना एकान्तेऽवस्थितो दृष्टः। दृष्ट्वा च पुनरामन्त्रयते—भवन्तः, किमर्थमयमार्यो महाकात्यायनो मां दृष्ट्वा एकान्तेऽपक्रम्यावस्थित इति। तस्य पृष्ठतो हिरुभिरुकावग्रामात्यौ गच्छतः। तौ कथयतः—देव, आर्यो महाकात्यायनः संलक्षयति—देवः 30 कृतकौतुकमङ्गलो गच्छति, मा अप्रसादं वेदयिष्यति, दुःखं चरन्गच्छति, कर्म क्रियतें, पात्रचीवराणि पांशुना अवतरिष्यतीति। राजा तूष्णीमवस्थित इति। आयुष्मान् महाकात्यायनो रौरुकं नगरं पिण्डाय चरित्वा निर्गच्छति, राजा च शिखण्डी प्रविशति।

C 573

आयुष्मान् महाकात्यायनस्तथैव एकान्तेऽपक्रम्यावस्थितः। शिखण्डी राजा कथयति—भवन्तः, पूर्वमप्ययमार्यो महाकात्यायनो मां दृष्ट्वा एकान्तेऽपक्रम्यावस्थितः, सांप्रतमपि। कोऽत्र हेतुरिति? तस्य पृष्ठतस्तौ दुष्टामात्यौ गच्छतः। तौ कथयतः—देव, एष कथयति—मा अहमस्य पितृमारकस्य रजसा प्रव्रज्यामीति। अपरीक्षकोऽसौ। श्रुत्वा पर्यवस्थितः। C 574
स कथयति—भवन्तः, यस्याहं प्रियः, सोऽस्य मुण्डकस्य श्रमणकस्योपर्येकैकं पांशुमुष्टिं 5
क्षिपत्विति। सर्वेण जनकायेनैकैका पांशुमुष्टिः क्षिप्ता। महासाधनोऽसौ राजा। एकैकया पांशुमुष्ट्या आयुष्मतो महाकात्यायनस्योपरि महान् पांशुराशिर्व्यवस्थितः। सोऽपि ऋद्ध्या पर्णिकां कुटिमभिनिर्मायावस्थितः। स गोपालकैः पशुपालकैश्चावष्टभ्यमानो दृष्टः। ते बुद्ध्यायमानाः (?) परिवार्यावस्थिताः। हिरुभिरुकावग्रामात्यौ पृष्ठतोऽनुहिण्ड्य तं प्रदेश-
मनुप्राप्तौ। तौ पृच्छतः--भवन्तः, किमिदमिति? ते कथयन्ति—तेन कलिराजेन पितृमारकेण 10
आर्यो महाकात्यायनोऽदुष्यनयकारी पांशुना अवष्टब्ध इति। तौ साश्रुकण्ठौ रुदन्मुखौ गोपालकपशुपालकैः सार्धं पांशूनपनेतुमारब्धौ। आयुष्मान् महाकात्यायनो निर्गतः। तौ पादयोर्निपत्य पृच्छतः—आर्य, किमिदमिति? स कथयति—किमन्यद्भविष्यतीति? तौ कथयतः—आर्य, यदिदं शिखण्डिना महाकात्यायने जनकायसहायेन कर्म कृतम्। अस्य को भविष्य-
तीति। इतः सप्तमे दिवसे रौरुकं नगरं पांशुना अवष्टप्स्यते। आर्य, का आनुपूर्वी भविष्यतीति? 15
आयुष्मन्तौ, प्रथमे दिवसे महावायुरागत्य रौरुकं नगरमपगतपाषाणशर्करकपालं व्यवस्थापयिष्यति। द्वितीये दिवसे पुष्पवर्षं पतिष्यति। तृतीये वस्त्रवर्षम्, चतुर्थे हिरण्यवर्षम्, पञ्चमे सुवर्णवर्षम्, पश्चाद्वै रौरुकसामन्तनिवासिभिः सामवायिकं कर्म कृतम्, ते रौरुकं नगरं प्रेवक्ष्यन्ति। तेषु प्रविष्टेषु षष्ठे दिवसे रत्नवर्षं पतिष्यति, सप्तमे दिवसे पांशुवर्षमिति। तौ
कथयतः—आर्य, किमावामस्य कर्मणो भाविनौ भागिनौ? भद्रमुखौ, न युवामस्य कर्मणो 20
भागिनौ। आर्य, यद्येवं कथमस्माभिरस्मान्नगरान्निष्क्रमितव्यमिति? स कथयति—युवां यावच्च गृहं यावच्च नदी अत्रान्तरे सुरुङ्गां खानयित्वा गृहसमीपे नावं स्थापयित्वा तिष्ठत। C 575
यदा रत्नवर्षं पतेत्, तदा रत्नानां नावं पूरयित्वा निष्पलायितव्यमिति। तौ तस्य पादयोर्निपत्य रौरुकं प्रविष्टौ। राज्ञः सकाशं प्रविष्टौ कथयतः—किं देवेनार्यो महाकात्यायनः किंचि-
दुक्तः पांशुनावष्टब्धः? स कथयति—भवन्तः, जीवत्यसौ? देव, जीवति। किं कथयति— 25
देव, एवं कथयति—इतः सप्तमे दिवसे रौरुकं नगरं पांशुना अवष्टप्स्यत इति। कानुपूर्वी? कथयति—देव, स एवं कथयति, प्रथमे तावद्दिवसे महावायुरागत्य रौरुकं नगरमपगतपाषाण-शर्करकपालं व्यवस्थापयिष्यति, द्वितीये दिवसे पुष्पवर्षं पतिष्यति, तृतीये दिवसे वस्त्रवर्षम्, चतुर्थे हिरण्यवर्षम्, पञ्चमे सुवर्णवर्षम्, पश्चाद्वै रौरुकसामन्तकनिवासिभिः सामवायिकं
कर्म कृतं ते रौरुकं नगरं प्रवेक्ष्यन्ति, तेषु प्रविष्टेषु षष्ठे दिवसे रत्नवर्षं पतिष्यति, सप्तमे 30
दिवसे पांशुवर्षमिति। तौ कथयतः—आर्य, किमावामप्यस्य कर्मणो भागिनौ? भद्रमुखौ, न युवामस्य कर्मणो भागिनौ। आर्य, यद्येवं कथमस्मान्नगरान्निष्क्रमितव्यमिति? स कथयति—

युवां यावच्च गृहं यावच्च नदी अत्रान्तरे सुरुङ्गां खानयित्वा गृहसमीपे नावं स्थापयित्वा तिष्ठत। यदा रत्नवर्षं पतेत्, तदा रत्नानां नावं पूरयित्वा निष्पलायितव्यमिति। तौ दुष्टामात्यौ कथयतः—समुच्छिन्नपिण्डपातः पांशुवर्षेणावष्टब्धः स किमन्यद्वदतु? ईदृशं वा वदते, देवतो वा पापनरमिति(?)। राजा शिखण्डी संलक्षयति—स्यादेवमिति। हिरुभिरु-
5 कावग्रामात्यौ मुखं विभण्ड्य हस्तान् संपरिवर्त्य प्रक्रान्तौ। तत्र हिरुकस्य श्यामाको दारकः पुत्रः। भिरुकस्य श्यामावती नाम दारिका दुहिता। हिरुकेन श्यामाको दारक आयुष्मते महाकात्यायनाय दत्तः—आर्य, यद्यस्य कानिचित्कुशलमूलानि स्युः, प्रव्राजयेथाः। नो चेत् तवैवायमुपस्थायक इति। भिरुकेनापि श्यामावती दारिका शैलाया भिक्षुण्या दत्ता—आर्ये,
C 576 यद्यस्याः कानिचित् कुशलमूलानि स्युः, प्रव्राजयेथाः। नो चेत् कौशाम्ब्यां घोषिलो नाम
10 गृहपतिर्मम वयस्यस्तस्य समर्पयिष्यसीति। तयाधिवासितम्। अथ शैला भिक्षुणी श्यामावतीमादाय ऋद्ध्या रौरुकान्नगरात् प्रक्रान्ता। तदा कौशाम्ब्यां घोषिलस्य गृहपतेर्दत्ता। यथा च संदिष्टं समाख्यातम्। आयुष्मान् महाकात्यायनस्तत्रैवावस्थितः। हिरुभिरुकाभ्यामग्रामात्याभ्यां यावच्च गृहं यावच्च नदी अत्रान्तरे सुरुङ्गां खानयित्वा गृहसमीपे च नौः स्थापिता। यावदन्यतमस्मिन् दिवसे महावायुरागतः, येन तं रौरुकं नगरमपगतपाषाण-
15 शर्करकपालं व्यवस्थापितम्। द्वितीये दिवसे पुष्पवर्षं पतितम्। तौ दुष्टामात्यौ कथयतः—देव, श्रूयते राज्ञो मान्धातुः सप्ताहं हिरण्यवर्षं पतितमिति। देवस्येदं पुष्पवर्षं पतितम्, नचिराद्वस्त्रवर्षं पतिष्यति। तृतीये दिवसे वस्त्रवर्षं पतितम्। तौ दुष्टामात्यौ कथयतः—देवस्येदं वस्त्रवर्षं पतितम्, नचिराद्धिरण्यवर्षं पतिष्यतीति। चतुर्थे दिवसे हिरण्यवर्षं पतितम्। तौ दुष्टामात्यौ कथयतः—देवस्येदं हिरण्यवर्षं पतितम्, नचिरादेव सुवर्णवर्षं पतिष्यतीति।
20 पञ्चमे दिवसे सुवर्णवर्षं पतितम्। तौ दुष्टामात्यौ कथयतः—देवस्येदं सुवर्णवर्षं पतितम्, नचिरादेव रत्नवर्षं पतिष्यतीति। ये रौरुकसामन्तकनिवासिभिः सामवायिकं कर्म कृतम्, ते रौरुकं नगरं प्रविष्टाः। तेषु प्रविष्टेषु षष्ठे दिवसे रत्नवर्षं पतितम्। हिरुभिरुकावग्रामात्यौ रत्नानां नावं पूरयित्वा निष्पलायितौ। तत्र हिरुकेणान्यतमस्मिन् प्रदेशे हिरुकं नाम नगरं मापितम्। तस्य हिरुकं हिरुकमिति संज्ञा संवृत्ता। भिरुकेणान्यतमस्मिन् प्रदेशे भिरुकं
25 नाम नगरं मापितम्। तस्यापि भिरुकच्छं भिरुकच्छमिति संज्ञा संवृत्ता। सप्तमे दिवसे पांशुवर्षं पतितुमारब्धम्। अमनुष्यैर्द्वाराण्यवष्टब्धानि। श्यामाकः कथयति—आर्य, किमेष उच्चशब्दो महाशब्द इति। आयुष्मान् महाकात्यायनः कथयति—पुत्र, वातायनेन काशिकां
C 577 निष्कासयेति। तेन वातायनेन काशिका निष्कासिता। पांशुभिरनवीकृता। आयुष्मान् महाकात्यायनः संलक्षयति—सावशेषागोचर इति। यावद्भूयो निष्कासिता, पूर्णा चूडिकाबद्धा
30 संवृत्ता। आयुष्मान् महाकात्यायनः संलक्षयति—अगोचरीभूतम्। इदानीं गच्छामीति। अथ या रौरुकनिवासिनी देवता सा येनायुष्मान् महाकात्यायनस्तेनोपसंक्रान्ता। उपसंक्रम्य पादाभिवन्दनं कृत्वा कथयति—आर्य, अहमप्यागच्छामि। आर्यस्योपस्थानं करिष्यामीति।

तेनाधिवासितम्। आयुष्मता महाकात्यायनेन श्यामाक उक्तः–पुत्र, गृहाण चीवरकर्णिकम्। गच्छाम इति। तेन चीवरकर्णिको गृहीतः। स ऋद्ध्या उपरिविहायसा श्यामाकं दारकमादाय संप्रस्थितः। रौरुकनिवासिन्यपि देवता स्वर्द्ध्या तस्य पृष्ठतोऽनुबद्धा। रौरुकमपि नगरं पांशुनावष्टब्धम्। तेऽनुपूर्वेण खरं नाम कर्वटकमनुप्राप्ताः। तेन तत्र खलाभिधानेऽवस्थिताः। आयुष्मान् महाकात्यायनः श्यामाकं दारकं खलाभिधाने स्थाप- 5 यित्वा पिण्डपात्रं प्रविष्टः। देवतानुभावात्तस्मिन् खलाभिधाने धान्यं वर्धितुमारब्धम्। यस्तत्र पुरुषोऽवस्थितः, स तं दारकं दृष्ट्वा तस्य सकाशमुपसंक्रम्य कथयति–भो दारक, तव प्रभावात्खलाभिधाने धान्यं वर्धत इति। स कथयति–न मम प्रभावात् खलाभिधाने धान्यं वर्धत इति, अपि तु रौरुकनिवासिनी देवता इहागता अमुष्मिन् प्रदेशे तिष्ठति, तस्याः प्रभावात् खलाभिधाने धान्यं वर्धत इति। स तस्याः सकाशं गत्वा पादयो- 10 र्निपत्य कथयति–देवते, ताडकं कुञ्चिकां च तावद्धारय, यावद्ग्रामं [गत्वा] आगच्छामि। न च त्वया मां मुक्त्वा अन्यस्य कस्यचिद्दातव्यमिति। तया गृहीतम्। तेनापि कर्वटकं गत्वा कर्वटकनिवासी जनकायः संनिपातितः। उक्तश्च–भवन्तः, रौरुकनिवासिनी देवता इहागता खलाभिधाने तिष्ठति। तत्प्रभावात् खलाभिधाने धान्यं वर्धते। तस्या हस्ते मया ताडकं कुञ्चिका च दत्ता। [उक्तं] च–देवते, ताडकं कुञ्चिकां च तावद्धारय यावद् 15 ग्रामं गत्वा आगच्छामि। न च त्वया मां मुक्त्वा अन्यस्य कस्यचिद्दातव्यमिति। तदधिष्ठानं विज्ञापयामि–यदि मम पुत्रं श्रेष्ठिनमभिषिञ्चथ, अहमात्मानं जीविताद्व्यपरोपयामीति। देवता C 578 अस्मादधिष्ठानान्न क्वचिद्गमिष्यति, युष्माकं भोगाभिवृद्धिर्भविष्यति, सर्वाश्च ईतयो व्युपशमं गमिष्यन्तीति। तैस्तस्य पुत्रः श्रेष्ठी अभिषिक्तः। तेनात्मा जीविताद्व्यपरोपितः। ततः सर्वं तदधिष्ठानं गन्धपुष्पोपशोभितं छत्रध्वजपताकाशोभितं च बलिमादाय येन देवता 20 तेनोपसंक्रान्ताः। उपसंक्रम्य पादयोर्निपत्य कथयति–देवते, अधिष्ठा भव, इहैव तिष्ठेति। नास्ति ममेहावस्थानम्। आर्यस्याहं महाकात्यायनस्योपस्थायिकेति। आयुष्मान् महाकात्यायन इति कथयति–देवते, समन्वाहर अस्य यस्य सकाशात् ताडकः कुञ्चिका च गृहीतेति। सा समन्वाहर्तुं प्रवृत्ता पश्यति, यावत्कालगतः। तयासावधिष्ठाननिवासी जनकायोऽभिहितः– भवन्तः, समयतोऽहं तिष्ठामि। यदि यादृशमेव मम स्थण्डिलं कारयथ तादृशमेवार्यस्येति। 25 तैः प्रतिज्ञातम्। तैर्यादृशमेव तस्या देवतायाः स्थण्डिलं कारितं तादृशमेवायुष्मतो महाकात्यायनस्य। तस्या देवताया योऽधिष्ठाने प्रदीपः प्रज्ञप्तः, तमसौ गृहीत्वा आयुष्मतो महाकात्यायनस्य स्थण्डिले स्थापयति। सा अन्यतमेन पुरुषेण प्राकारकण्टके स्थितेन प्रदीपं गृहीत्वा गच्छन्ती दृष्टा। स संलक्षयति–एषा देवता आर्यस्य महाकात्यायनस्याभिसारिका गच्छतीति। तया तस्य चित्तमुपलक्षितम्। सा रुषिता–पापचित्तसमुदाचारोऽयं 30 कर्वटकनिवासी जनकायः। आर्यस्य महाकात्यायनस्य निरामगन्धस्यातृप्तपुण्यस्यापवादमनुप्रयच्छतीति। तस्मात्तस्मिन् कर्वटके मारिरुत्सृष्टा। महाजनमरको जातः। मृतजने

निष्कास्यमाने मञ्चकामञ्चके सङ्क्तुमारब्धाः। अधिष्ठाननिवासिना जनकायेन नैमित्तिका आहूय पृष्टाः—किमेतदिति? ते कथयन्ति देवताप्रकोप इति। ते तां क्षमयितुमारब्धाः। सा कथयति—यूयमार्यस्य महाकात्यायनस्य निरामगन्धस्यासत्कारमनुप्रयच्छथेति? ते भूयः कथयन्ति—क्षमस्व देवते, न कश्चिदसत्कारं करिष्यतीति। सा कथयति—यदि यूयं यादृशमेवार्यस्य
C 579 5 महाकात्यायनस्येति। ते कथयन्ति—देवते क्षमस्व, प्रतिविशिष्टतरं कुर्म इति। तया तेषां क्षान्तम्। तैरप्यायुष्मतो महाकात्यायनस्य प्रतिविशिष्टतरः सत्कारः कृतः। आयुष्मान् महाकात्यायनस्तत्र वर्षोषितः श्यामाकं दारकमादाय देवतामुपामन्त्र्य संप्रस्थितः। सा कथयति—आर्य, मम किंचिच्चिह्नमनुप्रयच्छ, यत्राहं कारां कृत्वा तिष्ठामीति। तेन तस्यां काशिका दत्ता। तयात्र प्रक्षिप्य स्तूपः प्रतिष्ठापितो महश्च प्रस्थापितः—काशीमह. काशीमह इति
10 संज्ञा संवृत्ता। अद्यापि चैत्यवन्दका भिक्षवो वन्दन्ते। श्यामाको दारकश्चीवरकर्णिके लग्नः प्रलम्बमानो गोपालकपशुपालकैर्दृष्टः। तैर्लम्बते लम्बत इति उच्चैर्नादो मुक्तः। तस्मिन् जनपदे मनुष्याणां लम्बकपाल इति संज्ञा संवृत्ता। आयुष्मान् महाकात्यायनोऽन्यतमं कर्वटकमनुप्राप्तः। तत्र श्यामाकं दारकं वृक्षमूले स्थापयित्वा पिण्डाय प्रविष्टः। तस्मिंश्च कर्वटकेऽपुत्रो राजा कालगतः। पौरजानपदाः संनिपत्य कथयन्ति—भवन्तः, कं राजानमभि-
15 षिञ्चाम इति? तत्रैके कथयन्ति—यः पुण्यमहेशाख्य इति। अपरे कथयन्ति—कथमसौ प्रज्ञायत इति? अन्ये कथयन्ति—परीक्षकाः प्रयुज्यन्तामिति। तैः परीक्षकाः प्रयुक्ताः। ते इतश्चामुतश्च पर्यटितुमारब्धाः। तैरसौ वृक्षस्याधस्तान्मिद्धमवक्रान्तो दृष्टः। ते तस्य निमित्तमुद्ग्रहीतुमारब्धा यावत्पश्यन्ति। अन्येषां वृक्षाणां छाया प्राचीनप्रवणा प्राचीनप्राग्भारा। तस्य वृक्षस्य छाया अस्य श्यामाकस्य दारकस्य कायं न विजहातीति। दृष्ट्वा च पुनः संजल्पितुमारब्धाः—
20 भवन्तः, अयं पुण्यमहेशाख्यः सत्त्वः, एतमभिषिञ्चाम इति। स तैः प्रबोध्योक्तः—दारक, राज्यं प्रतीच्छेति। स कथयति—नाहं राज्येनार्थी। अहमार्यस्य महाकात्यायनस्योपस्थापक इति। आयुष्मता महाकात्यायनेन श्रुतम्। समन्वाहर्तुं प्रवृत्तः। किमस्य दारकस्य राज्ञः
C 580 संवर्तनीयानि कर्माणि न वेति। पश्यति, सन्ति। स कथयति—पुत्र, प्रतीच्छ राज्यम्, किं तु धर्मेण ते कारयितव्यमिति। तेन तं प्रतीष्टम्। स तै राज्येऽभिषिक्तः। श्यामाकेन
25 दारकेण तस्मिन् राज्यं कारितमिति। श्यामाकराज्यं श्यामाकराज्यमिति संज्ञा संवृत्ता॥

आयुष्मान् महाकात्यायनो वोक्काणमनुप्राप्तः। वोक्काणे आयुष्मतो महाकात्यायनस्य माता उपपन्ना। सा आयुष्मन्तं महाकात्यायनं दृष्ट्वा कथयति—दृष्ट्वा चिरस्य बत पुत्रकं पश्यामि, चिरस्य बत पुत्रकं पश्यामीति। स्तनाभ्यां चास्याः क्षीरधाराः प्रसृताः। आयुष्मता महाकात्यायनेन अम्ब अम्बेति समाश्वासिता। तया आयुष्मान् महाकात्यायनो भोजितः। तस्या
30 आयुष्मता महाकात्यायनेनाशयानुशयं धातुं प्रकृतिं च ज्ञात्वा तादृशी चतुरार्यसंप्रतिवेधिकी धर्मदेशना कृता, यां श्रुत्वा विंशतिशिखरसमुद्गतं सत्कायदृष्टिशैलं ज्ञानवज्रेण भित्त्वा स्रोतापत्तिफलं साक्षात्कृतम्। सा दृष्टसत्या त्रिरुदानमुदानयति स्म—इदमस्माकं भदन्त न मात्रा

कृतं न पित्रा न राज्ञा न देवताभिर्नेष्टेन स्वजनबन्धुवर्गेण न पूर्वप्रेतैर्न श्रमणब्राह्मणैर्यद्भवता अस्माकं कृतम्। समुच्छोषिता रुधिराश्रुसमुद्राः, लङ्घिता अस्थिपर्वताः, पिहितान्यपाय-द्वाराणि, विवृतानि स्वर्गमोक्षद्वाराणि, प्रतिष्ठापिताः स्मो देवमनुष्येषु। आह च—

यत्कर्तव्यं सुपुत्रेण मातुर्दुष्करकारिणा।
तत्कृतं भवता मह्यं चित्तं मोक्षपरायणम्॥ ६७॥ 5
दुर्गतिभ्यः समुद्धृत्य स्वर्गे मोक्षे च ते अहम्।
स्थापिता पुत्र यत्नेन साधु ते दुष्कृतं कृतम्॥ ६८॥

अथायुष्मान् महाकात्यायनस्तां भद्रकन्यां सत्येषु प्रतिष्ठाप्य कथयति—अम्ब, अवलोकिता भव, गच्छामीति। सा कथयति—पुत्र, यद्येवं मम किंचिदनुप्रयच्छ, यत्राहं पूजां कृत्वा तिष्ठामीति। तेन तस्या यष्टिर्दत्ता। तया स्तूपं प्रतिष्ठाप्य सा तस्मिन् प्रतिमारोपिता। 10 C 581
यष्टिस्तूप इति संज्ञा संवृत्ता। अद्यापि चैत्यवन्दका भिक्षवो वन्दन्ते॥

अथायुष्मान् महाकात्यायनो मध्यदेशमागन्तुकामः सिन्धुमनुप्राप्तः। अथ या उत्तरापथनिवासिनी देवता, सा आयुष्मन्तं महाकात्यायनमिदमवोचत्—आर्य, ममापि किंचि-च्चिह्नमनुप्रयच्छ, यत्राहं पूजां कृत्वा तिष्ठामीति। स संलक्षयति—उक्तं भगवता मध्यदेशे पुले न धारयितव्ये इति। तदेते अनुप्रयच्छामीति। तेन तस्यैते दत्ते। तया स्थण्डिले 15
कारयित्वा ते प्रतिष्ठापिते इतश्चरसन्तिसंज्ञा संवृत्ता। आयुष्मान् महाकात्यायनोऽनुपूर्वेण श्रावस्तीमनुप्राप्तः। भिक्षुभिर्दृष्ट उक्तश्च—स्वागतं स्वागतमायुष्मन्। कच्चित्कुशलचर्येति? स कथयति—आयुष्मन्तः, किंचित् सुखचर्या किंचिद्दुःखचर्येति। भिक्षवः कथयन्ति—किं सुख-चर्या किं दुःखचर्येति? स कथयति—यत्सत्त्वकार्यं कृतम्, इयं सुखचर्या। यद् राजा शिखण्डी रौरुकनिवासी च जनकाय अहं च पांशुनावष्टब्धः, हिरुभिरुकौ चाग्रामात्यौ 20
कृच्छ्रेण पलायितौ, इयं दुःखचर्येति। अथ पाथाभिक्षवोऽवध्यायन्तः कथयन्ति—पितृमारकोऽसौ। तेनायुष्मान् रुद्रायणोऽर्हत्त्वं प्राप्तः। अदुष्यनयकारी प्रघातित इति। इदं तस्य पुष्पमात्रम्। अन्यत्फलं भविष्यतीति॥

भिक्षवः संशयजाताः सर्वसंशयच्छेत्तारं बुद्धं भगवन्तं पप्रच्छुः—किं भदन्त आयुष्मता रुद्रायणेन कर्म कृतं येनाढ्ये महाधने महाभोगे कुले प्रत्याजातः? भगवतः शासने प्रव्रज्य 25
सर्वक्लेशप्रहाणादर्हत्त्वं साक्षात्कृतम्? अर्हत्त्वप्राप्तश्च शस्त्रेण प्रघातित इति? भगवानाह—रुद्रा-यणेन भिक्षुणा कर्माणि कृतान्युपचितानि लब्धसंभाराणि परिणतप्रत्ययान्योघवत्प्रत्युप-स्थितान्यवश्यंभावीनि। रुद्रायणेन कर्माणि कृतान्युपचितानि। कोऽन्यः प्रत्यनुभविष्यति? न भिक्षवः कर्माणि कृतान्युपचितानि बाह्ये पृथिवीधातौ विपच्यन्ते, नाब्धातौ, न तेजोधातौ, C 582
न वायुधातौ, अपि तूपात्तेष्वेव स्कन्धधात्वायतनेषु कर्माणि कृतान्युपचितानि विपच्यन्ते 30
शुभान्यशुभानि च।

न प्रणश्यन्ति कर्माणि कल्पकोटिशतैरपि ।
सामग्रीं प्राप्य कालं च फलन्ति खलु देहिनाम् ॥ ६९ ॥ इति ।

भूतपूर्वं भिक्षवोऽतीतेऽध्वनि असति बुद्धानां भगवतामुत्पादे प्रत्येकबुद्धा लोक उत्पद्यन्ते हीनदीनानुकम्पकाः प्रान्तशयनासनभक्ताः खड्गविषाणकल्पा एकदक्षिणीया 5 लोकस्य । यावदन्यतमस्मिन् कर्वटके लुब्धः प्रतिवसति । तस्य कर्वटकस्य च नातिदूरे उदपानं प्रभूतानां मृगाणामावासः । तत्रासौ लुब्धकः प्रतिदिनं प्रभूतान् कूटान् पाशालेपांश्च प्रतिक्षिपति प्रभूतानां मृगानामुत्सादाय विनाशाय अनयेन व्यसनाय । तस्य चामोघास्ते कूटाः पाशालेपाश्च । यावदन्यतरः प्रत्येकबुद्धो जनपदचारिकां चरंस्तं कर्वटकमनुप्राप्तो देवतायतने रात्रिंदिवा समुपागतः । स पूर्वाह्णे निवास्य पात्रचीवरमादाय तं कर्वटकमनुप्राप्तः । तं कर्वटकं 10 पिण्डाय प्राविक्षत् । ततः पिण्डपातमटित्वा संलक्षयति—इदं देवायतनं दिवा आकीर्णम् । बहिः कर्वटकस्य शान्ते स्थाने पिण्डपातं वेलां करोमीति । स कर्वटकान्निष्क्रम्येदं शान्तमिदं शान्तमिति येन तदुदपानं तेनोपसंक्रान्तः । उपसंक्रम्य पात्रस्रावणमेकान्त उपनिक्षिप्य पादौ प्रक्षाल्य हस्तौ निर्माद्य पानीयं परिस्राव्य शीर्णपर्णकानि समुदानीय निषद्य भक्तकृत्यं कृत्वा हस्तौ निर्माद्य मुखं पात्रं च पात्रपरिस्रावणं यथास्थाने स्थाप्य पादौ 15 प्रक्षाल्य अन्यतमवृक्षमूलं निश्रित्य सुप्तोरगराजभोगपरिपिण्डीकृतं पर्यङ्कं बद्धा शान्तेनेर्यापथेन निषण्णः । तस्मिन् दिवसे मानुषगन्धेनैकमृगोऽपि न ग्रहणानुगतः । अथ स लुब्धकः काल्यमेवोत्थाय येन तदुदपानं तेनोपसंक्रान्तः । स तान् कूटान् पाशांश्च प्रत्यवेक्षितुमारब्धः । एकमृगमपि नाद्राक्षीत् । तस्यैतदभवत्—ममामी कूटाः पाशालेपाश्चावन्ध्याः । किमत्र कारणं येनाद्य एकमृगोऽपि न बद्ध इति? । तदुदपानं सामन्तकेन पर्यटितुमारब्धः । पश्यति मनुष्य- 20 पदम् । स तेन पदानुसारेण गतः । पश्यति तं प्रत्येकबुद्धं शान्तेनेर्यापथेन निषण्णम् । स संलक्षयति—एते प्रव्रजिताः शान्तात्मान ईदृशेषु स्थानेष्वभिरमन्ते । यद्यद्याहमस्य जीवितापच्छेदं न करोमि, नियतमेष मम वृत्तिसमुच्छेदं करोति । सर्वथा प्रघात्योऽयमिति । तेनासौ निर्घृणहृदयेन त्यक्तपरलोकेन कराकारसदृशं धनुराकर्णं पूरयित्वा सविषेण शरेण मर्मणि ताडितः । स महात्मा प्रत्येकबुद्धः संलक्षयति—मा अयं तपस्वी लुब्धोऽत्यन्तक्षतश्च 25 भविष्यति, उपहतश्च । हस्तोद्धारमस्य ददामीति । स विततपक्ष इव हंसराज उपरिविहायसमभ्युद्गम्य ज्वलनतपनवर्षणविद्योतनप्रातिहार्याणि कर्तुमारब्धः । आशु पृथग्जनस्य ऋद्धिरावर्जनकरी । स मूलनिकृत्त इव द्रुमः पादयोर्निपत्य कथयति—अवतरावतर सद्भूतदक्षिणीय, मम क्लेशपङ्कनिमग्नस्य हस्तोद्धारमनुप्रयच्छेति । स तस्यानुकम्पार्थमवतीर्णः । ततस्तेन विशल्यीकृतः । उपनाहो दत्तः । उक्तश्च—आर्य, निवेशनं गच्छामः । यद्यत्र सुवर्णपलोऽपि 30 दातव्यः, अहं परिप्रापयामीति । स संलक्षयति—यन्मया अनेन पूतिकायेन प्राप्तव्यं तदिदानीं शान्तं निरुपधिशेषं निर्वाणधातुं प्रविशामीति । स तस्यैव पुरस्तात्पुनर्गगनतलमभ्युद्गम्य विचित्राणि प्रातिहार्याणि विदर्श्य निरुपधिशेषे निर्वाणधातौ परिनिर्वृतः । धनवानसौ

C 583

लुब्धः। तेन सर्वगन्धकाष्ठैश्चितां चित्वा ध्मापितः। सा चिता क्षीरेण निर्वापिता। तान्यस्थीनि नवे कुम्भे प्रक्षिप्य शारीरस्तूपः प्रतिष्ठापितः। छत्रध्वजपताकाश्चारोपिताः। गन्धैर्माल्यैर्धूपैश्च पूजां कृत्वा पादयोर्निपत्य प्रणिधानं कृतम्—यन्मयैवंविधे सद्भूतदक्षिणीयेऽपकारो कृतः, मा अहमस्य कर्मणो भागी स्याम्। यत्तु कारा कृता, अनेनाहं कुशलमूलेनाढ्ये महाधने महाभोगे कुले जायेयम्, एवंविधानां च गुणानां लाभी स्याम्, प्रतिविशिष्टतरं चातः 5 शास्तारमारागयेयं न विरागयेयमिति॥  C 584

किं मन्यध्वे भिक्षवो योऽसौ तेन कालेन तेन समयेन लुब्धकः, एष एवासौ रुद्रायणो भिक्षुः। यदनेन प्रत्येकबुद्धः सविषेण शरेण मर्मणि ताडितः, तस्य कर्मणो विपाकेन बहूनि वर्षशतानि बहूनि वर्षसहस्राणि नरकेषु पक्वः, तस्मिन्नपि चोदपाने सविषेण शरेण मर्मणि ताडितः, तेनैव च कर्मावशेषेणैतर्ह्यप्यर्हत्त्वप्राप्तः शस्त्रेण प्रघातितः॥ 10

पुनरपि भिक्षवः संशयजाताः सर्वसंशयच्छेत्तारं बुद्धं भगवन्तं पप्रच्छुः—किं भदन्त शिखण्डिना रौरुकनिवासिना जनकायेनायुष्मता महाकात्यायनेन च कर्म कृतं येन पांशुनावष्टब्धाः, हिरुभिरुकौ त्वग्रामात्यौ निष्पलायिताविति? भगवानाह—एभिरेव भिक्षवः कर्माणि कृतान्युपचितानि लब्धसंभाराणि परिणतप्रत्ययान्योघवत्प्रत्युपस्थितान्यवश्यंभावीनि। एभिः कर्माणि कृतान्युपचितानि। कोऽन्यः प्रत्यनुभविष्यति? न भिक्षवः कर्माणि कृतान्युपचितानि 15 बाह्ये पृथिवीधातौ विपच्यन्ते, नाब्धातौ, न तेजोधातौ, न वायुधातौ, अपि तूपात्तेष्वेव स्कन्धधात्वायतनेषु कर्माणि कृतानि विपच्यन्ते शुभान्यशुभानि च।

न प्रणश्यन्ति कर्माणि कल्पकोटिशतैरपि।
सामग्रीं प्राप्य कालं च फलन्ति खलु देहिनाम्॥ ७०॥

भूतपूर्वं भिक्षवोऽन्यतरस्मिन् कर्वटके गृहपतिः प्रतिवसति। तेन सदृशात् कुलात् 20 कलत्रमानीतम्। स तया सह क्रीडते रमते परिचारयति। तस्य क्रीडतो रममाणस्य परिचारयतः पुत्रो जातः। पुनरस्य क्रीडतो रममाणस्य परिचारयतो दारिका जाता। यावदन्यतमः प्रत्येकबुद्धो जनपदचारिकां चरंस्तं कर्वटकमनुप्राप्तः। या जन्मिका दारिकाः, तासां याचनका आगच्छन्ति। तस्या न कश्चिदागच्छति। असति बुद्धानामुत्पादे प्रत्येकबुद्धा लोक उत्पद्यन्ते हीनदीनानुकम्पकाः प्रान्तशयनासनभक्ता एकदक्षिणीया लोकस्य। 25 यावदन्यतमः प्रत्येकबुद्धो जनपदचारिकां चरंस्तं कर्वटकमनुप्राप्तः। यावत्तया दारिकया गृहं संमृज्य वाटस्योपरिष्टात् संकारश्छोरितः। तस्य प्रत्येकबुद्धस्य पिण्डपातमटतः शिरसि पतितः। तयासौ दारिकया पतन् दृष्टः। न चास्य विप्रतिसारचित्तमुत्पन्नम्। नैवम्। तस्यास्तमेव दिवसं याचनक आगतः। सा भ्रात्रा पृष्टा—किं त्वयाद्य कृतं येन ते याचनका नागता इति। तया समाख्यातम्—मया तस्योपरि संस्कारश्छोरितः। तेन विपुष्पितम्। 30 तदा दारिकया अन्यस्या दारिकाया निवेदितम्। तयाप्यस्या लोकस्येदं पापकं दृष्टिगतमुत्पन्नम्। यस्या यस्या याचनका आगच्छन्ति, सा सा तस्य प्रत्येकबुद्धस्योपरि संकारं  C 585

छोरयत्विति। असत्कारभीरवस्ते महात्मानः सर्वे प्रत्येकबुद्धाः। स तस्मात् कर्वटकात्प्रक्रान्तः। पञ्चाभिज्ञानामृषीणामुपरि क्षेप्तुमारब्धाः। तेऽपि प्रक्रान्ताः। ततो मातापित्रोरुपरि क्षेप्तुमारब्धाः। तस्मिन् कर्वटके द्वौ गृहपती समकौ प्रतिवसतः। सा आभ्यामुक्ता—भवन्तः, असद्धर्मोऽयं वर्धते, विरमतेति। ताभ्यां निवारिताः प्रतिविरताः॥

5 किं मन्यध्वे भिक्षवो यासौ दारिका यया प्रत्येकबुद्धस्योपरि संकारश्छोरितः, एष एवासौ शिखण्डी। योऽसौ कर्वटकनिवासी जनकायः, एष एवासौ रौरुकनिवासी जनकायः। यदेभिः प्रत्येकबुद्धानामुपरि पापकं दृष्टिगतमुत्पन्नं कृतम्, अस्य कर्मणो विपाकेन पांशुनावष्टब्धाः। योऽसौ गृहपती याभ्यां निवारितम्, एतावेतौ हिरुभिरुकावग्रामात्यौ। तस्य कर्मणो विपाकेन निष्पलायितौ। योऽसौ दारिकाया भ्राता येन 10 विपुष्पितम्, एष एवासौ कात्यायनो भिक्षुः। यदनेन विपुष्पितं तस्य कर्मणो विपाकेन पांशुनावष्टब्धः। यदि तेन न विपुष्पितं (चित्तं) न पांशुनावष्टब्धोऽभविष्यदिति। यदि तस्य पापकं दृष्टिगतमुत्पन्नमभविष्यत्, कात्यायनोऽपि भिक्षुः पांशुनावष्टब्धोऽनयेन व्यसनमापन्नोऽभविष्यदिति। इति हि भिक्षव एकान्तकृष्णानां कर्मणामेकान्तकृष्णो विपाकः, एकान्तशुक्लानामेकान्तशुक्लः, व्यतिमिश्राणां व्यतिमिश्रः। तस्मात्तर्हि भिक्षव एकान्तकृष्णानि 15 कर्माण्यपास्य व्यतिमिश्राणि च, एकान्तशुक्लेष्वेव कर्मस्वाभोगः करणीयः। इत्येवं वो भिक्षवः शिक्षितव्यमिति। भिक्षवो भगवतो भाषितमभ्यनन्दन्निति॥

C 586

इति श्रीदिव्यावदाने रुद्रायणावदानं समाप्तम्[१]॥



१ After DA 37, there is a fragment from the सिंहजातक in all Mss. used by C:

नमः सर्वज्ञाय। मातर्यपकारिणः प्राणिन इहैव व्यसनप्रपातपातालावलम्बिनो भवन्ति। सततसमुपजायमानप्रेमप्रसादबहुमानमानसैः सत्पुरुषैर्मातरः शुश्रूषणीयाः। तद्यथानुश्रूयते—विकसितकुमुदेन्दुकुन्दकुसुमावलीगुणगणविभूषितः पूर्वजन्मान्तरोपात्ताप्रमेयानवद्यविपुलसकलसंभारो धनदसमानरत्नश्रियः स्वजनकृपनतस्यैव नान्यदस्ति सुखं नृणाम्। तदेवं तेन भगवता तिर्यग्जनावतिवर्तमानेन सुचिरमभिरक्षितः प्राणिनिक्षेपः तदवस्थेनापि प्रज्ञापरिचर्यः कृत इति विचिन्त्य यस्तेन धर्मनिक्षेपो निक्षिप्तः साधुतायिना पालनीयः स युष्माभिरत्यन्तं सुखमिच्छद्भिः॥ सिंहजातकमिति॥

After this, Avadāna 38 begins with मातर्यपकारिणः etc.

## ३८ मैत्रकन्यकावदानम् ।

[1]मातर्यपकारिणः प्राणिन इहैव व्यसनप्रपातपातालावलम्बिनो भवन्तीति सतत-समुपजायमानप्रेमप्रसादबहुमानमानसैः सत्पुरुषैर्मातरः शुश्रूषणीयाः । तद्यथानुश्रूयते—विकसितसितकुमुदेन्दुकुन्दकुसुमावलीगुणगणविभूषितः पूर्वजन्मान्तरोपात्ताप्रमेयानवद्यविपुल-सकलसंभारो धनदसमानरत्नाश्रयः स्वजनकृपणवनीपकभुज्यमानोदारविभवसारनिचयो मित्रो 5 नाम सार्थवाहो बभूव ।

परोपकारैकरसाभिरामा
विभूतयः स्फीततरा बभूवुः ।
तस्यार्यसत्त्वस्य नभस्यरात्रे
करा नवेन्दोः कुमुदावदाताः ॥ १ ॥ 10

तृष्णानिलैः शोकशिखाप्रचण्डै-
श्चित्तानि दग्धानि बहुप्रकारम् ।
आशावतां सप्रणयाभिरामै-
र्दानाम्बुषेकैः शमयांबभूव ॥ २ ॥

दृष्ट्वा लोकमिमं धनक्षयभयात् संत्यक्तदानोत्सवं 15
लोकक्लेशपिशाचिकावशतया संदूषिताध्याशयम् ।
कारुण्यात् स ददावनाथकृपणक्लीबातुरेभ्यो धनं C 587
मत्वा च प्रहतार्णवोर्मिचपलं स्वं जीवितं भूयसा ॥ ३ ॥

येषु व्यासक्तचेता भुजगवरवधूभोगभीमेषु लब्धा
गाहन्ते पापगर्तं स्फुटदहनशिखाभीमपर्यन्तरन्ध्रम् । 20
वाताघातप्रनृत्तप्रवरनरवधूनेत्रपक्ष्माग्रलोलान्
तानर्थानर्थिदुःखव्युपशमपटुभिः प्रोत्ससर्ज प्रदानैः ॥ ४ ॥

तस्मात् पुत्रधनत्वात् पुत्राभिलाषिणो यदा मनोरथशतैरसकृदुन्मिषितोन्मिषिताः पुत्रश्रियः प्रसह्य स्फीततरवैरभारेन्धनवह्निनैव विगतनिखिलप्रतीकारदारुणप्रभावमहता सुकृतान्तलयैकपरायणाः क्रियन्ते स्म, यदासौ लोकप्रवादमात्रयापि पन्थानं समवतीर्य 25 धनदवरुणकुबेरशंकरजनार्दनपितामहादीन् देवताविशेषान् पुत्रार्थं याचितुमोरेभे ।

यस्मिन् यस्मिंस्तनयसरसि स्वच्छपूर्णाम्बुपूर्णे
वने(जाते)वृद्धिः समुदितमहावंशलक्ष्म्यम्बुजस्य ।
तत्तत्तस्य प्रबलविरसं याति तीक्ष्णांशुमालैः
शोषं मन्ये रविरिव जलं भागधेयार्कबिम्बम् ॥ ५ ॥ 30

---

1 Before मातरि, the Mss. read नमः सर्वज्ञाय.

रुद्रं नैककपालशेखरधरं चक्रायुधं वज्रिणं
स्रष्टारं मकरध्वजं गिरिसुतापुत्रं मयूरासनम् ।
गङ्गाशङ्खदलावदातसलिलांस्तांस्तांश्च देवानसौ
पुत्रार्थी शरणं ययौ बहु पुनर्दानं द्विजेभ्यो ददौ ॥ ६ ॥

5 यद्यज्जनो मङ्गलदेशनाभि-
र्व्रतोपवासाधिगतैश्च दुःखैः ।
पुत्रार्थसंसिद्धिनिमग्नबुद्धि-
र्विक्षिप्य खेदं स चकार तांस्तान् ॥ ७ ॥

एवमनेकप्रकारकायचेतसोरायासकारिभिरपि व्रतोपवासमङ्गलैर्यदा नैव कदाचित् C 588 10 कालेऽस्य पुत्रा जीविनो बभूवुः, तदैनमतिविपुले प्रगाढशोकापगाम्भसि निमज्जन्तं कश्चित् साधुपुरुषोऽब्रवीत्—

कर्माण्येवावलम्बन्ति देहिनां सर्वसंपदः ।
भूतानां तुङ्गशृङ्गाद्वा विनिपातो न भूतये ॥ ८ ॥
संक्लेशं बहवः प्राप्ताः पुत्रतृष्णार्तबुद्धिना ।
15 न च तेऽद्यापि जीवन्ति तत्र किं परिखिद्यसे ॥ ९ ॥

कर्माणि निर्मुच्य कथं भवेभ्यः
स्वर्गौकसस्तुष्टिवशादिहेयुः ।
ये यैर्विना नात्मभवं लभन्ते
ते तैर्विना जन्म कथं भजेरन् ॥ १० ॥

20 ये सांसारिकनैकदुःखदहनज्वालालतालिङ्गिता-
स्ते वाञ्छन्ति नरामरोरगसुखं प्रायेण दानादिभिः ।
त्वं केनापि विडम्बसे जडमतिः पुत्राशयोन्मत्तको
यस्त्वं द्यामधिगन्तुमिच्छसि बृहत्सोपानमालाश्रयात् ॥ १२ ॥

विधिमपरमहं ते बोधयामि प्रसिद्ध्यै
25 त्वमपि च कुरु तावत् संप्रसिद्ध्यै कदाचित् ।
यदि भवति सुतस्ते कन्यकानाम तस्य
सकलजनपदेऽस्मिन् ख्यापयस्व प्रसिद्ध्या ॥ १३ ॥

अथ तस्य कालान्तरे गगनतलमंशुमालीव स्वकिरणनिकरैर्विराजमानं स्ववंशलक्ष्मीः पुत्रं जनयांबभूव । स च—

30 निर्वान्तामलहेमशैलशिरसः प्रच्छेदगौरद्युतिः
संपूर्णामलचन्द्रमण्डलसमच्छत्रोरुभास्वच्छिराः ।

मत्तैरावणचारुपुष्करकरव्यालम्बबाहुद्वयो
भिन्नेन्दीवरफुल्लपत्रनिचयश्यामारुणान्तेक्षणः ॥ १४ ॥
भूयः कल्पसहस्रसंचितमहापुण्यप्रभावोद्भवैः
प्रव्यक्तस्फुरितेन्द्रचापरुचिरैः प्रह्लादिभिर्लक्षणैः ।
मूर्तिस्तस्य रराज चारुशिखराद्धेमं यथा भूच्युतं  5
प्रोद्गीर्णरत्नमयूखजालजटिलै रत्नाङ्कुरैर्वेष्टितम् ॥ १५ ॥  C 589

भ्रमरचमरपङ्क्तिश्यामकेशाभिरामं
समविपुलललाटं श्रीमदुत्तुङ्गनासम् ।
तनयमुदितचेता मैत्रकन्याभिधानं
दशदिवसपरेण ख्यापयामास लोके ॥ १६ ॥  10

शरीरिणां वृद्धिकरैः समृद्धै-
र्विशेषयुक्तैर्विविधान्नपानैः ।
सुधावदातैः स्फुटचन्द्रपादैः
पयोधिवेलेव ययौ समृद्धिम् ॥ १७ ॥

धात्रीभिः स समुन्नीतः क्षीरैश्च सर्पिमण्डकैः ।  15
पुपोष सुन्दरं देहं ह्रदस्थमिव पङ्कजम् ॥ १८ ॥
अथ तस्य पिता मित्रः सार्थवाहो वणिग्जनैः ।
द्रव्यैर्वहनमारोप्य जगाहे चोदधिं मुदा ॥ १९ ॥
तिमिंगिलक्षोभविवर्धितोर्मि-
पयोदधौ मीनविपन्नपात्रे ।  20
पितर्यतीते जननीं जगाद
चकार किं कर्म पिता ममेति ॥ २० ॥

ततोऽस्य जननी पतिवियोगशोकग्लपितहृदया चिन्तामापेदे ।
आशापाशशताकृष्टो जनो मृत्युं न पश्यति ।
विषयास्वादकृपणो वारणस्येव बन्धनम् ॥ २१ ॥  25
यद्यपि कथयिष्यामि पितरं यानपात्रिकम् ।
एषोऽपि मम मन्दाया नाशमेष्यति तोयधौ ॥ २२ ॥
यावच्चायं जनपदमिमं तस्य वृत्तिं न भूतां
पृच्छत्यस्मै कथयति न वा सर्व एवैष लोकः ।
तावद्युक्तं मम सुतमिमं मृत्युवक्त्रान्तरालं  30
नानादुःखव्यसनगहनं व्याधिषक्तं निषेद्धुम् ॥ २३ ॥

परोऽपि यः साधुजनानुजुष्टं
विहाय मार्गं श्रयते विमार्गम्।
निवारणीयः स खमताजनेन
प्रयत्नतः किं पुनरेव पुत्रः ॥ २४ ॥

C 590 5 ततो जननी कथयांचक्रे—
पुत्र औकरिकत्वेन पिता ते मामपूपुषत्।
यद्यहं सुखिता कार्या कार्षीरौकारिभूषणम् ॥ २५ ॥

अथ मैत्रकन्यको बोधिसत्त्वो मातुर्वचनं कुसुममालामिव शिरसा समभिवन्द्य अन्यस्मिन्नहनि औकरिकापणं प्रससार।

10 पुण्यसंभारमहतस्तस्य सत्त्वदयावतः।
प्रथमेऽहनि संपन्नं चतुःकार्षापणं धनम् ॥ २६ ॥
खगर्भसंधारणदुःखितायै
ददौ स तस्यै मुदितो जनन्यै।
दारिद्र्यदुःखव्यसनच्छिदायै
15 धनं महाभोगफलप्रसूत्यै ॥ २७ ॥

अथ ये तस्मिन् पुरवरे चिरंतना औकरिकाः, ते तस्य तामभिवर्धमानां क्रयविक्रयलोकमविषमव्यवहारनील्या प्रकृतिप्रेमपेशलतया चावर्जितमनसस्तस्मिन् महासत्त्वे व्यवहारार्थमापतन्तमवलोक्य तं तस्मात्कर्मणो विनिवर्तनार्थमाहुः—

गान्धिकापणिकः श्रेष्ठी पितैतस्मिन् पुरे पुरा।
20 स त्वं तां वृत्तिमुज्झित्वा श्रयसेऽन्यां कया धिया ॥ २८ ॥

अथ बोधिसत्त्वस्तामपि जीविकामपहाय गान्धिकापणं चकार—
यस्मिन्नेव दिने चक्रे स साधुर्गान्धिकापणम्।
कार्षापणाष्टकं तस्य तस्मिन्नेवोपपद्यते ॥ २९ ॥

तमपि मात्रे प्रतिपादितवान्। अथ गान्धिकापणिकाः पुरुषाः समेत्यागत्य च तं 25 महासत्त्वं विच्छन्दयामासुः—

गान्धापणं क्लीबजनाभिपन्नं
पिता न वै माद्य पुरे(?)चकार।
तत्रैव हैरण्यिकतां स कृत्वा
धनानि भूयांसि समाप साधो ॥ ३० ॥

30 अथ मैत्रकन्यको बोधिसत्त्वस्तामपि जीविकामपहाय हैरण्यिकापणं चकार।

C 591 तयापि तस्मिन् व्यवहारनील्या
हैरण्यिकांस्तानभिभूय सर्वान्।

लेभे दिने स प्रथमे महार्हः
कार्षापणान् षोडश तान् ददौ च ॥ २१ ॥
दिने द्वितीये द्वात्रिंशत् कार्षापणमुपार्ज्य सः।
दक्षिणीयविशेषायै मात्रे तानपि दत्तवान् ॥ ३२ ॥

अथ हैरण्यिकापणिकाः पुरुषा समेत्यागत्य च तं तस्मात्कर्मणो विनिवर्तनार्थमाहुः– 5

शरच्चन्द्रांशुधवले लब्ध्वा जन्म कुले कथम्।
कृपणां जीविकाहेतोर्वृत्तिमाश्रयते भवान् ॥ ३३ ॥
प्रभञ्जनोद्धूतशिखाकराले
हुताशने विस्फुरितस्फुलिङ्गे।
विवर्तितं श्लाघ्यमतीव पुंसां 10
न तु स्ववृत्तेश्च्यवनं प्रवृत्तम् ॥ ३४ ॥
महोरगाश्वासविघूर्णितोग्रै-
स्तरंगभङ्गैर्विषमं पयोधिम्।
अगाधपातालविलग्नमूलं
पिता विगाह्यार्जितवान् धनं ते ॥ ३५ ॥ 15
यदाश्रितं कर्म जनानुवर्तिना
त्वया विदग्धेन धनेप्सुनाधुना।
कथं न संप्राप्स्यसि भाग्यसंपदं
पितुर्व्यतीतेऽपि विशालिनीं श्रियम् ॥ ३६ ॥
वित्तेश्वरोऽप्यर्थविभूतिविस्तरै- 20
र्नाशां सदर्थां विबभार यस्य।
तस्या महेन्द्रामलतुल्यकीर्तेः
सूनुः कथं त्वं न बिभर्षि लज्जाम् ॥ ३७ ॥
ये मृत्युं गणयन्ति नैव विपदि ग्रासं भजन्तेऽनघ
गेहे बन्धुषु सूनुषु व्यपगतस्नेहात्मनोद्योगिनः। 25
ये नीत्वा जलधीनगाधसलिलानावर्तभीमान् बुधाः
प्राप्यार्थान् गजदन्तभङ्गसितयासिन्चन्त कीर्त्या जगत् ॥ ३८ ॥

अथ मैत्रकन्यको बोधिसत्त्वस्तेभ्योऽपि तथानुगुणिनीं कथामवधार्य समुद्रावतरणकृत- C 592
व्यवसायो मातरमुपसृत्योवाच–अम्ब, सार्थवाहः किलास्माकं पिता पुरा। तदनुज्ञां प्रयच्छ, यदहमपि महासमुद्रमवतरिष्यामीति। सा पूर्वमेव भर्तृमरणदुःखेन विगतजीविताशा स्वस्य 30 तनयस्य तेनासंलक्षितदारुणेन वियोगशोकशस्त्रेण भृशतरं प्रविदार्यमाणहृदयेव स्वतनयमाह–

वत्स केन तवाख्यातं विनाकारणशत्रुना।
जीवितं कस्य तेऽनिष्टं त्वया क्रीडां करोति कः ॥ ३९ ॥

दैवात् कथंचित्संप्राप्तं चक्षुरेकं त्वमद्य मे।
पुत्रक्लेशभागिन्या मृत्युना ह्रियसेऽधुना ॥ ४० ॥

न यावदेवं मम दुःखशल्यं
प्रयाति नाशं प्रविदार्य शोकम्।
5 कथं नु तस्योपरि मे द्वितीयं
निपात्यते पापमयैरमित्रैः ॥ ४१ ॥

येषां चेतो विविधविरसायासदुःखाप्रकम्प्यं
यैः संत्यक्तं कृपणहृदयैर्जीवितं भोगलुब्धैः।
ते संत्यक्त्वा नयनगलिताश्रुप्रवाहार्द्रवक्त्रान्
10 बन्धूनज्ञा मकरनिलये मृत्यवे यान्ति नाशम् ॥ ४२ ॥

तन्मामनाथां प्रतिपालनीयां
त्वज्जीवितांशैकनिबन्धजीवाम्।
संत्यज्य यातुं कथमुद्यमस्ते
मा सा कथा मा नु वचो मदीयम् (?) ॥ ४३ ॥

15 स्वप्राणसंदेहकरीमवस्थां
प्रविश्य नैकान्तसुखं प्रसाध्यम्।
संपत्तयो येन वणिग्जनस्य
ततोऽहमेवं सुत वारयामि ॥ ४४ ॥

स तस्या हितार्थं मधुराण्यपि वचनकुसुमानि तृणमिवावधूय सप्रगल्भतया समव-
20 लम्बितविकत्थाशोभं किंचिदीदृशं प्रत्याह—

C 593 वरं नैव तु जायेरन् ये जाता निर्धना जनाः।
जातस्य यदि दुःखानि वरं मृत्युर्न जीवितम् ॥ ४५ ॥
आशया गृहमागत्य दीनदीनास्तपस्विनः।
अर्थिनो मम पापस्य यान्ति निःश्वस्य दुर्मनाः ॥ ४६ ॥

25 ये शक्तिहीना विभवार्जनादौ
ते देहिनो दुःखशतं सहन्ते।
लोकं पुनर्दुःखशतोपतप्तं
द्रष्टुं न शक्नोमि चिरायमाणः ॥ ४७ ॥

तस्माद्विलङ्घामि वचस्त्वदीयं
30 यास्यामि तं त्वं प्रजहीहि शोकम्।
तत्रैव यायां निधनं समुद्रे
छिन्नं मया वा व्यसनं जनस्य ॥ ४८ ॥

अथ मैत्रकन्यको बोधिसत्त्वो मातरमप्रमाणीकृत्य निर्गत्य गृहाद्वाराणस्यां पुर्यामात्मानं सार्थवाहमित्युद्घोषयामास।

अस्यामेव पुरा पुरंदरपुरीप्रतिस्पर्धिपुर्यां वणिक्
मित्रो नाम बभूव यत्सुरनरप्रख्यातकीर्तिध्वजः।
पुत्रस्तस्य महासमुद्रमचिराद्यास्यत्यमुष्मिन्दिने 5
यातुं ये वणिजः कृतोपकरणास्ते सन्तु सज्जा इति॥ ४९॥

अथ मैत्रकन्यको बोधिसत्त्वो विविधोपकरणसंभारसाधनानां समागृहीतपुण्याहप्रस्थानभद्राणामुपहृतमङ्गलविविधानां वणिजां पञ्चभिः शतैः कृतपरिवारः प्रससार। माता चैनं गच्छतीति श्रुत्वाह—ममैकपुत्रक, क्व यास्यसीति करुणकरुणाक्रन्दितमात्रपरायणा कोमलविमलकमलदलविलासालसाभ्यां पाणिकमलाभ्यां रुचिरकनकघटितघटविकटपयोधरवरोरुभासुरमुरः प्रगाढमभिताडयति। बाष्पसलिलधारापरंपरोद्भवोपरुध्यमानकण्ठी अनिलबलाकुलितगलितसजलजलदपटलावलीमलिनकेशपाशा सत्वरत्वरमभिगम्य मैत्रकन्यकस्य बोधिसत्त्वस्य पादयोः परिष्वज्यैवमाह—मा मां पुत्रक परित्यज्य यासीति। 10

अनर्थरागग्रहमूढबुद्धयो C 594
नरा हि पश्यन्ति न केवलं हितम्। 15
सतां हिताधानविधानचेतसां
गिरोऽपि शृण्वन्ति न भूतवादिनाम्॥ ५०॥

मैत्रकन्यकोऽपि—

धरणि[ तल ]निमग्नां मातरं शोकवश्यां
शिरसि कुपितचित्तः पादवज्रेण हत्वा। 20
मुहुरुपचितशोकः कर्मणा प्रेर्यमाणः
त्वरितमतिरभूत् संप्रयातुं वणिग्भिः॥ ५१॥

ततः सा माता समुत्थायाह—पुत्रक,

मयि गमननिवृत्तिं कर्तुमत्युद्यतायां
यदुपचितमपुण्यं मच्छिरस्ताडनात्ते। 25
व्यसनफलमनन्तं मा तु भूत् कर्मणोऽस्य
पुनरपि गुरुवाक्यं मातिगाः स्वप्नतोऽपि॥ ५२॥

अथ मैत्रकन्यको बोधिसत्त्वो विविधविहारायतनपर्वतोपवनगह्वरसरित्तडागारामरमणीयतराननेकनगरनिगमकर्वटग्रामादीननुविचरन् क्रमेण समुद्रतीरं संप्राप्य सज्जीकृतयानपात्रो भुजगपतिवदनविसृतश्वसनचपलबलविलुलितविपुलविमलसलिलमरुणतरुणकिरणनिकररुचिरपद्मरागपुञ्जप्रभारागरञ्जितोर्मिमालाजलमसुरखरसमसुरपरसुरेश्वरकरोदरस्फुरितहुतवहशिखावलीकरालवज्रपतनभयनिलीनधरणीधरशिखरपराहतजलोद्धतोत्तुङ्गतरंगभङ्गरौद्रं समुद्रमवततार। 30

महानिलोत्क्षिप्ततरंगभङ्गैः
समुल्लसद्भिः खमिवोत्पतन्तम् ।
सरित्सहस्राम्बुरयप्रवाहै-
र्भुजैर्विलासैरिव गृह्यमाणम् ॥ ५३ ॥
5 प्रक्षुब्धशीर्षोरगभीमभोग-
व्यावर्तितोद्वर्तिततोयराशिम् ।
तन्मूर्ध्नि रत्नोद्गतरश्मिपुञ्जं
ज्वालाकलापोच्छुरितोर्मिचक्रम् ॥ ५४ ॥
C 595 अहिपतिवदनाद्विमुक्ततीव्र-
10 ज्वलितविषानलदाहभीमशङ्खम् ।
तिमिनखकुलिशाग्रदारिताद्रिं
तदचलपादहताम्बुमीनवृन्दम् ॥ ५५ ॥
तुङ्गतरंगसमुद्गततीरं
तीरनिलीनकलस्वनहंसम् ।
15 हंसनखक्षतदारुणमीनं
मीनविवर्तितकम्पितवेलम् ॥ ५६ ॥
रत्नलतावृतभासुरशङ्खं
शङ्खसितेन्दुगभस्तिविवृद्धम् ।
वृद्धभुजंगमहाभवरौद्रं
20 रौद्रमहामकराहतचक्रम् ॥ ५७ ॥
खगपतिसविलासपाणिवज्रं
प्रहतविपाटितदंष्ट्रिमूलरन्ध्रम् ।
प्रमुदितजलदन्तिदन्तकोटि-
प्रमथितनैकविलासकल्पवृक्षम् ॥ ५८ ॥

25 तदेव स संलक्ष्य तीरपर्यन्तरेखं प्रकटविकटार्तगर्तोदरभ्रमद्भ्रमितझषभुजगकुलमण्डलं नैकविचित्राद्भुताश्चर्यमतिशयमम्भसामालयमतिक्रामतस्तस्य धरणीधरशिखरविपुलात्मभावस्य मकरकरिपतेर्विवर्तमानस्य समुत्थितैरुर्वीधराकारदारुणैः प्रमुक्तकलकलारावरौद्रैर्महद्भिः सलिलनिवहैरुत्पीड्यमानं तद्यानपात्रं मरणभयविषादभ्रश्यमानगात्रैर्दीनरुदिताक्रन्दितमात्रपरायणैः संयानपात्रकैः सह सहैव सलिलनिधेरधः प्रवेष्टुमारब्धम् ।

30 उर्वीधराकारतरंगतुङ्गै-
रुग्रैर्युगान्तानिलचण्डवेगैः ।
तद्यानपात्रं जलधेर्जलौघै-
रास्फाल्यमानं विददार मध्ये ॥ ५९ ॥

दंष्ट्राकराले झषवक्त्ररन्ध्रे
कश्चिन्ममारार्तरवस्तपस्वी ।
केचिज्जलोद्गारनिरुद्धकण्ठा
जग्मुर्निरुच्छ्वासगिरा व्यसुत्वम् ॥ ६० ॥ C 596
गत्वापि केचित्फलकैर्महद्भि- 5
रम्भोनिधेस्तीरमवेक्षमाणाः ।
दूराम्बुसंतानपरिश्रमार्ता-
श्वासाकुला नेदुरुदीर्णनादाः ॥ ६१ ॥

अथ मैत्रकन्यको बोधिसत्त्वस्तेन महता व्यसनोपनिपातेनाप्यनापतितभयविषाद-दैन्यायासमनाः समवलम्ब्य महद्धैर्यपराक्रमं ससंभ्रमं फलकमादाय प्रससार । ततोऽसौ 10 समपवनगमनजवजनितसविलासगतिभिः सलिलप्लवैरितस्ततः समाक्षिप्यमाणो निराहारतया च परिम्लायमाननयनवदनकमलश्चान्यैर्बहुभिरहोरात्रैर्यथाकथंचित्तस्य दुरवगाहसलिलस्य महार्णवस्य दक्षिणं तीरदेशमाससाद ।

तीर्त्वा तमम्भोनिधिमप्रगाध-
मासाद्य तीरं फलकं मुमोच । 15
संस्मृत्य मातुर्वचनं स पाणा
व्यासज्य मूर्धानमिदं जगाद ॥ ६२ ॥
शृण्वन्ति ये नात्महितं गुरूणां
वाक्यं हितार्थोदयकार्यभद्रम् ।
तेषामिमानि व्यसनानि पुंसा- 20
मावाहयन्ति प्रभवन्ति मूर्ध्नि ॥ ६३ ॥
तैरेव नैकव्यसनप्रदस्य
तोयेन्दुविम्बस्थितिभङ्गुरस्य ।
प्राप्तं फलं जन्मतरोः सुधीभि-
र्ये मानयन्तीह गिरो गुरूणाम् ॥ ६४ ॥ 25
मातुर्हितायैव सदोद्यतायाः
प्रोल्लङ्घ्य वाक्यं मम दुष्कृतस्य ।
पुष्पं यदीदृग्भरपापदारुणं
प्रान्तं गमिष्यामि कदा फलस्य ॥ ६५ ॥
हुतवहहतलेखात्यन्तपर्यन्तरौद्रं 30
गमनपतितमुग्रं विस्मयात्यन्तवज्रम् ।
गुरुशिरसि दधानः पादवज्रं खलोऽहं C 597
कथमवनिविदार्यश्वभ्ररन्ध्रे न लग्नः ॥ ६६ ॥

ये सन्तो हितवादिनां स्फुटधियां संपादयन्ते गिरः
श्रेयस्ते समवाप्नुवन्ति नियतं क्रव्यादपुर्यां यथा ।
ये तूत्सृज्य महार्थसारदयितां वाचं श्रयन्तेऽन्यथा
दुस्तारे व्यसनोदधौ निपतिताः शोचन्ति तेऽहं यथा ॥ ६७ ॥

5 ततोऽसौ क्रमेण खदिरवरसरलनिचुलबकुलतमालतालनालिकेरद्रुमवनगहनं प्रवरवारणवराहचमरशरभशम्बरमहिषविषाणकर्षणपतितमथितविविधमालुलताजालदुःसंचरं क्वचित्क्षुभितकेसरिनिनादभयचकितवनचरकुलाकीर्णचरणं कथंचिदपि शबरमनुजजनचरणाक्षुण्णपर्यन्तमनुचरन् क्वचित् स्थित्वैवमाह—

एते दाडिमपुष्पलोहितमुखाः प्रोन्मुक्तकोलाहला
10 हासादर्शितदन्तपङ्क्तिविरसाः शाखामृगा निर्भयाः ।
सर्पान् भीमविषानलस्फुरदुरुज्वालाकरालस्फुटान्
हत्वा पाणितलैः प्रयान्ति विवशाः फूत्कारभीताः पुनः ॥ ६८ ॥
रम्ये कुङ्कुमशाखिनामविरलच्छायाकुथाशीतले
मूले कोमलनीलशाद्वलवति प्रव्यक्तपुष्पोत्करे ।
15 वंशैस्तालरवैः सगीतमधुरैः प्रच्छेदसंपादिभिः
संगीताहितचेतसः प्रमुदिता गायन्त्यमी किन्नराः ॥ ६९ ॥

ततो नातिदूरमतिसृत्य महीधरवराकारं पर्वतं ददर्श ।

क्वचिदुग्रतरचारुमणिप्रभया
सुरभीकृतभीमगुहाविवरम् ।
20 क्वचिदुद्धतकिन्नरगीतरवं
प्रतिबुद्धससंभ्रमनागकुलम् ॥ ७० ॥
चपलानिलवेल्लितपुष्पतरुं
तरुमन्दिरमूर्ध्नि चलद्भ्रमरम् ।
C 598 भ्रमरध्वनिपूर्णगुहाकुहरं
25 कुहरस्थितरौद्रभुजंगकुलम् ॥ ७१ ॥
पक्षिविराजितपर्वतशृङ्गं
शृङ्गशिलातलसंस्थितसिद्धम् ।
सिद्धवधूजनरम्यनिकुञ्जं
कुञ्जनिसेवितमत्तशकुन्तम् ॥ ७२ ॥
30 मत्तशिखण्डिकलस्वररम्यं
रम्यगुहामुखनिर्गतसिंहम् ।
सिंहनिनादभयाकुलनागं
नागमदाम्बुसुगन्धिसमीरम् ॥ ७३ ॥

क्वचिदुपचितवारणदन्तशिखाशनिदारितशिखरततं प्रविरूढविलासशिखागरुवृक्षवनम् ।
क्वचिदुपरिपयोधरभारतरलध्वनिरञ्जितशिखिकुलाविष्कृतपिच्छकलापविचित्रितचारुतटम् ।
क्वचिदनिलविकम्पितपुष्पतरुं स्खलितोज्ज्वलसुरभिवलं कुसुमप्रबलप्रतिवासितसानुशिखम्॥७४

तथापरं ददर्श—

लिखन्तं करालैर्नभः शृङ्गजालैः 5
क्षिपन्तं मयूखैस्तमः सागराणाम् ।
वहन्तं समभ्राम्बरामद्रिगुर्वीं
क्षरन्तं क्वचित् काञ्चनाम्भःप्रवाहम् ॥ ७५ ॥

फलितामलकासनकल्पतरुं
तरुखण्डविराजितसानुशिखम् । 10
शिखरस्थितदेववधूमिथुनं
मिथुनैर्दहतां वयसा मधुरम् ॥ ७६ ॥

क्वचिदर्कमहारथचक्रनिपातविखण्डितमयूखकलापकरालितनैकमहामणि-
पल्लवसंचयं मौलिभरावनतोन्नतभासुरवज्रधरम् ।
क्वचिदिन्द्रकरीन्द्रविमर्दतरंगनयभ्रमितप्रचलत्कलहंसकुलावलिहार- 15
नभस्सरिदम्बुविधौतशिलम् ।
क्वचिदण्डजराजविलाससमुच्छ्रितयक्षमहाभुजवज्रविपाटितसागर-
वारितलोद्धृतपन्नगभोगधरम् ।
क्वचिदेव सुरासुरसंयुगशस्त्रविपन्नमहासुरविद्रुत-
शोणितरङ्गमहावलयम् ॥ ७७ ॥ 20

दृष्ट्वैवमाह—

एते पर्वतशृङ्गवन्दनतरुच्छायास्थलं संसृताः
कर्णप्रावरणं नवारुणकरच्छायासमानश्रियः ।
प्रेक्षन्ते मदवारिलोलमधुलिट्प्रोल्लीढगण्डस्थलं C 599
दर्पात् केसरिणो बलेन महता प्रोन्मथ्यमाना गजम् ॥ ७८ ॥ 25

इत्येवमसावतिकान्तारदुर्गं सलिलफलाहारमात्रपरायणः परिभ्रमन्नज्ञानतमःपटलाव-
गुण्ठितमिव जगत् संसारपङ्के त्रिभुवनस्वामीवोदयद् रमणकं नाम नगरं ददर्श ।

समुच्छ्रितोत्तुङ्गचलत्पताकैः
पतत्पतत्रिस्वनवावदूकैः ।
सुवर्णसालैर्मणिहेमशृङ्गै- 30
र्महीधराकारगृहैः सुगुप्तैः ॥ ७९ ॥
निलीनपद्मालिकुलालिपद्मैः
समुन्मिषत्पद्मरजःपिशङ्गैः ।

कलप्रलापाण्डजरावरम्यै-
मन्दानिलैरावसथीकृतं सदा ॥ ८० ॥
सुरकरिकरजघ्नकल्पवृक्षै-
र्मरकतरत्नतृणैः शुकांशुनीलैः ।
5 मणिकनकलतानिबद्धशाखैः
क्वचिदुरुभिस्तरुभिः प्रकामहारि ॥ ८१ ॥
विकसितनवकर्णिकारगौरैः
कनकगृहैर्बहुरत्नशृङ्गचित्रैः ।
स्वकिरणरुचिरोरुरत्नसानो-
10 रचलपतेः सकलश्रियं दधानम् ॥ ८२ ॥
क्वचिदमरविलासिनीकराग्र-
प्रहतमहामुरजस्वनाभिरामम् ।
क्वचिदुपरिपयोदतूर्यनाद-
प्रमुदितमत्तशिखण्डिवृन्दकीर्णम् ॥ ८३ ॥

15 ततस्तद्दर्शनात् समुत्पन्नजीविताशोऽसौ रमणं नगरमुपससर्प । तस्मान्नगराद्विनिःसृत्य चतस्रोऽप्सरसः द्रवितनवकनकरसरागावदातमूर्तयः प्रविकसिताम्बुजकुसुमरुचकरुचिनयन- C 600 युगलोत्पलविलासाः क्वणद्रुचिरविविधमणिमेखलापभा(प्राग्भा)रमन्दविलासगतयः कनक- कलशाकारपृथुतरपयोधरभरावनमिततनुमध्या दिवसकरकरस्पर्शविबोधिताम्लानकमलपलाश- भासुराधरकिसलया विविधविभूषणशता निरामयदर्शनाः शिरसि विरचितोभयकमलाञ्जलयो 20 मैत्रकन्यस्य बोधिसत्त्वस्य पादयोर्विन्यसितशिरसः प्राहुः—

सुस्वागतं चन्द्रसमाननाय
नारीजनप्रीतिविवर्धनाय ।
कृपामृताह्लादितमानसाय
बोधौ चिराबद्धविनिश्चयाय ॥ ८४ ॥
25 अद्यैव दुःखानि शमं गतानि
अद्यैव नो जीवितमात्तसारम् ।
निरत्ययप्रेमविशेषभद्रा-
ण्यद्यैव सौख्यानि पुरः स्थितानि ॥ ८५ ॥
इमानि दुःखाङ्कुशखण्डितानि
30 मनांसि नः शोकपरिक्षतानि ।
भवन्तमासाद्य वसन्तकाले
वनान्तराणीव विजृम्भितानि ॥ ८६ ॥

यान्यर्जितान्यन्यभवान्तरेषु
कर्माणि शुक्लानि शुभोदयानि ।
तेषां फलं वीक्षणमेव तेऽलं
सङ्गस्त्वया किं पुनरेव दीर्घ्यम् (र्घं ?) ॥ ८७ ॥
अद्यैव मा बन्धुसुहृद्वियोग-　　5
शोकंकथाः कस्य न सन्त्यपायाः ।
दास्यो वयं तेऽप्सरसश्चतस्रः
छाया न ते लङ्घयितुं समर्थाः ॥ ८८ ॥
रत्नानि वासांसि समुज्ज्वलानि
शय्याश्रयाश्चारुतरा वयं च ।　　10
संत्यक्तभर्ताः सुरराजयोग्या
शक्तिर्विधेनेह(?) सुखं भजस्व ॥ ८९ ॥

अपि च ।

दुःखे महत्यप्रतिकारघोरे
ये वर्तमानाश्चिरमुद्वहन्ति ।　　15
ते दुःखभारोपनिपातमूढा-
स्तत्रैव शीघ्रं निधनं प्रयान्ति ॥ ९० ॥
नित्ये वियोगे मरणात् पुरःस्थिते
शोचन्ति ते देशकृते वियोगे ।
संस्मृत्य रोगोपनिपातमूढाः　　20
कामप्रहाराद्विषमं प्रपन्नाः ॥ ९१ ॥
शब्दायमानवरनूपुरमेखलाभि-　　O 601
रादिश्यमानभवनं प्रवराप्सरोभिः ।
हैमाद्रिशृङ्गमिव तत्पुरमाविशन्तं
नेमुः कृताञ्जलिपुटा बहवोऽपि तत्र ॥ ९२ ॥　　25

अन्यैश्च पुनः—

किं दीप्तरश्मिर्विनिगूढरश्मिः
किं पुष्पकेतुः सहसावतीर्णः ।
हा किं विनिक्षिप्य खराग्रवज्रो
नाथः सुराणामिति तर्कितोऽभूत् ॥ ९३ ॥　　30
तिमिरनिकरलेख्याः श्यामलोपक्ष्मलेख्याः (?)
स्फुटितकनकहारा न्यस्तरत्नोज्ज्वलाङ्गाः ।

विपुलभवनमालाजालवातायनस्थाः
प्रमुदितमनसोऽन्याश्चिक्षिपुः स्रस्तकाञ्च्यः ॥ ९४ ॥
रत्नप्रदीपप्रहतान्धकारं
मुक्ताफलप्ररुचिरोरुहर्म्यम् ।
5 चलत्पताकाग्रविभिन्नमेघं
गेहं विवेशाप्सरसां हि तासाम् ॥ ९५ ॥
तासां विलासैर्गमनैः सलीलै-
र्हासैः कटाक्षैर्मधुरैः प्रलापैः ।
क्रीडन् स कालं न विवेद यातं
10 सर्वात्मना रागपरीतचेताः ॥ ९६ ॥

प्रत्यहं च दक्षिणेन गमनं वारयन्ति स्म । सोऽपि यथा यथा निवार्यते, तथा तथा तया दिशा गमनायौत्सुक्यमना बभूव ।

यत्रायं वार्यते लोको जनेन हितबुद्धिना ।
विपर्यस्तमतिस्तत्र जनः स परिधावति ॥ ९७ ॥
15 यदि कुर्यादयं लोके सुहृदां वचनं हितम् ।
परैति स्वर्गं पाताले श्वभ्रे वा स्वप्नतोऽपि न ॥ ९८ ॥

अथ मैत्रकन्यको बोधिसत्त्वस्तासामप्सरसामपरिज्ञातगमनप्रयोजनो दक्षिणस्यां दिशि पदवीमारुह्य व्रजन् सदामत्तकं नाम नगरं ददर्श । तस्मादपि नगरादष्टाप्सरसः ससंभ्रमं निःसृत्य तं महासत्त्वं प्रवेशयामासुः । तत्राप्यतिचिरं रतिमनुभूय प्रतिषिद्धमानगमनक्रियस्तेनैव 20 दक्षिणेन पथा गच्छन्नन्दनं नाम नगरं ददर्श । तस्मादपि षोडशाप्सरोभिरभिगम्य सत्कृत्य प्रवेशयामासे । तत्रापि चिरं क्रीडां सेवित्वा तस्मादपि ब्रह्मोत्तरं नाम नगरं प्रययौ । तत्रापि द्वात्रिंशताप्सरोभिः प्रभूतसत्कारं विषयसुखं भुक्त्वा ताः प्राह—

C 602

इच्छामि गन्तुं तदहं भवन्त्यो
मा मत्कृते शोकहृदे शयीध्वम् ।
25 संपातभद्राणि हि कस्य नाम
विश्लेषदुःखानि न सन्ति लोके ॥ ९९ ॥
स्थित्वापि येनैव चिरं वियोगः
शत्रोः कृतान्ताद्भवितान्तकाले ।
तेनैव नेत्राश्रुजलार्द्रगण्डान्
30 युष्मान् विहायाद्य यियासुरस्मि ॥ १०० ॥
वाताहताम्भोधितरंगलोले
ये जीवलोके बहुदुःखभीमे ।

विश्लेषदुःखाय रतिं प्रयान्ति
तेषां परो नास्ति विमूढचेताः ॥ १०१ ॥

अथाप्सरसस्ताः समस्तास्तद्गमनवियोगशोकरोपितहृदयाः ससंभ्रमाः कमलकुवलय-कुड्मलविलासा नलिन्य इव शिरसि विरचितोभयकमलाञ्जलयः प्राहुः—

अस्मासु ते कर्तुमनिष्टमिष्टं
कथं हि भक्तिप्रणयार्पितासु । 5
सोऽन्येन एकग्रहणीयरूपः
शरीरदानेन वयोऽग्रहीत्ते ॥ १०२ ॥

गत्वा तन्नगरत्रयं यदपि हे स्वामिन्निहाप्यागतः
संप्राप्ता विषयोपभोगमधुराः संपत्तयस्ते चिरम् । 10
गन्तव्यं न पुनस्त्वया सुबहुना प्रोक्तेन किं यासि चेत्
संस्मर्तासि विपत्समुद्रपतितो वाक्यं हि नो दुःखितः ॥ १०३ ॥

बोधिसत्त्वः प्राह—

यदभ्यासवशान्नॄणामुदयः संपदस्थिरा ।
कथं तेषु निवार्येरन्निवर्तेरन् कथं नु वा ॥ १०४ ॥ 15

C 603

नियोजनीयाः सुहृदोऽसुहृद्भिः
यस्मिन् हिते कर्मणि नित्यकालम् ।
निवारणं तत्र तु ये प्रकुर्वते
ते शत्रवो मित्रतया भवन्ति ॥ १०५ ॥

दिव्यं प्राप्य सुखं पुरे रमणके संचोदितः कर्मणा 20
आयातोऽस्मि निषेवणाय परमं सौख्यं सदामत्तकम् ।
संप्राप्तोऽस्मि ततः स्वकर्मकुशलेनेष्टं पुरं नन्दनं
तस्मादागतकस्य यूयमधुना प्रोन्मूलिता भूमयः ॥ १०६ ॥

तस्मादतो मे गमनं भवन्त्यो
मा वारयध्वं न हि नोऽस्त्यपायः । 25
अस्माद्विशेषाणि सुखानि मन्ये
लप्स्येऽहमित्युच्चलितोऽहमद्य ॥ १०७ ॥ इति ।

अथ मैत्रकन्यको बोधिसत्त्वस्तासामप्सरसां हितमपि वाक्यमहितमिवावज्ञया तिरस्कृत्य तेनैव दक्षिणेन पथा गच्छन् ददर्श महार्गलप्रघटितप्रकटपुटचतुर्द्वारदारुणं सुरेश्वरेणाप्यभेद्यो-त्तुङ्गायसविशालप्राकारपरिवेष्टितमन्तर्भ्रमच्चक्रमण्डलालोकप्रमुक्तदमदमाशब्दगम्भीरभैरवमायसं नगरम् । तस्य च द्वारदेशमुपचक्राम । 30

संप्राप्तमात्रस्य तु तत्क्षणेन
द्वारं च पुस्फोट कपाटभारम्।
वज्राग्रधारोपरिभिन्नसानो-
र्विन्ध्याचलस्येव नितम्बकुक्षिः ॥ १०८ ॥

5 ततो मैत्रकन्यको बोधिसत्त्वोऽत्र विवेश।
प्रविष्टमात्रस्य तु तत्क्षणेन
द्वारं परिक्षिप्तकपाटयन्त्रम्।
तत्कर्मवायुप्रभवैर्महद्भिः
क्षणाद्भुजाग्रैरिव संजघाट ॥ १०९ ॥

C 604 10 अश्रौषीच्च प्रगाढवेदनाविक्लवहृदयपुरुषस्यान्तःप्राकारान्तरतिरस्कृतपरमभीषणनिर्नादं सकलजनोत्त्रासनमुच्चरन्तम्। श्रुत्वा च द्वारदेशं त्वरितमतिर्ललङ्घ।

प्रविष्टमात्रस्य ततो द्वितीय-
मास्फालितं द्वारमिवापरुद्धम्।
पर्यन्तकालानिलवेगविद्धं
15 द्वारं सुराणामिव वज्रकल्पम् ॥ ११० ॥

ततो मैत्रकन्यको बोधिसत्त्वः प्रविवेश।
प्रविष्टमात्रस्य पुनस्तृतीयं
द्वारं परिक्षिप्तकपाटयन्त्रम्।
क्षणादभूत्तन्नगरं च सर्वं
20 भ्रान्तं च कृत्स्नं स ददर्श भीतः ॥ १११ ॥

ततो मैत्रकन्यको बोधिसत्त्वः पश्यति स्म तमतिदारुणाकारप्रमाणं क्रूराज्वलनमालालिङ्गितमुदारेण पटुपवनविकीर्यमाणधूमपटलान्धकारदुर्दिनेन स्फुरत्स्फुलिङ्गावलिकरालदर्शनेनायसेन महता भ्रमता चक्रेण दार्विव प्रविदार्यमाणमूर्धानं स्वशिरःप्रविगलितशोणितवसारसाहारमात्रविधृतप्राणशेषम्। समीपं चोपगम्यैनं पर्यपृच्छत्—

25 किं नागोऽसि सुरोऽसि किन्नरवरो यक्षोऽसि किं मानुषः
किं विद्याधरसैनिकः किमसि वा दैत्यः पिशाचोऽसि वा।
किं वाकारि भवान्तरेषु भवता कर्मातिरौद्रं स्वयं
यास्यामि व्यसनं दुरुत्तरमिदं भुज्यं फलं क्रन्दयत् ॥ ११२ ॥

पुरुषः प्राह—

30 नाहं नागो नैव यक्षो न देवो
दैत्यो नाहं नापि गन्धर्वराजः।

रक्षो नाहं नापि विद्याधरोऽपि
जातिस्तुल्या संप्रतीहि त्वया नः ॥ ११३ ॥

बोधिसत्त्वः प्राह—

किं कर्म भ्रमता त्वया कुमतिना संसारदुर्गे कृतं
येनेदं ज्वलितानलं शिरसि ते चक्रं भ्रमत्यायसम् । 5 C 605

पुरुषः प्राह—

नानादुष्करकारिका भगवती संसारसंदर्शिका
तत्र श्रेयःसुखोपपादनपरा मत्स्नेहबद्धाशया ॥ ११४ ॥

यां लोके प्रवदन्ति साधुमतयः क्षेत्रं परं प्राणिनां
दैवावेशवशादकार्यगुरुकस्तस्या जनन्या महत् । 10

साधो प्रास्खलयं शिरःप्रहरणं पादेन पापाशयः
तेनेदं ज्वलितानलं शिरसि मे चक्रं भ्रमत्यायसम् ॥ ११५ ॥

अथ बोधिसत्त्वस्तस्य पुरुषस्य प्रवचनप्रतोदेन संचोदितहृदयस्तां परजुगुप्सामात्मन्यनुपश्यन्नाह—

अन्यं जुगुप्साम्यहमल्पबुद्धि- 15
रात्मानमेवाद्य निनिन्द अज्ञः ।
येषु स्वयं दोषगुणेषु मग्नः
तैरेव लोकं कथमङ्क्यामि ॥ ११६ ॥

मयापि यन्मातरि दक्षिणीयैः (णायां?)
कृतोऽपराधः पुरुषाधमेन । 20
तस्यैव पापस्य फलानि भोक्तु-
मुल्लङ्घ्य तोयावलिमागतोऽस्मि ॥ ११७ ॥ इति ।

अथ तस्य वचनानन्तरमेव प्रभिन्ननवकुवलयदलनिर्मलान्नभस्तलात् सजलजलदनिनादगम्भीरधीरो ध्वनिरुच्चचार—

किं न पश्यति कर्माणि बलवन्ति शरीरिणाम् । 25
लोकालोकान्तरस्थायी पाशेनेव विकृष्यते ॥ ११८ ॥

ये बद्धा विषयेण दुःखनिगडेनायासकर्मोत्कटे
ये त्यक्त्वा गुरुवाक्यमन्धमतयः पापाश्रयं कुर्वते ।
मुक्ताः कर्मभिरेव दुःखनिगडप्रच्छेदशूरैः शुभैः
मानुष्यं यदवाप्य मूढमतयो दूरे स्थिता जर्मिणः (जन्मिनः?) ॥११९॥ 30

अथ तस्य वचनानन्तरमेव कर्मानिलावेगोत्क्षिप्तमिव तच्चक्रं चिटिचिटायमानदहनकणचयोद्गाररौद्रं तस्य मूर्ध्नः समभ्युद्गम्य मैत्रकन्यकस्य बोधिसत्त्वस्य शिरः प्रविदारयद् भ्रमितुमारब्धम् । C 606

क्षणात्स रेजे रुधिरप्रवाहै-
र्मूर्ध्नो च्युतैः स्नातसमस्तमूर्तिः ।

प्रभिन्नचक्राप्रविभिन्नमूर्ध्ना
ऐरावणस्येव तनुः पतन्ती ॥ १२० ॥

ततः स पुरुषो हा हेति मूर्ध्ना प्रविदाहजेन तीव्रेण दुःखेन समाक्रम्यमाणशरीरकं मैत्रकन्यकं बोधिसत्त्वमाह–

5 दिव्याङ्गनागीतमनोहराणि
चित्तप्रमोदोदयसाधनानि ।
संत्यज्य कर्मादं पराणि तानि
प्राप्तस्त्विदं स्थानमनन्तदुःखम् ॥ १२१ ॥
देवालयं दिव्यसुखोपभोगं
10 को नाम संप्राप्य शुभैरतुल्यैः ।
नित्यं ज्वलद्वह्निशिखाकरेण
संप्रार्थयेद्भीममपायगर्तम् ॥ १२२ ॥

बोधिसत्त्वः प्राह–

मत्तालिकोलाहलसंकुलानि
15 वनानि पुष्पोज्ज्वलमस्तकानि ।
संत्यज्य नागा व्यसनं सहन्ते
यया तयेच्छालतया गतोऽहम् ॥ १२३ ॥
राज्यानि विस्तीर्णधनोज्ज्वलानि
विहाय नारीमुखपङ्कजानि ।
20 युद्धे म्रियन्ते बहवो नरेन्द्रा
यया तयेच्छालतया गतोऽहम् ॥ १२४ ॥
समुत्पतत्तुङ्गतरंगरौद्रे
भ्रमज्जलावर्तविमुक्तनादे ।
महोदधौ यान्ति नराः प्रणाशं
25 यया तयेच्छालतया गतोऽहम् ॥ १२५ ॥
निरत्ययात्यन्तिकसौख्यसाधनं
नरामरश्रीसुखसिद्धिमार्गम् ।
मुनीश्वराणां व्रतमुत्सृजन्ति
यया तयेच्छालतया गतोऽहम् ॥ १२६ ॥
30 तेषां मुनीनां विगतव्यथानां
देयं कथं पादरजेन मूर्ध्नि ।
C 607 यैर्लङ्घितास्तीव्रविषप्रचण्डा
आशाप्रपाता बहुदुःखभीमाः ॥ १२७ ॥

किं तद्भवेद्दुःखमतीव तीव्रं
का वा विपत्तिर्बहुदुःखयोनिः।
तृष्णाविषाग्निक्षतचित्तवृत्ते-
र्या दूरतः संपरिवर्तिनी स्यात् ॥ १२८ ॥

अपि च हे साधो, 5

कर्मणा परिकृष्टोऽस्मि वर्तमानोऽपि दूरतः।
कर्षति प्राणिनस्तत्र फलं यत्र प्रयच्छति ॥ १२९ ॥

अपि च–

कति वर्षसहस्राणि कति वर्षशतानि च।
प्रदीप्तमायसं चक्रं मम मूर्ध्नि भ्रमिष्यति ॥ १३० ॥ 10

पुरुषः प्राह–

षष्टिवर्षसहस्राणि षष्टिवर्षशतानि च।
प्रदीप्तमायसं चक्रं तव मूर्ध्नि भ्रमिष्यति ॥ १३१ ॥

बोधिसत्त्वः प्राह–

एतद्भासुरवह्निपिङ्गलशिखाज्वालाकलापोज्ज्वलं 15
कोऽन्योऽवभ्रमितं प्रयास्यति समं छित्त्वा परश्चैष्यति।

पुरुषः प्राह–

यो मातर्यपकारकर्तुमनसः कृत्वा समायास्यति
तस्येदं शिरसि भ्रमिष्यति पुनर्मूर्ध्नो तव प्रच्युतम् ॥ १३२ ॥

अथ बोधिसत्त्वस्तेन मूर्ध्नो प्रविदाहजेन तीव्रेण दुःखेन समाकुलहृदयोऽपि सत्त्वे- 20
ष्वनन्तेषु समुत्पादिततीव्रकारुण्याशयस्तं पुरुषमाबभाषे–

क्षपितसकलरागक्लेशजालान्धकारा
गगनतलनिलीना योगिनो ये नमस्याः।
स्फुरितकटकहाराः प्रज्वलन्मौलयो ये
पुनरमरसमूहास्तेऽपि शृण्वन्तु सन्तः ॥ १३३ ॥ 25

कृत्वा दुश्चरितं स्वमातरि जगत्कृत्स्नं यदि प्रोद्वहे- C 608
देतत्प्रज्वलिताग्निरागकपिलं चक्रं बृहन्मूर्धनि।
कल्पं कल्पसमैरहोभिरयुतान् वोढुं चिरायोत्सहे
सत्त्वार्थं प्रतिपद्यमानमस्य हि मे चित्तं न संखिद्यते ॥ १३४ ॥

अथ तस्य सर्वसत्त्वप्रियस्य मैत्रकन्यकस्य बोधिसत्त्वस्य वचनानन्तरमेव मूर्ध्नो समु- 30
त्पाट्योत्क्षिप्तमिव तच्चक्रं सप्ततालोच्छ्रयाचक्रं नभस्तलं समुत्पत्यावतस्थे।

रेजे तच्चपलानिलाहतचलज्ज्वालाकलापोज्ज्वलं
चक्रं खे परिवर्तमानमसकृत्प्रोन्मुक्तभीमस्वनम्।
उद्यद्बिम्बमिवारुणस्य सकलप्रोन्मुक्तरश्म्युत्करं
रत्नाद्यैः प्रविलम्बमानममलैर्वैडूर्यभित्त्याश्रयैः ॥ १३५ ॥ 35

ततः स्रवन्निर्झरवारिचारिणः
समीरणोल्लासितपुष्पशाखिनः ।
नभो विचुम्व्यायतशृङ्गबाहव-
श्चकम्पिरे भूमिभृतो हता इव ॥ १३६ ॥
5 भुजंगविक्षोभसमुद्गतोर्मयः
पयोधरध्वानगभीरनादिनः ।
जलालया रत्नशिखानिवासिन-
स्तदातिवेलासलिलैर्ललङ्घिरे ॥ १३७ ॥
प्रमुक्तनिःशेषमयूखभासुरं
10 रराज खे मण्डलमंशुमालिनः ।
रवेर्मयूखाङ्कुरदन्तुरान्तरा-
दिशः समन्ताद्ददृशुः स्फुटश्रियः ॥ १३८ ॥
स्फुरत्तडिद्दामविराजितोरसः
सुरेन्द्रचापप्रतिबद्धकङ्कणाः ।
15 पयोमुचः किंचिदवासुताम्भसो
वितानवद्व्योमनि ते विरेजिरे ॥ १३९ ॥
स्रजो विचित्रा विनिपेतुरम्वरात्
वितुष्टुवुर्हृष्टतरा दिवौकसः ।
चिरप्रगाढव्यसना हतार्तयः
20 क्षणादभूवन् वहवो निरामयाः ॥ १४० ॥
ज्वलति विषमचक्रे प्रान्तदीर्णोर्ध्वकायः
गलितरुधिरधारासिक्तसर्वाङ्गकायः ।
भगवति गुणराशौ संप्रसाद्य स्वचित्तं
स्वगृहमिव स साधुर्धामयात्तत्क्षणेन ॥ १४१ ॥
25 दानोदकमहत्तीर्थे शीलशौचसुनिर्मले ।
क्षमासुरभिशीताच्छे वीर्यागाधप्रवाहके ॥ १४२ ॥
ध्यानस्तिमितगम्भीरे प्रज्ञापद्मप्रबोधके ।
C 609 तस्मिन् बोधिमहातीर्थे स्थित्वा बोधिपुरोत्सुकः ॥ १४३ ॥
प्रक्षालयेच्छेषपापं तुषितेऽसौ ययौ मुदा ।
30 तत्रस्थोऽप्यचिरं रेमे दृष्ट्वा लोकं कृपान्वितः ॥ १४४ ॥

तत्किमिदमुपनीतम्? एवं हि मातर्यपकारिणः प्राणिनः इहैव व्यसनप्रपातपातालावलम्बिनो भवन्तीति सततसमुपजायमानप्रेमप्रसादबहुमानमानसैः सत्पुरुषैर्मातरः शुश्रूषणीया इति ॥

इति श्रीदिव्यावदाने मैत्रकन्यकावदानं समाप्तम् ॥



# प्रथमं परिशिष्टम्।

# श्लोकसूची।

[ अस्यां सूच्यां ३३.९२ श्लोकमारभ्य ३३.१०६५ श्लोकपर्यन्तं श्लोका न निर्दिष्टाः ]

## द्वितीयं परिशिष्टम् ।

## विशेषनामसूची ।

[ अङ्कः पत्राङ्कबोधकः ]

# तृतीयं परिशिष्टम्।

## शब्दकोशः।

[ This Glossary contains a few important and rare words and their meanings occurring in the *Divyāvadāna.* They have been noted here for the convenience of the reader who need not turn the pages of a dictionary every now and then, and thus have a break in his reading. Now that Professor *Franklin Edgerton's Dictionary of Buddhist Hybrid Sanskrit* is available to readers, no references to occurrence of the word on pages and lines is thought necessary. ]



**अकणक**—unbroken rice
**अकर्मिका**—idle
**अकायिका**—a kind of game
**अकालकम्**—food permitted to be eaten at odd hours
**अकालकौमुदी**—moonlight festival out of season
**अकोप्या** ( आज्ञा )—a rule not to be disregarded
**अक्रन्दित**—not squeezed
**अक्षुण्णवेध**—an act of throwing the spear so as to graze the mark ( मर्मवेध )
**अगद**—a magic jewel
**अगोचरीकरोति**—makes unfit to collect alms
**अग्रधर्म**—high spiritual state
**अघरिका**—a kind of game
**अङ्कधात्री**—a nurse to fondle a child on lap ( also अंसधात्री )
**अच्छाटाशब्द**—snap fingers
**अण्ड**—part of a Stūpa
**अण्डकोश**—cocoon ( of ignorance )
**अतरपण्येन**—without paying toll or fare
**अतर्क**—incomprehensible
**अतिनामयति**—pass time
**अतियात्रा**—fare or crossing
**अतिसर्ग**—remnant
**अतिसार**—(in सातिसारस्) transgression
**अत्यन्तनिष्ठ**—absolute, final
**अत्ययमत्ययतो देशयति**—makes confession
**अत्ययिकपिण्डपात**—special alms
**अत्युत्साहता**—great enthusiasm
**अदत्तादानम्**—theft
**अदर्शनपथ**—disgrace ( of a minister ), not to allow one to see ( the king )
**अद्वैतवादिन्**—ep. of Buddha
**अधरिम**—lowest
**अधितिष्ठति**—bless
**अधिमुक्त**—intent on, resolved on
**अधिवासना**—acceptance of invitation
**अधिष्ठान**—king's court
**अधिष्ठायक**—attendent
**अध्यवसाय**—clinging ( to earthly things )
**अध्याशय**—purpose
**अध्युपेक्षति**—disregards
**अध्येषते**—seeks, requests
**अध्वगण**—crowd of travellers
**अनवकाशः**—often with अस्थानम्, out of place, impossible

